REPRINT FROM THE PANDIT.



# काशिकाव्याख्या



## पदमञ्जरी






महामहोपाध्यायश्रीहरदत्तमिश्रविरचिता

Haradatta Miśra

तत्पूर्वार्धम् ।

Part I

काशिकराजकीयसंस्कृतपाठशालायां व्याकरणप्रधानाध्यापकेन
भारद्वाजदामोदरशास्त्रिणा संशोधितम् ।








काश्याम् ।
मेडिकलहालनामके यन्त्रालये मुद्रितम् ।

सं० १९५२-१८९५ ई० ।

## श्रीविश्वनाथो विजयते ।

इयं काशिकाव्याख्या पदमञ्जरी पुरातनतरग्रन्थपरिशीलनशालिनां मनीषिणां विनोदाय काशिकराजकीयप्रधानविद्यालयाध्यक्षश्रीयुतविनिससाहेबमहोदयानां प्रोत्साहनतो विशुद्धपुस्तकालाभेऽपि महता परिश्रमेण संदिग्धेषु स्थलेषु भाष्यकैयटादिग्रन्थपर्यालोचनया पाठनिश्चियं विदधता मया पञ्चमाध्यायपर्यन्तं संशोध्य प्रकाशिता । अवशिष्टस्त्वंशोऽचिरेणैव समाप्तो भविष्यतीत्याशासे । ग्रन्थदिदृक्षूणां सौकर्यायाकाराद्यक्षरक्रमानुसारि सूचीपत्रं, यच्चान्यदत्र विषयेऽवश्यवक्तव्यं तदेतद्ग्रन्थसमाप्तावेव निवेदितं भवेद् इति । शम् ।

संस्कृतपाठालये व्याकरणशास्त्रप्रधानाध्यापको
दामोदरशास्त्री ।

॥ श्रीः ॥

श्रीविश्वनाथो विजयते ॥

# उपोद्घातः ।

---

नमः श्रीदपूज्यपादेभ्यो बालशास्त्रिभ्यो गुरुवर्येभ्यः ।

साम्प्रतं किल भारतवर्षे ऽत्यपुरातनपण्डितरत्नप्रणीतानि नानाविधदर्शनपुस्तकानि यवनसाम्राज्यकालमारभ्य दुरवस्थामापुवन्नित्यतिरोहितं परीक्षकाणाम्, येषां नामानि केवलं क्वाचित्कफक्किका वा श्लोकान् वा परिदृश्यमानपुस्तकेषु निरीक्ष्य निर्ध्याय च तदर्थगाम्भीर्यमुत्कण्ठमानाः सकलतत्पुस्तकनिरीक्षणे ऽनुभूतचिरतदन्वेषणपरिश्रमा अनुपलभ्य तानि भृशं खिद्यन्ते भूयांसो विपश्चितः । तामिमां न्यूनतामपसारयितुकामैः प्रशस्योद्योगैः साम्प्रतिकसम्राडधिकृतप्रधानमहोदयैः प्रसह्य महान्तमर्थव्ययमूरीकृत्य चिरपरिश्रमं मुहुरन्विष्य नानादेशेषु संस्कृतशास्त्रपुस्तकानि संपाद्य विशदमुद्रणशैलीं विपुलीक्रियमाणेनैवनवोदितैर्मूर्तैरिव तदीययशः-शशधरैराह्लाद्यमाना विद्वज्जनचकोरा मन्ये नातिचिराद्विस्मरिष्यन्ति तदलाभसमुद्भूतं प्रभूतं खेदमासादयिष्यन्ति साकल्येन संस्कृतपुस्तकानि संपादयिष्यन्ति च तैः स्वसमीहितम् । अद्यापि देशान्तरेषु पाणिनीयतन्त्रसम्बन्धिनां पुस्तकानां नातिसम्पत्तिं समालोच्य निर्धार्य चैतद्देशे व्याकरणाभ्यासशैलीबाहुल्यं तदीयप्राचीननिबन्धान् प्रचिकाशयिषुभिः काशिकसंस्कृतपाठशालाप्रधानाध्यक्षवरैः श्रीयुतग्रिफिथसाहिबमहोदयैः समुद्योजिता अस्मद्गुरुवरश्रीदबालशास्त्रिपूज्यपादाः काशिकां प्राकाशयन् ।

सा तदानीमप्राप्य विख्यातवैदुष्यश्रीहरदत्तमिश्रनिर्मितां तद्व्याख्यां पदमञ्जरीं केवलैव मुद्रिता नातिप्रियाकरोति सव्याख्यकाशिकापर्यालोचनसमुत्सुकान्, अनन्तरं तत्पदमलंकुर्वाणैः संस्कृतविद्यानदीष्वधिपयैः श्रीयुतडाक्तरथिबोसाहिबमहोदयैरालोक्य पाठशालीयविद्यामन्दिरे ऽसंशोधितमेकमेव पदमञ्जरीपुस्तकमनुचिन्त्य तावन्मात्रेण मुद्रणकार्यनिर्वाहवैधुर्यमासाद्य द्वित्राणि माधवीयधातुवृत्तेरपूर्णानि पुस्तकानि संभाव्य पदमञ्जरीपुस्तकान्वेषणे विलम्बं तस्याः संशोध्य मुद्रणे नियुक्तावाहं श्रीयुतगङ्गाधरशास्त्री च पुस्तकानामपरिष्कृततया चिरानुभूतपरिश्रमौ भ्वादिगणं काशीविद्यासुधानिधिपत्त्रे ऽमुद्रयाव । अनन्तरं चैकमेव भृशमशुद्धं पुस्तकमाकलय्य पुस्तकान्तरसाहायकविरहेण विरमितमावाभ्यां संमुद्रणम् । अथेदानीं संस्कृतविद्यारसास्वादनचतुरैः श्रीयुतवेनिससाहिबवर्यैः पदमञ्जरीप्रकाशने नियुक्तोऽहं तदीयं पुस्तकान्तरमन्वेषयन् संप्राप्य परिपूर्तिरहितमपि संशोधितमेकं पुस्तकं साम्प्रतं प्रकाशयितुं यते, प्रार्थये च सर्वदेशस्थितान् महाशयान् माधवीयधातुवृत्तेः पदमञ्जर्या वा उपलम्भे प्रबोधयितुं येन प्रकाशितसकलप्रतीका सा संपादयितारं यशोभागिनं कुर्यादिति शम् ॥

काशिकराजकीयपाठालये
व्याकरणशास्त्राध्यापको
दामोदरशास्त्री ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

व्यक्तप्रधानपुरुषात्मकमस्वतन्त्रमेतत्समस्तमधितिष्ठति यः स्वतन्त्रः ।
तस्मै शिवाय परमाय दशाव्ययाय साम्बाय सादरमयं विहितः प्रणामः ॥ १ ॥
स्वंस्वं मनोरथमवाप्तुमपेतविघ्नं यस्य प्रसादमनवाप्य न शक्नुवन्ति ।
पद्मासनप्रभृतयः प्रथमेपि देवास्तद्वस्तु हस्तिमुखमस्तु मयि प्रसन्नम् ॥ २ ॥

तातं पद्म[1]कुमाराख्यं[2] प्रणम्याम्बां श्रियं तथा ।
ज्येष्ठं चाग्निकुमाराख्य[3]माचार्यमपराजितम् ॥ ३ ॥
यश्चिराय हरदत्तसंज्ञया विश्रुतो दशसु दिक्षु दक्षिणः ।
उज्जहार पदमञ्जरीमसौ शब्दशास्त्रसहकारपादपात् ॥ ४ ॥
तामिमामनुपधेन चेतसा भावयन्तु भुवि भव्यबुद्धयः ।
कः खलु प्रणयिनि प्रियंवदे मत्सरी भवति मद्विधे जने ॥ ५ ॥
अविचारितरमणीयं कामं व्याख्याशतं भवतु वृत्तेः ।
हृदयंगमा भविष्यति गुणगृह्याणामियं व्याख्या ॥ ६ ॥
इष्टदेवनमस्कारः कार्यः सचेह किं कृतः ।
वृत्तौ सूत्रे तथा भाष्ये वार्त्तिके च तदुच्यते ॥ ७ ॥
मनसा वचसा च कर्मणा कृत एवायमिहानिवेशितः ।
नहि दर्भपवित्रपाणिताद्यपरं मङ्गलमत्र कीर्त्यते ॥ ८ ॥

वृत्त्यन्तरेष्वसन्तं गुणं वदन् वृत्तिकृच्चित्रे ग्रन्थे प्रेक्षावतां प्रवृत्त्यै क्रियमाणं वस्तु निर्द्दिशति । 'वृत्तौ भाष्यइति' । वस्तुनिर्द्दिष्टे सति तेनार्थेनार्थिनः प्रवर्त्तन्ते इतरे नेत्युपयुक्तो ग्रन्थादौ वस्तुनिर्द्देशः । वृत्त्यन्तरेष्वसम्भविनो गुणस्य कथनं तु प्रवृत्तिनियमार्थं, कथमपरत्रा प्रवृत्तिर्विहाय वृत्त्यन्तराख्यस्याम् । स पुनर्गुणो वृत्त्यादिषु विप्रकीर्णस्य तन्त्रस्य यः सारभूतोंशस्तत्संग्रहात्मकत्वम् । तत्र सूत्रार्थप्रधानो ग्रन्थो वृत्तिः । सा चेह पाणिनिप्रणीतानां सूत्राणां कुणिप्रभृतिभिराचार्यैर्विरचितं विवरणम् । आक्षेपसमाधानपरो ग्रन्थो भाष्यम् । तदिह कात्यायनप्रणीतानां वा-

१ कद्रेति पा० । २ र्थमिति पा० । ३ र्थमिति पा० ।

ख्यानां पतञ्जलिप्रणीतं विवरणम् । तथाशब्दः समुच्चये । पारायणशब्दः प्रत्येकमभिसम्बध्यते धातुपारायणं नामपारायणमिति । यत्र धातुप्रक्रिया तद्धातुपारायणम् । यत्र गणशब्दानां निर्वचनं तन्नामपारायणम् । आदिशब्देन शिक्षोणादिफिषादेर्ग्रहणम् । विप्रकीर्णस्य, विक्षिप्तस्य, तन्त्रस्य, 'तन्त्रं प्रधाने सिद्धान्ते तन्तुवाये परिच्छद' इति निघण्टुः । इह तु सिद्धान्तवचनः, तत्रापि व्याकरणशास्त्रे वर्तते वृत्त्यादिसमभिव्याहारात् । तस्य यः सार उत्कृष्टोंशस्तस्य संग्रहः क्रियते संगृह्यतइत्यर्थः । तत्प्रकारं दर्शयति 'इष्ट्युपसंख्यानवती' ति । सूत्रेणासंगृहीतं लक्ष्यं येन संगृह्यते तदुपलक्षणमिष्ट्युपसंख्यानग्रहणम् । तेन वक्तव्यादीनामपि ग्रहणं, वृत्त्यन्तरेषु सूत्राण्येव व्याख्यायन्ते इयं पुनरिष्ट्यादिमती, तथा शुद्धगणा, वक्ष्यति 'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणी' ति । 'कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यत' इति च सैषा गणस्य शुद्धिः । वृत्त्यन्तरेषु तु गणपाठ एव नास्ति प्रागेव शुद्धिः । योरणावित्यादौ गूढः सूत्रार्थो विवृतो यया सा विवृतगूढसूत्रार्था, गूढग्रहणं सूत्रार्थमात्रोपलक्षणं, सूत्रार्थप्रधानेत्यर्थः । अनेन वृत्तिलक्षणमुक्तं, व्युत्पन्नानां शब्दरूपाणां सिद्धिर्यस्यां सा व्युत्पन्नरूपसिद्धिः, उदाहरणमण्डितेत्यर्थः । यदि वोदाहृतशब्दरूपं यथा सिद्ध्यति तथा व्युत्पत्तिः क्रियते यस्यां सा व्युत्पन्नरूपसिद्धिः । दुर्निरूपेषु पदेषु क्व चित्प्रक्रिया ऽभिधीयतइत्यर्थः । वृत्तिरिति ग्रन्थाभिधानम् । काशिकेति देशतोभिधानं, काशिषु भवा 'काश्यादिभ्यष्ठञ्ञिठौ' काशिका ॥ यथा पुनरयमंशः सारभूतस्तथा दर्शयति । 'व्याकरणस्ये' ति । एतावद्देव हि शास्त्रशरीरं यदिष्ट्युपसंख्यानादि, एतावति हि शास्त्रकृत्यं परिनितिष्ठति परिसमाप्यते । अस्यैव तु शास्त्रशरीरस्य परिकरबन्धो रक्षाबन्धः परिशिष्टोंशो ग्रन्थकारेण भाष्यकारादिना क्रियते आतपसमाधानादिमुखेनायमेवांश उपस्थाप्यतइत्यर्थः । अत्र च व्याकरणविषया वृत्तिः क्रियतइति वचनात्तस्य यत्प्रयोजनं तदेवास्या अपीति अर्थादुक्तं भवति । अथ व्याकरणस्यैव किं प्रयोजनं, किमनेन[1]पृष्टेन सर्वथाध्येयं व्याकरणं, श्रूयते हि

१ प्रश्नेनेति पा० ।

'ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेय' इति सन्ध्योपासनादिवदवश्यं कर्त्तव्यं व्याकरणाध्ययनमित्युक्तं भवति । तत्र यथा ऽनुपासीनः सन्ध्यां प्रत्यवैति तथाऽनधीयानोपि व्याकरणं, तत्र व्याकरणं ज्योतिषं निरुक्तं शिक्षा छन्दोविचितिः कल्पसूत्राण्यङ्गानि, अङ्गत्वं चाङ्गसंस्तवात् ।

मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते ।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते ।

इति । उपकारकत्वाच्च तत्र व्याकरणमर्थविशेषमाश्रित्य पदमन्वाख्यानां पदपदार्थप्रतिपादनेन वेदस्योपकरोति । ज्योतिषमप्यध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति, निरुक्तं तु व्याकरणस्यैव कार्त्स्न्यम् । छन्दोविचितिरपि 'गायत्र्या यजति' 'त्रिष्टुभा शंसती'त्यादौ श्रुतानां गायत्र्यादिशब्दानां लक्षणतोऽर्थमाचष्टे । शिक्षाप्यध्ययनकाले कर्म्मणि च मन्त्राणामुच्चारणप्रकारं प्रतिपादयति । कल्पसूत्राण्यपि प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गेनोपेतस्य कर्म्मणः प्रयोगं कल्पयन्ति । षट्सु चाङ्गेषु व्याकरणं प्रधानं पदपदार्थज्ञानस्य तदायत्तत्वात् । वृत्तिकारस्तु प्रयोजनप्रवणत्वात्प्रेक्षावत्प्रवृत्तेः सम्भवाच्च प्रयोजनस्य भाष्यकारेण पठितं साक्षात्प्रयोजनमाह । 'अथेति' । अथेत्ययं शब्दोऽधिकारार्थः, अधिकारः प्रस्तावः प्रारम्भः, तमथशब्दो द्योतयति, शब्दानुशासनमित्येतावत्युच्यमाने सन्देहः स्यात् किं शब्दानुशासनं प्रारभ्यते उत श्रूयतइति, अथशब्दे तु सति क्रियान्तरव्यवच्छेदेन प्रस्तूयतइत्ययमर्थो निश्चीयते । विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतो ज्ञाप्यन्ते येन तच्छास्त्रमत्र शब्दानुशासनम्, अनुपूर्वो हि शासिर्विविच्य ज्ञापने दृष्टः । तद्यथा 'अक्षेत्रवित् क्षेत्रविदं ह्यप्राट्[1] स प्रैति क्षेत्रविदानुशिष्ट इति,' 'सं पूषन्विदुषा नय यो अञ्जसानुशासती,'ति च । ततः करणे ल्युट्, शब्दानामनुशासनं शब्दानुशासनमिति कर्म्मणि षष्ठ्या समासः । अत्र च शब्दानामिदमनुशासनं नार्थानामिति अर्थव्यावृत्तिपरायां चोदनायां कर्त्तृविशेषस्याविव-

१ छान्दसमेतत् ।

त्तितत्वादुभयप्राप्त्यभावाचो'भयप्राप्तौ कर्म्मणी'त्यनेन षष्ठी किं तर्हि 'कर्तृकर्म्मणोः कृती'त्यनेनेति 'कर्म्मणि च'ेति न निषिद्धः समासः।

अनिदंप्रथमाः शब्दाः साधवः परिकीर्त्तिताः।
तएव शक्तिवैकल्यप्रमादालसतादिभिः॥
अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः॥

यद्यपि लोके गवादयो गाव्यादयश्च सममेव प्रयुज्यन्ते वाचकत्वाभिमानोपि सम एव तेषु लौकिकानां साधीयान् गाव्यादिषु, तथापि गवादयो ऽनादयः साधवस्तएव साक्षाद्वाचकाः। गाव्यादयस्तु बालादिभिरशक्त्यादिना गवाद्युच्चारणेच्छयैव तथातथोच्चार्यन्ते। आदिमन्तो ऽपभ्रंशाः, ते च स्वयमवाचका अपि प्रथमं गवादिशब्दस्मरणद्वारेणार्थधियं जनयन्ति, ये च तत्रैव प्रथमे व्यवहारे व्युत्पाद्यन्ते तेषां गवादिवत्तेष्वेव वाचकत्वाभिमानः। एवं तन्मूलानामपि। तत्र ये साधवस्ते शास्त्रेणानुशिष्यन्ते ऽसाधुभ्यो विविक्ताः प्रकृतिप्रत्ययविभागेन ज्ञाप्यन्ते इमे साधव इति, कथं पुनरिदमाचार्येण पाणिनिना ऽवगतमेते साधव इति, आपिशलेन पूर्वव्याकरणेन, आपिशलिना तर्हि केनावगतं, ततः पूर्वेण व्याकरणेन, यद्येवमन्धपरम्पराप्रसङ्गः, तद्यथा शुक्लं क्षीरमित्यन्धेनोक्ते केनेदमवगतमिति पृष्टो यदान्धान्तरं मूलं निर्द्दिशति सोप्यन्धान्तरं तदा नैतद्वचः श्रैक्ष्ये प्रमाणं भवति तादृगेतत्। नैष दोषः। सर्वे एव हि ते स्वेस्वे काले गाव्यादिभ्यो विविक्तान् गवादिशब्दान् प्रत्यक्षत एवोपलभन्ते चत्वारो वेदा ऋग्यजुःसामाथर्वलक्षणाः, तत्र ऋग्वेद एकविंशतिधा भिन्नः, एकशतं यजुःशाखाः, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेदः, षडङ्गानि, मीमांसान्यायविस्तरः, अष्टादश पुराणानि, अनन्तान्युपपुराणानि, अष्टादश स्मृतयः, अनन्ता उपस्मृतयः, भारतरामायणादिरितिहासः, आयुर्वेदो धनुर्वेदो गान्धर्वो ऽर्थशास्त्रं काव्यानि नाटकानि एतावान् प्रयोगस्य विषयः, तद्यस्यात्र सर्वत्र निष्ठा, स तावत्सर्वानेव व्याकरणानुगतांश् छब्दान् प्रत्यक्षयति व्याकरणेन च पूर्वस्मिन्नपि काले तेषां सत्तामनुसन्धत्ते, एषा अस्मदादीनां गतिः। पाणि-

निरपि स्वकाले शब्दान् प्रत्यक्षयन्नापिशलादिना पूर्वस्मिन्नपि काले सत्तामनुसन्धत्ते, एवमापिशलिः, अनादिरयं संसारः। कथं पुनरस्मदादीनां सर्वलक्ष्यदर्शित्वं, माभूदस्मदादीनामस्मद्विशिष्टानां महर्षीणां सम्भवति यस्य वा ईश्वरानुग्रहः स सर्वं प्रत्यक्षयति। अत्रैव हि लौकिकाः स्मरन्ति।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥

इति। अक्षरसमाम्नायं च व्याचक्षते देवसूत्राणीति।

अथ वा कस्य चित्क्वे चिदपरस्यापरे तथा।
अन्यस्यान्ये तथा शब्दाः सन्ति दर्शनगोचराः॥

तथा च।

यद्विस्मृतमदृष्टं वा सूत्रकारेण तत्स्फुटम्।
वाक्यकारो ब्रवीत्येवं तेनादृष्टं च भाष्यकृत्॥

अत एव च पाणिनीयमेतत्त्रिमुनि व्याकरणं वदन्ति सन्तः। श्रवणेन्द्रियगोचराश्च शब्दा इति नास्त्यन्धपरम्पराप्रसङ्गः। यस्मात्स्वेस्वे काले सर्वे शब्दाः प्रत्यक्षतो गृह्यन्ते। पूर्वपूर्वव्याकरणवशेन तु तस्मिंस्तस्मिन् काले सत्तानुसन्धीयतइत्येतावत्, तस्मान्नास्त्यन्धपरम्पराप्रसङ्गः। नहि चक्षुष्मति मूले कथिते पयसः शौक्ल्यमप्रमाणं भवति। यद्यपीतिहासपुराणादिष्वपशब्दा अपि संभवन्ति तथापि येषामेव पूर्वपूर्वव्याकरणवशेन तस्मिंस्तस्मिन्काले सत्तानुसन्धानं तएवानादयः साधव इति निर्णीयते।

यथैव वेदवाक्यानां पाठे सत्यपि सङ्करे।
बहूनामभियुक्तानामुपदेशेन निर्णयः॥

आह।

अनादिता चेत्साधुत्वं संज्ञाशब्देषु का गतिः।
उच्यते, नाम करणे गृह्येषु नियमश्रुतेः॥
यथाकामं न संज्ञानां विनियोगः समस्ति नः।
तस्मादनादिता संज्ञास्वपि नैव विरुध्यते॥
यास्तत्तद्देशभाषाभिः संज्ञास्तासां न साधुता।
लकारवार्त्तिके चेतद्युक्तं कात्यायनो ब्रवीत्॥

नहि यथारुचि संज्ञा शक्यते कर्त्तुं गृह्येषु नियमविधानात् । तत्रापस्तम्बो 'द्व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तर'मित्याह । बौधायनस्त्वधिकमप्याह । 'ऋष्यणूकं देवतानूकं वे' ति । ऋष्यणूकम् ऋष्यभिधायि, देवतानूकं देवताभिधायि, 'कृतं कुर्याच्च तद्धित'मिति गृह्यान्तरं, तस्मादनादिप्रयुक्तानामेव द्रविणोदा वसिष्ठो रुद्र इत्यादीनां संज्ञात्वेन विनियोगः । याः पुनर्देशभाषाभिः संज्ञाः कूचिमञ्चीत्यादयो न तासां साधुत्वं, तदेतत् ऌकारोपदेशस्य प्रयोजननिराकरणावसरे वार्तिककारेणाप्युक्तं, 'न्याय्यभावात्कल्पनं संज्ञादिष्वि'ति, यदृच्छया कश्चित् ऌतको नाम तस्मै दद्ध्ऌतकाय देहीति अच्कार्यं यथा स्यादिति ऌकार उपदिश्यते । तत्र न्याय्यभावात् न्याय्य ऋतकशब्दः स हि कृदन्तः ऋतीयतेः कुनि ऋतक इति, ततश्च तस्यैव संज्ञात्वेन कल्पनं युक्तं स एव संज्ञात्वेन कल्पयितव्य इत्यर्थः । आदिशब्देनैतद्दर्शयति क्रियाशब्दा अपि न लक्षणमस्तीत्येव प्रयोक्तव्याः किं तर्हि अनादिप्रयुक्ता एवेति तेषु चानादिमत्त्वमाप्तोपदेशादवगन्तव्यं, यथा नहि ववरिन्तिपरः प्रयुज्यतइति, अस्त्वेवं शास्त्रीये नामकरणे

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः ।
कथं नु तासां साधुत्वं नैव ताः साधवो मताः ॥
अनपभ्रंशरूपत्वाद्व्याख्यासामपशब्दता ।
हस्तचेष्टा यथा लोके तथा सङ्केतिता इमाः ॥

ततश्च

नासां प्रयोगेभ्युदयः प्रत्यवायोपि वा भवेत् ।
लाघवेनार्थबोधार्थं प्रयुज्यन्ते तु केवलम् ॥

तदेवमनादिरनपभ्रष्टता साधुत्वमिति स्थितम् । अपरे त्वभ्युदययोग्यतां साधुत्वमातिष्ठन्ते, सा च व्याकरणपरम्परया ऽवसीयतइत्याहुः । अपर आह । शब्दावान्तरजातिः साधुत्वं सा च व्याकरणपरिकिर्म्मिते चेतसि चकास्ति रत्नतत्त्वमिव परीक्षकाणाम् । आह च ।

अनपभ्रष्टतानादिर्यद्वाभ्युदययोग्यता ।
व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता ॥

इति । अस्त्वेवं साधुत्वमस्तु च व्याकरणं साधूनां प्रज्ञापनं किं पुनरेतैः प्रज्ञापितैः प्रयोजनं, माभूदन्यज्ज्ञानमेव प्रयोजनं, श्रूयते हि 'यो वा इमां वाचं पदशोक्षरशः स्वरशश्च वेद स आर्त्विजीनः स्या'दिति । आर्त्विजीनो यजमानः ऋत्विजमर्हतीति, अथ वा आर्त्विजीन ऋत्विक्कर्म्मार्हतीति याजकोप्यार्त्विजीनः, 'यज्ञर्त्विग्भ्यां घखञौ' इति सूत्रेण 'यज्ञर्त्विग्भ्यां तत्कर्म्मार्हतीति चोपसंख्यान'मिति वार्तिकेन च खञ्, 'विद्वान् यजेत, विद्वान्याजये'दिति द्वयोरपि विदुषोरधिकारात् । स्मर्यते च

यश्च व्याकुरुते वाचं यश्च मीमांसतेध्वरम् ।
तावुभौ[१] पुण्यकर्म्माणौ पङ्क्तिपावनपावनौ ॥

इति ।

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इति च, तथा ।

निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

इति । तदेवं साधूनां शब्दानां प्रकृतिप्रत्ययादिविभागेन ज्ञानमेव तावत् पुरुषार्थः, न च तत्रोपायान्तरं लघीयोस्ति अन्यदतो व्याकरणात् । यस्य चैतन्नास्ति तस्याध्ययनमेव निष्फलं, श्रूयते हि

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हि चित् ॥

अविज्ञातं प्रकृत्यादिविभागेनाविज्ञातार्थमिति नैरुक्ताः । अर्थज्ञानमपि व्याकरणायत्तमेव । किं च साधूनां प्रज्ञापनं प्रयोगोपि तेषामेव यथा स्यादिति, तदिह साधून् प्रज्ञापयत आचार्यस्य साधुभिरेव भाषितव्यं नासाधुभिरित्यभिमतं लक्ष्यते । अनया स्मृत्या मूलभूता श्रुतिरप्यनुमीयते यथाष्टकादिषु ।

ननु चार्थाभिधानाय प्रयोगः शब्दगोचरः ।
प्राप्त इत्यविधेयस्स्यात् क्षुधितस्येव भोजनम् ॥

उच्यते ।

१ पुरुषौ पुण्याविति पा॰ ।

अर्थप्रयुक्ते शब्दानां प्रयोगे समुपस्थिते ।
धर्म्माय नियमः शास्त्रे प्राङ्मुखत्वादिवद्भवेत् ॥

तदुपघाताय भोजने प्रवृत्तिः, शक्यं च यत्किञ्चन दिङ्मुखेन भुञ्जानेनापि तदुपहन्तुं, अथ च तत्र धर्म्माय नियमः क्रियते 'प्राङ्मुखोऽन्नानि भुञ्जीते'ति, तद्वदिहापि साधुभिरसाधुभिश्च भाषणे प्राप्ते नियमः क्रियते साधुभिरेव भाषेत एतैर्भाषमाणस्य धर्मो भवति धर्मादभ्युदय इति । श्रूयते च 'एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति' स्मर्यते च

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥

इति । कात्यायनप्रणीतेषु भ्राजाख्येषु श्लोकेषु मध्ये पठितोऽयं श्लोकः । तथा साधुष्वपि सामान्यलक्षणान्वितात्विशेषलक्षणान्वितस्य प्रयोगे फलविशेषः स्मर्यते ।

नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥

इति । अयमर्थः । कमे 'आयादय आर्द्धधातुके वे'ति णिङभावपक्षे लुङि 'कमेरुपसङ्ख्यान'मिति चङो विशेषलक्षणं, णिङ्भावपक्षे तु णिश्रिद्रुस्रुभ्य इति सामान्यलक्षणं, तत्र ये विशेषलक्षणस्य स्मरन्तो ऽचकमतेति प्रयुञ्जते ते सुयुक्तैर्वडवारथैरिष्टसुखं नाकं स्वर्गं यान्ति ये तु सामान्यलक्षणवशेनाचीकमतेति भाषन्ते ते पादौ कर्षन्तः स्वर्गं यान्तीति, तद्विधो भाष्यकारेण पठितोऽयं श्लोकः । तदेवं साधून् प्रयुञ्जानस्याभ्युदयो भवतीति नियमार्थः । अपर आह । गम्यागम्यवद्भक्ष्याभक्ष्यवच्चायं नियमः । तद्यथा रागात् स्त्रीषु प्रसञ्जन्तं प्रत्युच्यते इयं गम्येयमगम्येति । शक्यते च यां काञ्चिदपि गच्छता रागविगमः कर्त्तुं, तत्र नियम इयमेव गम्या ऽन्यां गच्छन् प्रत्यवेयादिति । तथा क्षुधा मांसभक्षणे प्रवृत्तिः शक्यं च यत्किञ्चिन्मांसं

भक्षयता तदुपहन्तुं तत्र नियमः 'पञ्च पञ्चनखा भक्ष्याः' पञ्चैव गोधादयो भक्ष्या अन्यत्र प्रत्यवाय इति, तद्वदिहापि साधुभिरेव भाषेत अन्यैर्भाषमाणः प्रत्यवेयादिति नियमार्थ इति। तथा च ब्राह्मणं, 'ते सुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द' इति अत्र हेलयो हेलय इति वाक्यद्विर्वचनमपशब्दः, 'हैहेप्रयोगे हैहयो' रिति प्राप्तस्य प्लुतस्याकरणमित्यन्ये। अरिशब्दे रेफस्य लत्वमित्यपरे। तथा

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

इति अपशब्दप्रयोगे प्रत्यवाय उदाहृतः, मन्त्रो हीन इति प्रसिद्धः पाठः, स्वरेण स्वरतः आद्यादित्वात्तसिः, मिथ्याप्रयुक्तो यदर्थप्रतिपादनाय प्रयुक्तः शब्दस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः। वागेव वज्रो वाग्वज्रः यथेत्युदाहरणे इन्द्रशत्रुः इन्द्रशत्रुशब्दः, स हि स्वरकृतादपराधाद्यजमानं हिंसितवान्, इन्द्रमभिचरता हतपुत्रेण त्वष्ट्रा 'इन्द्रशत्रुर्वर्द्धस्वे'ति मन्त्रः प्रयुक्तः तत्रेन्द्रस्य शत्रुरिति षष्ठीसमासार्थे विवक्षिते ऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्तः प्रयुक्तस्तत्र बहुव्रीह्यर्थोपसंहारादिन्द्र एवास्य शत्रुरभवत्। कः पुनर्बहुव्रीहितत्पुरुषयोरर्थभेदो यावता यस्येन्द्रः शत्रुः इन्द्रस्याप्यसौ शत्रुरेव सपत्नपर्यायः शत्रुशब्दः, नैष दोषः। क्रियाशब्दोऽत्र शत्रुशब्दः शातयिता शत्रुरिति, तत्रेन्द्रस्य शातयिता भूत्वा वर्द्धस्वेति षष्ठीसमासेऽर्थः, बहुव्रीहौ त्विन्द्रशातयितृक इति ततश्च स्पष्ट एवार्थभेदः। कथं पुनरत्राद्युदात्तत्वस्य वान्तोदात्तत्वस्य वा प्रसङ्गः, यावता यज्ञकर्मण्येकश्रुत्या भवितव्यम्, अयमप्यदोषः, तत्र हि जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयते स्वेच्छया प्रयुज्यमानश्च मन्त्रो न भवति, यदि वा एकश्रुत्यभावाद्दोषात्र प्रत्यवायस्तथा यस्तु प्रयुङ्क्त इति श्लोकेन दुष्यति चापशब्दैरिति दोषो दर्शितः, तस्मादपशब्दप्रयोगे ऽधर्म्म इति तदेतद्यज्ञकर्म्मणि सर्वेषामभिमतं, तथा च प्रायश्चित्तविधिरपि तत्र भवति 'आहिता-

थिरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति। प्रायश्चित्ते भवा, प्रायश्चित्तीया यज्ञकर्मणोऽन्यत्र न प्रत्यवाय इति केचित्। अन्ये तु तत्रापि कियन्तं प्रत्यवायमिच्छन्ति, तथा च नानृतं वदेदिति निषेधः, द्विविधं ह्यनृतं शब्दानृतमर्थानृतं च। तथाहि। शब्दस्य अर्थस्य वा ऽन्यथा प्रतिपत्तिहेतुरुच्चारणमनृतं, तदत्र प्रतिषिध्यते। यथा ऽर्थानृतं वदतः प्रत्यवाय एवं शब्दानृतमपीत्यलम्। इयता स्थितमेतत्, शब्दानुशासनमित्यन्वर्थसंज्ञोच्चारणेन व्याकरणप्रयोजनमन्वाख्यायतइति।

अथ किं सूत्रकारेण नेदमुक्तं प्रयोजनम्।
यथा तन्त्रान्तरेष्वादौ प्रयोजनमुदीर्यते॥

उच्यते,

काणादे पाणिनीये वा कुत्र लोकः प्रवर्त्तते।
उक्तं प्रयोजनं यत्र यत्र वा नैतदीरितम्॥

तस्मात्

यत्र प्रयोजनं व्यक्तं तत्र लोकः प्रवर्त्तते।
न त्ववश्यमिदं वाच्यं ग्रन्थादाविति मन्महे॥

किं च प्रयोजनवचनस्य किं प्रयोजनं, तदर्थिनां तत्र प्रवृत्तिरिति चेत् न। पुंवाक्यानां विप्रलम्भभूयिष्ठत्वात्तेभ्य उत्पन्नोऽपि प्रत्ययो द्रागेव लीयते ततश्च सकलशास्त्रश्रवणोत्तरकालं तन्निश्चयो भवति ततः किं न प्रयोजनश्रवणमात्रादेव प्रवृत्तिः, अयं सूत्रकारो गुडजिह्विकान्यायेन यत्किञ्चित्प्रयोजनमुक्त्वा अन्यस्मिन्नेव स्वाभिमते प्रवर्त्तयेदिति सम्भावयन्तो न प्रयोजनप्रतिपादनमाद्रियन्ते, तत्कथं प्रवर्त्तेरन्। अथ सन्देहात्प्रवृत्तिः, अस्त्वेवं शास्त्रे प्रयोजनवाक्ये तु कथं प्रवृत्तिः। नहि तस्य प्रयोजनमुक्तम्। अथ तस्याप्युच्येत तस्यापीत्यनवस्था स्यात्। अथ सूत्रकारः स्वयमेवोपसृत्य तत्रतत्र प्रवर्त्तयति शास्त्रेप्येवमेवास्तु किं प्रयोजनवचनेन, भाष्यकारस्तु विवरणकारपदवीमवगाहमानः प्रयोजनप्रतिपादनमाश्रयते, वृत्तिकारोऽपि तदेव पठितवान्। तथा वेदरक्षापि प्रयोजनं व्याकरणस्य। ननु नियतानुपूर्वीकस्य

शिष्टाचारपरम्परया धार्यमाणशरीरस्य वेदस्य का नाम रक्षा व्याकरणेन । सत्यम् । ये भाषायामदृष्टा लोपागमवर्णविकाराः केवलं छन्दस्येव दृश्यन्ते ते केवलप्रयोगशरणैः प्रामादिकाः संभाव्येरन्, वैयाकरणास्तु 'लोपस्त आत्मनेपदेष्वि'ति लक्षणदर्शी तदेव रूपं स्थापयति । तथा ऊहोऽपि प्रयोजनं, यत्राङ्गजातं पूर्णमुपदिष्टं सा प्रकृतिर्दर्शपूर्णमासादिः, यत्र न सा विकृतिः, 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इत्यादिः, तत्र वैकृतस्य विधेरुपकारापेक्षायां तन्मुखेन प्राकृतमङ्गजातं प्राप्यते तत्र यस्याङ्गस्य प्रकृतौ यो जन्यतयोपकारः क्लृप्तो यथा 'व्रीहीनवहन्ती'त्यत्रावघातस्य वैतुष्यं, तस्य विकृतावसम्भवेन निवृत्तिः, यथा कृष्णलेष्ववघातस्य । यथा चान्यदङ्गजातं प्राप्यते एवं मन्त्रोऽपि, तस्य चानुष्ठेयार्थप्रकाशनं कार्यं प्रकृतौ, तत्र प्रकृतौ यस्य मन्त्रस्य यदभिधेयं तत्साकल्येनाभिधेयं विकृतौ नास्ति तस्य सर्वस्यैव निवृत्तिः यथा कृष्णलेष्ववघातमन्त्रस्य । 'अवरक्षो दिवः सपत्नं वध्यास'मिति । यस्य त्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मात्रं निवर्तते यथा 'अग्नये जुष्टं निर्वपामी'त्यत्र देवताभिधायि पदं सौर्यादिषु निवर्तते । न च विभक्तेरलुप्ततरत्वादेकारस्यावस्थानप्रसङ्गः, अकारान्तव्यतिरिक्तेष्वेव ह्येकारस्य संप्रदानं वाच्यं तत्र तु यशब्दस्य वाच्यं, ततश्चेकारान्तेऽग्निशब्दे निवर्त्तमाने एकारोऽपि निवर्त्तते. ततः सौर्ये कर्म्मणि देवताभिधायि चतुर्थ्यन्तं यत्पदमूह्यं सूर्यायेति । तथा 'देवीरापः शुद्धा स्थे'ति अप्सु विनियुक्तो मन्त्रः तस्याज्ये ऊहो देवाज्य शुद्धमसीति । तथा पुरोडाशे ऽवदानमन्त्रः 'माभेर्मासंविक्था'इति तस्य धानासूहः माभेष्ट मासंविक्थ्वमित्यादिः । न चेतदवैयाकरणानां सुकरम् । तथा ऽसन्देहः, 'स्थूलपृषतीमनड्वाहीमालभेते'त्याम्नायते । तत्र सन्देहः किं स्थूला पृषती स्थूलपृषती, आहोस्वित् स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीति, तत्र वैयाकरणः पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थं निश्चिनोति, तदेवम्

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ॥

किं बहुना ।

इदमाद्यं पदस्थानं मुक्तिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥
रूपान्तरेण ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥

'केषां शब्दानामिति'। कथं पुनरनुशासने गुणीभूतानां शब्दानां किंशब्देन परामर्शो युज्यते, स्यादयं दोषो यदि केषामित्येतावदुच्येत तदा हि शब्दानामित्यनुषङ्ग आश्रयणीयः, तच्च गुणीभूतस्यानुपपन्नम्, इह तु शब्दानामिति स्वशब्देनोपादीयते तत्तु प्रकृतगुणभूतशब्दपरमित्येतावत्, तच्च नानुपपन्नं बुद्धौ सन्निहितत्वात्, राजपुरुषोयं कस्य राज्ञ इतिवत् । पृच्छतश्चायमभिप्रायः, शब्दानुशासनमित्यत्र शब्दशब्दः सामान्यवचनः सन्ति च समुद्रघोषादयः शब्दा येषु वर्णाभिव्यक्तिरपि नास्ति, सन्ति च गाव्यादयोऽपभ्रंशाः, सन्ति च गवादयोनादयः साधवः, तत्राविशेषात्सर्वेषामनुशासनं प्राप्नोतीति । इतरोपि शब्दानुशासनशब्दस्य व्याकरणे योगरूढत्वात् तस्य च वेदाङ्गत्वात् समुद्रघोषगाव्यादिव्युत्पादनस्य च वेदानुपयोगित्वादाह । 'लौकिकानां वैदिकानां चेति'। लोके विदिता लौकिकाः 'लोकसर्वलोकाभ्यां ठञ्'। यद्यपि गाव्यादयोपि लोके विदितास्तथापि ते न सर्वलोके विदिताः प्रतिदेशं भिन्नत्वादपशब्दानां, लोकशब्दश्चायं सर्वस्मिंल्लोके वर्त्तते सङ्कोचकाभावात्, अतः सर्वलोकप्रसिद्धानां गवादीनामित्यर्थः, साधूनामिति यावत् । वेदे भवा वैदिकाः, अध्यात्मादित्वात् ठञ्, वैदिकानां लौकिकत्वेपि प्राधान्यख्यापनार्थं पृथग् ग्रहणं, यथा ब्राह्मणा आगता वसिष्ठोप्यागत इति । नन्वन्वाख्याने प्रतिपदपाठोभ्युपायस्तत्रान्वाख्याने त्रयः प्रकाराः शब्दापशब्दोभयोपदेशभेदेन, शब्देषु ह्युपदिष्टेषु गम्यत एतदतोन्ये ऽपशब्दा इति, यथा 'पञ्च पञ्चनखा भक्ष्या' इति भक्ष्यनियमादन्ये ऽभक्ष्या इति गम्यते । तथाऽपशब्दोपदेशेप्यन्ये सुशब्दा इति गम्यते, यथा ऽभक्ष्यो ग्रामकुक्कुट इत्युक्ते आरण्यो भक्ष्य इति गम्यते, हेयोपादेयोपदेशेपि स्पष्टं प्रतिपत्तिर्भवति यथा अपथमिदमेष पन्था इति, आनन्त्याच्छब्दानां सर्वथाप्यसम्भव एव, एवं हि श्रूयते बृहस्पतिरिन्द्राय

दिव्यं वर्षसहस्रं प्रतिपदविहितानां शब्दानां शब्दपारायणं प्रोवाच न चान्तं जगामेति । बृहस्पतिः प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं च वर्षसहस्रमध्ययनकालो न चान्तगमनमासीत्किमस्य तस्य कुतोऽद्यत्वे स्वल्पायुषि प्रजायां यस्सर्वथा चिरंजीवति स वर्षशतं जीवति न चान्योऽभ्युपायोऽस्तीति मन्यमान आह । 'कथमिति' । कथं व्याकरणेन शब्दानुशासनं कथं वा व्याकरणं शब्दानामनुशासनं न कथं चिदित्यर्थः । येनाल्पेनैव यत्नेन महतो महतः शब्दौघान्प्रतिपद्यन्ते तदुपायान्तरन्दर्शयति । 'प्रकृत्यादिविभागकल्पनयेति' । तत्र प्रतिपत्तशब्दोपदेश एव तावदाश्रितो नियतत्वात्, अपशब्दा हि प्रतिदेशं प्रतिगृहं प्रतिपुरुषं प्रत्यवस्थं भिन्नाश्चानवस्थिताः, न ते लक्षणेनानुशास्तुं शक्यन्ते । उपेयस्य चार्थस्य साक्षात्प्रतिपत्तिर्युक्ता । प्रत्ययात्पूर्वं क्रियतइति प्रकृतिः । आदिशब्देन प्रत्ययविकारागमानां ग्रहणं, तेषां विभागो ऽसंकीर्णरूपता तस्य कल्पना ऽवयवकल्पिका बुद्धिस्तया हेतुभूतया शब्दानामनुशासनं व्याकरणेन, व्याकरणं वा कल्पनाग्रहणेन, कल्पनामात्रं प्रकृत्यादिविभागो न पारमार्थिक इति वैयाकरणसिद्धान्तं दर्शयति । अत एव व्युत्पत्तेरनियमो दृश्यते, 'वसेस्तव्यत्कर्त्तरि णिच्च'वसतीति वास्तव्यः, तद्धितान्तो वा वास्तुनि भवो वास्तव्य इति, तथा 'गिरौ डश्छन्दसि'गिरौ शेते गिरिशः, तद्धितो वा गिरिरस्यास्तीति लोमादित्वाच्छः गिरिश इति । नन्वेवं प्रतिशब्दं प्रकृतिप्रत्ययविभागउच्यमाने गुरुतरमापद्यते तद्यथा पचतीत्यत्र शब्दे पचिप्रकृतिः तिप्प्रत्ययः शब्विकरण इत्यादि, तत्कोऽयमभ्युपायो दर्शितः, अत आह । 'सामान्यविशेषवता लक्षणेने'ति । करणएषा तृतीया कल्पनायां च करणता, वृत्तौ चशब्दो न पठितव्यः, एकस्मिन् हि साध्ये हेतुद्वयसमावेशे समुच्चयो भवति, इह तु कल्पनायां लक्षणं करणं, कल्पना त्वनुशासने हेतुः । तदयमर्थः । सामान्यविशेषवता लक्षणेन करणभूतेन या प्रकृत्यादिविभागकल्पना तया हेतुभूतया शब्दानामनुशासनं व्याकरणं व्याकरणेन वा शब्दानामनुशिष्टिरिति । तत्रोत्सर्गलक्षणं सामान्यवत् । तद्यथा । 'कर्म्मण्यणि'ति, तत्र धातोरित्येतत्कर्म्मणीत्येतच्च सामान्यम्, अनेन च कुम्भ-

कारो नगरकार इत्यादिकं महान्तं शब्दौघं प्रतिपद्यते । विशेषणवशं विशेषवत् । तद्यथा । 'आतोऽनुपसर्गे कः' इत्यत्रात इत्यनुपसर्ग इति च विशेषः । अनेन गोदः कम्बलद इत्यादिकं महान्तं शब्दौघं प्रतिपद्यते । एवमन्यत्रापि द्रष्टव्यम् । क्व चित्पठ्यते लाघवं भवतीति, अपाठ एव ज्यायान् । अथ किमर्थो वर्णानामुपदेश इति, न तावदविप्लुतवर्णस्वरूपज्ञापनार्थः । तस्य कलाध्मातादिदोषरहितस्य लोकत एव सिद्धत्वात् । अन्यथा दीर्घप्लुतादेरप्युपदेशः[1] कर्त्तव्यः स्यात् । न च ग्रहणकशास्त्रेण तेषां सिद्धिः, तस्य स्वरूपस्योच्चारणेऽकसमधिगम्यत्वात् । अथ तेषां लोकतो गर्गादिबिदादिपाठस्य तन्त्रेणोभयार्थत्वाद्वा परिज्ञानं ह्रस्वादिष्वप्येवमेवास्तु । न च 'वृद्धिरादैजि'त्यादिवत्संज्ञापरिभाषादिरूपता येन पारम्पर्येणापि ताव दुपयुज्येत, तस्मात्किमर्थ उपदेशेनेति प्रश्नः । 'प्रत्याहारार्थ इति' । प्रत्याह्रियन्ते संक्षिप्यन्ते ऽस्मिन्वर्णा इति प्रत्याहारः । विशिष्टानुपूर्वीको विशिष्टानुबन्धयुक्तश्चाक्षरसमाम्नायः । स यथा स्यादित्येवमर्थ इत्यर्थः । संक्षेपो राशीकरणम् । प्रत्याहारो वा किमर्थ इत्याह । 'प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थ इति' । सति हि प्रत्याहारे 'आदिरन्त्येन सहेते'त्येतत्प्रवर्तते तत्प्रवृत्तौ चाकारादीनां वर्णानामणित्यादिकास्संज्ञास्संपद्यन्ते ताभिश्च व्यवहारे लाघवं भवति, असति तु प्रत्याहारे सन्निवेशविशेषापेक्षयोराद्यन्तयोरभावाद् आदिरन्त्येनेत्यस्याप्रवृत्तावणादिसंज्ञाऽभावादकारादीनां यावतां कार्यमिष्यते तावन्तः स्वरूपेणैव ग्राह्याः स्युः, ततश्च गौरवप्रसङ्ग इत्यर्थः । अथ वा प्रत्याह्रियन्ते संक्षिप्यन्त इति संक्षेपः सङ्कोचः प्रत्याहारोऽणादिसंज्ञा, सति हि वर्णोपदेशे पूर्वोक्ताक्षरसमाम्नायस्तावत्संपद्यते तेनाणादयः संज्ञास्ततो लाघवेन शास्त्रप्रवृत्तिरित्यर्थः ॥

अइउण् ॥ कोऽस्य सूत्रस्यार्थः । किमभिधेयं पृच्छ्यते किं वा प्रयोजनं, तत्राभिधेयं नास्त्येव, अभिधेयशून्यस्यापि प्रयोग उपपद्यते, प्रयोजनार्थो हि शब्दानां प्रयोगो विद्यते चात्र प्रयोजनमणादिसंज्ञानिष्पत्तिः ।

१ अपि कर्तेति पा॰ २ ।

अथेह कस्मादाद्गुणादिकमच्कार्यं न भवति । उच्यते । अत्र च सत्यस्मिन् सन्निवेशे 'हलन्त्य'मित्यस्मिन् प्रवृत्ते आदिरन्त्येनेत्यनेनाच्संज्ञा निर्वर्त्यते, अतो ऽस्मात्सन्निवेशात्प्रागकारादीनामच्त्वाभावात् तत्कार्याभावः । अथ वा चादिषु पाठान्निपातत्वं निपातत्वात्प्रगृह्यसंज्ञा प्रगृह्यत्वात्प्रकृतिभावः । किं निपातव्यक्तिरेकैवात्र निर्दिश्यते, ननु सर्वा एव व्यक्तयो निर्दिष्टुमिष्टाः । सत्यं, तथापि सर्वासां युगपदुच्चारयितुमशक्यत्वादेकैव निर्दिश्या सा च निपातव्यक्तिरेकैव युक्ता, त[1]न्निर्द्देशे संहिताकार्याभावादिष्टस्य रूपस्य स्फुटमवगमात् । 'अनेन क्रमेणेति' । अनेन क्रमस्य विवक्षितत्वं दर्शयति । एवं ह्यण्ग्रहणेष्वाकारादीनां त्रयाणां ग्रहणमिण्ग्रहणेष्वकारस्याग्रहणम्, उग्ग्रहणेष्वकारेकारयोर्द्वयोरप्यग्रहणमुपपद्यतइति भावः । 'वर्णानिति' । यद्यमी वर्णाः, कारप्रत्ययः कस्मान्न भवति । उच्यते । 'वर्णात्कार'इत्यस्य नायमर्थो वर्णादुच्चार्यमाणात्कारः प्रत्ययो भवतीति । एवं हि विज्ञायमाने ककार इत्यादावुच्चार्यमाणस्याज्झल्समुदायस्यावर्णत्वात्कारप्रत्ययो न स्यात् किन्तर्हि निर्देश इत्यनुवृत्तेः यस्योच्चार्यमाणस्य प्रयोगस्थो वर्णो निर्दिश्यः प्रतिपाद्यस्तस्माद्वर्णाद्वर्णस्य प्रतिपादकात्कारप्रत्यय इत्यर्थः । अत्र चानुपूर्वीसंपादनएव तात्पर्यं न तु कविपुत्रइत्यादिषु दृष्टानामकारादीनां प्रतिपादनइति कारप्रत्ययाभावः । 'अन्तइति' । यद्यपि णकारस्य पूर्वोत्तरवर्णापेक्षया मध्यभावस्तथापि पूर्वापेक्षमन्त्यत्वमस्त्येव,'हलन्त्य'मित्यत्र ह्यन्त्यत्वमाश्रितं न मध्यत्वं प्रतिषिद्धं, तच्चान्त्यत्वमस्त्येव मध्यत्वं तु सदप्यनाश्रितत्वादकिञ्चित्करमितिभावः । नन्वेवमप्यप्रधानत्वाद् यथाच्कार्यंन्न भवति तथेत्संज्ञापि न स्यादित्याशङ्क्याह । 'इतमिति' । अप्राधान्यमणादिसंज्ञास्वनन्तर्भावात्स्यात् स च सहेतेति वचनादित्संज्ञापूर्वक इति भावः । 'तस्येत्यादि' । तस्येति कर्म्मणि षष्ठी, ग्रहणमुपादानं तच्च शब्दविषयं सदुच्चारणं संपद्यते । उच्चारणवचन एव वा ग्रहिः, ग्रहणवता प्रातिपदिकेनेति यथा । 'एकेनेति' । सहार्थयोगे तृतीया । तस्य णकारस्यैकेनादिना ऽकारेण सह प्रदेशेषु संज्ञात्वेनोच्चारणं भवति

१ अन्यनिर्देशे संहितायामिष्टरूपस्य स्फुटमनवगमात् पा॰ २ ।

न केवलस्य, आदिरन्त्येनेतिवचनात्रापि वर्णान्तरसहितस्येत्यर्थः । अथ वा तस्येति कर्त्तरि षष्ठी । ग्रहणमुपादानमेव, स णकार एकेनैवादिना सहितो ग्राहको भवति न त्वनेकेन नापि वर्णान्तरेण, न च केवल इत्यर्थः । 'उरण् रपर' इत्यकारेणेति । अत्राकारेणेत्येतावद्विवक्षित 'मुरण् रपर' इत्युपलक्षणम्, 'उरण् रपर' इत्यादावकारेणेत्यर्थः । अत एवाकारेणेत्युक्तम्, 'उरण् रपर' इत्यस्य तु विवक्षितत्वे तच वक्तव्यम् । अयेणः पीध्वमित्यादाविकारेण ग्रहणं कस्माच भवति 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ'-वित्यत्रेकारोकारयोर्द्वयोः स्वरूपेण निर्द्देशाद्, अन्यथा हीण इति ब्रूयात् । न च पूर्वेण परेण वेति सन्देहः, पूर्वेणेति व्याख्यानात् । य्वोरित्यपि हि निर्द्देशे किं ह्रस्वयोर्ग्रहणमुतदीर्घयोः, अथ यकारवकारयोरिति सन्देहाद् व्याख्यानत एव निर्णयः, 'ह्रस्वमग्रहणमित्यादि' । प्रयुज्यतइति प्रयोगो धात्वादिः, तत्र ह्रस्वमवर्णं संवृतं संवृतादयः शब्दा उभयवचना द्रव्यमाहुर्गुणं च । यथा शुक्लादयः, संवृतगुणयुक्तमित्यर्थः । 'विवृतत्वमिति' । गुणवचनात्त्वप्रत्ययः । विवृतगुणत्वमित्यर्थः । तथा च शिक्षा विवृतकरणास्स्वराः, तेभ्य ए ओ विवृततरौ, ताभ्यामै औ, ताभ्यामप्याकारः, संवृतो ऽकार इति । 'तेषां सावर्ण्यप्रसिद्ध्यर्थमिति' । अन्यथा भिन्नत्वात्प्रयत्नस्यासति सावर्ण्ये दण्डाढकमित्यादौ दीर्घप्लुतयोः परतो 'ऽकः सवर्णे दीर्घ' इति दीर्घत्वं न स्यात् । ननु च सत्यपि विवृतत्वे नैव प्लुतस्य दीर्घत्वं प्राप्नोति तस्मिन्कर्तव्ये प्लुतस्यासिद्धत्वात्, स्वरसन्धिषु प्लुतस्य सिद्धत्वज्ञापनाददोषः । 'विवृत इति' । विवृततर इत्यर्थः । नहि विवृतस्य विवृततरेण सावर्ण्यमुपपद्यते प्रयत्नभेदात् । विवृतोपि हि प्रतिज्ञायमानो यद्यक्षरसमाम्नायिक एव प्रतिज्ञायेत ततो धातुप्रातिपदिकप्रत्ययनिपातस्थस्याकारस्य संवृतत्वादच्त्वञ्च स्यात् । ततश्च शमामष्टानां दीर्घो ऽकारस्य न स्यात्, अन्त्यस्यैव तु स्यात्, दृषदित्यन्तोदात्तो न स्यात् । नायक इति प्रत्ययाकारस्यानच्त्वादायादेशो न स्यात् । प्रपचतीति प्रशब्दाकारस्य 'निपाता आद्युदात्ता' इत्याद्युदात्तो न स्यात् । 'अस्य च्वावि'त्यादावुपात्तस्य संवृतत्वादनण्त्वादसति ग्राहकत्वे ऽकारस्यैव ग्रहणाच्छुक्लीभवतीत्यादावेव

स्यात् मालीभवतीत्यादौ तु न स्यात् । अथाक्षरसमाम्नायिकस्यैव विवृतत्वप्रतिज्ञाने किं प्रयोजनं, नह्ययं क्वचिदपि पुनः प्रयुज्यते । उच्यते । यत्रा-'कस्सवर्णे दीर्घ' इत्यादौ प्रत्याहारग्रहणं तत्रादिरन्त्येनेतिवचनादनयोरेवाकारककारयोरनुकरणमिति तेन प्रत्याहारगतेनाकारेण विवृतेन प्रयोगस्थयोर्दीर्घप्लुतयोः सावर्ण्यग्रहणे सति खट्वाढकमित्यादौ दीर्घत्वादि कार्यं यथा स्यात्, असति हि विवृतत्वे 'अस्य च्वा'वित्यादिवदप्रत्याहारेष्वपि संवृतस्य प्रयोगस्थस्य ह्रस्वस्यैव हि कार्यं स्यात् । सति तु विवृतत्वे दीर्घप्लुतयोरपीत्यस्त्येवाक्षरसमाम्नायिकमात्रस्यापि विवृतत्वप्रतिज्ञाने फलम् अतः पूर्वोक्तदोषप्रसङ्गादेव यो नाम कश्चिदकारः स सर्वो विवृतः प्रतिज्ञायते, तदाह । 'इह शास्त्रइति' । इहेत्येतावत्युक्ते सति सन्निधानादक्षरसमाम्नाय इत्यर्थस्यादिति शास्त्रग्रहणम्, ननु च 'स्य च्वा'वित्यादौ सत्यपि विवृतत्वे नैव सवर्णानां ग्रहणं सिध्यति अनण्त्वात्, प्रत्युच्चारणं ह्यन्ये चान्ये चाकारादयः, तदिह सर्वेषां विवृतत्वेपि सावर्ण्यमात्रं सिध्यति न त्वण्त्वमपि, येऽक्षरसमाम्नायउपदिष्टास्तएवाण, आदिरन्त्येनेति वचनात् । ततश्चाकः सवर्णइत्यादौ प्रत्याहारएव सवर्णग्रहणं स्यात्, ना'स्य च्वावि'त्यादौ । एतच्चोकारप्रिकारादिष्वपि समानं, तेषां 'को यण ची'त्यादावेव ग्राहकास्युर्न 'यस्येति चे'त्यादौ । ननु प्रत्यभिज्ञानादुच्चारणस्य चाभिव्यञ्जकत्वात्सर्वेषूच्चारणेषु एक एवाकारस्तत्कस्यानण्त्वमाशङ्क्यते । यद्येवमनुबन्धकार्याणि संकीर्येरन्, 'कर्म्मण्यण्' 'आतोनुपसर्गे क'इत्यादिषु पुनःपुनरेक एवाकार उच्चार्यते स च नानानुबन्धयुक्त इति सर्वत्र सर्वानुबन्धकार्यप्रसङ्गः, 'अ सांप्रतिक'इत्यस्य चानुबन्धकार्यप्रसङ्गः । लोकवद्व्यवस्था भविष्यति । तद्यथा लोके इह मुण्डो भव, इह जटिलो भव इह शिखी भव इह तूष्णीको भवेत्येकस्यापि धर्म्मिणो देशभेदेन धर्म्मभेदउक्ते यो यत्र धर्म्म उक्तः स तत्रैव व्यवतिष्ठते न पुनर्धर्म्मिण एकत्वादन्यत्रापि भवति, तद्वदिहापि गोष्ठच इत्यत्र चाश्वादिप्रतिषेधो लिङ्गमावृत्तिकृतमपि ष्ठच्त्वमाश्रीयतइति, तेन घटेन तरति घटिकः, धनस्य निमित्तं धन्यमित्यादौ ष्ठञ्जलवणो ठन्यतो भविष्यतः । आवृत्तिकृ-

तादेव ह्रस्वव्यपदेशात् स्वाश्रयस्यैकाज्व्यपदेशस्य निवृत्तत्वात्किरिणेत्यादै। सावेकाच इति विभक्तेरुदात्तत्वं न भविष्यति। स्यादेतत्। एकश्चेदकारः तमेकदैक एवोच्चारयेच बहवः सहेति। न। दर्शनस्पर्शनादिवदुपपत्तेः। यथैकमेव पटमेकदैव कश्चित्स्पृशति कश्चित्पश्यति तादृगेतदुच्चारणं नामेति। सत्यमेकत्वेऽप्यकारस्य न कश्चिद्दोषः। युक्तिवशात्तु प्रत्युच्चारणं भिन्नोकार आश्रितः। तथाहि। दण्ड–अग्रमित्यकारयोः कालव्यवायो दृश्यते दण्डेतिशब्दव्यवायश्च, न चैकस्य कालशब्दव्यवाय उपपद्यते। नानात्वे तूपपद्यते, यथा 'अरुणि' त्यत्राकारेकारयोः यथा वा ऽर्हिरिति। ननु यथा एकस्यापि घटादेस्तव्यञ्जकप्रदीपसंनिधानासंनिधानाभ्यामुपलब्ध्यनुपलब्धी तथैकस्याप्यकारस्य व्यञ्जकध्वनिसंनिधानात्प्रथममुपलब्धस्य मध्ये च तदसंनिधानादनुपलब्धस्य पश्चात्तत्संनिधानादुपलब्धिरिति उपलब्ध्योरेव कालव्यवायो नाकारस्य, नैतत्प्रतीतिसाक्षिकमुच्यते। लौकिका ह्यकारयोरेव व्यवायं प्रतिपद्यन्ते येऽस्मिन् दुस्तर्के शिक्षिता न भवन्ति। किं चानुनासिकत्वादीनां विरुद्धानां धर्म्माणामेक एवाश्रयोकार उपलभ्यते, अतो विरुद्धधर्म्माध्यासात् गवाश्वादिवद्भेदोनुमातव्यः, प्रत्यभिज्ञा च जातिनिबन्धना ज्ञानादिवत्, व्यक्तिप्रत्यभिज्ञा त्वसिद्धा भेदस्यैव प्रतिपुरुषं प्रसिद्धेः। तथा च कुड्यान्तर्हितेषु वक्तृषु शब्दविशेषाद्वक्तृविशेषं निश्चिन्वन्ति न चैतदस्यैव प्रतिभासे सत्युपपद्यते। एवं तर्हि सैव जातिरत्र निर्दिश्यते ततश्च सर्वेषामणत्वं भविष्यति। यद्येवमणुदित्सवर्णस्य चेत्यण्ग्रहणमनर्थकम्, एवं ह्यक्षरसमाम्नायव 'हस्य चवा' वित्यादावपि जातिनिर्देश एवास्तु किमण्ग्रहणेन। एवं तर्हि नैवात्र जातिर्निर्दिश्यते नाप्येकैव ह्रस्वव्यक्तिः षडपि ह्रस्वव्यक्तयो निर्दिश्यन्ते तदेतदेवं कथं भवति। सादृश्यप्रधानो निर्देशः। सादृश्यं च षण्णामपि ह्रस्वव्यक्तीनामस्तीत्येकव्यक्तिनिर्देशेपि तद्रूपस्याविवक्षितत्वात् षण्णामप्ययं निर्देशः संपद्यतइति सर्वासामणत्वसिद्धिः। एवं च कृत्वा यदत्र विवृतोच्चारणं तदेव धात्वादिगतस्याप्यकारस्य विवृतत्वोच्चारणं संपन्नमिति न तेषां पृथग्विवृतत्वं प्रतिज्ञातव्यमिति सर्वेप्रवदातम्। कथं पुनर्ज्ञायते विवृतः प्रतिज्ञायतइत्याह। 'तस्येत्यादि'। यदि

पूर्वमकारो विवृतो न प्रतिज्ञातः स्यात् ततस्तस्य विवृतस्य 'प्रयोगार्थम्'। अर्थशब्दो निवृत्तिवचनः प्रयोगनिवृत्त्यर्थं प्रत्यापत्तिं न कुर्यात्। अथ वा तस्येति संवृतः परामृश्यते, तस्य संवृतस्य प्रयोगो यथा स्यादित्येवमर्थमित्यर्थः। स्वरूपाद्धि प्रच्युतस्य पुनस्तत्प्राप्तये यत्नोऽर्थवान् भवति। ननु चातिखट्व इत्यादावाकारस्य विवृतस्य ह्रस्वो विधीयमान आन्तरतम्याद्विवृतो भवेत् तस्य प्रयोगो माभूदिति प्रत्यापत्तिवचनमर्थवत्। नैतदेवं, ह्रस्वादेशेष्व 'चश्चे' त्युपस्थानादचो ह्रस्वेन भाव्यम्, असति च विवृतत्वे ऽकार आकारं न गृह्णातीति आकारस्य ह्रस्वो नैव स्यादिति कस्य प्रत्यापत्तिः स्यात्, यस्त्वोः 'पोन्यतरस्या' मित्याकारस्यैव ह्रस्वस्तस्य प्रत्यापत्तिस्स्यात्, एवं मन्यते। नैव लोके न च वेदे विवृताकारोऽस्ति कस्तर्हि संवृतः योऽस्ति स भविष्यति, अथ वा यदि विवृतः प्रतिज्ञायते प्रयोगोऽपि तस्य तथाभूतस्य प्राप्नोतीत्याशङ्क्याह। 'तस्येत्यादि'। अस्मिन्पक्षे ज्ञापकस्यानुपन्यस्तत्वाच्च काचिदनुपपत्तिः, विवृतत्वप्रतिज्ञानं तु व्याख्यानाद् अवसेयं, यदि प्रत्यापत्तिः क्रियते तथैव प्रत्यापत्त्या सर्वाकारः संवृतः संपन्न इति पुनरपि सावर्ण्यं न स्यादित्यत आह। 'शास्त्रान्तइति'। शास्त्रान्ते क्रियमाणा प्रत्यापत्तिः सर्वेष्वेव शास्त्रकार्य्येष्वभियातीति भावः॥

ऌलृक्॥ इह प्रयोजनार्थो वर्णानामुपदेशो न स्वरूपज्ञापनार्थः, ऌकारोपदेशस्य च न किञ्चित्प्रयोजनं दृश्यतइति तदुपदेशमाक्षेप्तुकामः किं पुनः कारणम् ऌकारोपदेशस्यैव प्रयोजनं पृच्छति न पुनर्वर्णान्तरोपदेशस्येत्याशङ्कां निराकुर्वन्नाह। 'अकारादयो वर्णा इति'। वर्णशब्द उभयलिङ्गः, तथा च पूर्वत्र ह्रस्वमवर्णमित्युक्तम् इह च वर्णा इति। 'प्रचुरप्रयोगविषया इति'। प्रयुज्यतइति प्रयोगो धात्वादिः प्रचुरः प्रभूतः प्रयोगो विषयो येषामिति त्रिपदो बहुव्रीहिः, अथ वा प्रयुक्तिः प्रयोगस्तस्य विषयः प्रयोगविषयस्ततः प्रचुरशब्देन बहुव्रीहिः। 'सुज्ञानम्' 'प्रयोजनमिति'। तद्यथा। दण्डाग्रं दध्यत्र देवच्छत्रमित्यादौ स्थानित्वं निमित्तत्वमित्यादि। 'ऌकारस्त्विति'। तुशब्दो ऽकारादिभ्यो विशेषं दर्शयति। 'कॢपिस्य एवेति'। स्यादेतत् कॢपिस्थस्य तस्याच्कार्यार्थ उपदेश इति,

तत्राह । 'क्रुपेश्चेति' । नहि तस्याप्ययमौपदेशिकः किं तर्हि 'कृपो रो लः' इति विधानेन संपादितः, स चासिद्ध इत्यर्थः । ततः किमित्याह । 'तस्यासिद्धत्वादिति' 'अच्कार्याणि भविष्यन्तीति' । कल्पतइति धातोरन्त इत्युदात्तत्वं, कृप्तमिति हि शेषनिघातः, कल्पनमितौ 'क्ङिति' 'गुणवृद्धी' इत्यादीनि । 'किमर्थम् लृकार उपदिश्यतइति' । नहि तस्ये 'को यणचि' त्यादौ स्थानित्वं निमित्तत्वं वा संभवतीति भावः । 'लत्वविधानादिति' । लत्वं विधीयते येन लत्वविधानं सूत्रं 'कृपो रो लः' इत्येतत् तस्मात्परार्णोत्यर्थः । एतेन तेषु लत्वस्य सिद्धत्वं दर्शयति । 'क्लृ३प्तशिख इति' । अत्र गुरोरनृत इति प्लुते कर्तव्ये लृकारस्य सिद्धत्वात् तस्य चानच्त्वादचो विधीयमानः प्लुतो न स्यात् । 'प्रकॢप्त इति' । अन्तर्भावितण्यर्थात्कर्मणि क्तः । 'गतिरनन्तरः' शेषनिघातः । अत्रो 'दात्तादनुदात्तस्य स्वरित' इत्यस्मिन्कर्तव्ये लृकारस्य सिद्धत्वात्तस्य चानच्त्वादचो विधीयमानस्वरितो न स्यात् । ननु च नाचः स्वरितो विधीयते, सत्यम् । अनुदात्तसंज्ञा त्वचो विधीयते एवं स्वरितसंज्ञा ऽपि ततश्च स्थान्यादेशयोरुभयोरपि लृकारयोरनच्त्वात् स्वरितो न स्यादेव । 'कॢप्तवानिति' । अत्रा 'नचि चे' ति पकारस्य द्विर्वचनं न स्यात् । यद्यपि पूर्वमपि द्विर्वचनस्योदाहरणं सम्भवति तथापि स्पष्टार्थमिदमुदाहरणमुपन्यस्तम् । ननु च 'कृपो रो लः' इत्येतत्सूत्रं स्वरितविधानात्परम् अ अ इत्येतस्मात्पूर्वमस्तु, एवं हि लत्वस्यासिद्धत्वात् प्लुतस्वरितद्विर्वचनान्यपि लृकारस्यैव सिद्ध्यन्ति । नैतदस्ति । 'कृपो रो लः' इत्येतस्मिन्नुत्कृष्यमाणे 'वो यङी' त्येतदप्युत्क्रष्टव्यं ततश्च निजेगिल्यतइति 'हलि चे' ति दीर्घत्वं स्यात्, तस्मिन् कर्तव्ये लत्वासिद्धत्वादिति यथान्यासमेव साधीयः । कॢपिस्थ एव प्रयुज्यतइत्येतदपि शिथिलयन्नाह 'यच्चाशक्तिजमिति' । साधुशब्दोच्चारणशक्तेरन्या शक्तिरेवात्राशक्तिः नह्यशक्तेर्जन्म । नन्वसाध्वनुकरणमप्यसाध्वेव, यथा ब्रह्महत्यानुकरणं, यो ह्येवमसौ ब्राह्मणं हन्तीति ब्राह्मणं हन्ति सोपि प्रत्यवैति । विषमोयमुपन्यासः । न तत्रानुकरणात् प्रत्यवायः किं तर्हि अविकलं तत्क्रियानुष्ठानादेव । एवं यदि पुनरनुकरणात्प्रत्यवायः स्याद् एवमसौ

ब्राह्मणं हन्तीति कदलीस्तम्भं छिन्दन्नपि प्रत्यवेयात्, तद्वदिहापि य एवं कुमार्य्यॢतकशब्दः प्रयुक्तस्तमेव यद्यनुकुर्वन् प्रयुञ्जीत ततः स्यादसाधुः, अयं तु शब्दान्तरं प्रयुङ्क्ते, कथम् । अर्थभेदात् । कुमार्या प्रयुक्तस्य पुरुषविशेषोऽर्थः, अनुकरणस्य तु कुमार्या प्रयुक्तमनुकार्यशब्दरूपम् । अत एवाह । 'असाधुशब्दरूपं तदनुकरणस्यापीति' । न चापशब्दपदार्थकत्वादपशब्दत्वम्, अन्यथा ह्यपशब्द इत्येवायमपशब्दस्स्यात् । नापि 'प्रकृतिवदनुकरणं भवती'त्यपशब्दत्वं, शास्त्रीया हि तत्र प्रकृतिर्गृह्यते शास्त्रीयं च कार्यमतिदिश्यते न चापशब्दश्शास्त्रीया प्रकृतिः, न चाप्यपशब्दत्वं शास्त्रीयं कार्यम्, अतो ऽशक्तिजानुकरणमपि साध्वेव । इष्यतइत्यनेनैतद्दर्शयति न्यायसिद्धमप्येतच्छिष्टानामिच्छया नियम्यतइति, तेन किं सिद्धं भवति, ॡवर्णस्य दीर्घा न सन्तीत्येतत्सिद्धं भवति, अन्यथा 'ॠत इद्धातो' रित्येतच्छक्तिवैकल्याद्ॡत इति पठन्तीं कुमारीं यदा शिष्टो ऽनुकुर्यात् कुमार्य्यॣतक इत्याहेति तदा ॡवर्णस्य दीर्घप्रयोगः साधुरेव स्यात् । 'इको यणची'त्यत्रापत्यपि ॡकारोपदेशे वैषम्यात् संख्यातानुदेशाभावेपि आन्तरतम्यात्सिद्धमिष्टं, गमिप्रभृतीनामृकारस्येत्संज्ञापि पुषादिद्युताद्यॢदित इति ज्ञापकात्सिद्धा, अतः पूर्वोक्तान्येव प्रयोजनानि । ननु च तान्यपि 'ऋकारॡकारयोः सवर्णसंज्ञा वक्तव्येति' सवर्णसंज्ञया सिद्ध्यन्ति, सा चावश्यं वक्तव्या पितृ–ॡकार इत्यत्र सवर्णदीर्घत्वं यथा स्यात् । सत्यम् । सवर्णसंज्ञापक्षे सा तावदुक्तव्या क्लृप्तशिखइत्यत्र प्लुतसिद्धये यत्नः कर्त्तव्यो, ऽनृत इति प्रतिषेधप्रसङ्गात् ॡकारोपदेशे तु स तावदुपदेश्यः स्वरसन्धिप्रकरणे च ॡकारस्य ऋकारवद्भावो वाच्य इत्यविशेषात् सूत्रकार ॡकारमुपदिदेश॥

एओङ् ॥ अत्र पूर्वोक्तस्येति नोक्तं पूर्वैः सहास्य ग्रहणासम्भवात् । अथ 'विद्विदादिभ्योङ्' 'अस्यतिवक्तिख्यातिभ्योङि'त्यकारेण ग्रहणं कस्मान्न भवति । आदिरन्त्येनेत्यत्राणुदित्सवर्णस्य चेत्यतो ऽप्रत्यय इत्यनुवृत्तेः । एवञ्च 'रोः सुपी'त्यत्राप्रत्यय इति निषेधात् स्वरूपग्रहणं 'सुपि चे'त्यत्र तु प्रतिषेधो न भवति यञादौ सुपीति विशेषणात्, उत्तरत्र च बहुव-

चने झलीति, 'सुप्तिङन्तं पद'मित्यत्रापि तिङ्साहचर्यात् सुबितिप्रत्याहारः, 'शास इदङ्हलो'रित्यत्र प्रत्याहारे सति अङादौ हलादौ चेत्वं विधीयेत, ततश्चाङ्हलोरित्यनर्थकम्। एतावन्तो हि प्रत्यया अङादयो हलादयश्च, व्यतिशासे इत्यत्र तु क्ङितीत्यनुवृत्तेरेवाप्रसङ्गः, अतोऽङ्ग्रहणसामर्थ्यात् स्वरूपग्रहणम्। ऋदृशोऽङीति न प्रत्याहारः 'ऋच्छत्यॄता'मिति ऋतां लिटि पुनर्गुणविधानात्। 'सनि च' 'इङश्चे'ति न प्रत्याहारः, 'इको झलि'ति कित्त्वविधानात्, 'अज्झनगमां सनी'ति दीर्घविधानाच्च, नहीङन्तानां सनि गम्यादेशे इगन्ता अजन्ता वा धातवः सनि संभवेयुः। 'परिमाणाख्यायां सर्वेभ्यः' 'इङश्चेति'न प्रत्याहारः यदि स्यादृकारान्तानामिङन्तानां च सामान्यलक्षणेनैव घञः सिद्धत्वादिवर्णोवर्णान्तेष्वजपोर्बाधाय घञ्विधिस्स्यात्। न च तयोरपि वचनसामर्थ्याचित्यो बाध इति विकल्पस्स्यात्। ततश्च तद्विधावेव वा ग्रहणं कुर्यात्। 'क्रीङ्जीनां णा'विति न प्रत्याहारः। क्रीज्योः पृथगुपादानाद्धातुसाहचर्याच्च। इङ्धार्योरिति न प्रत्याहारः धारिसाहचर्यात्॥

ऐऔच्॥ इह 'दिरन्त्येन सहेते'ति मध्यवर्त्तिनामज्ित्येषा संज्ञा भवन्ती इकारादिनामिव णकारादीनामपि प्राप्नोति ततश्च दधि णकारः दधि करोति दधि ङकार इति यणादेशः प्राप्नोति, एवमग्ग्रहणे णकारस्यापि ग्रहणे सुगण् णकार इत्यकः सवर्णे दीर्घः प्राप्नोति, तथा अड्ग्रहणे चकारस्यापि ग्रहणाद्रुचीनामित्यादौ अड्व्यवाय इति णत्वं स्यात्, एवं सर्वेष्वेव प्रत्याहारेषु मध्यवर्त्तिनामनुबन्धानां तत्तत्प्रत्याहारनिबन्धनं कार्यं प्राप्नोतीत्यभिप्रायेणाह। 'प्रत्याहारेनुबन्धानामिति'। प्रत्याहारे अक्षरसमाम्नाये ये ऽनुबन्धाः तेषामज्ग्रहणेषूपलक्षणमेतत्। अजादिप्रत्याहारग्रहणेषु कथं ग्रहणं न भवति प्राप्नोत्येवेत्यर्थः 'आचारादिति'। आचरणमाचारः, आचार्यस्य प्रवृत्तिः 'उणादयो बहुलं' 'तृषिमृषिकृशेः काश्यपस्य' अचि श्नुडिति, एतो ज्ञापकाच्च भवति, सामान्यापेक्षं च ज्ञापकमिति कार्यान्तरमपि तत्रतत्र न भवति। 'अप्रधानत्वादिति'। अणादिसंज्ञाप्रणयना-

येऽमनुबन्धोच्चारणं तत्राकारादारभ्य आ चकारान्मध्यवर्तिनामच्संज्ञा भवन्ती स्वप्रवृत्तेः प्राग्येषां स्वार्थमुपादानं निश्चितं न परार्थमेव तेषां प्रधानानां भवति तत्र च येषामृकारादीनां न क्व चिदपि संज्ञास्वरूपान्तर्भाव-स्तेषां तावत्स्वार्थमेवोपादानमिकारादीनामप्यणादिसंज्ञासु न कथं चिदपि प्राधान्यम्। इगादिसंज्ञासु संज्ञास्वरूपान्तर्भावे ऽपि स्वरूपमित्यनुवृत्तेः स्वार्थमप्युपादानं न परार्थमेव, णकारादीनां तु परार्थमेवेत्यप्राधान्यम्। किं च णकारादीनामच्संज्ञा प्राप्नोति लोपश्च तत्र परत्वान्नित्यत्वाच्च लोपे कृते संज्ञाप्रवृत्तिकाले ऽसत्त्वादपि तेषामजादिसंज्ञाऽभाव इत्याह। 'लोपश्चेति'। स्वार्थएव तरप्, 'अल्पाच्तर' मिति यथा, यस्मिंस्तु प्रत्याहारे यो ऽनुबन्धोऽपेक्षितः तस्य वचनसामर्थ्यात्तत्प्रवृत्तेः प्राग् लोपाभावः। इहाकारादयो वर्णाः सभागा इष्यन्ते, यदाह 'तस्यादित उदात्तमर्द्धह्रस्वं,' पूर्वस्यार्द्धस्यादुत्तरस्येदूतावेति। सन्ति च केषां चिद्भ्रान्ता वर्णान्तरबुद्धिबोध्या आकारादिष्वकारादयः, एकारैकारयोरकारिकारौ, ओकारौकारयोरकारोकारौ, ऋकारे रेफ, ऌकारे लकारः। ते तत्तदकारादिग्रहणेन गृह्येरन्न वेति सन्देहः। तदर्थं च किमकारादिसंघातमात्रमाकारादयो वनादिवच्छरीरादिवद्वा, किं वा वर्णान्तरमेतत्सदृशावयवं नृसिंहादिवदिति सन्देहः। किं तावत्प्राप्तम्। संघातमात्रमिति, कुतः। अकारादिरूपप्रत्यभिज्ञानात् क्रमेणोपलब्धेश्च, एचो इति ह्युक्ते पूर्वमकारः पश्चादिदुतौ इति प्रतिपत्तिः, स्थानक्रमाभिधानाच्च एऐ कण्ठतालव्यौ ओऔ कण्ठ्योष्ठ्याविति। नह्येकस्य वर्णस्य स्थानद्वयेन क्रमेण निष्पत्तिः। सूत्रकारोऽप्याह एचोः प्रुतिप्रसङ्गे तदवयवाविदुतौ प्लवेते इति। आश्वलायनोऽप्याह 'विविच्य सन्ध्यक्षराणामकार' मिति। अतः संघातमात्रत्वात्तद्ग्रहणेन ग्रहणे सति अग्ने इन्द्रः। वायो उदकमित्यत्र सवर्णदीर्घत्वं प्राप्नोति। 'विप्रतिषेधे परं कार्य्य' मिति परत्वादन्तरङ्गत्वाच्चावयवप्रतिपत्तिपूर्वकत्वात्समुदायप्रतिपत्तेः, अग्ने एतौ-त्येङः पदान्तादिति स्यात्, आलूय प्रलूयेति तुक्, खट्वाभिरित्यत्रैस्, यातेत्यतो लोपः, वाचा तरति वाचो निमित्तमिति ठञ्ठकौ ठन्यतो

१ इदमिति पा० २।

स्याताम्, एवमाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह । 'वर्णेष्वि-त्यादि' । 'वर्णैकदेशा इति' । पुनर्वर्णग्रहणं वर्णानां सतामेकदेशा एते न पुनर्वर्णसमूहानामिति ज्ञापनार्थं, तेन वर्णैकत्वव्यवस्थापक एकत्वप्रतिभासो निर्णीतः, नह्याकारादेः पदस्येव वर्णसमूहत्वेन प्रतिभासः किं त्वेकवर्ण-तया, अकारादिभागसंवेदनं त्वेकवर्णत्वेपि तस्य सभागत्वात् भागानां चाकारादिसादृश्यादुपपन्नं, तदाह । 'वर्णान्तरसमानाकृतय इति' । भागा-नामेव च क्रमोपलब्धिः स्थानभेदोप्येकवर्णत्वेपि वकारवदुपपन्नः, सूत्रकार-वचनमपि सदृशभागनिबन्धनमेवास्तु, अतोकारप्रत्यभिज्ञानादेरन्यथापि सि-द्धत्वादबाधितान्यथानुपपन्ना चैकत्वबुद्धिरेकवर्णत्वे प्रमाणम् । 'तेष्विति' । एकदेशेषु । 'तत्कार्यमिति' । वर्णान्तरकार्यं सवर्णदीर्घत्वादि न भवति, किं कारणमित्याह । 'तच्छायानुकारिणो हीति' । तच्छाया, तदाकारः, एवं प्रत्यक्षेणैक्यं साधयित्वा तत्र विप्रतिपन्नं प्रत्यनुमानमाह । 'पृथगित्यादि' । इच्छायोनिरात्मगुणोत्र प्रयत्नो न पुनः स्पृष्टतादिर्वर्णगुणः । इहैकप्रयत्न-निर्वर्त्यं एको वर्ण एकेच्छापूर्वकश्चैकप्रयत्नः, तत्र यथा एकवर्णोच्चारणे-च्छापूर्वकैकप्रयत्ननिर्वर्त्यत्वादकारादीनां सभागत्वेप्येकत्वं तथा ऋकारादे-रपि, नहि कश्चिदकाराद्युच्चारवत् प्रयत्नस्य तत्कारणभूताया इच्छाया वा भिन्नत्वमुपैति, अतो नरसिंहवज्जात्यन्तरत्वादकारादीनामभावादेव तत्कार्याणामभावः । यद्येवं 'तस्मान्नुड् द्विहल इति नुड् आनर्ध-त्यादावेव स्याद् आनृधतुरित्यादौ न स्याद्, ऋकारस्यस्य रेफस्याहल-त्वात् । तथा 'कृपो रो ल, इति लत्वं कल्प्ता, चलीक्लृप्यते कल्पयिष्यत-इत्यादौ शुद्धस्यैव रेफस्य स्यात् शुद्धो लकारो न तु क्लृप्त इत्यादावृकार-स्थस्य लकारः, रषाभ्यामिति णत्वमातीर्णमित्यादावेव स्यात् तिसृणां मातृणामित्यादौ तु न स्याद् इत्यत आह । 'नुड्विधीत्यादि' । सकारन-कारस्थानिकस्य मूर्द्धन्यस्य विनाम इति पूर्वाचार्याणां संज्ञा, इह तु णका-रस्य ग्रहणं नुड्विधौ तावद् द्विहल्ग्रहणं न करिष्यते । न चैवमाटतुरित्या-दावपि प्रसङ्गः, अश्नोतेश्चेत्यस्य नियमार्थत्वाद् ऋकारोपधस्य यदि भवति अश्नोतेरेवेति, अश्नातिनिवृत्त्यर्थं हि नाश्न इत्येव ब्रूयात्, लत्वे च रो

ल इति सामान्यनिर्देशादृकारऌकारस्ययोश्च रेफलकारयोर्निष्कृष्य स्थान्यादेशभावायोगादेकदेशविकारद्वारेण ऋकारस्यैव लकारः । अत्र च प्रमाणं 'लुटि च क्लृप' इति निर्देशः, णत्वेपि र इति सामान्यनिर्देशात् ऋकारस्योपि तावद्रेफो गृह्यते, न च परयाऽङ्गभक्त्या व्यवधानम्, 'अट्कुप्वाङ्नुम्व्यवायेपी' त्यत्र व्यवायेपीति विभज्य सामान्येन व्यवायेपि णत्वविधानात् । न चैवं वर्णान्तरव्यवायेपि प्रसङ्गः, अट्कुप्वाङ्नुम्भिरिति नियमार्थत्वात् । अक्षरसमाम्नायिकैस्तत्प्रत्यायितैर्वा व्यवाये यदि भवति एभिरेवेति, क्षुभ्नादिषु वा नृनमनतृप्नोतिग्रहणं ज्ञापकमिति प्रतिविधानम् ॥

ह्यवरट् ॥ अनुदात्त इति न प्रत्याहारः, 'प्राक् सितादड्व्यवायेपी' ति वचनात् 'प्रत्याहारे तस्मिन् प्रत्येकमट्त्वे 'ऽलोन्त्यस्ये' त्यन्त्यस्य स्यात् समुदायस्य त्वट्त्वे सर्वादेश इति कुतो व्यवायः । ननु चानुदात्त इत्यत्र यदा प्रत्याहारस्तदा ऽड्व्यवायइत्यत्रापि प्रत्याहार एव णत्वविधिवत्, ततश्चाभ्यवसुनोतीत्यादौ षत्वविधानार्थमेतत्स्यात् । एवं तर्ह्यादिरन्त्येनेत्यत्रापत्यय इत्यनुवर्तते स चान्वर्थः प्रतीयते विधीयतइति, तेन भाव्यमानेन सर्वत्र प्रत्याहारग्रहणं न भविष्यति, न चैवमिको यणची' त्यादौ दोषः, आदिरन्त्येनेत्येतद्धि अइउणित्यादिभिः प्रत्येकमभिसंबध्यते, तत्र क्व चिदन्वर्थग्रहणं क्व चिच । इड् वलादेरिति न प्रत्याहारः, 'विभाषेट' इति वचनात् । इड्विधौ स्वङ्गस्येत्यनुवृत्तं पञ्चम्यन्तं चेद्विपरिणम्यते इकारादीनां च प्रत्येकमिट्त्वं तत्रादेः परस्येत्यार्द्धधातुकादेरिकारादिरादेशः स्यात्, अविपरिणामे त्व 'लोन्त्यस्य' स्यात् समुदायस्य त्विट्त्वे सर्वादेशः । न च त्रिष्वपि पक्षेषु इणन्तादङ्गादुत्तरो य इट् तत उत्तरेषां षीध्वंलुङ्लिटां धकारस्य संभवः । 'दीधीवेवीटा' मिति न प्रत्याहारः । इण्व्यतिरिक्तानामिटां गुणप्राप्त्यभावात्, सर्वेषामिकां गुणनिषेधे निर्विषयत्वप्रसङ्गाच्च । 'इट ईटी' ति न प्रत्याहारः । ईटा साहचर्यात् । विधौ च स्वरूपग्रहणमुक्तम् अनुवादोपि तस्यैव न्याय्यः । अयं रेफो यकारात्पूर्वं उपदिश्येत हयवडिति परो वा यथान्यासम्, तत्र पूर्वोपदेशे यणग्रहणानि सर्वाणि रेफेण ग्राह्याणि 'इको यणचि' 'उदात्तयणो हल्पूर्वात्' उदात्तस्वरितयो यणः

स्वरितोऽनुदात्तस्य ‘संयोगादेरातो धातोर्यण्वत इति,’ तत्रेको यणचीति संख्यातानुदेशादिकारस्य रेफः प्राप्नोति, तथा देवित्वा दिदेविषति रलो व्युपधादिति कित्त्वविकल्पः स्याद् वकारस्य रलन्तर्भावात्। रेफस्य च वल्यनन्तर्भावात् गोधेरः पचेरन् ‘जीवेरदानुक्’ जीरदानुरिति ‘लोपो व्योर्वली’ति न स्यादतः पर एवोपदेश्यः। अत्र पक्षे दोषमुद्भावयितुमाह। ‘अयमित्यादि’। व्यवहितेऽपि परशब्दो वर्त्तते यथा बाल्यात्परं वृद्धत्वमिति। यकारात्परस्य रेफस्योपदेशादयं दोषो न तु वकारादिति वकारात्पर इति नोक्तं, यदि पर उपदिश्यते ततः किमित्याह ‘तस्येत्यादि’। ‘अनुनासिकः प्राप्नोतीति’। णकारस्तुल्यस्थानत्वात्। ननु चैवं सत्यन्तरतमपरिभाषा बाध्येत, नहि णकारो रेफस्यान्तरतमः प्रयत्नभेदात्, तन्त्रयनमित्यादौ तु सावकाशं वचनम्। नैतदस्ति। व्यक्तिः पदार्थ इत्यस्मिन्पक्षे एतच्चोद्यते तस्मिन्पक्षे सर्वासां व्यक्तीनां तात्पर्येण निर्देशाद्यदेतद्विषयं लक्षणं तत्प्रयत्नभेदादनन्तरतममपि णकारं न प्रवर्त्तयेद् व्यर्थमेव स्यात्। ‘द्विर्वचनं प्राप्नोतीति’। ततश्च द्वयो रेफयोः श्रवणं स्यात्, ‘रो रि’ लोपे द्विर्वचनस्यासिद्धत्वात्। हलो यमामित्यत्र च ‘झयो होऽन्यतरस्या’मित्यतोऽन्यतरस्यांग्रहणमनुवर्तते। अतः स्यादेव पक्षे द्वयो रेफयोः श्रवणम्। ‘परसवर्णः प्राप्नोतीति’। कः पुनरसौ, ननु रेफोष्मणां सवर्णा न सन्ति, वर्णान्तरापेक्षयैतदुच्यते रेफस्तु रेफस्य सवर्ण एव, एवं व्यक्तिपदार्थमाश्रित्य चोदिते जातिपदार्थमाश्रित्य परिहारमाह। ‘नैष दोष इति’। जातावेकवचनं नैते दोषा इति यावत्। ‘आकृताविति’। जातावित्यर्थः। इह केषांचिज्जातिः पदार्थः, गृहीततत्सम्बन्धो हि शब्दोऽर्थं बोधयति न चक्षुरादिवत्तन्निरपेक्षं, सम्बन्धग्रहणं च व्यक्तिषु न संभवति तासामानन्त्यात्। केषांचिद्व्यक्तिः पदार्थः, तत्रैव वाहदोहादिकार्यसम्भवात्, जातौ हि पदार्थे व्यक्तिषु क्रियमाणं वाहदोहादिकमचोदितार्थानुष्ठितः स्यात् जातेश्चोपलक्षणभावेनाश्रयणात्, सम्बन्धग्रहणं यथा यत्रासौ काकोऽदो देवदत्तगृहमिति। पाणिनेस्तूभयं केवलव्यक्तिपक्षे हि सम्बन्धग्रहणासम्भवः, जातिरुपलक्षणमिति चेत्, न। तटस्थत्वाभावात्। यत्र हि सम्बन्धग्रहणोत्तरकालं शब्दार्थः प्रतीयमानः

प्रातिस्विकेनाकारेण प्रतीयते न तदाकारेणैव तत्रोपलक्षणत्वं यथा गृहे, न-हि गृहं प्रतीयमानं काकाधारमेव प्रतीयते किं तर्हि प्रातिस्विकेनाकारेण इह तु गौरित्युक्ते गवाकारेण व्यक्तयः प्रतीयन्ते न खण्डादिरूपेणेति तट-स्थत्वाभावाच्चोपलक्षणत्वं जातेः । अस्तु तर्हि सैव वाच्या, न, व्यक्तेरपि प्रतीतेः । न खलु गौरित्युक्ते गोत्वमितिवविच्छिष्टा जातिः प्रतीयते किं त्वनियता व्यक्तिरपि, अन्यथासिद्धेरशब्दार्थत्वमिति चेत् न । तदभावात् । स्यादेतत् । सत्यम् अनियता व्यक्तिः प्रतीयते सा त्वपर्यवसानेन न तु शब्द-महिम्ना, जातिप्रतीतिर्हि न जातिमात्रे पर्यवस्यति किं तु व्यक्तिमपि कव-लीकरोति । यथा पञ्जरस्थं सिंहमनुभवतः सिंहप्रतीतिः पञ्जरं, तत्र ह्यन्तर्वर्त्त्यैव सिंहः सिंहशब्दवाच्य इति जानतो बलात्पञ्जरमपि प्रतीयते, तद्वदिहापि व्यक्तिगतामेव जातिमनुभवतो जातिप्रतीतिरुत्पद्यमाना बलाद् व्यक्तिमपि गोचरयति । अतो ऽन्यथासिद्धप्रतीतित्वान्न व्यक्तिः शब्दार्थ इति, तच्च नैवम् । अन्यथासिद्धेरभावात् । यदि हि जातिप्रती-तेरयं स्वभावो व्यक्तिमपि गोचरयतीति ततो गोत्वमित्यादावपि प्रसङ्गः, नहि तत्र जातिर्न प्रतीयते । स्यादेतत् । गोत्वादिशब्दैर्जातिः स्वरूपे-णाभिधीयते गवादिभिस्तु व्यक्तिपरतन्त्रा, अतः प्रतीतिवैषम्यमिति, नैवम् । व्यक्तिपरन्त्रेत्यपि जातिरेव चेदुच्यते ततो गोत्वगोशब्दयोरविशेषापत्तिः, तत्त्वान्तरं चेज्जातिरेव वाच्येति वतं. पारतन्त्र्यस्यापि वाच्यत्वात् । न चानभिधाय व्यक्तिं तत्पारतन्त्र्यमभिधातुं शक्यमिति व्यक्तेरपि वाच्यत्व-प्रसङ्गः । न च वाच्यं गङ्गायां घोष इतिवल्लक्षणया व्यक्तिः प्रतीयतइति, शब्दान्तरसंनिधानमन्तरेणापि नियमेन प्रतीयमानत्वात् तर्हि लाक्षणि-कोर्थ एवं प्रतीयते अतश्शब्दमहिम्नैव जातिर्व्यक्तिश्च प्रतीयतइत्युभयं शब्दार्थः । तत्र क्व चित्किं चित्तात्पर्येणोच्यते किञ्चिन्नान्तरीयकतया दृष्टं चैकशब्दवाच्येष्वपि कुत्र चित्तात्पर्यं कस्य चिन्नान्तरीयकत्वं यथा 'ग्रहं संमा-र्ष्टीति,' कर्म्मत्वं विवक्षितमेकत्वमविवक्षितं तद्वदिह 'यरो ऽनुनासिके ऽनुनासिको वे' त्यत्र लक्षणानुरोधादाकृतिः प्राधान्येनाश्रीयते तस्या एक-त्वाच्छास्त्रमपि सकृदेव प्रवर्त्तते न प्रतिव्यक्त्यावृत्त्या । यद्येवं कथं समु-

दाये प्रवर्तते । उच्यते । जातेः स्थानित्वमादेशत्वं निमित्तत्वमित्येवमादयो धर्म्मा व्यक्तिद्वारकास्ते न जातौ प्रवर्तमानास्तद्वतीषु व्यक्तिषु प्रवर्त्तन्ते। न च व्यक्तयस्तेनतेन प्रातिस्विकेनाकारेण प्रतीयन्ते किं त्वेकजातिरूषिता इति एष समुदायार्थः समुदाये प्रवर्त्तमानं कथं प्रवर्त्तेते, किमविशेषेण, नेत्याह । 'यरोनुनासिकइत्यादि' । येयमस्य सकृत्प्रवृत्तिस्तथान्तरतमपरिभाषापि एकवाक्यतामापद्यतइत्यर्थः । ततः किमित्यत आह । 'तद्वेनेति'। 'गकारादीनामिति' । वर्गतृतीयानाम् । 'ङकारादय इति'। वर्गपञ्चमाः, 'यथास्वमिति' । यो यस्य वर्ग्यः स तस्येत्यर्थः । 'स्थानतोगुणतश्चेति'। तृतीयान्तात्तसिः । स्थानानि गुणांश्च तुल्यास्यप्रयत्नमित्यत्र वक्ष्यामः । 'ये तु न स्थानतो नापि गुणत इति'। अन्तरतमा इत्यपेक्ष्यते ते सर्व्वे निवर्तिता इति वक्ष्यमाणेन सम्बन्धः । के पुनस्ते गजडानां सानुनासिका यवलाः । 'स्थानमात्रेण गुणमात्रेण वेति' । अत्राप्यन्तरतमा इत्यपेक्ष्यते पूर्वेणच्च सम्बन्धः, तत्र स्थानमात्रेणान्तरतमा जदबानां यलवाः सानुनासिका, गुणमात्रेण त्वन्तरतमास्तृतीयानामन्यवर्गीयाः पञ्चमाः इतिकरणो हेतौ यस्मादेव स्थानगुणाभ्यामन्तरतमा एव विहिता अन्ये सर्वे निवर्तितास्तस्मात्स्थानमात्रेणान्तरतमो रेफस्य णकारो न भवति। 'द्विर्वचने ऽपीति'। एवं परिहार इति शेषः । रेफस्येत्यादिना यकोर्यस्य द्विर्वचनस्य सहेतुकां प्राप्तिमनूद्य परिहरति । 'तदित्यादि' । रेफस्य द्विर्वचनं प्रति निमित्तभावः 'साक्षाच्छिष्टः,' प्रत्यक्षशिष्टः, रहाभ्यामिति द्विर्वचनं तु यरन्तर्भावादनुमितं, प्रत्यक्षानुमितयोश्च प्रत्यक्षं बलीयः, तद्यथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति परिवेषणसाधनत्वेन भुजिसाधनत्वं बाध्यते । यद्येव 'मिको यणची' त्यस्मिन्निर्द्दे शे ऽजिति निमित्तभावं प्रत्यनुमीयमाना इकः कार्ययोगं प्रति साक्षाच्छिष्टा इति दध्युदकादिषु बाधितव्यो निमित्तभावः । न । तत्र व्यक्तेः प्राधान्येनाश्रयणाद् व्यक्तिप्राधान्ये हि प्रतिलक्ष्यमसकृल्लक्षणं प्रवर्तते प्रतिलक्ष्यं वा भिद्यानि लक्षणानि तेषां सर्वेषां तन्त्रोच्चारण 'मिको यणची' ति । ततश्चेकामपि निमित्तभावं प्रत्यपि तात्पर्येण निर्द्दे शात्तत्रापि यण् भविष्यति, इतरथा तद्विषयं लक्षणं

व्यर्थं स्यात् । जातिनिर्द्देशेषु क्वचिदपि व्यक्तौ प्रवृत्ते जातौ प्रवृत्तमेवेति विशेषः । 'अनुस्वारस्येत्यादि' । न केवलं 'यरोऽनुनासिकेऽनुनासिको वे'त्येतदेवान्तरतमे सकृदेव प्रवर्त्तमानं विदधाति अपि त्व'नुस्वारस्य ययि परसवर्णे' इत्येतदपीत्यपि शब्दार्थः । ततः किमित्यत आह । 'न चेत्यादि' । रेफस्य सवर्णोऽस्तीति सम्बन्धः । किं विशिष्टो नास्तीत्याह । 'अनुस्वारान्तरतम इति' । रेफस्य हि रेफ एव तुल्यस्थानप्रयत्नः स चानुस्वारान्तरतमो न भवति । यत्र वाऽनुस्वारान्तरतमाः परसवर्णास्सन्ति, अङ्कितः कुण्डित इत्यादौ तत्र चरितार्थं वचनम् । 'अटां मध्यइति' । नन्वनुस्वारस्याप्युपदेशः कर्त्तव्यः प्रेङ्खणमित्यादौ णत्वं यथा स्यात् । न च परसवर्णे कृते कवर्गव्यवायइति णत्वसिद्धिः । तस्यासिद्धत्वात् । एवं तर्हि नुम्व्यवायइति णत्वं भविष्यति । यदि नुम्व्यवायइत्युच्यते प्रेन्वनमित्यत्रापि प्राप्नोति, इह च न स्यात् प्रेम्भणमिति । अनुम्स्थानिकत्वात् । नैष दोषः । नुम्ग्रहणमनुस्वारोपलक्षणार्थं तत्र यथा नक्षत्रं दृष्ट्वा वाचं विसृजेदिति कालोपलक्षणे दिवा नक्षत्रदर्शनेऽपि न भवति, रात्रावदर्शनेऽपि भवति, एवमिहापि सत्यपि नुम्यनुस्वाराभावे न भवति असत्यपि नुम्यनुस्वारे सति भविष्यति । इह केचिदुब्जिमुपध्मानीयोपधं पठन्ति, तेषामुब्जितेत्यादौ जश्त्वं यथा स्यादिति झल्ष्वप्युपदेशः कर्त्तव्यः । वृत्तिकारस्तु दकारोपधं मन्यते, अभ्युद्गः समुद्ग इति यथा स्यात् 'भुजन्युब्जौ पाण्युपतापयो'रिति च कुत्वाभावे निपात्यमाने बकारोच्चारणं लिङ्गम् । उब्जेरकुत्वविषये दकारस्य बकारविधायि वचनमस्तीति । तच्च 'स्तोः श्चुना श्चु'रित्यस्यानन्तरं कल्प्यते उद्जेर्दस्य ब इति उद्जेर्दकारस्य श्चुना योगे बकारो भवतीत्यर्थः । स्तोश्चुनेत्युपजीवनार्थं चात्रैवास्य कल्पनं युक्तमन्यथा बहुतरं कल्प्यं स्यात् । बत्वस्यासिद्धत्वादुब्जिजिजीषतीत्यत्र न न्द्रा इति प्रतिषेधसिद्धिरिति । नन्वनुस्वारविसर्जनीययोः शर्ष्वुपदेशः कर्त्तव्यः । सर्पींषि सर्पिष्षु अत्र शर्व्यवायइति षत्वं यथा स्यात् । माभूदेवं 'नुम्विसर्जनीयशर्व्यवायेपी'ति भविष्यति, तत्र चावश्यं नुम्ग्रहणमेव कर्त्तव्यं नुम्स्थानिकेनैवानुस्वारेण व्यवाये यथा स्यात् पुंस्वित्यादौ माभूदिति तस्मात्सुष्ठूक्तमटां मध्य-

इति। 'उरःकेणेति'। नायमज्ञातादौ कप्रत्ययः 'सोपदादा' विति सत्वप्रसङ्गात्, किं तर्हि उरः कायतीत्या 'तोनुपसर्गे कः'। 'उरः पेणेति'। पारसयो उभयत्र 'कुप्वोः ≍क≍पौ चे' ति यथायथं विसर्जनीयजिह्वामूलीयोपध्मानीयेषु कृतेषु तद्व्यवाये णत्वं भवति ॥

लण् ॥ अयं णकारो द्विरनुबध्यते पूर्वश्च परश्च। तत्रेण्ग्रहणान्यण्ग्रहणानि च प्रत्यासत्तेः पूर्व्वेणैव वा स्युः भूयसामनुग्रहाय परेणैवेति संशये निर्णयमाह। 'इण्ग्रहणानीत्यादि'। तत्र न यथा सर्वाणीण्ग्रहणानि पूर्वेण तथा पूर्वमेव प्रतिपादितम्। अण्ग्रहणानि च पञ्च 'उरण् रपरः', 'अणुदित्सवर्णस्य चाप्रत्ययः', 'ढ्रलोपे पूर्व्वस्य दीर्घो ऽणः' 'केणः' अणोप्रगृह्यस्येति। तत्रो 'रण् रपर' इति यदि परेण स्यात् कृतं प्रकृतं नॄः पाहि मातॄणामित्यादावाद्युदात्तानुदात्तस्वरितानुनासिकदीर्घा रपराः स्युः, कर्त्ता कारक इत्यादौ च गुणवृद्ध्योः प्राप्तयोरेचोरवर्णस्य च रपरत्वादान्तर्याविशेषात्सर्वएव स्युः। 'इको यणचि'कत्रर्थे रपरत्वे द्वयोरेफयोः श्रवणं स्यात्। नैष दोषः। 'ऋत इद्धातो'रिति धातुग्रहणं ज्ञापकं पूर्वेणेति, तद्धि मातॄणामित्यादौ माभूदिति, परेण च ग्रहणे 'नामी'ति दीर्घे रपरे कृतेऽनृकारान्तत्वादेव न भविष्यतीति तद् व्यर्थं स्यात्। न च वाच्यं चिकीर्षतीत्यत्रा 'ज्झनगमां सनी' ति दीर्घे रपरे सत्यु 'पधायाश्चे'तीत्वमेषितव्यं तद्वन्मातॄणामित्यादावपि स्यादित्युत्तरार्थे धातुग्रहणमिति, तथा हि सति तत्रैव कर्त्तव्यं स्यात् ढ्रलोप इत्यत्रापि हलामणामसम्भवादचां तु विशेषाभावादनर्थमेवाण्ग्रहणं स्यात्, ततश्चा 'चश्चे' त्येव सिद्धमित्यण्सामर्थ्यात् पूर्वेण। ननु वृह उद्यमन इत्यस्मात्तृच्युदित्त्वादिडभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रेफस्य दीर्घे ऋकारे ढ्रलोपस्यासिद्धत्वा 'दुपधायाश्चे' तीत्वे पूर्वेण च गुणे वेढेति यथा स्यादित्येवमर्थमण्ग्रहणं स्यात्। यत्तर्हि तृतीये निर्दिशति तज्ज्ञापयति पूर्वेणेति। अन्यथा 'हल' इत्यत्राप्यस्यैवाण्ग्रहणस्यानुवृत्तेस्त्रिः संप्रसारणे दीर्घः स्यात्। 'केण' इत्यत्र परेणाण्ग्रहणे गोका नौका उपानत्का गीष्का धूष्का चतुष्कमिति षत्वविसर्जनीययोरसिद्धत्वाद्ध्रस्वप्रसङ्गः, एवं तर्हि ह्रस्वश्रुत्या 'ऽचश्चे' त्युपस्थ-

तस्याबाधाय पूर्वेण भविष्यति । अबाधेनापि ह्युपपत्तौ सत्यां बाधो न न्याय्यः । अणो ऽप्रगृह्यस्येत्यत्र परेण सति कर्तृ अग्ने वायो पचे पचौ मालामाचष्ट।गोमाल् वृक्षवयतेरप्रत्ययः वृक्षव्, अत्रापि प्राप्नोति । एवं तर्हि अप्रगृह्यस्येति पर्युदासेनाच एवानुनासिको युक्तः । न चाण्ग्रहणसामर्थ्याच्छिवयुक्तन्यायस्य बाधः, तस्य पूर्वेणाप्युपपन्नत्वात् । अतः सुष्ठूक्तम् अण्ग्रहणानि सर्वाणि पूर्वेणेति । अस्यापवादः 'अणुदित्सवर्णस्य चाप्रत्यय' इत्येतदेवैकम्परेणेति । यद्यत्र पूर्वेण स्याद् 'उरण् रपर' इत्यत्र उरित्यनेन ऋकारस्याग्रहणात् 'ऋत इद्धातो' रपरो न स्यात्, ऊकालोऽजित्यत्रेज्भिस्त्रिमात्राणामग्रहणात् प्लुतसंज्ञापि न स्यात्, अत एतदेकं परेण । अत्र च ज्ञापकम् 'उऋदि'ति तपरकरणम् । तद्धि कृत संशब्दनइत्येतस्माच्चुरादिणिजन्ताल्लुङि चङि अचीकृतदित्यत्र ऋकारस्य स्थानिन ऋकार एव यथा स्यादित्येवमर्थं, न च पूर्वेण ग्रहणे ऋकारस्य स्थानित्वमादेशत्वं वा प्रसक्तमित्यनर्थकं तत्स्यात् । ननु परेणापि ग्रहणे उरित्यनेन स्थानिना दीर्घस्य ग्रहणे सत्यपि ऋदित्यनेन भाव्यमानत्वादृकारस्य स्थानित्वमादेशत्वं वा ऽप्रसक्तमित्यनर्थकम्, उच्यते । असति तपरकरणे भाव्यमानत्वस्यैवासिद्धिस्तथाहि । अपूर्वनिष्पत्तिः प्राप्तस्यान्येन बाधितस्य प्रतिप्रसवे च तस्य लाघवं भवतीति अचीकृतत् अवीवृतत् अमीमृजदित्यत्र इरराभिर्सवर्णस्य विनाशे प्राप्ते स्वरूपमेवावस्थितमभ्यनुज्ञायते, संभवति च स्वरूपाभ्यनुज्ञानं सवर्णग्रहणे सतीति स्वरूपाभ्यनुज्ञानार्थमेव सवर्णग्रहणं स्यात्, सति तु तपरकरणे सवर्णग्रहणाभावात् स्वरूपाभ्यनुज्ञानासंभवादपूर्वविधिरेव संपद्यतइति भाव्यमानत्वसिद्धये कर्त्तव्यं तपरकरणमिति ज्ञापकमेव । 'अथ किमर्थमिति' । एवं हि सन्देहएव न भवतीति भावः । 'अन्तःस्थानामपि हि सवर्णानां ग्रहणमिष्यतइति' । अन्तस्था द्विप्रभेदा रेफवर्ज्जिता यवलाः सानुनासिका निरनुनासिकाश्च, तत्राक्षरसमाम्नाये निरनुनासिकाः पठ्यन्ते, ततश्च सय्यँन्तेत्यादावान्तरतम्यात्सानुनासिकेषु यकारादिषु परसवर्णेष्वनुस्वारस्य कृतेषु तेषां प्रत्याहारेऽनुपदेशाद्यत्वं नास्तीत्य 'नचि वे'ति द्विर्वचनं न स्यात्, अण्ग्रहणे तु सति सवर्णग्रह-

णेन तेषामपि ग्रहणात् सिध्यति । अथ सानुनासिका उपदिश्येरन् ततो निरनुनासिकेषु तेषु परसवर्ण एव न स्यात्, ययां मध्ये तेषामसंनिवेशात् । 'ऋकारादिष्वित्यादि' । ऋकारऌकारयोः सवर्णसंज्ञाया उपसंख्यानाद् ऋकार ऌकारमपि गृह्णाति ततश्चो 'उण् रपर' इति ऌकारस्याप्यण् रपरः स्याद् लपरश्चेष्यते तस्मादनुनासिकः प्रतिज्ञायते, तेन ऋकारस्याण् रपर ऌकारस्य तु लपर इति तवल्कार इति सिद्धं भवतीति । किं पुनरिमे वर्णा उत्सन्नाः यदनुबद्धोपि पुनर्णकार एवानुबध्यते यत एवमण्ग्रहणेषु इण्ग्रहणेषु सन्देहो भवति । सत्यमेतत् । ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मिति ॥

ञमङणनम् ॥ 'स्वजिदृशोर्झल्यमकिती'ति न प्रत्याहारः, साक्षाद्दृष्टरीति निर्देशात् भाष्यमानत्वाच्च, अमेव स्वौजसमौट् 'तस्थस्थमिपां तान्तन्ताम' इत्य एकादेशोमित्यत्रापि, 'अम्शसो'रिति शस्साहचर्या 'इमि पूर्वे' इति सुबधिकारात् । 'तृणह इमि'ति न प्रत्याहारः, 'ब्रुव ईट्' 'अड् गार्ग्यगालवयो'रित्यागमसाहचर्यात्, भाष्यमानत्वाच्च । अत एव 'वच उमि'ति न प्रत्याहारः, अशुजेरोपधयोरित्यपि न प्रत्याहारो व्याख्यानाद्भाष्यमानत्वाच्च ञकारे णापि ग्रहणमस्य दृश्यतइति, । यद्येवं कथं त्रिभिरिति पूर्वमुक्तम्, अष्टाध्यायीगतग्रहणाभिप्रायं तत्, अत एव यमिञमन्तेष्वित्यत्रापि दृश्यते । 'क्वे चित्त्वित्यादि' । यान्येतान्यनन्तरोक्तानि प्रत्याहारग्रहणानि तानि 'पुमः खय्यम्परे' 'हलो यमां यमि लोपः' 'ङमो ह्रस्वादचि ङमुण् नित्य'मित्येवं ञकारेणैव भवत्विति निश्चित्य केचिदाचार्या मकारानुबन्धं प्रत्याचक्षते तत्र दोषमाह । 'तथा चेति' । 'पुमः खय्यम्पर' इत्यत्र तु झकारभकारपरस्य च खयोसम्भवाददोषः । 'हलो यमां यमि लोप' इत्यत्रापि झकारभकारयोः परतो हल उत्तरयोर्झकारभकारयोरसम्भवः, सम्भवेपि वा झरो झरीति लोपः । आगमिनोर्झभोरभावाद् इति लभेरुज्झेश्च क्विपि सम्भव इति चेद् न, उज्झेः संयोगान्तलोपाल्लभेर्जश्त्वविधानात् । 'प्रतिपत्तिगौरवमिति' । यद्यागमिनोरभावस्तर्हि त्रय आगमिनः पञ्चागमाः वैषम्यात्संख्यातानुदेशो न स्यात् । नैष दोषः । यथासंख्यमित्यत्र प्रमितिदशायां

निर्देशगतसंख्यासाम्यमाश्रीयते न त्वनुष्ठानसमये प्रयोगगतमिति चोद्य परिहारयोः क्रियमाणयोः प्रतिपत्तिगौरवं भवतीत्यर्थः ॥

झभञ् ॥ 'उत्सादिभ्योऽञ्' 'अत इञ्' 'गर्गादिभ्यो यञ्' इत्येवमादौ न प्रत्याहारो भाव्यमानत्वाद् अनभिधानाच्च । 'उञि च पदे' इत्यत्र न प्रत्याहारः, पदेन विशेषणात् ॥

घढधष् ॥ लषपतपदेति न प्रत्याहारः, अकारोच्चारणादुतुसाहचर्याद्वा ॥

जबगडदश् ॥ एतदोश् 'इदम इश्' शशिरेजिति न प्रत्याहारो भाव्यमानत्वाद् मस्जिनशोरिति मस्जिसाहचर्यात् ॥

खफछठथचटतव् ॥ 'एचोऽयवायाव' इत्यत्राकारस्यासंनिवेशादाविति न प्रत्याहारः, तत्साहचर्यादवित्यपि । ननु छकारेणैवास्य ग्रहणं, न च खफौ तत्रान्तर्भूतौ तत्किमर्थं तयोर्ग्रहणमित्याह । 'खफग्रहणमिति' । उत्तरैरनुबन्धैः 'अनुस्वारस्य ययि परसवर्णः' 'पुमः खय्यम्परे' इत्यादौ प्रत्याहारे तयोर्ग्रहणं यथा स्यादित्येवमर्थमित्यर्थः ।

कपय् ॥ 'एचो ऽयवायाव' इत्यत्राकारस्यासन्निवेशादायिति न प्रत्याहारस्तत्साहचर्यादयित्यपि ॥

शषसर् ॥ इरितां धातूनामुपदेशसामर्थ्या 'दिरितो वे' ति न प्रत्याहारः, प्रियस्थिरादिसूत्रे वरिति न प्रत्याहारो भाव्यमानत्वात् प्रादिसाहचर्याद्वा ॥

हल् ॥ इहान्येषां वर्णानां सकृदुपदेशो हकारस्तु द्विरुपदिश्यते तत्र द्वितीयोपदेशस्य प्रयोजनं पृच्छति 'अथेति' । 'स्निहित्वेति' । ष्णिह प्रीतौ । 'अलिक्षदिति' । लिह आस्वादने, लुङ्, क्सः 'हो ढः' 'षढोः कः सि' । 'रुदिहि स्वपिहीति' । रुदिर् अश्रुविमोचने ञिष्वप् शये अदादी. लोट् सिप् सेर्हिः । 'अदाग्धामिति' । लुङि तसस्ताम् । 'झलः सिच्' वदव्रजेति वृद्धिः । 'दादेर्धातोर्घः' । तस्यासिद्धत्वाद्धकाराश्रयः सिचो लोपः, 'झषस्तथोर्धोऽधः' । एवं परोपदेशस्य प्रयोजनानि दर्शयित्वा पूर्वोपदेशस्य प्रयोजनं दर्शयितुं पृच्छति । 'हयवरेत्यत्रेति' । 'महांहि स इति' । महान् हि स इति

स्थिते 'दीर्घादटि समानपाद' इति रुः, 'आतोऽटि नित्य'मित्यनुनासिकः। भोभगोअघोअपूर्वस्येति यत्वम्, 'हलि सर्वेषा'मिति यलोपः, अत्राशीत्यनुवर्त्तते। ब्राह्मणो हसति। ब्राह्मणशब्दात्सो रुः, 'हशि चे'त्युत्वं, गुणः, उपलक्षणं चैतत् प्रयोजनानां तेने 'णः षीध्वंलुङ्लिटां धो ऽङ्गात्' 'विभाषेट' इति मूर्द्धन्यविकल्पोपि प्रयोजनं, लिलिढ्वे, लिलिहिध्वे। णकारादीनामनुबन्धानां यावद्भिर्ग्रहणमिष्यते तानार्थ्या दर्शयति। 'एकस्मादित्यादि'। परे ग्राह्या इति शेषः''स्युरिति'वक्ष्यमाणेन सम्बन्धः, ण्ड्। यञ्। अण्। छव्। अडिति। एकस्मादेकारादेः परे ङकारादयो ग्राह्याः स्युः, एवमुत्तरत्राप्यर्थो वेदितव्यः। द्वाभ्यां षः। झष्, भष्। त्रिभ्य एव कणमाः। अक्, इक्, उक्। अण्, इण्, यण्। अम्, यम्, ङम्। ञ्चयो चश्चो चतुर्भ्यः। अच्, इच्, एच्, ऐच्। यय्, मय्, झय्, खय्। रः पञ्चभ्यः। यर्, झर्, खर्, चर्, शर्। 'शलो षड्भ्यः'। अश्, हश्, झश्, जश्, बश्। अल्, हल्, वल्, रल्, झल्, शल् इति॥

वृद्धिरादैच्॥ त्रिपदमिदं सूत्रम्। वृद्धिः आद् ऐज् इति। अत्र चाकारः प्रयोगस्थैराकारैरर्थवात्, जात्यभिप्रायं चैकवचनम्। ऐच्छब्दस्तु ऐकारौकाराभ्यां,संज्ञिनो द्वित्वेपि द्विवचनं न भवति द्वयोरप्येकशब्दरूपव्यवहितत्वेनैक्यमापन्नयोरिवाभिधानात्। एवं सर्वत्रैव प्रत्याहारेष्वेकवचनं द्रष्टव्यम्। समाहारद्वन्द्वो वा ऽऽदैजिति। 'द्वन्द्वाच्चुदषहान्तात् समाहार' इति समासान्तस्तु न भवति समासान्तविधेरनित्यत्वाद,नित्यत्वं च द्वित्रिभ्यां पाद्दन्मूर्द्धस्विति मूर्द्धन्शब्दस्य निर्द्देशादवसीयते, अन्यथा 'द्वित्रिभ्यां ष मूर्द्ध्न' इति षप्रत्ययान्तत्वान्मूर्द्धस्विति निर्द्देश्यं स्यात्। आदैच्छब्दात्समासत्वादर्थवत्त्वाद्वा विभक्त्युत्पत्तौ 'चोः कुः' पदस्येति कुत्वं प्राप्तम्, अयस्मयादित्वेन भत्वान्नहि भविष्यति छन्दोवत्सूत्राणि भवन्ति। वृद्धिशब्दस्य त्रयीशब्दानां प्रवृत्तिरिति पक्षे वृधु वृद्धावित्यस्माद्भावे क्तिनि व्युत्पत्तिः, अभेदोपचाराच्च वृद्धियुक्तेष्वादैषु वृत्तिः। न चैवं लक्षणयैवादैषु वृद्धिशब्दस्य वृत्तिसिद्धेः सूत्रस्यानर्थक्यं, नियमार्थत्वात्। अन्यथा वर्द्धनक्रियायोगिष्विकारादिषु धनेषु च वर्तेत। मा तत्र वर्तिष्ट आदैत्स्वेव वर्तेता-

मिति नियमः। चतुष्टयीपक्षे तु कथं यावतश्च संज्ञात्वेन विनियुक्ते सति सिचि वृद्धिरित्यादौ प्रदेशान्तरएव वृद्धिशब्दस्यादैतु प्रवृत्तिर्युक्ता न त्वत्रैव संज्ञाविनियुक्तिकाले, उच्यते। नित्यः शब्दार्थसंबन्ध इति दर्शनेन क्व चिदपि पुरुषव्यापारात्प्राग् वाचकः सन् पुरुषव्यापारेण वाचकः क्रियते, अतः सर्वे शब्दाः संज्ञारूपेण सर्वानर्थान् प्रतिपादयितुं समर्थाः, तत्रानियतार्थेन व्यवहारासिद्धेर्नियमार्थ एव पुरुषव्यापारः। मया प्रयुक्तस्य वृद्धिशब्दस्यादैजर्थ इति एवं तावत्पदार्थो व्याख्यातः। वाक्यविषयाः पुनरष्टौ विकल्पाः। अनर्थकं, साध्वनुशासनं, प्रयोगनियमार्थम्, आदेशार्थ,मागमार्थं, विशेषणार्थं, तद्गुणाध्यारोपार्थं, संज्ञार्थमिति। तत्रानर्थकाभिधानं प्रमादाश्रयदोषादनवधानादशक्तेर्वा भवति, न चैतच्चतुष्टयं भगवतः सम्भवति, आचार्यो हि दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख आसीनो मङ्गलपूर्वकं महता प्रणिधानेन सूत्राणि प्रणीतवान्, तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किंपुनरियता सूत्रेण। साध्वनुशासनमपि न भवति सिद्धत्वाद्वृद्धिशब्दस्य क्तिन्नन्तत्वात्, आदैच्छब्दस्य चार्थवत्त्वात्। ननु छन्दोवद्भावेन सूत्रएव प्रयोगः सिद्ध्यति, सूत्राद्बहिरपि कुत्वाभावार्थं निपातनमेतत् स्यात्। उच्यते। वृद्धिशब्दस्यैवमनन्वयप्रसङ्गः संभूयकारित्वं च पदानां व्युत्पत्तिसिद्धमतो नायं पक्षः। नापि प्रयोगनियमार्थ, यत्र हि सहप्रयोगप्रसङ्गस्तत्र नियमः कर्तव्यः, न च वृद्ध्यादैच्छब्दयोः सहप्रयोगप्रसङ्गः, विनियोगात्प्रागसम्बन्धाद् उत्तरकालं वृद्धिशब्देनैव गतत्वात्। किं च नेह प्रयोगनियम आरभ्यते, नन्वारभ्यते, 'परश्चे'ति। पदस्य नारभ्यते, पदस्याप्यारभ्यते 'उपसर्जनं पूर्वं'मिति। ययोरैकपद्यं नास्ति तयोर्नारभ्यते, तयोरप्यारभ्यते 'ते प्राग्धातोः' 'कृञ्चानुप्रयुज्यते लिटी' ति, नैवं विधेनोच्चारणेनारभ्यते, एवमप्यारभ्यते 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति, नात्र केवलः प्रयोग एव नियम्यते किं तु आमादिकमपि विधीयते ऽतः केवलस्य प्रयोगनियमस्य साक्षादुच्चारणेन क्व चिदप्यभावान्नायं प्रयोगनियमः। आदेशार्थमपि न भवति, स्थान्यर्थाभिधानसमर्थस्यैव ह्यादेशत्वं, न च वृद्धिशब्द आदैचां ते वा तस्यार्थमभिधातुं समर्थाः, निर्देशाच्च, यदयं सिचि वृद्धिः, यातिः

वातिद्वाति, रायो नाव, इत्याह, ततो ज्ञायते न वृद्धिशब्द आदैचां ते वा तस्यादेशा इति । अथादैच्शब्दस्य वृद्धिशब्द आदेशः कस्मान्न भवति, नह्यत्र किं चिल्लिङ्गमस्ति । सत्यम् । अयं तु पक्षो न संभवत्येव ऐच्छब्दो ह्यादिरन्त्येनेति संज्ञात्वेन विनियुक्तः कथमस्य स्वरूपस्य ग्रहणम्, अशब्दसंज्ञेति निषेधात् । एतैरेव लिङ्गैरागमत्वं[1] न भवति, षष्ठ्यभावाच्च । पूर्वौ तु ताभ्यामिति पञ्चम्याः षष्ठ्यर्थो ऽवगम्यते । टित्त्वादिलिङ्गाभावाच्च, नहि तद्रहितः कश्चिदागमो दृष्टः, विशेषणत्वमपि न भवति असंभवादप्रयोजनत्वाच्च । नह्यस्ति संभवो वृद्धिशब्दश्चासावादैच्छब्दश्चेति, नापि वर्द्धनक्रिया ऽऽदैज् इति । एवं विशेषणे च प्रयोजनमपि नास्ति, एतेन तद्गुणाध्यारोपोपि निरस्तः । यथा हि सिंहो माणवक इति सिंहगुणा माणवकआरोप्यन्ते नैवमत्र सम्भवः प्रयोजनं वा ऽस्ति । अतः पारिशेष्यात्संज्ञासंज्ञिसम्बन्ध एवेत्यालोच्याह । 'वृद्धिशब्द इत्यादि' । विपर्ययस्तु न भवति वृद्धिशब्दः संज्ञी आदैचः संज्ञेति, स हि त्रिधा स्याद् आदैजित्ययं शब्द आ ऐ औ इत्ययं समुदायस्ते वा प्रत्येकमिति । तत्रादैच्छब्दस्तावन्न सम्भवति ऐजित्यस्य संज्ञाशब्दत्वात् स्वरूपग्रहणासम्भवाद्गौरवादनावृत्तेश्च । आवर्तिन्यो हि संज्ञा भवन्ति, वृद्धिः शब्दश्चावर्त्तते नादैच्छब्दो नापि समुदायो गौरवादनावृत्तेश्च । अस्तु तर्हि प्रत्येकं लाघवादावृत्तेश्च । 'अष्टन आ विभक्तौ' 'पुतक्रतोरै च' 'मनोरौ वे' ति । न । प्रयोजनमन्तरेणैकस्यानेकसंज्ञाकरणस्यायुक्तत्वात्, नह्ययं वृद्धिशब्दः सहस्रेण नामभिः स्तोतव्यः [2]शब्देनार्थस्य संज्ञात्वं मा विज्ञायीति शब्दग्रहणम् एतच्चार्थे व्यवहारासम्भवाल्लभ्यते । तदिह वृद्धिशब्दः संज्ञात्वेन विधीयतइति समुदायेनानर्थकादिपक्षनिरासः, वृद्धिशब्दइत्यनेन विपर्ययनिरासः । वृद्धिशब्दः संज्ञा न पुनरादैच्छब्द इतिवचनव्यक्त्या शब्दग्रहणेनार्थनिरासः, वृद्धिशब्दः संज्ञा न पुनरर्थ इति । यत्र समुदायस्य कार्यमिच्छति करोति तत्र प्रयत्नम्, 'उभे अभ्यस्त' मिति, तत्र ह्युभेग्रहणं समुदि-

१ आगमार्थमपीति पा० ।
२ शब्देनार्थावगतेरर्थस्य संज्ञात्वमिति पा०

तत्प्रतिपत्त्यर्थम्. [1]अनन्यार्थां वा महतीं संज्ञां करोति 'हलोनन्तराः संयोग' इति, इह तु महासंज्ञाकरणं मङ्गलार्थम्। अत एव प्रथममुच्चारणम्, अन्यथा हि सतः कार्यिणः कार्येण भवितव्यमित्य'देङ् गुण' इत्यादिवन्निर्दिश्येत, अतो यत्नाभावात्प्रत्येकमेव संज्ञा। किं च लौकिकप्रयोगे व्यवस्थितानामादैचां संज्ञया भवितव्यं, न च समुदायस्य क्व चित्प्रयोगोऽतोऽसंभवादपि प्रत्येकमेव संज्ञा। लिङ्गाच्च। किं लिङ्गं, 'प्रस्थेऽवृद्धमकर्क्यादीनां' 'मालादीनां चे'ति। इदं हि मालाप्रस्थ इत्यादाववृद्धमिति पर्युदासे प्राप्ते वचनम्, अतः प्रत्येकमेव संज्ञा तदाह। 'प्रत्येकमिति'॥ तत्रापि त्रयः प्रकाराः, लुगादिसंज्ञावत्तद्भावितानामेव, टिसंज्ञावद्वाऽतद्भावितानामेवा,नुनासिकादिसंज्ञावदुभयेषां वेति। तत्र यदि तद्भावितानामेव, ये वृद्धिसंज्ञया भाव्यन्ते तेषामेव स्यात् शालीयो मालीय इति छो न स्यात्, आम्रमयं [3]रैकुलमयं, वृद्धलक्षणो मयण्न स्यात्। आम्रगुप्तायनिः, उदीचां वृद्धादिति फिञ् न स्यात्। अथातद्भावितानामेव, गार्गीयः, ऐतिकायनीयः, औपगवीयः, छो न स्यात्। अतो दोषदर्शनादगृह्यमाणविशेषत्वाच्चोभयेषां संज्ञेत्याह 'सामान्येनेति'। आकारोऽनण्त्वादेव न भिन्नकालानां ग्राहक इति न तन्निवृत्त्यर्थं तपरत्वं[4], नापि गुणान्तरयुक्तानां ग्रहणार्थम्, अभेदकत्वाच्च गुणानां, लोके हि मुण्डेनापि चौर्ये कृते संजातकेशोऽपि प्रत्यभिज्ञाय निगृह्यते, तथा ऽऽदुदात्त इत्युदात्तवचनं लिङ्गम्। अन्यथा ह्युदात्तगुणमेवाटमुच्चारयेत्, अतोऽनर्थकं तपरकरणमित्यत आह। 'तपरकरणमिति'। तश्चासौ परश्च तपर,स्तस्य करणमुच्चारणम्, आकारात्परस्य तकारस्योच्चारणमित्यर्थः। अथ वा तः परो यस्मादिति तद्गुणसंविज्ञानो बहुव्रीहिः, तकारसहितस्याकारस्योच्चारणमित्यर्थः। 'ऐजर्थमिति'। ऐचोरर्थः प्रयोजनं यस्य तत्तयोक्तं, 'तपर-

१ अन्वर्थामिति पा॰।
२ उपदेशइति पा॰।
३ नैाकुनमयमित्यधिकं-२-पु॰।
४ तपरकरणमिति पा॰ २।

स्तत्कालस्ये' त्यत्र तः परो यस्मादिति बहुव्रीहिराश्रितः, तत्कथं तपरकर णमैजर्थमित्याशङ्क्य पञ्चमीसमासोऽपि तत्राश्रित इति दर्शयति । 'तादपि पर इति'। इतिकरणो हेतौ, यस्मात् तादपि परस्तस्मादैजर्थे इति । ऐजर्थत्वमेव प्रकटयति। 'खट्वैलकादिष्विति'। असति तपरकरणे त्रिमात्रचतुर्मात्रयोरप्यैचोः सवर्णग्रहणेन ग्रहणाद्वृद्धिसंज्ञा स्यात् ततश्च वृवैलका वृवौदनः, खट्वैलका खट्वौदन इति त्रिमात्रचतुर्मात्रस्थानिनोस्त्रि-मात्रचतुर्मात्रावैकारौकारौ स्यातामिति तन्निवृत्त्यर्थं तपरकरणम्। आश्व-लायन इत्यादीनि तद्भावितानामाकारादीनां क्रमेण रूपो[1]दाहरणानि । अश्वलेतिकशब्दो नडादौ, उपमन्युशब्दो बिदादिः, लक्षणस्य बहुविषय-त्वसूचनार्थं चतुर्थस्योदाहरणस्योपन्यासः। आकारस्यातद्भावितस्य कार्या-दाहरणमाह। 'शालीयो मालीय इति'। ऐकारौकारयोस्त्वतद्भावितयोरु-दाहरणं रैकुलमयं नौकुलमयमिति, वृद्धलक्षणो मयड्भवति ॥

अदेङ् गुणः॥ पूर्वेण तुल्यमेतत्। 'तपरकरणं त्विह सर्वार्थमिति'। न तु पूर्ववदन्यतरार्थमिति तुशब्दस्यार्थः। असति हि तस्मिन् दीर्घप्लु-तयोरपि गुणसंज्ञा स्यात् ततश्च तरतीति कदा चिदकारः स्यात् कदा चिदाकारः। रपरत्वे कृतएकस्याऽर्धमात्रत्वादपरस्यार्द्धतृतीयमात्रत्वात् । न चाकारस्य वृद्धिसंज्ञा बाधिके,कसंज्ञाधिकारादन्यत्र संज्ञासमावेशात् । एङश्च त्रिमात्रचतुर्मात्रस्य गुणसंज्ञायां खवेषा, खट्वेषा, अश्वोढः, बड्वोढ इति त्रिमात्रचतुर्म्मात्रौ स्यातां, तरतेत्यादीनि तद्भावितानामदेङां क्रमेण रूपोदाहरणानि। पचन्ति जयन्तीत्यकारस्य कार्योदाहरणे। अत्रान्त्यकारे परतः शवकारस्या'तो गुण' इति पररूपं भवति, एकारस्यातद्भावितस्यो-दाहरणमहं पचइति, ओकारस्य तु न संभवति ॥

इको गुणवृद्धी॥ 'परिभाषेयमिति'। नाधिकारः, अस्वरितत्वात्, असंयुज्यनिर्द्दिशाच्च । अधिकारे हीको गुणवृद्धी न धातुलोप इति संयु-ज्यैव निर्द्दिशेत्। नापि विधिः, इकः स्थाने गुणवृद्धी भवत इति लक्षण-

१ रूपेति नास्ति पुस्तकान्तरे।

न्तरेण विधास्यमानत्वात्। ननु यदायं स्वतन्त्रो विधिस्तदा तेष्वित्र इत्यस्योपस्थापकाभावाद् यातेत्यादावनिकोपि विधिः स्यात्, इह तु सार्वधातुकाद्यभावेपि दधि मध्वित्यादौ विधिरस्तु, एवं तर्हि गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणाच्च विधिः। यद्यपि प्रकृतं गुणवृद्धिग्रहणं संज्ञापरम्, इह त्वनुवृत्तिसामर्थ्यात्संज्ञिपरं भविष्यति, 'अदेङ् गुण' इत्यत्र चानुवर्त्तमानमपि वृद्धिग्रहणं न संबध्यते. अन्यवचनाच्चकाराकरणाच्च, अन्या हि तत्र गुणसंज्ञोच्यते चकारश्च न क्रियते ऽतो विधिपक्षे पुनर्गुणवृद्धिग्रहणं न कर्त्तव्यम्। अत एवाधिकारोपि न भवति, परिभाषायां[1] तु तस्या विशिष्टविषयत्वसिद्धये कर्त्तव्यं तदिति वक्ष्यामः। अतः परिभाषेयम्। योगो वायं व्यपदिश्येत सूत्रं वा तत्कथमियमिति स्त्रीलिङ्गनिर्द्देशः, उच्यते। यथायं योगो यथा वा सूत्रमिदम् एवं परिभाषापि तत्सामानाधिकरण्यादियमिति निर्द्देशः। ननु परिभाषात्वं विधित्सितम्, इदंशब्दस्तु उद्देशकः, सिद्धरूपस्य चोद्देशः सूत्ररूपता योगरूपता वा सिद्धेति पुनरप्युद्देशकस्य स्त्रीलिङ्गानुपपत्तिः। कश्चिदत्र परिभाषेयमित्यनूद्य स्थानिनियमार्थेतां विधीयते येयं परिभाषा सा स्थानिनियमार्थेति न तु परिभाषारूपता विधीयतइत्याह। स वाच्योसिद्धं परिभाषात्वं कथमनूद्यतइति। अव्यापकश्चायं परिहारः 'समर्थः पदविधि'रित्यादौ, तत्र परिभाषेयमित्येतावच्छ्रूयते न पुनरेतदर्थेति। वयं तु ब्रूमो निर्द्दिश्यमानप्रतिनिर्द्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गभाञ्जि भवन्ति, तत्र यथा ऽसौ यत्कर्म्म सा चेत्स कर्त्ता इति कर्म्माकारपरामर्शिनोपि तच्छब्दस्य विधीयमानस्य कर्त्राकारस्य लिङ्गं भवति तद्वदिहापि सूत्रमेवो[2]द्दिश्यत, इदंशब्दस्य विधीयमानपरिभाषाकारस्य लिङ्गं भविष्यति। 'स्थानिनियमार्थेति'। इगाख्ये स्थानिनि गुणवृद्ध्योर्नियमोर्थः प्रयोजनं यस्याः सा तथोक्ता 'द्वन्द्वे घी' ति वृद्धिशब्दस्य पूर्वनिपातः प्राप्तः सूत्रनिर्द्देशेन न नित्यं बाध्यते धर्मादिषु उभयमिति वचनादिति सूत्रप-

१ परिभाषात्वे इति पा० २।
२ उद्दिश्यमानेति पा० २।

वाह । 'वृद्धिगुणावित्यादि' । किं पुनरनेन यत्नेनोच्यते, ननु नियमरूपेणास्य सूत्रस्य प्रवृत्तिरिति, यथा 'एच इग्घ्रस्वादेशे' ह्रस्व आदिश्यमान एच इगेवेति, यद्येवम् अनियमप्रसङ्गे नियम इति 'सार्वधातुकार्द्धधातुकयोः,' सिचि वृद्धिरित्यत्रैव स्यात्, अत्र ह्यसत्यस्मिन्योगे ऽलोन्त्यस्य भवन्तौ वृद्धिगुणावनन्त्यस्याविशेषितत्वादिकश्चानिकश्च प्राप्नुतो, न तु मिदिमृजिपुगन्तलघूपधच्छिदृशिक्षिप्रक्षुद्रेष्वपि । अत्रालोन्त्यस्येत्यनिक एव प्रसङ्गः । अथ सर्वेषाक्यानां सावधारणत्वात् प्राप्तमेवावधारणमिक एवेत्येवशब्देनाभिधीयते न पुनर्नियमोनेन प्रदर्श्यते, यथा 'तपस्तपःकर्म्मकस्यैवे' ति । अतो विधिरूपेणैवास्य व्यापारो विवक्षितः, परिभाषात्वाच्च गुणवृद्धिविधेः संस्कारकं विध्यन्तरमिदं, यथा 'इद्गोण्या' इत्यादे 'रलोन्त्यस्ये'त्ययमिति पक्षः । ततो नाप्राप्तायामलोन्त्यपरिभाषायामियमारभ्यमाणा तस्या बाधिका स्यात्, ततश्च यत्रैषा न तत्र सा प्रवर्त्ततेति जुसि गुणो यथेह भवति अबिभयुः अबिभरुरिति एवमनेनिजुः पर्यवेविषुरत्रापि प्राप्नोति । 'सार्वधातुकार्द्धधातुकयो' र्यथेह भवति चेता स्तोतेति एवमीहितोहिता उम्भिता ऽत्रापि प्राप्नोति । अथ तु सामान्यविशेषयोरसंभवे बाध्यबाधकभावः । अस्ति चात्र संभवो यद'लोन्त्यस्य' ऽगुणवृद्धी स्यातामिकश्च, ततो 'जुसि चे' त्यादौ गुणवृद्धिलिङ्गादिकुपरिभाषाप्युपतिष्ठेत अङ्गस्येति स्थानषष्ठीनिर्द्देशाद् 'अलोन्त्यस्ये' त्येषापि, तत्र च न समुच्चयो ऽङ्गान्त्यस्यानिकोपि गुणो भवति तदवयवस्य चेको ऽनन्त्यस्यापीति । नापि विकल्पः । कदा चिदङ्गान्त्यस्यानिकोपि कदा चित्तदवयवस्येकोऽनन्त्यस्यापीति, एकत्वात् षष्ठ्यर्थस्यैक एव हि सकृच्छ्रुताया अङ्गस्येति षष्ठ्या अर्थः स्थानेयोगो वा अवयवयोगो वा, न द्वौ समुच्चितौ नापि विकल्पितौ तत्र यद्यङ्गस्येत्येतत्पूर्वमिक इत्यनेन वैयधिकरण्येन संबध्येत अङ्गस्य य इक् तस्य गुण इति ततो ऽलोन्त्यस्येत्येतदनन्वितं स्यात् । अतः पूर्वमलोन्त्यस्येत्यनेन संबध्यते स चान्त्येका विशेष्यते अङ्गान्त्यस्येको गुण इति, यद्वा इका ऽङ्गं विशिष्यते विशेषणेन च तदन्तविधिः, इगन्तस्याङ्गस्येति, एवमपि हि स्थानषष्ठीत्वानपायादलोन्त्यस्येत्यस्याहतप्रसरं सर्वथाङ्गा-

न्त्यस्येको गुण इति जुसि सार्वधातुकार्धधातुकगुणे न कश्चिद्दोषः। मिदादिषु पूर्वोक्तेन प्रकारेण द्वयोरन्यथासंभवादन्यतरद्वातव्यं तत्राविशेषादुभयमपि त्यज्येत, उच्येते च वृद्धिगुणौ 'मृजेर्वृद्धिः' 'मिदेर्गुणः' इति तौ सर्वादेशौ स्याताम्। अतो विधिरूपेण नियमरूपेण वास्य सूत्रस्य व्यापारो नाभ्युपगन्तव्यः, किं तर्ह्यनेन क्रियते पदोपस्थापनं यत्र ब्रूयाद् गुणो भवतीति वृद्धिर्भवतीति तत्रेक इत्येतत् षष्ठ्यन्तं पदमुपतिष्ठतामिति। 'अलोन्त्यस्ये'त्यस्य तु वाक्यभावः, एवं हि विज्ञायमाने सिचि वृद्धिरित्यादौ यत्रान्त्य इक् संभवति तत्रेक इत्येतेनोपस्थितेनाङ्गे विशेषिते तदन्तविधौ सतीगन्ताङ्गस्य गुण इति वाक्यव्यापारे परिनिष्ठिते पश्चादलोन्त्यस्येत्येतदिगन्तस्य प्राप्तं गुणं ततोऽपकृष्याङ्गान्त्यस्य विधत्ते न त्विक इत्यस्योपस्थानवेलायामुपतिष्ठते, 'मिदेर्गुणः' इत्यादौ तु यत्रान्त्य इक् न संभवति तत्राङ्गेनेकि विशेषितेङ्गस्येको गुण इति वाक्यव्यापारे परिसमाप्ते स्थानषष्ठ्यभावात्स्वयं न प्रवर्तते न त्विक इत्यनेन सहोपतिष्ठते येनाविशेषादुभयोर्निवृत्तिः स्यादिति सिद्धमिष्टम्। वृत्तिकारेण त्वस्य सूत्रस्य प्रयोजनं पिण्डीकृत्य प्रदर्शितं सर्वस्यान्त्यस्य वाऽनन्त्यस्य वेक एव गुणवृद्धी भवतो न त्वक्षरव्यापारः, अत एव वेदितव्यावित्याह। अक्षरव्यापारप्रदर्शने तु इक एव स्थाने भवत इत्येतावदुक्तव्यं स्यात्। 'स्वसंज्ञया शिष्यमाणाविति'। वृद्धिर्भवति गुणो भवतीत्येवं विधीयमानावित्यर्थः। 'इक इति किमिति'। प्रधानावयवाक्षेपेण समुदायस्यैवाक्षेपः, सूत्रं किमर्थमित्यर्थः। 'आत्सन्ध्यक्षरेत्यादि'। ननु 'गापोष्टगिति' टकः कित्करणं सामग इत्यादावाल्लोपार्थं ज्ञापकम् आकारस्य गुणो न भवतीति, यदि हि स्याद्गुणे कृते ऽल्लोपे च सिद्धं स्यात् सामग इति। तथा ग्लायतीत्यादौ सन्ध्यक्षराणामप्युपदेशसामर्थ्याद् गुणो न भविष्यति, इतरथा प्रक्रियालाघवार्थमेकारमेवोपदिशेत्। 'जनेर्ड' इति डित्करणाद्व्यञ्जनानामपि गुणो न भविष्यति, यदि हि तस्य स्यादर्धमात्रस्य मात्रिके ऽकारे गुणे कृते सिद्धं स्यादुपसरज इति। यद्येवं मिदेर्गुणोऽन्त्याद्व्यावर्तितः सर्वादेशः स्यात्, किं च गमेरप्ययं डो भवति तस्य च स्थानत आन्तर्यादोकारो गुणः स्याद्,

रैनौग्लौशब्देभ्यश्चाचाराक्विबन्तेभ्यस्तृजादौ गुणप्रसङ्गो यद्यभिधानमस्ति, तथा चितः, चिनुतः, भिन्नः, वेभिद्यते, इत्यादौ 'क्ङिति चे'ति प्रतिषेधार्थमपि गुणाधिकलक्षणत्वमेषितव्यम्। अथ वृद्धिग्रहणं किमर्थम् 'मृजेर्वृद्धि' रिको यथा स्यात्, अलोन्त्यस्य मा भूत्। योगविभागात्सिद्धम्। मृजेर्वृद्धिरचः, मृजेरचो वृद्धिर्भवति, अङ्गाक्षिप्तेन प्रत्ययेनाचो विशेषणाद्यमाट् अटो न भविष्यति, सिचि वृद्धिस्तर्ह्यकारस्य मा भूत्, अचिकीर्षीत्। अतो लोपो भविष्यति 'णयल्लोपावियङ्यणगुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्ध' मितिवचनादन्यथा चिकीर्षक इति। आकारस्य नास्ति विशेषः, सन्निधानादसंभवश्च। एजन्तमपि न संभवति आत्वविधानात्। रैनौग्लौशब्दानामाचारक्विबन्तानामविशेषः, गोशब्दस्य क्विबन्तस्य 'ऋत इद्धातो' रित्यतो धातोरित्यनुवृत्तेः धातुरेव यो धातुरिति विज्ञानात् सिचि वृद्ध्यभावः। अभैत्सीदित्यादौ सिचि वृद्धिरित्यनेन व्यञ्जनस्य नाप्राप्तायां वृद्धौ विधीयमाना हलन्तलक्षणा वृद्धिर्बाधिका, 'नेटी' त्ययं च निषेधो च यावती हलन्तस्य वृद्धिः सिचि वृद्धिरिति वा हलन्तस्याच इति वा सा सर्वा न भवतीति विज्ञायते, तेनानर्दीदित्यादौ अन्त्यस्य वृद्धिर्न भविष्यति, तदेवमिको वृद्धिर्यथा स्याद् अदेङ्व्यञ्जनानां मा भूद् इत्येवमर्थं तावद् वृद्धिग्रहणं न कर्त्तव्यम्। एवं तर्हि मृज्यते मृष्ट इत्यादौ 'क्ङिति चे' ति प्रतिषेधार्थं मृजेर्वृद्धेरिग्लक्षणत्वम्, इदमपि योगविभागात्सिद्धं, मृजेर्वृद्धिरित्यस्यानन्तरमजादौ क्ङिति वेति वक्तव्यं परिमृजन्ति परिमार्जन्ति परिममृजतुः परिममार्जतुरित्येवमर्थं, तत्र योगविभागो ऽजादौ क्ङिति मृजेरचो वृद्धिर्भवति, किमर्थमिदं नियमार्थं क्ङिति यदि भवति अजादावेवेति। तेन मृज्यते मृष्ट इत्यादौ न भविष्यति, ततो वा, ऽजादावपि विकल्पेनेति। सिचि वृद्धेस्तर्हि प्रतिषेधार्थमिग्लक्षणत्वं, णु स्तुतौ धू विधूनने कुटादी, न्यनुवीद् न्यधुवीद्, अत्राप्यन्तर्भूतसिज्मात्रापेक्षत्वादन्तरङ्गउवङि सति हलन्तात्वा- 'चेटी'ति निषेधः। यदि सिच्यन्तरङ्गं भवति अचैषीद् अहौषीद् गुणः स्यात्। अस्तु तस्यैव वृद्धिः करिष्यते, अकार्षीदित्यादौ हलन्तलक्षणा वृद्धिः, अतारीदित्यादौ हलन्तलक्षणाया 'नेटी' ति प्रतिषेधे ऽतो हलादे-

रिति विकल्पं बाधित्वा 'ऽतो ल्रान्तस्ये'ति नित्या वृद्धिः। अलावीदित्यादावुवर्णान्तेषु सेटि सिच्यन्तरङ्गत्वाद्गुणावादेशयोः कृतयोरपि 'अतो ल्रान्तस्ये' त्यत्र वकारस्यापि लुप्तनिर्दिष्टत्वान्नित्या वृद्धिः। यद्येवं मा भवानवीत् अमवीदित्यत्रापि तर्हि वकारप्रश्लेषान्नित्या वृद्धिः स्यात्, सिच्यन्तरङ्गं भवतीत्युक्ते ह्म्यन्तक्षणेत्यत्र णिश्विग्रहणं न कर्तव्यम्, अ्रौनयीदश्वयीदित्यत्रान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तानां नेत्येव सिद्धत्वात्। तत्स्थाने अविमवी निवेशयिष्यामः। 'अतो ल्रान्तस्ये' त्यत्र वकारप्रश्लेषेण प्राप्ता वृद्धिरविमव्योर्नेति तदेवमनर्थकं वृद्धिग्रहणं, नानर्थकं सिच्यन्तरङ्गस्य प्रवृत्तिमाश्रित्य हि वृद्धिग्रहणं प्रत्याख्यायते, यदि च सिच्यन्तरङ्गं स्यात् चिनीप्रभृतिभ्यो यङ्लुगन्तेभ्यश्चिरिणोतिजिरिणोतिभ्यां च लुङि सिचि अचेचायीद् अनेनायीद् अचिरायीद् अजिरायीदिति न स्याद्, गुणायादेशयोः कृतयोः यान्तानां नेति प्रतिषेधप्रसङ्गाद्, इग्लक्षणायां तु सिचि वृद्धौ तयैवान्तरङ्गं बाध्यते, यदि स्याद् न क्वापि सिचीगन्तमङ्गं भवेत्, ततश्चाचिरायीदित्यादि सिद्धं, यथा च तया गुणायादेशौ बाध्येते एवं न्यनुवीदित्युवङपि बाध्येत, अतः प्रतिषेधार्थमपि वृद्धिरिग्लक्षणात्वमेषितव्यमिति सर्वमवदातम्। एवं बहुवक्तव्यत्वाद्वृत्तिकारेण वृद्धिग्रहणस्य प्रयोजनं न दर्शितम्। अथ कथं स्वसंज्ञया विधीयमानावित्येष विशेषो लभ्यते इत्याह। 'गुणवृद्धिग्रहणमित्यादि'। इह पूर्वसूत्राभ्यां गुणवृद्धिग्रहणमनुवर्तते, तेनैवादेङामादैचां च ग्रहणे सिद्धे यत्पुनर्गुणवृद्धिग्रहणं तत्स्वसंज्ञया विधाननियमार्थं, मन्यथा प्रकृतं गुणवृद्धिग्रहणं तटस्थमुपलक्षणं स्याद् वस्तुतो ये गुणवृद्धी तद्विधाविति, स तु विधिर्गुणवृद्धिशब्दाभ्यां प्रकारान्तरेण वेत्येष विशेषो नाश्रितः स्यात्, पुनर्गुणवृद्धिग्रहणसामर्थ्यात्तु शब्दव्यापाराप्याश्रीयते गुणवृद्धी ये गुणवृद्धी, एवं शब्दिते ये गुणवृद्धी इत्यन्यतरस्य गुणवृद्धिग्रहणस्य स्वरूपप्रधानत्वं संपद्यते तेनायं विशेषो लभ्यतइत्यर्थः। अन्यथा 'अच'श्चेत्यस्य स्वसंज्ञया विधाने नियमस्य 'दिव उदि' त्यादिष्वगुणवृद्धिसंज्ञकेषु तत्संज्ञेषु च यत्रेङ् न संभवति 'अष्टन आ विभक्ता'वित्यादौ तत्र चरितार्थत्वा 'द्विव औदि' त्यादिषु गुणवृद्धिसंज्ञकेषु यत्रेक्

संभवति तत्रायं नियमः स्यात्। 'द्यौः पन्थाः स इममिति।' स इत्येतदनुदाहरणं, नह्यत्रेगस्ति॥

एवं प्रकटितोऽस्माभिर्भाष्ये परिचयः परः।
तस्य निःशेषतो मन्ये प्रतिपत्तापि दुर्लभः॥

न धातुलोपआर्द्धधातुके॥ 'दुरीणो लोपश्च,' दुःशब्दउपपदे इणो धातोरप्रत्ययो भवति धातोश्च लोपः, दुःखेन ईयते प्राप्यते दूरमित्यत्र यद्यपि कृत्स्नस्य धातोर्ल्लोपः संभवति तथाप्येवं विषये गुणवृद्ध्योः प्राप्त्यभावादेकदेशे धातुशब्दो वर्त्ततइत्याह । 'धात्वेकदेशइति'। धातुलोपइति तत्पुरुषे सति आर्द्धधातुकग्रहणं लोपविशेषणं गुणवृद्धिविशेषणमुभयविशेषणं वेति त्रयः कल्पा,स्तत्र यदि लोपविशेषणमार्द्धधातुकनिमित्ते धातुलोपे सति यत्किञ्चिद् निमित्ते गुणवृद्धी न भवत इत्यर्थः स्यात्, ततश्च प्रेद्धमित्यत्र प्रपूर्वादिन्धेः क्तप्रत्यये तन्निमित्ते नलोपे सति प्राप्नुवत आद् गुणस्यापि निषेधः स्यात्, यद्यपीक इत्यनुवर्त्तते तथापि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवन्नन्यतरव्यपदेशं लभतइति स्यादेव, न चेह सूत्रइक इत्यस्य रूपपरत्वे प्रमाणमस्ति उत्तरसूत्रे तु प्रमाणं वक्ष्यामः। ननु पूर्वं धातुः साधनेन युज्यतइत्यस्मिन् दर्शने प्रथमोपनतक्तप्रत्ययापेक्षत्वादुपधालोपोऽन्तरङ्ग इति तदपेक्षः प्रतिषेधोऽप्यन्तरङ्गः, पूर्वं धातुरुपसर्गेण युज्यतइति तु दर्शने प्रथमोपनतोपसर्गापेक्षत्वाद् गुणोऽन्तरङ्गस्ततश्च 'सिद्धं बहिरङ्गमन्तरङ्गे' इति प्रतिषेधो न भविष्यति। नैतदस्ति। नाजानन्तर्यइति निषेधात्। अथ गुणवृद्धिविशेषणमार्द्धधातुकग्रहणं ततोयमर्थः स्यात् यत्किं चन निमित्ते धातुलोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न भवत इति, तदा प्रेद्धमित्यत्र दोषो न, गुणस्यातन्निमित्तत्वात्, किं तु क्नोपयतीत्यत्र क्नूयी शब्दइत्यस्माण्णिचि पुकि च यलोपे पुगन्तलक्षणस्य गुणस्य निषेधः स्यात्। अत उभयविशेषणमार्द्धधातुकनिमित्ते धातुलोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न [१]भवत इति, तत्र सकृच्छ्रुतस्योभयविशेषणत्वमेव तावद् दुर्लभम्, अथापि स्याद् एवमपि

---

१ स्तइति पा॰ २।

लोपगुणवृद्धीनामेकार्द्धधातुकनिमित्तत्वं न लभ्यते, ततश्च विभज्या-न्वाख्यानपक्षे भेद्यतइत्यत्र भिदेर्ण्यन्तात्कर्मणि यकि भिदइयइति स्थिते नित्यत्वात्पूर्वं णिलोपे कृते यकमपेक्ष्य प्रवृत्ते प्रत्ययलक्षणेन णिच-मपेक्ष्य प्राप्नुवतो गुणस्य निषेधः स्याद् द्वयोरप्यार्द्धधातुकनिमित्तत्वा-दिति तत्पुरुषे सति सर्वथा दोषं दृष्ट्वाह । 'तस्य लोपो यस्मिन्निति'। अस्मिन्पक्षे धातोर्लोपो यस्मिन्निति अन्यपदार्थभूतेनार्द्धधातुकेन लोपो विशेष्यते साक्षाच्च गुणवृद्धी धातोर्लोपो यस्मिन् तस्मिन्निति एकार्द्धधा-तुकनिमित्तत्वं च लोपगुणवृद्धीनां लभ्यतइति न कश्चिद् दोषः । 'ते न भवत इति'। अनेन गुणवृद्ध्योरयं निषेधो न पूर्वसूत्रव्यापारस्येति दर्शयति, पदोपस्थापन हि पूर्वसूत्रव्यापारो न चैवं भूतआर्द्धधातुके तस्य प्रसङ्गः, 'दीधीवेवीटा'मिति चासंबद्धं स्यादुपस्थाननिषेधे । 'लोलुव इत्यादि' । लूञ्भ्यां यङ् द्विर्वचनं गुणो यङ्लुको,गुणे निषिद्धे उवङ् । 'मरीमृज इति'।'रीगृदुपधस्य च'लोलूयादिभ्य इत्यादिना सूत्रार्थमुदाहर-णेषु दर्शयति । ननु च यङकारस्यातो लोपे कृते तस्य स्थानिवत्त्वादेव गुणवृद्धी न भविष्यतः, यथा पापचक इत्यत्र उपधाया इति वृद्धिः, नह्यत्रानेन निषेधः सिध्यति, किं कारणम् । अनिग्लक्षणत्वात् । नालोपो लभ्यते, 'यङोऽचि चे'ति समुदायलुका प्रतिपदविहितेन बाधितत्वात् । योगविभागात्सिद्धम् । अतो लोपो भवत्यार्द्धधातुके, ततो यस्य, य इत्यस्य समुदायस्य योकारस्तस्यापि लोपो भवति, किमर्थमिदं विशेषविहितेन समुदायलुका ऽतो लोपो मा बाधीति, तेन स्थानिवत्त्वा'देव गुणवृद्धी न भविष्यतः, यथैव तर्हि गुणवृद्धी न भवत एवं चेचियः, चेक्रियः, लोलु-व,स्तोष्टुवः, सुष्रुव,इतीयङुवङावप्यच्प्रत्ययमपेक्ष्य न स्यातां, मा भूतामचि य एव त्वसौ स्यान्यकारस्तदाश्रयो भविष्यतः । स हि यकारे लुप्ते प्रत्य-यसंज्ञकः । ननु चेचियः तोष्टुव इत्यत्रान्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधतइति चकृत्सार्वधातुकयोर्दीर्घात् प्रागेव यङो लुकि कृते

१ निषिद्धइत्यस्य स्थाने सर्वत्र प्रतिषिद्धे इति पा० २ ।
२ स्थानिवत्त्वेत्यस्य स्थाने सर्वत्र स्थानिवद्भावेति पा० २ ।

स्थानिवद्भावे सत्यपि चेतिग्रच तोष्टुयग्र इति स्थिते स्थान्यकारेण सह लघूपधमङ्गं संजातमिति ग्रच्प्रत्यये गुणः स्यादेव, न । ग्रन्तरङ्गावियङुवङौ भविष्यतोऽशिश्रियद् ग्रदुद्रुवद् इति यथा । ग्रतः स्थानिवत्त्वादेव सिद्धं नार्थोनेन । उच्यते । सर्वत्र दीर्घान्तेषु ह्रस्वान्तेषु चेयङुवङोः कृतयोः पुनर्लघूपधलक्षणो गुणः प्राप्नोति, न च पुनरपि स्थानिवद्भावः, ग्रादिष्टादचः पूर्वत्वात् । किञ्च यद्यतो लोपः क्रियेत जङ्गम इत्यत्र गमहनेत्युपधा-लोपः स्यात्, ग्रथात्रानङीति प्रतिषेधस्तर्हि दरीदृश इत्यत्र ऋदृशोरिति गुणः स्यात्, देध्य इत्यत्र 'दीङो युडची'ति युट् स्यात्, सनीस्रंसो दनीध्वंस इत्यत्रानिदितामित्युपधालोपः स्यात् । यायावर इत्यादिष्वा-कारलोपः स्यात्, यदा पुनर्योगविभागमकृत्वा विशेषविहितः समुदाय-लुक् क्रियते तदा हलचोरादेशस्य स्थानिवत्त्वाभावादुपधालोपादयो न भवन्तीत्यवश्यं समुदायस्य लुगेषितव्यः । एवं च लोलुव इत्यादावपि गुणवृद्धी स्यातामिति सूत्रमपि कर्त्तव्यम् ॥ 'लूञ् लवितेति । ' प्रागेव धातु-संज्ञाया भवन्नुबन्धलोपो धातुलोपो न भवति । 'रेडसीति' । रुष रिष हिंसायाम् । ग्रन्येभ्यो ऽपि दृश्यन्त इति विच्, वेरपृक्तस्य लोपो, न धातु-लोपो भवति । नन्वसत्यपि धातुग्रहणे लुप्यते ऽस्मिन्नित्यधिकरणसाधन-लोपशब्दस्याश्रयणादनैमित्तिके ऽनुबन्धप्रत्ययलोपे न भविष्यति, तन्न । लोपशब्दो हि संज्ञाशब्दः कथमस्याधिकरणसाधनता लभ्यते । 'रोरवी-तीति'। रु शब्दे यङ्लुकि तिपि रूपम् । नन्वसत्यप्यार्धधातुकग्रहणे धातोर्लोपो यस्मिन्निति बहुव्रीहिर्विज्ञास्यते, रोरवीतीत्यत्र च यङ्लुगनै-मित्तिको, नह्यार्द्धधातुकग्रहणं बहुव्रीहित्वे प्रमाणं, सत्यपि तस्मिंस्तत्पु-रुषसम्भवात् । इदं तर्हि प्रयोजनं तुर्वी थुर्वी धुर्वी हिंसार्थाः, मुर्छा मोह-समुच्छ्राययोः, तेभ्यो यङ्लुगन्तेभ्यस्तिबादौ सार्वधातुके परतो राल्लोपे तोतोर्ति मोमोर्तीत्यादौ छ्वोर्लोपस्य गुणस्य चैकनिमित्तत्वान्निषेधः स्यादेव । 'इक इत्येवेति' । इक इत्यस्यानुवृत्तिं प्रति न शङ्का कार्येत्येवशब्द-स्यार्थः ग्रतो ऽभाजि रागइति 'भञ्जेश्च चिणि' 'घञि च भावकरण-यो'रित्युपधालोपः ॥

प्रक्रियातर्कगहनप्रविष्टो हृष्टमानसः ।
हरदत्तहरिः स्वैरं विहरन्केन [1]वार्यते ॥

क्ङिति च ॥ क्ङिद्ग्रहणं यदि विधीयमानस्य प्रतिषेधस्य विशेषणं स्याद् गुणवृद्धी क्ङिति न भवत इति ततो विधिसंस्पर्शा 'तस्मिन्निति निर्दिष्टे पूर्वस्य' त्यस्यो[2]पस्थानात् क्ङित्यनन्तरएव प्रतिषेधः स्यात्, यद्यपि प्रतिषेधस्य विधानदशायां पौर्वापर्यं न संभवति तथा निषेध्यमानयोर्गुणवृद्ध्योरपि, तथापि स्थानिन इको ऽनन्तरे क्ङिति प्रतिषेधः स्यात्, एवं हि विधानोत्तरकालमपि तावद्गुणवृद्ध्यभावरूपस्य प्रतिषेधस्य क्ङिदनन्तरः संभवति, 'इको यणचि' त्यादावप्येतावदेव पौर्वापर्यं यद्विधानदशायां तु स्थानिन उत्तरकालं तु विधेयस्य । यदा त्वनूद्यमानयोर्गुणवृद्ध्योर्विशेषणं क्ङिति सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति तदा ऽनुवादकत्वात्तस्मिन्नित्यादिकायाः परिभाषाया अनुपस्थानं, नहि क्ङिति सति ये गुणवृद्धी इत्युक्ते विधिव्यापारेण क्ङितः कश्चित् संस्पर्शो, विध्यङ्गभूताश्च परिभाषास्तत्रैवोपतिष्ठन्ते नानुवादे तस्यापि परार्थत्वाद् द्वयोश्च परार्थयोः परस्परं संबन्धाभावात्, अन्यथा 'वृद्धिर्यस्याचामादिस्तद्वृद्ध' मित्यत्रेक्परिभाषोपस्थाने शालीय इति[3] वृद्धसंज्ञाया अभावात्तल्लक्षणश्छो न स्यात्, तथा चोदीचामातः स्थानइति स्थानेग्रहणं कृतमातः स्थाने योऽकार इत्यनुवादकत्वात् षष्ठी स्थानेयोगेति स्थानेयोगो न लभ्येतेति, अतो ऽस्मिन् पक्षे क्ङितीति सति सप्तमी यस्य च भावेनेति, क्ङितोर्हि सत्तालक्षणेन भावेन गुणवृद्ध्योः प्राप्तिलक्षणो भावो लक्ष्यते, निमित्तस्य च सत्तया निमित्तिनः प्राप्तिर्लक्ष्यतइति क्ङिति सति ये गुणवृद्धी प्राप्नुत इत्यस्य क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इत्यर्थो भवति, भिन्नो मृष्ट इत्यादौ चोपधाया अपि प्राप्नुवन्त्यौ गुणवृद्धी क्ङितं निमित्तमाश्रित्य प्राप्नुत इत्येतत्सर्वमालोच्याह । 'निमित्तसप्तम्येवेति' । निषिद्धात्सप्तमी

[1] जीयते इति पा० २ ।
[2] उपस्थापनादिति पा० २ ।
[3] क्व चिद्वृद्धसंज्ञा न स्यादित्येव पाठः पु० २ ।

निमित्तसप्तमी, पञ्चम्यर्थे शेषत्वेन विवक्षिते षष्ठीसमासः। 'क्ङिन्निमित्त इति'। एतेन गुणवृद्धिविशेषणं क्ङिद्ग्रहणमिति दर्शयति। ननु च विधीयमानतया प्राधान्यात् प्रतिषेधस्यैवैतद्विशेषणं युक्तं, नैतदस्ति। यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय प्रवृत्ते प्रभवति तत्रात्मनोपि संस्कारमनुभूय प्रधानेन संबध्यते, यथा पानीयमेलादिसंस्कृतं पुरुषेण। उक्तं च

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥

इति, इह च गुणवृद्ध्योः क्ङिद्ग्रहणेन विशेषितयोर्महान् प्रधानप्रतिषेधस्योपकारो भवति व्यवहितस्यापि तत्सिद्धेः। 'भिन्न इति'। रदाभ्यामिति नत्वम्। 'मृष्ट इति'। व्रश्चादिना षत्वं, 'चिनुवन्तीति'। 'सार्वधातुकमपित्' 'हुश्नुवोः सार्वधातुके' यद्येषा निमित्तसप्तमी शचङन्ते दोषः, धि धारणे रि गतौ तुदादौ, ताभ्यां तिपि 'तुदादिभ्यः शः' 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' धियति रियति अधियत् अरियत् इति स्थिते शचङन्तस्याङ्गस्य तिपि लघूपधलक्षणश्च गुणः प्राप्नोति शचङोः परतः पूर्वस्य सार्वधातुकलक्षणश्च तत्र शचङ्निमित्तस्यैव प्रतिषेधः स्याद् न तिङ्निमित्तस्य, पक्षान्तरे तु तिङ्निमित्तस्यापि गुणस्य शचङोः परतः प्रतिषेधो लभ्यते। न वा बहिरङ्गलक्षणत्वाद्बहिर्भूततिबाश्रयो गुणो बहिरङ्गोऽन्तर्भूतशचङ्निमित्ताभ्यामियङुवङ्भ्यां बाधिष्यते। 'ग्लाजिस्थश्च क्स्नुः' इत्यत्र वक्ष्यति गित्वायं प्रत्ययो न कित् तेन स्थ ईकारो न भवतीति, क्स्नोर्गित्त्वाच स्थ ईकार इति च, ततश्च भूष्णुरित्यत्र प्रतिषेधो न स्यादित्यत आह। 'गकारोप्यत्रेत्यादि'। 'चर्त्वं भूतः'। चर्त्वं प्राप्तः। अत एव गकारप्रश्लेषात् संख्यातानुदेशो न भवति, अन्यथा क्ङितौ द्वौ गुणवृद्धी अपि द्वे इति संख्यातानुदेशः प्राप्नोति किति गुणस्य ङिति वृद्धेरिति, ज्ञापकाद्वा[1], यदयं 'मिदेर्गुणः' इति श्यनि ङिति गुणं शास्ति तज्ज्ञापयत्याचार्यो नात्र संख्यातानुदेशो भवतीति। यदि तर्हि क्स्नुप्रत्ययो गिद्

१ ज्ञापनादिति पा० २।

भूष्णुरितीट् प्राप्नोति, नैष दोषः। 'श्युकः किती' त्यत्रापि गकारश्चर्त्वभूतो निर्दिश्यते सौत्रत्वाच्च निर्देशस्य चर्त्वस्यासिद्धत्वात्प्राप्तमपि 'हशि चे' त्युत्वं न भवति कुप्वोरिति विसर्जनीयश्च भवति। 'कामयतइति'। 'कर्मणिङ्'। 'लैगवायन इति'। लिगुशब्दा 'चदादिभ्यः फगि' ति फक्, 'श्रोर्गुण' इति गुणस्य प्रतिषेधः कथं न भवति यावतोकार इगेव, नैतदस्ति। अत्र हि चकारः क्रियते स इत्यर्थो विज्ञायते तेनेक इतीमं शब्दमुच्चार्य विधीयमानयोर्गुणवृद्ध्योः प्रतिषेधो न चैवमोर्गुणः। 'मृजेरित्यादि'। इह त्रिमुनिव्याकरणं यथोत्तरं च मुनीनां प्रामाण्यमिति दर्शनस्थितिस्तेन सूत्रकारेणानुक्तं वार्तिककार आह, तदुक्तं च दूषयति, एवं भाष्यकारो वार्तिककारेण। व्याख्यातृत्वमपि द्वयोश्चास्तीत्येतावत्, 'यस्मिन्विधिस्तदादावल्ग्रहण' इत्यनेन तदादिविधौ सिद्धेऽप्यादिग्रहणं मुख्ये ऽजादौ यथा स्याद् व्यपदेशिवद्भावेनाजादौ मा भूत्। तुन्दपरिमृजः, यूयं ममृज, त्वया ममृजे। 'संक्रमो नामेत्यादि'। संक्रामतो ऽपक्रामतो गुणवृद्धी अस्मादिति कृत्वा। 'लघूपधगुणस्याप्यत्र प्रतिषेध इति'। अत्र सूत्रे लघूपधगुणस्यापि प्रतिषेधो न तु 'सार्वधातुकार्द्धधातुकयो' रित्येतस्यैवेत्यर्थः। अनेन निमित्तसप्तम्याः फलं दर्शितम्, अत्रेत्यनेन सूत्रं निर्दिश्यते। इहाचिनोदिति ङितो लङस्तिबादेशः, स्थानिवद्भावाद् ङिदिति गुणप्रतिषेधः प्राप्नोति, इहाचिनवमिति ङितो लङो मिपि तस्यापि स्थानिवद्भावपरम्परया ङित्वाद् गुणप्रतिषेधः स्यादित्यत आह। 'अचिनवमित्यादि'। यदि ङिति यत्कार्यं तद् ङितो लकारस्यादेशे स्थानिवद्भावात्स्यात् यासुटो ङिद्वचनमनर्थकं स्याद् लिङो ङित्वादेव तदादेशेषु ङित्कार्यस्य सिद्धत्वात्॥

दीधीवेवीटाम्॥ 'दिधीवेव्योरिति'। दिधीङ् दीप्तिदेवनयोः वेवीङ् वेतिना तुल्यइत्येतयोः, अथ दीङ् क्षये धीङ् अनादरे वेञ् तन्तुसन्ताने वी गत्यादिषु एतेषां ग्रहणं कस्मान्न भवति, दीङस्तावन्न भवति, 'मीनातिमिनोतिदीङां ल्यपि चे' ति चकारेणैज्विषयआत्वविधानात्।

१ दुर्लभमिति पा॰ २।

वेञोऽपि न भवति, गुणप्राप्त्यभावात् । नैतदस्ति । चकारस्तावन्मीनाति-मिनोत्यर्थः स्यात् दीङोऽपि ग्रहणं ल्यबर्थं स्याद् वेञोऽपि, प्रवेयमित्यत्र 'ईद्यतीती' त्वे कृते गुणः प्राप्नोति, एवं तर्हि चतुर्णां ग्रहणे[1]ऽभिप्रेते ऽसन्देहार्थं दीवेधीवीटामिति ब्रूयात् । किं चा 'वयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' । 'इटश्चेति' । आर्धधातुकस्येडित्यागमस्य । ननु धातुसाहचर्याद्दिट किट गतावित्यस्य धातोर्ग्रहणं युक्तं, सत्यं, प्रसिद्ध्यतिशयादागमस्य ग्रहण, मागमो हि प्रसिद्धतर : शास्त्रे[2] ऽल्पाच्तरत्वेन पूर्वनिपाताभावाच्च धातुरिट्, दीधीवेव्योस्तु धातुत्वात्प्रकृतित्वादभ्यर्हितं चेति पूर्वनिपातः । अथ दीधीवेव्योः किमर्थं ग्रहणम् । यावता छान्दसावेतौ छन्दसि च दृष्टानुविधिः । दृश्यते च गुणो 'होत्राय वृतः कृपयन्दीधेत्,' अधीधयुर्दाशराज्ञ इति । अतस्तयोरनर्थकः प्रतिषेधः, केचिदाहुः । आदीध्यनमावेव्यनम् इत्युदाहरतो वृत्तिकारस्य नानयोश्छान्दसत्वमभिप्रेतमन्यथा हि [3]छन्दस्येव किंचिदुदाहार्यमिति । इदं तु वार्त्तिकविरुद्धम् । यदाह 'दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधानाच्च छन्दस्यदीधेदर्दीधयुरिति च गुणदर्शनादप्रतिषेध' इति। 'आदीध्यनमिति' । ल्युटि एरनेकाच इति यणादेशः । 'कणितेति' । कणिरणी शब्दार्थौ लुटि तिपो डादेशस्तासि टिलोपः कणित्—आ इति स्थिते तकारान्तं लघूपधमङ्गमिति प्राप्तस्य गुणस्य प्रतिषेधः, ननु च 'नेड् वशि कृति' इत्यत इडित्यनुवर्त्तमानमार्द्धधातुकस्येडिति पुनरिड्ग्रहणमिहैव यथा स्याद् विकारो मा भूदित्येवमर्थं भविष्यति । यद्येवम् । अलावीत् पिपठिषतेः क्विपि पिपठीरित्य 'चाकः सवर्णे दीर्घा' र्वोरुपधाया इति च दीर्घो न स्याद्, अङ्गप्रकरणे नियमादाङ्ग एव विकारो [4]निवर्त्यते इह च पिपठिषतेरप्रत्यये नपुंसके 'जसः शी' अतो लोपस्य स्थानिवत्त्वान्नुम् भवतीति सान्तमहत इति दीर्घत्वं न भवतीति पिपठिषि ब्राह्मणकुलानीति भवति ॥

१ अभिमत इति पा· २।
२ अल्पाच्तरत्वेनेत्यारभ्य पूर्वनिपात इत्यन्तं ग्रन्थो बहुषु पुस्तकेषु नास्ति ।
३ छन्दस्यमेवेति पा· २ ।
४ नियम्यतइति पा· २ ।

हलोऽनन्तराः संयोगः ॥

अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।

छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥

इत्यन्तरशब्दोऽनेकार्थः। इह छिद्रवाचिनो ग्रहणमितरेषामसम्भवात्। न विद्यते ऽन्तरं येषां ते ऽनन्तरा निश्छिद्राः, एतमेवार्थं व्यक्तेन शब्दान्तरेण दर्शयति। '[1]भिन्नजातीयैरज्भिरव्यवहिताः श्लिष्टोच्चारिता इति'। एवं भूता हि हलो निश्छिद्रा भवन्ति, भिन्नजातीयैरितिवचनं तत्रैव व्यवधानप्रसिद्धेः, श्लिष्टोच्चारिता इति वचनादवग्रहेऽपि संज्ञा न भवति अप्स्वित्यप्सु, विद्यते ह्यत्रान्तरमर्द्धमात्रा कालः। 'संयोगइति'। यद्येकैकस्य हलः श्लिष्टोच्चारितस्यैषा संज्ञा स्याद् इह च निर्यायादित्यत्र [2]प्रत्येकं संज्ञित्वे सति रेफे यकारः संयोग इति 'वान्यस्य संयोगादे' रित्येत्वं स्यात्। समुदायस्य संज्ञित्वे ऽचो रहाभ्यामिति यकारस्य सत्यपि द्विर्वचने तस्यासिद्धत्वादेत्वाभावः। इह च संस्क्रषीष्ट 'ऋतश्च संयोगादे' रितीट्, संस्क्रियतइति 'गुणोर्तिसंयोगाद्यो' रिति गुणो, द्रुयत्करोति ककारसंनिधौ दकारस्य संयोगत्वात् संयोगान्तलोपः स्यात्, शक्ता वस्तेति झलि तकारे परतः स्कोः संयोगाद्योरिति लोपः स्यात्, निर्यात इति संयोगादेरातइति निष्ठानत्वं स्यात्, समुदाये तु संज्ञिनि नैते दोषा इत्यालोच्याह। 'समुदायः संज्ञीति'। महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं संयुज्यन्ते ऽस्मिन्मिथो हल इति, नैरन्तर्यं च श्रुतं संज्ञिरूपे ऽनुप्रविशतीति युक्तं, प्रत्येकपक्षे तु तदुपलक्षणं स्याद्, अतः समुदाय एव संज्ञी युक्त इति भावः। हल इति बहुवचननिर्द्देशाद् द्वयोः संज्ञा न स्यादित्याशङ्क्याह। 'जातौ चेति'। चशब्दो यस्मादर्थे, यस्माज्जातौ बहुवचनं तेन द्वयोर्बहूनां चेति। अथ यत्र बहवो हलः संश्लिष्टास्तत्र किं द्वयोर्बहूनां चाविशेषेणसंज्ञा ऽऽहोस्विद्बहूनामेव, यदि बहूनामेव इह 'मस्जिनशो र्झली' त्यन्त्यादचः परे नुमि मनस्ज्इति स्थिते नसजानामेका संज्ञा न तु सजयोरिति स्कोः

१ भिन्नजातीयैरित्यादिनेति पा· ३।
२ प्रत्येकं संज्ञित्वे इति नास्ति पु· २।

संयोगाद्योरिति सलोपो न स्यात्। नैष दोषो, मस्जेरन्त्यात्पूर्वं नुमिष्यतव्यो मग्न इत्युपधालोपो यथा स्यात्। अन्यथा द्वयोस्संज्ञाश्रयेण सत्यपि संयोगादिलोपे तस्यासिद्धत्वाच्चलोपो न स्याद्, इह तर्हि निर्ग्लेयात् संस्वरिषीष्ट संस्वर्यते निर्ग्लान इति एत्वेड्गुणनिष्ठानत्वानि न स्युः। अस्तु तर्ह्यविशेषेण, कुतः, निश्छिद्रत्वस्याविशेषात्, न च द्विर्वचनन्यायेन समुदायस्यैव स्यादिति वाच्यं, यथा द्विर्वचनं समुदायावयवैकाचोर्युगपत् कर्त्तुमशक्यं नैवमत्राशक्तिः, यथा च समुदाये द्विरुक्ते ऽवयवा अपि द्विरुक्ता भवन्ति इतः प्रचलत् सहावयवैः प्रचलतीति न्यायेन, न च तथेह समुदाये प्रवृत्तया संज्ञया ऽवयवानां तत्कार्यसिद्धिः, अतो नायं द्विर्वचनन्यायस्य विषयो ऽतो ऽविशेषेण द्वयोर्बहूनां चेति स्थितं, यद्येवमिन्द्रमिच्छति इन्द्रीयति ततः सन् इन्दिद्रीयिषतीत्यत्र द्वौ संयोगौ नद्रौ दरौ च तत्र नन्द्रा इति प्रतिषेधो नकारवद्दकारस्यापि स्यात्, न वाज्विधे,रजादेरिति वर्त्तते तत्र कर्म्मधारयात् [1]पञ्चमी, आदेरचः परे नदरा न द्विरुच्यन्तइत्यर्थः। अग्निरित्यादीनि रूपोदाहरणानि। 'तिलॉस्थ्यावपतीति'। 'हेमपरे वे' ति वर्त्तमाने 'ङः सिधुडि' ति च 'नश्चेति' धुट् चत्वं तत्र यदा न धुट् तदा नसतरथाः। यदा धुट् तदा नतसतरथाः। 'तितउच्छत्रमिति'। 'तनोतेर्डउ सन्वच्चेति' [2]"डउप्रत्ययः, व्यस्तोच्चारणसामर्थ्याद् गुणाभावः, सन्वद्भावाद् द्विर्वचनमित्वं" च टिलोपः। 'संयोगान्तलोपः स्यादिति'। यद्यचोरप्यनन्तरयोः संयोगसंज्ञा स्यादिति भावः। ननु च 'छे चे'ति तुकि कृते तकारः पदान्तो न संयोगः, नैतदस्ति, 'छे चे' त्ययं तुग् ह्रस्वमात्रभक्तो न तदन्तग्रहणेन गृह्यतइति पदं संयोगान्तमेव। पचतीति रूपप्रत्युदाहरणं, पनसमिति कार्यप्रत्युदाहरणम्। 'स्कोस्संयोगाद्योरिति लोपः स्यादिति'। यदि सकारमकारयोः सान्तरयोरपि संयोगसंज्ञा स्यादिति भावः॥

मुखनासिकावचनोऽनुनासिकः॥ यद्यत्र मुखं च नासिका चेति द्वन्द्वः स्याद् द्वन्द्वश्च प्राणितूर्यादिसूत्रेणैकवद्भावः स्यात् ततश्च 'स नपुं-

१ पञ्चम्यामादेरच इति पा· २

२ "," एतच्चिन्हिते सर्वत्र प्रथमान्तस्थाने सप्तम्यन्तः पाठः पु· २।

सक’मिति नपुंसकत्वे ह्रस्वो नपुंसकेति ह्रस्वत्वे च मुखनासिकवचनइति प्राप्नोतीत्युत्तरपदलोपिनं तत्पुरुषं दर्शयति। ‘मुखसहिता नासिकेति’। ‘तयोच्चार्यतइति’। एतेन ‘कृत्यल्युटो बहुल’मिति कर्म्मणि ल्युटं दर्शयति, तयेति करणे कर्त्तरि वा तृतीया, करणस्यैव कर्तृत्वेन विवक्षणात्, सूत्रेपि मुखनासिकावचन इति ‘कर्तृकरणे कृता बहुल’मिति तृतीयासमासः षष्ठीसमासो वा । ‘अनुस्वारस्यैव हि स्यादिति’ । तस्मिन्नुच्चार्यमाणे नासिकाया एव व्यापारो न मुखस्य तेन तस्यैव स्याद् न तु ञमङणनानां नाप्यर्द्धा अप इत्यस्य, तदुच्चारणे मुखस्यापि व्यापारादित्येवकारेण दर्शयति । ननु यथा प्रासादवासिन आनीयन्तामित्युक्ते ये प्रासादएव निवसन्ति ये च प्रासादे भूमौ च ते द्वये अप्यानीयन्ते प्रासादवासत्वस्य उभयेषामस्तीति । तथेहापि नासिकावचन इत्युक्ते यः केवलनासिकावचनो यश्च मुखनासिकावचन उभयोरपि ग्रहणं भविष्यति, नासिकान्वयस्य विवक्षितत्वात् तत्किमुच्यते ऽनुस्वारस्यैव हि स्यादिति अनुस्वारस्यापि हि स्यादिति तु वक्तव्यम्, उच्यते । इह त्रीणि दर्शनानि कृतस्न एवानुनासिको मुखेन नासिकया चोच्चार्यते, पूर्वो भागो मुखेन परो नासिकया, विपरीतं वा । नासिक्यभागानुरागाच्चेतरोपि भागस्तद्वदेव भासतइति । तत्रोत्तरस्मिन्दर्शनद्वये नासिकान्वयस्य भागविषयत्वान्नासिकावचनग्रहणेनोभयवचनो न गृह्यतइति सुष्ठूक्तमनुस्वारस्यैव हि स्यादिति । ‘कचटतपानाम्माभूदिति’। ते हि मुखेनैवोच्चार्यन्तइत्यसति नासिकाग्रहणे तेषामेव स्यात् ततश्च तप्तमित्यनुदात्तोपदेशेत्यनुनासिकलोपः स्यात्, ओदनपागत्य‘नुनासिकस्य क्विझलोः क्ङिती’ति दीर्घः स्यादिति महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं,ननु पश्चान्मुखस्य नासिका व्याप्रियते यस्मिन् नासिकाया वा पश्चान्मुखं व्याप्रियते यस्मिन् इति, तेन भागविषयो नासिकाव्यापार इति सूचनात् प्रासादवासिन्यायस्यायमविषय इत्युक्तं भवति ॥

तुल्यास्य प्रयत्नं सवर्णम् ॥ तुल्यशब्दोयं यद्यपि तुलया संमितं तुल्यमिति नौवयोधर्म्मेति यतमुत्पाद्य व्युत्पाद्यते तथापि व्युत्पत्त्यर्थमेव

तुलोपादीयते रूढशब्दस्त्वयं प्रवीणः प्रतिलोमादिवदित्याह। 'तुल्यशब्दः सदृशपर्याय इति'। ननु नौवयोधर्म्मेत्यत्र वक्ष्यति यथा तुला द्रव्यान्तरं परिच्छिनत्ति तथा तुल्यमपि सादृश्येन परिच्छिनत्तीत्येतत्तुलया तुल्यस्य साधर्म्यमिति, सत्यं, नह्येवं लौकिकाः प्रतियन्ति। तथाहि। तुल्य इत्युक्ते सदृश इति प्रत्ययो भवति न तु कश्चिदवयवार्थः प्रतीयते। 'आस्ये भवमास्यमिति'। लोकसिद्धं तावदास्यमोष्ठात्प्रभृति प्राक्काकलकाद् अस्यन्ते क्षिप्यन्ते ऽनेन वर्णा इति कृत्वा, काकलकं नाम ग्रीवाया उन्नतप्रदेशः, इह तु तस्मिन्नास्ये भवमास्यमित्यर्थः। 'दिगादिभ्यो यत्' 'शरीरावयवाच्चे'ति यत्प्रत्ययः। किं पुनस्तदित्याह। 'ताल्वादिस्थानमिति'। यस्मिन्वर्णा निष्पद्यन्ते तत् स्थानम्। आदिशब्देन नासिकादीनां ग्रहणं नासिकापि न बाह्या वर्णोत्पत्तिनिमित्तं किं तर्हि अन्तरास्ये चर्म्मवितनमस्ति पणवचर्मवत्, तत्संबद्धा रेखा नासिका तस्यां वायुना ऽभिहतायां वर्णोत्पत्तिः। यदि पुनर्लौकिकमास्यं गृह्येत तदा तुल्यास्यप्रयत्नमिति द्वन्द्वगर्भो बहुव्रीहिः स्यात्, आस्यं च प्रयत्नश्च आस्यप्रयत्नौ तौ तुल्यौ यस्येति त्रिपदो वा बहुव्रीहिः, स्तुल्य आस्ये प्रयत्नो यस्येति तत्र द्वन्द्वगर्भे आस्यग्रहणं व्यर्थं स्यात्, सर्वेषां हि स्तुल्यं विसर्जनीयस्यैकीयमते नोरस्यत्वात् सावर्ण्याभावेपि न दोषः, त्रिपदे तु बहुव्रीहावास्येन प्रयत्नस्य विशेषितत्वाद्दास्याद्बाह्याः प्रयत्ना हापिता भवन्ति किं तु ताल्वादिस्थानं तुल्यत्वेनाविशेषितं स्यात् ततश्च भिन्नस्थानानामपि ञबगडदानां सवर्णसंज्ञा प्राप्नोति तत ऊर्गञ्ज इति झरो झरीति गकारस्य ञकारे लोपः स्याद् अतस्ताद्धितान्तस्यैव ग्रहणं, तत्रापि यदि द्वन्द्वगर्भो बहुव्रीहिः स्यात् स्थानेन प्रयत्नो न विशेषितः स्यात् ततश्च ककारङकारयोर्मिथः सवर्णसंज्ञा न स्यात् बाह्यप्रयत्नस्य भिन्नत्वात् ततश्च शङ्कितेत्य 'नुस्वारस्य ययि परसवर्णः' इति ङकारो न स्यात्। अथ सत्यपि बाह्यप्रयत्नभेदआभ्यन्तरस्य प्रयत्नस्याभेदमाश्रित्य संज्ञा स्यात् चकारशकारयोरपि सत्याभ्यन्तरभेदे बाह्याभेदमाश्रित्य सवर्णसंज्ञा प्राप्नोति ततश्चारुश्चोततीति वक्ष्यमाणप्रत्युदाहरणं नोपपद्यतेत्येतमन्दोषं दृष्ट्वा त्रिपदोयं बहुव्रीहिरिति दर्शयति। 'तुल्य आस्ये प्रयत्नो यस्येति'।

तद्धितान्त आस्यशब्दो न स्याद्भवाद्येवेत्यमूर्द्धमस्तकादित्यलुङ् भवति । नन्वस्मिन्नपि पक्षे भिन्नविभक्तिकत्वात्प्राधान्याच्चास्यं तुल्यत्वेनाविशेषितं स्याद्, नैवात्रास्यं तुल्यतया विशेष्यते भेदनिबन्धना हि तुल्यता न च कखगघङां भिन्नं स्थानम् एकत्वात्कण्ठस्य किं तु तद्धितान्तस्यास्यशब्दस्याश्रयणसामर्थ्यादास्यइत्येकत्वं विवक्षितं, तेनैकस्मिन्नेव ताल्वादिके स्थाने यः प्रयत्नः स तुल्यो ययोरित्याश्रयणान्न कश्चिद्दोषः । 'समानजातीयं प्रतीति'। एतच्च संज्ञाविधानसामर्थ्याल्लभ्यते ऽन्यथा यत्किंचनवर्णोपेतया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं स्यात्सवर्णसंज्ञाविधानमनर्थकं स्यात् । न च रेफोष्मनिवृत्त्यर्थं वचनं रेफस्यापि रेफः सवर्ण एव, एवमूष्मस्वपि द्रष्टव्यं, संबन्धिशब्दत्वाद्वा, सम्बन्धिशब्दो हि तुल्यास्यप्रयत्नशब्दस्ततश्च यथा तुल्याय कन्या दातव्येत्युक्ते दात्रा तुल्यायेति गम्यते तथेहापि, अथ वा महती संज्ञा क्रियते अन्वर्था यथा विज्ञायेत समानोस्य वर्णः सवर्ण इति, यदि च समानजातीयमेव प्रति सवर्णसंज्ञा भवति एवं समानोस्य वर्णो भवति । 'चत्वार इत्यादि' । द्विविधाः प्रयत्ना बाह्या आभ्यन्तराश्च तत्राभ्यन्तराश्चत्वारो वृत्तौ दर्शिताः । आभ्यन्तरत्वं पुनरेषां स्थानकरणव्यापारेणोत्पत्तिकालएव भावात्, स्थानं ताल्वादि, करणं जिह्वाया अग्रोपाग्रमध्यमूलानि । बाह्याः पुनरेकादश । विवारः संवारः श्वासो नादो घोषो ऽघोषो ऽल्पप्राणो महाप्राण उदात्तोनुदात्तः स्वरितश्चेति । बाह्यत्वं पुनरेतेषां वर्णनिष्पत्तिकालादूर्द्ध्वं वायुवशेनोत्पत्तेः । तत्र स्पृष्टकरणाः स्पर्शाः, कादयो मावसानाः स्पर्शाः । स्पृष्टं स्पृष्टतागुणः करणं कृतिरुच्चारणप्रकारः, स्पृष्टतानुगतं करणं येषां ते तथोक्ताः । एवमन्यत्रापि ईषत्स्पृष्टकरणा अन्तस्थाः, यरलवा अन्तस्थाः । विवृतकरणा ऊष्माणः स्वराश्च, शषसहा ऊष्माणः, स्वराः सर्व्वएवाचः । वर्गाणां प्रथमद्वितीयाः शषसविसर्ज्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः, वर्गयमानां प्रथमे ऽल्पप्राणा इतरे महाप्राणाः । वर्गाणां तृतीयचतुर्थो अन्तस्था हकारानुस्वारौ यमौ तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च । वर्ग-

यमानां तृतीया अन्तस्था अल्पप्राणाः, इतरे महाप्राणाः, यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुणः। तत्र यमा नाम वर्गेष्वादितश्चतुर्षां पञ्चमेषु परतः तएव नासिक्या भवन्ति, तद्यथा पलिक्नीरिन्, चख्नतुः, आग्मन्नायः, जघ्नतुः, अग्नस्वतीमित्यादि, य एते द्विविधाः प्रयत्नास्तेषामिह सवर्णसंज्ञायामाभ्यन्तरा स्पृष्टतादयश्चत्वार एवाश्रीयन्ते न विवारादयो बाह्या आस्यग्रहणेन तेषां निवर्त्तितत्वात्। 'अअअ इत्यादि'। अत्र सवर्णसंज्ञो भवतीति प्रकृतं बहुवचनान्तं विपरिणतमनुवर्त्यते त्रयोकारा मिथः सवर्णसंज्ञा भवन्तीत्यर्थः। कथं त्रयोकाराः यावता प्रत्युच्चारणं भेदे ऽनन्ता अभेदे त्वेक एव, तत्राह। 'उदात्तेति'। अनेन प्रकारेण त्रय इत्यर्थः। एवं च त्रय इत्यस्य त्रिविधा इत्यर्थो भवति तत्राकुहविसर्जनीयाः कण्ठ्याः, इचुयशास्तालव्याः, उपूपध्मानीया ओष्ठ्याः, ऋटुरषा मूर्द्धन्याः, लृतुलसा दन्त्याः, एऐ कण्ठतालव्यौ, ओऔ कण्ठ्योष्ठ्यौ, वकारो दन्त्योष्ठ्यः, इत्येवं तुल्यस्थानप्रयत्नाः सर्वे ऽकारादयो मिथः सवर्णसंज्ञा भवन्तीति। 'अन्तस्था द्विप्रभेदा इति'। अत्रापि पूर्ववदनुवङ्गः, अन्तस्था इत्युक्तेपि रेफनिवृत्त्यर्थं स्वरूपेण पठति। 'यवला इति'। 'रेफोष्मणां सवर्णा न सन्तीति'। विजातीयाभिप्रायमेतत्। सजातीयास्तु रेफोष्माणस्तुल्यस्थानप्रयत्नास्सवर्णा भवन्त्येव तत्र रेफस्य तावद्यवला भिन्नस्थाना ऋटुरषा भिन्नप्रयत्ना अन्ये भिन्नस्थानप्रयत्नाः, एवमूष्मणामपि सवर्णाभावो वेदितव्यः। 'वर्ग्य इत्यादि'। वर्गे भवो वर्ग्यो दिगादित्वाद्यत्। 'वर्ग्येण'। स्ववर्गान्तःपातिना, तद्यथा ककारः खकारेण। 'तर्प्तेति'। तृप प्रीणने। 'इचुयशानामिति'। एषां मध्ये येषां प्रसङ्गस्तेषां मा भूदित्यर्थः। 'अरुश्श्च्योततीति'। श्च्युतिर् क्षरणे। अरुः शब्दस्य रुत्वविसर्जनीययोः 'वा शरी'ति सकारस्तस्यापि श्चुत्वे शकारः। 'ऋकारलृकारयोरिति'। स्थानभेदाच प्राप्नोतीत्यारम्भः। श्रुतत्वाच्चानयोरेव मिथः सवर्णसंज्ञा विधीयते न त्वेतयोरन्येन सह। 'होतृकार इति'। कथं पुनरत्र समुदायिनोन्तरतमो भवति न समुदायस्य, तत्रापि ऋकार-

स्यैव न ऌकारस्येत्यत आह । 'उभयोरित्यादि' । उभयोरन्तरतमो दीर्घो न सम्भवति ऌकारस्यापि दीर्घो न सम्भवतीत्यत ॠकार एव भवत्युभयोरित्यर्थः । ननु च नैतत्सवर्णसंज्ञायाः प्रयोजनं, कथम् । अकः सवर्णइत्यत्र तु वक्ष्यति 'ॠति १ॠ+वावचनं' ॡति ॡवावचन'मिति । तत्र चायमर्थो ऽकां सवर्णे ॠति परतो वा ॠ+भवति । द्विमात्रोयं, मध्ये द्वौ रेफौ तयोरेका मात्रा ऽभितोऽभक्तेरपरा, ईषत्स्पृष्टश्चायं, तत्र प्रयत्नभेदादृकारेणाग्रहणाद् अनण्त्वाद्दीर्घसंज्ञाया अभावादप्राप्तोयं विधीयते, ॡति ॡ+वावचनमित्ययमपि द्विमात्र ईषत्स्पृष्टश्च, मध्ये द्वौ लकारौ तयोरेकामात्रा ऽभितोऽभक्तेरपरा, पूर्ववदप्राप्तो विधीयते । तत्र ॠति ॠ+वावचनमित्यत्र वाशब्दो दीर्घस्य समुच्चयार्थस्तेनाप्राप्त एव दीर्घो भविष्यति । ननु यद्यविधायैव सवर्णसंज्ञां तदुच्यते ततो ऽक इति सम्बन्धादङ्मात्रस्य ॡति तत्कार्यं स्याद् दध्य्लृकारो मध्व्लृकार इति, संज्ञाविधाने तु ॠकार ॠकारस्यैव सवर्ण इति तत्रैव व्यवस्थितं भवति, तस्माद्विधेया सवर्णसंज्ञा । न विधेया, यदेतद् ॠतीति एतदृत इति वक्तव्यं सवर्णइत्येव ॠकारस्य ॠकार एव सवर्ण इति ॠत्येव भविष्यति । तत ॡति, ॠत इत्येव, इदं चासवर्णार्थं तेन ॡति रूपद्वयं सिद्धं होतॄकारो होत्ॡ+कार इति । तच्च वक्तव्यं भवति । कथम् । ॠ+वावचनम्, ॡ+वावचनमिति ब्रुवतापि तयोरच्त्वं वक्तव्यम्, अन्यथा विधानमात्रमनयोः स्याद् न त्वच्कार्यः प्लुतः, सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद् ग्रहणे सति प्लुतसंज्ञा भवतीति प्लुतसिद्धिः ! एवं च होतृॠकार इति ॠकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदा चिद्रेफद्वययुक्त ॠ+भविष्यति कदा चिद्विवृतः शुद्धो दीर्घः । ॡकारेऽपि कदा चिदृकारान्तरतम ॠकारः कदा चिद् ॡकारान्तरतम ॡ+कार इति । सत्यम् । सवर्णसंज्ञायां तच्च वक्तव्यं भवति, तद्वोच्येत इदं वा, कोऽन्यत्र विशेषः, इदं वा ऽवश्यं वक्तव्यम् । इदमपि सिद्धं भवति 'ॠत्यकः' खट्व्लृकारः, मालृकारः । 'वा सुप्यापिशलेः' उपल्कारीयति उपाल्कारीयतीति । ॠदितामृदितां च धातूनां पृथगुपदेशसामर्थ्यादनुबन्धकार्याणामसङ्करः ॥

१+एतच्चिह्नितईषत् स्पृष्टो बोद्धव्यः ।

नाज्झलौ ॥ अत्राज्झलौ न केनापि सवर्णसंज्ञौ भवत इति ताव-द्दर्थो न भवति, संज्ञाया निर्विषयत्वात्, एतावन्तो वर्णा अचश्च हलश्च नाप्यचामज्भिर्हलां हल्भिः सवर्णत्वनिषेधः, अत एव निर्देशात्, अन्यथा ऽकारस्याकारे दीर्घो न स्याचाजिति, नाप्यज्झलाविति पूर्वसवर्णस्तस्मा-दचां हलां च मिथः सवर्णसंज्ञा निषिध्यते तत्र च यद्यपि नाज्झलावि-ति सामान्येनोक्तं तथाप्यकारहकारयोरिकारशकारयोश्च प्राप्तिरिति तत्रैव निषेधः, यद्येवं नाशशलाविति वक्तव्यं, न तावदेवं लाघवे विशेषः। किं च प्रागुक्तं पक्षद्वयं सम्भाव्येत। 'अचश्च हलश्चेति'। अनेन नात्राज्झलो-र्निर्देश इति दर्शयति, तत्रापि न दोषः कश्चित् किं तु पक्षान्तरसम्भा-वनैव। तुल्यास्यप्रयत्नाविति प्रसक्तौ हेतुमाह। 'सवर्णदीर्घत्वं न भवतीति'। प्रतिषेधस्य फलं दर्शयति। ननु दीर्घविधावचीत्यनुवर्त्तते, तच्चावश्यमनु-वर्त्यं, कुमारी शेत इत्यत्र मा भूदिति, नह्यत्रानेन निषेधः सिद्ध्यति। किं कारणम्, वाक्यापरिसमाप्तेः। इह हि वर्णानामुपदेशः पूर्वं तत इत्संज्ञा तत 'आदिरन्त्येन सहेते' ति प्रत्याहारस्ततो 'नाज्झला' वित्यस्य निष्पत्ति-स्तस्मिंश्च निष्पन्ने सत्यपवादविषयपरिहारेणोत्सर्गविषये सवर्णसंज्ञा प्रवर्त्तते न त्वेतत्सूत्रनिष्पत्तिसमये, ततश्चाणुदित्सवर्णस्य चेत्येतस्वाद्भूतेषु उप-देशेत्संज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्नेष्व'स्य च्वा' वित्यादिषु वर्त्तते न त्वङ्गूपदेशादिष्विति 'नाज्झला' वित्यगृहीतसवर्णानामचां ग्रहणमिति सिद्धम्, अवश्यं चागृहीतसवर्णानामेवाचां ग्रहणमेष्टव्यम्, अन्यथा झ्जिति गृह्यमाण इकारः शकारस्य ग्राहकः स्यात्। न चास्मिन्नपि सूत्रे ऽयमेव निषेधः, स्वात्मनि क्रियाविरोधात्, अतो ऽज्ग्रहणेनापि शकारस्य ग्रहणं, हलषु चोपदेशाद्धल्ग्रहणेनापीति शकारद्वयस्य मिथः सवर्णसंज्ञा न स्यात्, ततश्च परःशतानि कार्याणीत्यत्र शतात्पराणि शतादधिकानीति विगृह्य 'कर्तृकरणे कृता बहुल' मिति बहुलवचनात्समासे पारस्करादित्वात्सुटि कृते 'ऽनचि चे' ति शकारस्य द्विर्वचने परश्शतानीति स्थिते मध्यमस्य शकारस्य 'झरो झरि सवर्णे' इति लोपो न स्यादिति सर्वदा शकारत्र-यश्रवणप्रसङ्गः। अतो ऽगृहीतसवर्णानामचां ग्रहणादीकारशकारयोरप्रति-

सिद्धं सवर्णत्वमिति कुमारी शेतइत्यत्र मा भूदिति दीर्घविधावचीत्यनुवर्त्यं तदनुवृत्तिसामर्थ्याच्चाजेव यो ऽच् न कथं यत्र हल् तत्रैव दीर्घत्वविज्ञानादृकारशकारयोरकारेकाराभ्यां सावर्ण्येन ग्रहणादच्त्वे सत्यपि हलन्त्यस्यापि भावाद्दीर्घाभावः सिद्धः, सत्यम् । अज्ग्रहणमप्यन्यार्थमनुवर्त्यम्, इदमपि वैपाशो मत्स्यः, आनडुहं चर्मेत्यत्र यस्येति लोपाभावार्थं कर्तव्यं दण्डहस्तो दधिशीतमित्येतदुभयथापि सिद्ध्यतीति प्रदर्शनार्थमुदाहरणद्वयमुपन्यस्तम् । 'वैपाश इति' । भवार्थेण् 'आनडुहमिति' । विकारे 'प्राणिरजतादिभ्योञ्' ॥

ईदूदेद् द्विवचनं प्रगृह्यम् ॥ अत्र चत्वारः पक्षाः सम्भवन्ति । ईदादि विशेष्यं द्विवचनं विशेषणं, तत्र द्विवचनान्तत्वमीदादेर्न सम्भवतीति द्विवचनसंज्ञकमीदादि प्रगृह्यमिति प्रथमः पक्षः । ईदादि विशेषणं द्विवचनं विशेष्यं विशेषणेन तदन्तविधावीदाद्यन्तं द्विवचनमिति द्वितीयः पक्षः । प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति पश्चाद् द्विवचनान्तस्येदादिभिर्विशेषणादीदाद्यन्तं द्विवचनान्तमिति तृतीयः । ईदादिविशिष्टेन द्विवचनेन तदन्तविधावीदाद्यन्तं यद् द्विवचनं तदन्तं प्रगृह्यमिति चतुर्थः । तत्राद्ये पक्षे ऽग्नी वायू खट्वे इत्यादावेव स्यात्, एकादेशस्य परं प्रत्यादिवद्भावेन द्विवचनमीदादीति, पचेते पचेथे पचावहे इत्यादावेकारमात्रस्याद्विवचनत्वान्न स्यात् । तृतीये तु कुमार्योरगारं कुमार्यगारं वध्वोरगारं वध्वगारम् इत्यत्रापि स्यात्, एतद्धि प्रत्ययलक्षणेन द्विवचनान्तमीदाद्यन्तं च श्रूयते । यथा हि तावकीन इत्यादावादेशेन संख्याविशेषो व्यज्यते तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वमभिव्यज्येतेति स्याद् द्विवचनान्तस्यापि समासः । चतुर्थे कुमार्यगारमित्यादावप्रसङ्गो द्विवचनस्यानीदाद्यन्तत्वात्, किं त्वशुक्ले शुक्ले समपद्येतां शुक्ल्यास्तां वस्त्रे अत्रापि प्राप्नोति, कथं, शुक्लशब्दाद्गुणवृत्तेर्द्विवचनमौ, 'नपुंसकाच्चे' ति शीभावस्ततश्च्विः, शीशब्दस्य सुपो धात्विति लुक्, 'अस्य च्वौ' तद्धितान्तत्वात्सुः, अव्ययत्वाल्लुक्, अत्र शीशब्द ईकारान्तं द्विवचनं तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति । अयं च तृतीयेपि पक्षे समानो दोषः । किं च

संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात् तदन्तपक्षोत्थानमेव नास्ति। अतो द्वितीयं पक्षमाश्रित्याह। 'ईद् ऊद् एद् इत्येवमन्तं द्विवचनमिति'। नन्वस्मिन्नपि पक्षे ईदूतोः केवलयोरेव संभव इत्यग्नी इत्यादिकं यद्यपि सिध्यति, तथाप्येकारान्तस्य तु द्विवचनस्य पचेते इत्यादौ सम्भवात्तत्रैव स्याच खट्वे इत्यादौ। व्यपदेशिवद्भावेनात्रापि भविष्यति। किं पुनरत्र प्रमाणमयमेव पक्ष आश्रीयत इति। तृतीयचतुर्थयोस्तावदसम्भव एव, संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात्। संज्ञायाश्च संख्यपेक्षायामनन्तरश्रुतं द्विवचनमेव संज्ञीत्युक्तमिति प्रथमस्याप्यसम्भवः। अत्र चतुर्थः पक्षो ऽसम्भवादेव निरस्तो न दोषवत्त्वात्। शुक्ल्यास्तां वस्त्रे इत्यत्र तु 'असिद्धं बहिरङ्गमन्तरङ्गे' इति बहिरङ्गो लुग्बाधत इति' अन्तरङ्गमपि शीभावं बाधित्वा सुपो धात्विति लुकि कृते ऽनीकारान्तं द्विवचनं भवति। अग्नी इत्यादौ प्रगृह्यत्वात् प्लुतः प्रगृह्या अचीति प्रकृतिभावः। प्रत्युदाहरणेषु तदभावात् स्वरसन्धिः, तपरकरणं गुणान्तरभिन्नानां तत्कालानां ग्रहणार्थमिति चेत्, न। अभेदकत्वाद् गुणानां, भिन्नकालानां निवृत्त्यर्थमिति चेत्। न, ईदूतोरनण्त्वात्। स्यादेतत्। जातिपक्षे यद्यपि दीर्घोच्चारणसामर्थ्यात् प्रयत्नाधिक्याद्कुर्वेद्गचेत्यादौ ह्रस्वानां न स्यात् प्लुतानां तु स्यादेव, एकारस्य त्वणत्वादपि प्लुतस्य प्रसङ्गः, अतः प्लुतनिवृत्त्यर्थं तपरकरणमिति। तन्न। इष्टत्वात्। किमर्थं पुनः प्लुतानां प्रगृह्यसंज्ञेष्यते प्रगृह्याः प्रकृत्येति प्रकृतिभावो यथा स्यात्। मा भूदेवं, प्लुतः प्रकृत्येत्येव भविष्यति, यत्र तर्हि प्लुताश्रयः प्रकृतिभावः प्रतिषिध्यते 'अप्लुतवदुपस्थित' इति, तत्र प्रगृह्याश्रयः प्रकृतिभावो यथा स्याद् अग्नी३ इतीति। इह च अग्नी३ अप्रगृह्यस्येत्यनुनासिकपर्युदासो यथा स्यात्, अतः प्लुतानामपि प्रगृह्यसंज्ञाया इष्टत्वाच्च तन्निवृत्त्यर्थमपि तपरकरणमित्यत आह। 'तपरकरणमसन्देहार्थमिति'। असति हि तस्मिन् समाहारद्वन्द्वे नपुंसकह्रस्वत्वे च कृते ष्वीति निर्देशे सन्देहः स्यात्, इतरेतरयोगद्वन्द्वेपि सन्देह एव, तस्मादसन्देहार्थं तपरकरणम्। यद्यसन्देहार्थमपि तपरत्वं क्रियते तदेव प्लुतस्येष्टां संज्ञां व्यावर्तयति तत् प्लुतस्य

कथं संज्ञा, मा भूत् प्लुतस्य तस्य त्वसिद्धत्वात् स्थानिनि प्रवृत्ता संज्ञा स्वरसन्धिमनुनासिकं च प्रतिभन्त्स्यति । सिद्धः प्लुतः स्वरसन्धिषु, प्लुतः प्रकृत्येति लिङ्गात् । अन्यथा कार्यिणो ऽसत्त्वात्कस्य प्रकृतिभावो विधीयेत, यस्य च विकारप्रसङ्गः प्लुतप्रकरणे तस्य प्रकृतिभावो विधेयः, प्लुतस्यासिद्धत्वेन तस्य विकाराप्रसङ्ग इति प्लुतस्यासतः प्रकृतिभावविधानमनु[1]पपन्नम् । अस्तु स्वरसन्धिप्रकरणे प्लुतः सिद्धः संज्ञाविधावसिद्धः, संज्ञाविधौ च सिद्धः, कथम् । 'कार्यकालं संज्ञापरिभाषं' ततश्च प्लुतप्रगृह्याः प्रकृत्येत्यत्रास्योपस्थानात्संज्ञापि स्वरसन्धिप्रकरणान्तर्गतैवं तर्हि सिद्धः प्लुतः स्वरसन्धिष्विति नाश्रीयते प्लुतभावी प्रकृत्येति स्थानिन एव प्रकृतिभावो विधास्यते, एवमप्यनुनासिकपर्युदासो न सिध्यति कार्यकालपक्षे संज्ञायामपि प्लुतस्य सिद्धत्वात् । एवं तर्हि 'यथोद्देशं संज्ञापरिभाषं' ततश्चास्मिन् प्रदेशे संज्ञायां क्रियमाणायां प्लुतस्यासिद्धत्वात् स्थानिनि प्रवृत्ता संज्ञा स्वरसन्धिमनुनासिकं च प्रतिभन्त्स्यति । ननु यद्यपि संज्ञायामसिद्धः प्लुतो ऽनुनासिकपर्युदासे तु सिद्धस्ततश्च यस्यानेन संज्ञा कृता द्विमात्रस्य न सो ऽनुनासिकविधिं प्रति स्थानी किं तु त्रिमात्र एव, न च स्थानिवद्भावात्तस्यापि प्रगृह्यत्वमल्विधित्वात् । अवश्यं च सिद्धः प्लुतः स्वरसन्धिषु इत्याश्रयणीयं, दण्ड आ३ठकमिति प्लुतस्य सवर्णदीर्घेण निवृत्तिर्यथा स्यात्, तथा च 'अइउण्' इत्यत्र सर्वैरेव ग्रन्थकारैरुक्तम् । तथा सुश्लोका३ इति सुश्लोकेति, अत्रापि 'अप्लुतवदुपस्थिते' इति प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे गुणो भवन् प्लुतमेव निवर्त्तयति न तु स्थानिनम्, अन्यथा ह्यादेशरूपे प्लुतः श्रूयेत, तदिह यथोद्देशे ऽपि संज्ञापरिभाषे कथमिष्टसिद्धिः कथं वा ग्रन्थेषु[2]पूर्वापरविरोधपरिहार इति विपश्चितः प्रष्टव्याः । 'मणीवादीनामिति' । सिद्धयइति शेषः । न पुनर्मणीवादीनामपरः प्रतिषेधो विधेयः । न चेदं वचनं, भाष्यवार्त्तिककाराभ्यामपठितत्वात्, किं तु मणीवादीनां निर्वाहः कर्त्तव्य इत्यर्थस्तत्र मणी वोष्ट्रस्य लम्बेते इत्यत्र

१ मनर्थकमिति पा॰ २ ।

२ न पूर्वापरविरोध इति पा॰ २ ।

वाशब्दस्योपमानार्थस्य प्रयोगो, रोदसीवेत्यादौ छान्दसत्वादिति निर्वाहः ॥

अदसो मात् ॥ 'स्वरितेनाधिकार' इत्यत्र द्वौ पक्षावर्थाधिकारः शब्दाधिकारश्चेति, तत्रार्थाधिकारो नाम यस्य यस्मिन्सूत्रे स्वरितत्वं प्रतिज्ञातं तत्र तस्य यो ऽर्थः स उत्तरत्राधिक्रियतइति । शब्दाधिकारस्तु स एव शब्दो ऽविवक्षितार्थो ऽधिकृतस्तत्तत्सूत्रानुगुणमर्थं प्रतिपादयतीति । तत्रार्थाधिकारे पूर्वत्रेदादिभिस्तदन्तं प्रत्यायितम्, इहानुवृत्तं मादित्यनेन विशेष्येतेत्यमुकेत्रेत्यत्रापि प्रसङ्गः, शब्दाधिकारे त्वीदादिमात्रस्येहानुवृत्तस्यापि विशेष्याभावादसति तदन्तविधौ मादित्यनेन विशेषणाददोष इति, तमाश्रित्याह । 'तस्मात्परे ईदूदेदन्ता इति' । 'प्रगृह्यसंज्ञा इति' । प्रगृह्यशब्दः संज्ञा येषां ते तथोक्ताः । यद्यपि पूर्वसूत्रएव प्रगृह्यशब्दः संज्ञात्वेन विनियुक्तस्तथापीह संज्ञिनो न प्रत्याययति, स्वरूपपदार्थकस्यैव तस्येहानुवृत्तेः । किमर्थमिदमुच्यते । यावता स्त्रीनपुंसकयोर्द्विवचने मुत्वस्यासिद्धत्वेप्येकारान्तत्वात् पूर्वेणैव सिद्धा संज्ञा स्वरसन्धिप्रकरणे च मुत्वस्यासिद्धत्वादेकारस्यैव विकारप्रसङ्गे प्रकृतिभावोऽपि सिद्धो ऽनुनासिकपर्युदासश्च कार्यकालपक्षे लिङ्गत्रयेपि द्विवचने सिद्धो, ऽणोऽप्रगृह्यस्येत्यत्रोपस्थितेन पूर्वसूत्रेण संज्ञायां क्रियमाणायां मुत्वस्य[1]सिद्धत्वादतोऽनुनासिकपर्युदासे ऽद्विवचनार्थोयमारम्भः, प्रकृतिभावे तु पुंसि द्विवचनार्थश्च । नन्वारब्धेप्यस्मिन्यथोद्देशपक्षे संज्ञायां कर्त्तव्यायां मुत्वमीत्वयोराश्रयात्सिद्धत्वेपि स्वरसन्धिप्रकरणे तयोरसिद्धत्वादयावेकादेशप्रसङ्गः । अमी आसतइत्ययादेशो, अमू आसातइति पुंस्यावादेशो, 'ऽमी अत्रेत्येङः पदान्तादती'त्येकादेशः । न च संज्ञाया वैयर्थ्यं,मनुनासिकपर्युदासेनार्थवत्त्वात् । तत्र हि कर्त्तव्ये मुत्वमीत्वयोरसिद्धत्वाभावाद्द्वयोरनेन संज्ञा कृता तावेव न तं प्रति । कार्य्यकालपक्षे तु संज्ञायामपि कर्त्तव्यायामाश्रयात् सिद्धत्वं नाश्रयणीयमणोऽप्रगृह्यस्येत्यत्रोपस्थिते ऽस्मिन् क-

१ असिद्धत्वाभावादिति पा॰ २ ।

तेऽप्ये मुत्वमीत्वयोः सिद्धत्वात्तावता चास्य चरितार्थत्वात्, तदेवमुभयोरपि पदयोः स्वरसन्धिः स्यादेव । उच्यते । यद्यननुनासिकपर्युदास एव प्रयोजनमभविष्यद् अणोऽप्रगृह्यस्यानुनासिको ऽदसो नेत्येवावक्ष्यत् । अमुके अमुयेत्यादावनण्त्वाद्ननुनासिकत्वाद्वाप्रसङ्गः, अतः संज्ञारम्भसामर्थ्यात्प्रकृतिभावार्थत्वमप्यस्य विज्ञायते तत्र स्वरसन्धिप्रकरणे मुत्वमीत्वयोः सिद्धत्वमन्तरेणानुपपन्नमित्युभयोरपि पदयोः सामर्थ्यादसिद्धत्वबाधः । 'मादिति किमिति' । अदस इति षष्ठी अमी अमू इत्यत्र च मुत्वमीत्वयोः स्थानिनाचेकादेशावन्तवद्भावादद:शब्दग्रहणेन गृह्येते इति तदादेशयोरपि तद्ग्रहणेन ग्रहणादस्ति तावदिष्टसिद्धिः । एदिति च निवर्तिष्यते, न च मात्परावीदूतौ सम्भवत इत्यतिप्रसङ्गोऽपि नास्तीति प्रश्नः । 'अमुकेत्रेति' । एकयोगनिर्दिष्टानामेकदेशानुवृत्तिर्दुर्ज्ञानेति भावः । न च मादित्यस्मिन् सत्यपि एद्ग्रहणसामर्थ्याद् अत्र प्रसङ्गः । मादित्यस्य वैयर्थ्यप्रसङ्गात् । न च विकल्पो, ऽतुल्यबलत्वात् । तद्धि [1]पूर्वत्र चरितार्थं मादिति त्वकृतार्थम्, न चानुवृत्तिसामर्थ्यं,मन्यानुरोधेनाप्यनुवृत्तिसम्भवात् ॥

शे ॥ शे इति श्रुतेरविशेषात् काशे कुशे इत्यत्रापि प्रसङ्ग इति मत्वा पृच्छति । 'किमिदमिति' । 'सुपामादेशइति' । काशे इत्यत्र तु लाक्षणिकत्वादग्रहणमिति भावः । 'युष्मइति' । षष्ठीबहुवचनस्य सुपां सुलुगित्यादिना शे आदेशः । 'शेषे लोपः' । 'अस्मे इति' । चतुर्थीबहुवचनस्य शे । 'त्वे मे इति' । सप्तम्येकवचनस्य त्वमावेकवचने । 'अस्मे इन्द्राबृहस्पती इति' । छान्दसमुदाहरणमित्युक्त्वा इतरत्तु लौकिकमनुकरणमित्युक्तेन युष्मे वाजबन्धवः, त्वे रायो मे राय इत्येषामप्यनुकरणत्वमुक्तं स्याद्, अतो यदत्रेतरदिति विवक्षितं तत्स्वरूपेण पठति । 'युष्मे इतीत्यादि' । लौकिकमनुकरणमित्यनेन च सूत्रस्यावश्यारभ्यत्वं दर्शयति, अस्मे इन्द्राबृहस्पती इत्यादि छान्दसत्वादपि सिद्ध्येत् । इदं तु पदकारैरिति परं प्रयुज्यमानं लौकिकमतो न छान्दसत्वात्सिद्धिरिति ॥

---

१ पूर्वसूत्रइति पा॰ २ ।

निपात एकाजनाङ् ॥ 'व्याहरति मृगः', 'कवर्हूपणोः समर्थयो' रिति निर्देशादेकाजिति कर्मधारयो न बहुव्रीहिरित्याह । 'एकश्चासावजिति' । यद्येवमेकग्रहणमनर्थकं निपातोऽजित्येवास्तु, तत्र निपातेनाज् विशिष्यते, निपातसंज्ञकोऽजिति विपर्ययस्तु न भवति, अजन्तो निपात इति व्यावर्त्याभावाद् हलन्तानां सत्यसति वा प्रगृह्यत्वे विशेषाभावात् । ननु पुरोऽस्तीति हलन्तस्य प्रकृतिभावाद्रोःहत्वं न स्यात् । नैतदस्ति । प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात् सकारस्य च कार्यान्तराप्रसङ्गात् । ननु चेदमस्ति प्रयोजनमवा निपातस्य विशेषणे, किम्, अजन्तस्य यथा स्याद्, अज्मात्रस्य मा भूदि,त्येवं सत्यनाङित्यनर्थकं स्यात् । अतो निपातेनाज् विशेष्यते नार्थ एकग्रहणेन । न । अच्समुदायनिवृत्त्यर्थं तर्ह्येकग्रहणम् । अइउ अपेहीति समुदायस्यैव स्याद् नावयवानाम्, एकाज्द्विर्वचनवदजन्तस्यैव प्रकृतिभावः स्यात्, पूर्वयोस्तु स्वरसन्धिः स्यात् । ननु च निपातोऽजिति चैकत्वस्य विवक्षितत्वात् समुदायस्य न भविष्यति, एवं तर्ह्यच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति, वर्णनिर्देशेषु व्यक्तिसंख्या न विवक्ष्यते जातिरेव निर्दिश्यतइति, तेन दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमित्युपपन्नं भवति । 'निपात इति किमिति' । निपातस्यैवैकाचोऽर्थवत्त्वसम्भव इति प्रश्नः । 'चकाराचेति' । कृञो लिटि तिपो णल्, अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः । आकारोऽत्र ङिद्विशिष्ट उपात्तः, प्रयोगे च न क्वचिन् ङकारः श्रूयते, अतोऽर्थवशेन ङित्त्वाङित्त्वे व्यवस्थापयति । 'ईषदर्थेइत्यादि' । 'ईषदर्थे' । आ उष्णं ओष्णम् । आङीषदर्थइति चोक्तम् । 'क्रियायोगे' । आ इत एतः, प्रादिषु पठितः । 'मर्यादाभिविधौ चेति' । समाहारद्वन्द्व आगमस्यानित्यत्वाद्धुमभावः । मर्यादासहितो वा ऽभिविधिः, मर्यादायाम्, आ उदकान्ताद् ओदकान्तात् । अभिविधौ, आ अहिच्छत्राद् आहिच्छत्रात् । आह च । विना तेन मर्यादा, सह तेनेत्यभिविधिः । 'आङ् मर्यादाभिविध्यो' रिति च ङिच्चिद्विष्टः पूर्वप्रक्रान्तस्य वाक्यस्यान्यथात्वद्योतनायाकारः प्रयुज्यते, आ एवं नु मन्यसे, नैवं पूर्वममंस्थाः संप्रति त्वेवं मन्यसइति, तथा स्मृतेः सूचक आकारः प्रयुज्यते, ततः स्मृतेऽर्थो निर्दिश्यते, आ एवं किल तदिति ॥

ओत् ॥ ननु चाहोप्रभृतयो निपातसमाहाराः, अह उ अहो, उत आह उताहो, अथ उ अथो, या उ यो, न उ नो, मा उ मो, व उ वो, यद्यप्यर्थभेदो न प्रतीयते तथाप्यनर्थकानामपि निपातानां दर्शनात् समाहारत्वं नानुपपन्नं, ततश्चादिवद्भावात् पूर्वेणैव सिद्धा प्रगृह्यसंज्ञा, यथा 'एषो उषा अपूर्व्या' इति, एषा उ एषो इत्याशङ्क्य एकनिपाता इति दर्शयति । 'ओदन्तो यो निपात इति' । चादिषु तथा पाठादिति भावः । समाहारपक्षे च आहो इतीत्यादौ 'उञः' 'ऊँ' इत्ययं विधिः प्राप्नोति । अथापि समाहार[1]एवमपि सूत्रं कर्त्तव्यम् । 'ओ चित्सखायम्' 'ओ षु वर्तमहत' इत्याद्यर्थम् । आ उ ओ इत्यत्रान्तवद्भावादनाङिति प्रतिषेधः प्राप्नोति, अत्रापि पर्युदासे सिद्धम्, आङनाङेरिकादेश आदिवद्भावादनाङ्ग्रहणेन गृह्यत इति । इहानदोऽदो भवदिति च्व्यन्तत्वान्निपातत्वेपि प्रतिपदोक्तस्योकारस्य ग्रहणान्न भवति, एवमप्यगौर्गौः समपद्यत गोभवदित्यत्र प्राप्नोति, गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययान्न भविष्यति । अत्र हि जाड्यादिधर्म्मेणारोपितगोत्वे वाहीके गोशब्दो वर्त्तत इति गौ[2]णार्थत्वमस्य । कथं तर्हि गौर्वाहीकस्तिष्ठति गां वाहीकमानयेति वृद्ध्यात्वे भवतः । उच्यते । स्वार्थे [3]प्रवृत्तात्प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसंविधानादत्र गौणत्वं प्रतीयते, कारकाणामपि हि क्रियया सम्बन्धो न परस्परेण, गामानय, वाहीकमानय, गौस्तिष्ठति, वाहीकस्तिष्ठतीति, पश्चात्तु वाक्योपन्यासात् सामानाधिकरण्याद्गौणार्थे प्रादुर्भावो भवति, इह तु गौणार्थप्रादुर्भावादुत्तरकालं च्व्यन्तत्वे सति प्रगृह्यसंज्ञा प्राप्तिरिति विशेषः । अतः पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येष्विति सिद्धम् ॥

संबुद्धौ शाकल्यस्येतावनार्षे ॥ संबुद्धावित्यनेनाऽनूद्यमान ओकारो विशेष्यते, ऽतः क्ङितीतिवन्निमित्तसप्तमीयमित्याह । 'संबुद्धिनिमित्त इति' । परसप्तम्यां तु अपो इतीत्यादौ नपुंसके न स्यादिति भावः ।

---

१ तथापीति २ ।
२ गौणत्वमर्थस्येति पा· २ ।
३ वर्तमानादिति पा· २ ।

'अवैदिकइति'। अनार्षइत्यस्यार्थमाह। ऋषिर्वेदस्तदुक्तमृषिणेत्यादौ दर्शनात्। [1]ननु च गवित्ययमाहेत्यत्रानुकार्येणार्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्या भाव्यमित्यत आह। 'अत्रेत्यादि'। अत एव हि विभक्त्यभावादपदान्तत्वाच्छाकल्यस्यापि प्रत्युदाहरणे 'लोपः शाकल्यस्ये'ति लोपो न भवति। 'भेदस्याविवक्षितत्वादिति'। भेदनिबन्धनो हि प्रतिपाद्यप्रतिपादकभावः स तस्मिन्नविवक्षिते न भवति। 'असत्यर्थवत्त्वइति'। यद्यनर्थकः कथं तर्हि प्रयुज्यते, प्रयोजनवत्त्वात्प्र[2]योजनमनुकार्यप्रतीतिः। यद्यप्यभिधानव्यापारो नास्ति तथापि तदानीमुच्चारितं रूपं सादृश्यादनुकार्यप्रतिपत्तिपरं भेदश्च सचेव न विवक्षित इति अनुकार्यस्यापशब्दत्वे ऽपि नास्यापशब्दत्वम्। 'शाकल्यग्रहणं विभाषार्थमिति'। तत्र बह्वृचाः प्रगृह्यमेवाधीयते, तैत्तिरीयास्त्वप्रगृह्यम्॥

उञः॥ यद्ययमेको योगः स्याद् उञ ऊँ इति यथा पठितं सूत्रकारेण तत उञ इत्यस्य श्रुतेनादेशेन सम्बन्धः स्याद् न प्रगृह्यसंज्ञया, सा तु 'निपात एकाजनाङि'ति नित्यैव स्यात्, शाकल्यग्रहणानुवृत्त्या चादेशे विकल्पिते रूपद्वयमेव स्याद् उ इति ऊँ इतीति न तु वितीति तृतीयम्, अतो विभज्य व्याचष्टे। तत्र यद्यपि पूर्वसूत्रेषु सामानाधिकरण्येन निर्दिष्टत्वादेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयस्तथापीह षष्ठीनिर्देशात्स्वरूपपदार्थकः सम्पद्यते, ऽत एवाह। 'उञः [3]प्रगृह्यसंज्ञा भवतीति'। प्रगृह्यमित्येषा संज्ञा भवतीत्यर्थः। पूर्वत्र तु द्विर्वचनं प्रगृह्यसंज्ञं भवतीत्युक्तमनेन च प्रगृह्यसंज्ञाया एव विकल्पनाद् उ इति वितीति साधितं रूपद्वयम्॥

ऊँ॥ 'शाकल्यस्य मतेन प्रगृह्यसंज्ञकश्चेति'। अनेनास्मिन्नपि योगे द्वयमप्येतदनुवर्त्यमिति दर्शयति। यदि शाकल्यस्येति नापेक्ष्येत तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्, अनुवृत्तस्य प्रगृह्यशब्दस्य षष्ठ्यन्ततया

१ 'गवित्ययमाहेति'। ननु चानुकार्येणेति पा॰ २।
२ प्रयोजनं चानुकार्यप्रतिपादनमेवेति पा॰ २।
३ उञ इत्यादीति पा॰ २।

विपरिणामात् ततश्च ऊँ इति स्थिते द्वे एव रूपे स्याताम्, उ इतीति न स्यात्, शाकल्यग्रहणेन तु विकल्पे सति तदपि भवति । तथा प्रगृह्यग्रहणाननुवृत्तौ प्रगृह्याप्रगृह्ययोरप्यादेशे विकल्पः स्यात्, तत्र प्रगृह्यस्यादेशे ऽपि सिद्धमिष्टम्, अप्रगृह्यस्य तु यण् सानुनासिको वकारः स्यात्, अतः प्रगृह्यग्रहणमप्यनुवर्त्यम् । 'त्रीणि रूपाणीति' । त्रीण्येव रूपाणि भवन्ति त्रीणि च भवन्तीत्यर्थः । इह यदेतनूँ इति पदकारैरुच्यतदुत्यनुकरणे 'यरोऽनुनासिके ऽनुनासिको वे'त्येष विधिर्भवति ।

ईदूतौ च सप्तम्यर्थे ॥ 'शाकल्यस्येताविति निवृत्तमिति' । अस्वरितत्वात् । इह चशब्देन[1] प्रयत्नेन प्रकृतमनुकृष्यते, तत्र संज्ञाया अननुवृत्तौ विधेयं नास्तीति सैवानुकृष्यते, 'मामक्यां तन्वामिति प्राप्त इति' । सप्तम्यर्थं दर्शयति । मामकीतनूशब्दौ सुपां सुलुगिति लुप्तसप्तमीकौ । 'मामकी इति तनू इतीति' । [2]कार्योदाहरणे । गौरी अधिश्रित इति तु संहितापाठे ऽपि कार्योदाहरणमिति स एव तत्र दर्शितः । 'अना भवातीति' । रूपप्रत्युदाहरणं, कार्ये तु पदकाले । 'धीतीत्यादि' । धीतीमतीसुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्णे ईकार, स्तद्दर्शयति । 'धीत्या मत्येत्यादिना' । 'वाप्यश्वो नद्यातिरिति' । 'संज्ञाया'-मिति सप्तमीसमासः । अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति, अस्ति ह्यत्रापि सप्तम्यर्थः । उच्यते । जहत्स्वार्था वृत्तिरिति पक्षे समासस्यैवार्थवत्त्वात् पूर्वोत्तरपदयोर्वर्णवदानर्थक्यम् इति सप्तम्यर्थो नास्ति । अजहत्स्वार्थायामपि वृत्तावुपसर्जनपदं न स्वार्थमात्रे पर्यवस्यति किं तु तत्संसृष्टे प्रधानार्थे, तत्रार्थग्रहणसामर्थ्याद्यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलो ऽसंसृष्टरूपस्तस्यैव ग्रहणमिति संसृष्टे न भविष्यति, तपरकरणं गुणान्तरभिन्नानां तुल्यकालानां ग्रहणार्थमिति चेत्, न । अभेदकत्वाद् गुणानाम् । भिन्नकालानां प्लुतानां निवृत्त्यर्थमिति चेत्, न । अनण्त्वादसंभवाच्च, नहि सप्तम्यर्थवृत्ति प्लुतान्तं संभवतीत्यत आह । 'तपरकरणमित्यादि' । 'ईदूतावि-

१ प्रकृतेनेति पा० २ ।

२ पदकालइत्यधिकं पुस्तकान्तरे ।

त्यादि'। ईदूतौ सप्तमीत्येवास्तु नार्थो ऽर्थग्रहणेन, 'लु[1]प्तेऽर्थग्रहणाद्भवेदिति'। असत्यर्थग्रहणे संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात्सप्तम्या एव संज्ञा स्यात्, ततश्च सोमो गौरी अधिश्रित इत्यत्र न स्याल्लुप्तत्वात्। अर्थग्रहणे त्वर्थनिमित्तेयं संज्ञा न तु प्रत्ययश्रवणनिमित्ता, ऽतो 'लुप्तेऽर्थग्रहणाद्भवेत्'। नात्र सप्तमी लुप्यते पूर्वसवर्णोऽत्र भवति सुपां सुलुगिति, ततोऽकः सवर्णे दीर्घत्वेन तस्यादिवत्त्वात् सप्तमीग्रहणेन ग्रहणाद् अस्त्येव सप्तमीति शङ्कते। 'पूर्वस्य चेदिति'। दूषयति। 'आडाम्भाव इति'। यदि ह्यत्र पूर्वसवर्णः स्यात् कादेशं बाधित्वाऽऽडामौ स्यातामतो लुगेव युक्तस्तस्मादर्थग्रहणं कर्त्तव्य, न कर्त्तव्य, यस्मात्सर्वत्रैव लुका भाव्यमिति न क्व चित्सप्तम्यस्ति उच्यते चेदं तत्र वचनसामर्थ्यात्संज्ञाविधावपि तदन्तविधिर्भविष्यति। नेदं वचनाल्लभ्य, यतो वचनाद्यत्र दीर्घत्वं तत्रैव स्याद् दृतिं न शुष्कं सरसीशयानमिति। अत्र हि सरःशब्दात्परस्य ङिशब्दस्य 'याड्याजीकाराणामुपसङ्ख्यान'मितीकारे कृते सप्तम्येव श्रूयतइति तत्रैव स्याद् न गौरी इत्यादौ. 'तत्रापि स[2]रसी यदि' तत्रापि सिद्धं, कथं, यदि सरसीशब्दो विद्यते असंदिग्धे संदिग्धाभिधानमेतद् शास्त्राणि चेत्प्रमाणं स्युरिति य[3]था। अस्ति च सरसीशब्दो दक्षिणापथे महान्ति सरांसि सरस्य उच्यन्ते ततश्च सरसीशब्दोपि लुप्तसप्तमीक एवेति वचनात्तदन्तविधिरित्येतदेव स्थितम्, एवं तर्हि 'ज्ञापकं स्यात्तदन्तत्वे,' ईदूदेदित्यत्र चत्वारः पक्षा उपन्यस्तास्तत्र तदन्तत्वे इत्यनेन तृतीयचतुर्थपक्षावुपलक्षयति, तत्र ज्ञापकं स्याद् इह प्रगृह्यप्रकरणे प्रत्ययलक्षणं न भवतीति, यदि स्यात् पूर्वोक्तन्यायेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेराश्रयणात् लुप्तायामपि सप्तम्यां प्रत्ययलक्षणेन सप्तम्यन्तमिति सञ्ज्ञा भविष्यति किमर्थग्रहणेन तेन तदन्तत्वे यो दोष उक्तः प्रत्ययलक्षणेन संज्ञा प्राप्नोतीति स न भवतीति संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावादेव तदन्तपक्षस्तत्र नैव स्थित इत्याह। 'मा वेति' ॥

१ लुप्तेत्यादीत्येव पु० २ पाठः।

२ तत्रापीत्यादीत्येव पु० ३ पाठः।

३ इतिवदिति पा० २।

दाधा घ्वदाप् ॥ किमिदं प्रयोगस्थानामनुकरणं प्रयोगे ये दाधारूपाः श्रूयन्ते ते घु संज्ञा भवन्तीति आहो स्विदुपदेशे धातुपाठे ऽवस्थितानां यावतामनुकरणं दाधारूपं संभवति तेषामिति, किं चातो, यदि प्रयोगस्थानामनुकरणं शिति न प्राप्नोति, दो प्रणिद्यति. देङ् प्रणिदयते । दाण् प्रणियच्छति । धेट् प्रणिधयति, किं कारणमदाधारूपत्वात्, प्रणिदाता प्रणिधाता इत्यादावेव तु स्यात्, किमुच्यते शिति न प्राप्नोतीति । यावता दोदेङ्धेटामशित्यप्यात्वे कृतेऽपि लाक्षणिकत्वान्न प्राप्नोति, नैष दोषः । 'गामादाग्रहणेष्वविशेष' इति दोदेङोः तावद्गृह्येते । अस्याश्च परिभाषाया ङेपः पित्त्वं लिङ्गम् । अन्यथा हि लाक्षणिकत्वादेवास्य ग्रहणं न भविष्यति 'दो दद् घोः' रित्यत्र च द इत्येतद् घेर्विनिवृत्त्यर्थं सत्तस्य घुसंज्ञां ज्ञापयति, दधातेस्तु 'दधातेर्हि' रिति ह्यादेशविधानादेव दद्भावाप्रसङ्गः । यदि 'गामादाग्रहणेष्वविशेष'स्तर्हि अर्थवत्परिभाषापि[1]निवर्तेत, तत्र को दोषः, प्रनिदारयति अत्रापि प्राप्नोति, अस्तु. णत्वं कस्मान्न भवति, उपसर्गादित्यनुवर्तते, सम्बन्धिशब्दश्चायमुपसर्ग इति, त[2]स्मादेवं विज्ञास्यामो गदादीनां य उपसर्गस्तत्रस्थान्निमित्तादुत्तरस्य तानेव गदादीन् प्रत्युपसर्गस्य नेरिति, प्रनिदारयतीत्यत्र च यं प्रत्युपसर्गो नासौ दारूपो यश्च दारूपो न तं प्रत्युपसर्गस्तस्यानर्थकत्वाद्, अतः शित्येव दोषः । उपदेशस्थानां त्वनुकरणे दोदेङ्धेङनुकरणानामप्या 'देच उपदेशेऽशिती' त्यात्वसद्भावात्तेषां दाण्दाञ्धाञां च सर्वेषां सिद्ध्यति, आत्वविषयेऽप्येकदेशविकृतस्यानन्यत्वात् सिद्धं, सर्वेषां च स्वरूपेणानुक्रियमाणत्वात् लक्षणप्रतिपदोक्तयोर्निरनुबन्धकेति च परिभाषयोरनुपस्थानं, नापि प्रनिदारयतीत्यत्र प्रसङ्गो, नहि दीङ् इत्येतदनुकरणस्यात्वमस्ति कृतात्वमपि किञ्चिन्मात्रसाधर्म्यादनुकरणं न विरुध्यते, यथा गवित्ययमाहेति कृतावादेशमपि गोशब्दस्येति, निर्दोषं द्वितीयं पक्षमाश्रित्याह । 'दारूपाश्चत्वार इत्यादि' । एवं च दीङोऽनुकरणस्यात्वाभावात् सूत्रादिषु मीनातिमिनोतिदीङामित्यात्वे दारूपस्यापि घुसंज्ञा

१ न प्रवर्तेतेति पा० ३ ।

२ तत्र इति पा० ३ ।

न भवति प्रनिदाता णत्वं न भवति। उपादास्तास्य स्वरः शितकस्य 'स्याघ्योरिच्चे' तीत्वं न भवति। केचित्तु संज्ञामिच्छन्ति तेषामप्युपादास्तेत्यत्र न भवति, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये' ति, 'प्रणिददातीत्यादौ नेर्गदेतिणत्वं, 'प्रणिद्धातीति,' 'श्रोतः श्यनि'। 'दातं बर्हिरिति'। लूनमित्यर्थः। घु संज्ञाया अभावाद् 'दो दद् घो' रिति न भवति। अवदातमित्यत्र च 'अच उपसर्गात्त' इति न भवति। ननु दाप्दैपोरननुकरणादेव न भविष्यति, अस्मदायत्तं ह्यन्वनुकरणं दाप्दैपोर्न करिष्यामः। तच। असति तस्मिन्प्रतिपदोक्तमेव दाधारूपमनुकरणं गृह्येत, सति तु तस्मिन् यावतामनुकरणं दाधारूपं सम्भवति लाक्षणिकं प्रतिपदोक्तं वा तावतां सर्वेषामनुकरणं भवति, 'उदीचां माङो व्यतीहार' इति च मेङः कृतात्वस्य निर्देशो ज्ञापयति 'नानुबन्धकृतमनेजन्तत्व' मिति। नहि माङ् मानइत्यस्य व्यतीहारे वृत्तिः सम्भवति, तेन दैवः पकारे श्रूयमाणेऽवात्वं भवतीति अदाविति प्रतिषेधो भवति। संज्ञाप्रवृत्तिसमये च यद्दारूपं तस्य प्रतिषेध इति प्रणिदापयतीत्यत्र प्रागेव पुकः प्रवृत्तां घुसंज्ञामाश्रित्य णत्वं भवति। दाधा ध्वपिदिति वा वक्तव्यं, पित् घुसंज्ञो न भवतीति, वकारो वा द्वयोरनुबन्धः, सूत्रमपि वकारान्तमेव पठितव्यं, भाष्यवार्तिकविरोधस्तु महापदमञ्जर्यामस्माभिः प्रपञ्चितः॥

आद्यन्तवदेकस्मिन्॥ 'द्वन्द्वे घी' त्येतद्बाधित्वा 'ऽजाद्यदन्त'-मित्यन्तशब्दस्य पूर्वनिपातः प्राप्तो ऽस्मादेव निर्देशाच भवति। न चात्यन्तबाधोऽन्तादिवच्चेति लिङ्गात्, असहायस्येत्यादिना सूत्रारम्भस्य प्रयोजनमाह। सति परस्मिन् यस्मात्पूर्वं नास्ति स आदिः, सति च पूर्वस्मिन्यस्मात्परं नास्ति सोन्तः, तदेतदुभयमसहाये न सम्भवति तस्मादाद्यन्तयोर्व्यपदिष्टानि उक्तानि कार्याणि तान्यसहायस्यापि यथा स्युरित्ययमारम्भो ऽसहायस्येत्यनेनासहायवचन एकशब्दो न संख्यावचन इति दर्शयति। बहुष्वपि व्यवस्थितस्यैकत्वसंख्यास्तीति एकस्मिचिति व्यर्थं स्यादिति भावः। एकस्मिन्नित्युपमेये सप्तमी श्रवणादुपमानस्यापि सप्तमी समर्थेतेत्याह। 'सप्तम्यर्थं वतिरिति'। वर्तमानादिति शेष.'स्तत्र

तस्येवेति' वार्थे वतिः। पूर्वं त्वसहायस्येति षष्ठीनिर्देशः सप्तम्यर्थस्येव शेषरूपविवक्षया कार्यार्थत्वात्सर्वातिदेशानां प्राधान्यात्कार्यातिदेशोऽयमित्याह। 'कार्यं भवतीति'। आद्यन्तवद्व्यपदेशो निमित्तं 'पूर्वंवत्सन' इति तु निर्मूलं, व्यपदेशातिदेशे हि कुरुते कुर्वे इत्यादौ अन्तवद्व्यपदेशेऽपि अन्त्योऽजादिरस्येत्येवं रूपस्य बहुव्रीह्यर्थस्याभावाट्टिसंज्ञाया अभावे टेरेत्वं न स्यात्, कुर्वाते इत्यादौ तु दृष्टस्य टेरेत्वाख्यस्य कार्यस्यातिदेशे न दोषः। 'आभ्यामिति'। अत्र द्वे अन्तत्वे उपयुज्येते अकारान्तस्याङ्गस्यातोऽन्त्यस्य दीर्घ इति। 'सभासवयन इति'। असत्येकग्रहणे यत्रादिव्यपदेशो नास्ति मध्येऽसहाये च सो ऽतिदेशस्य विषयो 'वृद्धिर्यस्याचामादिस्तद्वृद्ध'मित्यत्रादिग्रहणस्याप्येतदेव व्यावर्त्यमिति विकल्पः स्यात्, कदा चिद्वृद्धसंज्ञा कदा चिन्नेति, तस्मादाकारमाश्रित्य पक्षे वृद्धसंज्ञा न भवतीति ग्रन्थार्थः॥

तरप्तमपौ घः॥ तरतेर्छन्दोरविन्त्यपि गुणे भूतपूर्वेण पकारेण यद्यपि तरबिति रूपं भवति तथापि तमपा साहचर्यात् प्रत्ययस्यैव ग्रहणमित्याह। 'तरप्तमपौ प्रत्ययाविति'। तेन नद्यास्तरो नदीतर इति ह्रस्वो न भवति, अथ वा तरबिति रूपाश्रया संज्ञा रूपनिग्रहश्च प्रयोग उपदेशे वा तत्र न क्व चित्प्रयोगे तरबिति रूपमस्तीत्युपदेशगतं गृह्यते, न चात्रौपदेशिकं तरब्रूपमस्ति, सत्यामपि वा घसंज्ञायां न दोषो ह्रस्वत्वं हि समानाधिकरणे स्त्रीलिङ्गे विधीयते। आतिशायनिकप्रकरण एव तादी घः पितौ घ इति वा कर्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणमन्यापि तरबस्तीति सूचनार्थं, तेना 'त्याद्तर' लोपश्च बलवत्तर इत्यादौ स्वार्थे तरप् सिद्धो भवति॥

बहुगणवतुडतिसंख्या॥ यद्यपि वतुडती इति संज्ञाविधौ प्रत्ययग्रहणं तथापि केवलयोः प्रत्यययोः संज्ञायां प्रयोजनाभावात् तदन्तयोरेव ग्रहणं, 'बहुकृत्वइत्यादि'। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'संख्याया विधार्थे धा' बहुल्यार्थादिति वर्त्तमाने संख्यैकवचनादिति शस्। 'संख्याया अतिशदन्तायाः कन्,' 'तावत्कृत्वइति'। 'यत्तदेतेभ्यः परिमाणे व.

लुप्,' 'वा सर्वनाम्नः' । 'कतिकृत्वइति' । 'किमः संख्यापरिमाणे इति च' । 'बहुगणशब्दयोरित्यादि' । कथं पुनर्ग्रहणं नास्ति, संख्येत्यन्वर्थसंज्ञेयं संख्यायते ऽनयेति संख्येति । न च यो वैपुल्ये बहुशब्दो बहुरोदन इति, संख्येये वा गणशब्द इक्षूणां गण इति, ताभ्यां संख्यायते, यदि तर्हि संख्यावाचिनोरेव ग्रहणं किमर्थं तयोरिह संज्ञा विधीयते यावता संख्याप्रदेशेषु लौकिक्यपि संख्या गृह्यते, अन्यथा पञ्चकः सप्तक इत्यादौ संख्याया अतिशदन्ताया इति कन् न स्यात्. अतिशदन्ताया इति च प्रतिषेधो ऽनर्थकः स्यात्, शास्त्रीयायाः संख्यायास्तिशदन्ताया अभावादित्यत आह । 'भूर्यादीनामित्यादि' । एतेन नियमार्थमेतयोर्ग्रहणमिति दर्शयति, तुल्यजातीयापेक्षत्वाच्च नियमस्य भूर्यादीनामेवानियतबहुत्ववाचिनां निवृत्तिर्नाबहुत्वविषययोर्लौकिकशब्दयोर्नापि नियतबहुत्ववाचिनां त्र्यादीनां, तदाह । 'भूर्यादीनामिति' 'अर्द्धपूर्वपदश्चेति' । अर्द्धशब्दः पूर्वपदं यस्य स च पूरणप्रत्ययान्तः पूरणप्रत्ययान्तान्त इत्यर्थो, नहि पूरणप्रत्ययान्तस्यार्द्धशब्दः पूर्वपदं सम्भवति समास एव हि पूर्वपदं सम्भवति । 'अर्द्धपञ्चमशूर्पइति' । अर्द्धं पञ्चमं येषामिति बहुव्रीहिः । अर्द्धपञ्चमैरर्द्धाधिकैश्चतुर्भिः शूर्पैः क्रीत इति तद्धितार्थेति समासः । 'शूर्पादञन्यतरस्या'मिति विहितस्याञष्ठञो वा अध्यर्द्धपूर्वेद्विगोरिति लुक् । कथं पुनर्लुक् यावता नायं समासः, नापि कन्, समासकन्विध्यर्थमिति सम्बन्धसामान्येषष्ठी तेन समासे विधीयमाने समासनिमित्ते वान्यस्मिन्विधीयमानइत्यर्थः ॥

ष्णान्ता षट् ॥ इह कस्माच भवति विप्रुषः पामान इति, सङ्ख्येति वर्तते, ननु च तत्सङ्ख्याग्रहणं सञ्ज्ञाप्रधानं इहानुवृत्तमपि ष्णान्तानां संज्ञामेव विदध्याद् न तु ष्णान्तेत्यस्य विशेष्यं समर्पयेद् अत आह । 'स्त्रीलिङ्गनिर्देशादिति' । ष्णान्तेत्यत्र स्त्रीलिङ्गस्य विशेष्यापेक्षायां सम्बध्यमानं प्रदेशेष्विव संनिधाने भविष्यतीत्यर्थः । अत एवात्रान्तग्रहणम्, इतरथावर्णग्रहणे सर्वत्र तदन्तविधिरित्येव सिद्धम्, इह कस्माच भवति शतानि सहस्राणि नुमि कृते तस्य पूर्वभक्तत्वाच्चान्ता सङ्ख्या भवति, अस्तु. लुक्कस्माच भवति, सर्वनामस्थानसन्निपातकृतो नुम तद् विहन्ति । अथेह कथं

संज्ञा ऽष्टानामिति, कथं च न स्यात्, अष्टन् आम् इति स्थिते परत्वान्नित्यत्वाच्च 'अष्टन आ विभक्ता'वित्यात्वे कृते ऽनान्तत्वादसत्यां संज्ञायां नुड् न स्यात्, अष्टनो दीर्घग्रहणं ज्ञापकं कृतात्वस्याप्यष्टनः संज्ञा भवतीति । एतच्च तत्रैवोपपादयिष्यामः । यद्वा प्रागेव विभक्त्युत्पत्तेरनुद्दिश्य प्रयोजनविशेषं षट्संज्ञा भविष्यति सा च कृतेऽप्यात्वे न निवर्त्तते ॥

इति च ॥ 'इत्यन्ता च या संख्येति' । अनेन संख्याग्रहणानुवृत्तिं दर्शयति । असत्यां ह्यनुवृत्तौ पातेर्डतिः पतयोऽत्रापि स्यात्, [1]अथेह संख्याग्रहणानुवृत्तावपि कस्मादेवात्र न भवति सामान्येन हि डतेः संख्यासंज्ञा विहिता, उच्यते । संख्यासंज्ञायां हि वतुना साहचर्यात्तद्धितस्य डतेर्ग्रहणं [2]न त्वौणादिकस्य ॥

क्तक्तवतू निष्ठा ॥ इह क्तक्तवतुरूपाश्रयेयं संज्ञा रूपनिर्ग्रहश्च प्रयोगउपदेशे वा भवति, न च प्रयोगे सानुबन्धकं रूपमस्तीत्युपदेशगतं ग्राह्यं तत्र 'नपुंसके भावे क्तः' ञीत इति क्तस्य क्व चिदुपदेशोऽस्ति, यदि तस्यैव स्याद् लिङ्गान्तरे कालान्तरे धात्वन्तरे च न स्यात् क्तवतोस्तु न क्व चिदुपदेशस्तत्केन विहितयोः क्तक्तवत्वोरेषा संज्ञा विधीयते, अनयैव संज्ञया वक्ष्यति निष्ठेति । यद्येवम् इतरेतराश्रयः प्राप्नोति विहितयोः संज्ञा संज्ञया च विधानमिति । नैष दोषः । भाविनी संज्ञा विज्ञायते सूत्रशाटकवत्, तद्यथा कश्चित्कं चित्तन्तुवायमाह अस्य सूत्रस्य शाटकं वयेति स पश्यति यदि शाटको न वातव्यो ऽथ वातव्यो न शाटकः शाटको वातव्यश्चेति विप्रतिषिद्धं, स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति तद्वदिहापि तौ भूते काले भवतो ययोर्विहितयोर्निष्ठेत्येषा संज्ञा भविष्यतीति ॥

सर्वादीनि सर्वनामानि ॥ द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गत्वेन नपुंसकत्वायोगाद् बहुवचनासंभवाच्च सर्वादीनीति बहुव्रीहिरित्याह । 'सर्वशब्द इत्यादि' । 'आदिर्येषामिति' । यद्येवं बहुव्रीहेरन्यपदार्थप्रधानत्वात्स-

१ अथेहेत्यारभ्य उच्यते इत्यन्तो ग्रन्थो बहुषु पुस्तकेषु नास्ति ।
२ न त्वौणादिकस्येति बहुषु पुस्तकेषु नास्ति ।

र्वशब्दोपलक्षितानां विश्वादीनामिव संज्ञा स्याद् नोपलक्षणस्य सर्वशब्दस्य यथा चित्रगुरानीयतामित्युक्ते यस्य ता गावः स एवानीयते न चित्रा गाव इत्याशङ्क्याह । 'तानीमानीति' । अत्र तानीत्येव सिद्धमिमानीति प्रत्यक्षविषयेणेदंशब्देन गणपठितेषु सर्वशब्दस्यान्तर्भावं सूचयन् तद्गुणसंविज्ञानं बहुव्रीहिं दर्शयति । तस्यान्यपदार्थस्य गुणो वर्तिपदार्थः सोपि कार्ये संविज्ञायते यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानो, मत्वर्थे हि बहुव्रीहिः भूमादिषु च मतुप् विधीयते, तत्रात्र स्वस्वामिभावादिसम्बन्धः प्रवृत्तिनिमित्तं न तत्रोपसर्जनस्य कार्ययोगः, यथा गोमन्तमानयेति, संभवति ह्यरण्यावस्थिताभिरपि गोभिः स्वस्वामिभावो, यत्र तु संयोगसमवाययोरन्यतरत् प्रवृत्तिनिमित्तं तत्र स्वभावादेवोपसर्जनस्यापि कार्ययोगः । यथा दण्डिनमानय विषाणिनमानयेति, नो खलु गृहावस्थितेन दण्डेन दण्डसंयुक्तः पुरुषो भवति, एवं बहुव्रीहावपि चित्रगुः शुक्लवासा इति, इहाप्यादिशब्दोऽवयववचन उद्भूतावयवभेदः समुदायः समासार्थस्तत्र समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानां संज्ञा भवन्ती विश्वादीनामिव सर्वशब्दस्यापि भविष्यति, अत्र च लिङ्गं 'अदः सर्वेषामि'ति निर्देशः,'आमि सर्वनाम्नः सुट्'। 'सर्वे इति' । 'जसः शी' पूर्वयोस्तूपन्यासो जसन्ततामस्यादर्शयितुम् । 'सर्वस्मादित्यादि' । 'सर्वनाम्नः स्मै' 'ङसिङ्योः स्मात्स्मिनौ' । उभशब्दो द्विवचनविषयएव प्रयुज्यते ऽसति द्विवचने नैव प्रयुज्यते, नहि भवत्युभौ पुत्रावस्य उभपुत्र इति, उभयशब्दोत्र तत्स्थाने भवति उभयपुत्र इत्यादि, न च द्विवचने किं चित्सर्वनामकार्यमस्ति, स्मैप्रभृतीनामेकवचनबहुवचनविषयत्वात् अकच्चोऽस्य नास्ति विशेष इति तस्येह पाठे प्रयोजनमाह । 'उभशब्दस्येत्यादि' । उभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरिति तृतीयाषष्ठ्यौ भवतः । 'उभयस्मिन् उभयेषामिति' । उभाववयवावस्येति व्युत्पाद्यमान उभयशब्दो यदा तिरोहितावयवभेदं समुदायमाचष्टे तदैकवचनं भवति उभयो मणिरिति, यदा तु वर्गद्वयारब्धे समुदायिनि वर्त्तमानो वर्गभेदानुगतं समुदायमाचष्टे तदा बहुवचनम् । उभये देवमनुष्या इति । 'इतरडतमेति' । संज्ञाविधौ प्रत्ययग्रहणेपि तदन्त-

योर्ग्रहणं केवलयोः प्रयोजनाभावात् । 'वक्ष्यमाणेनेति' । प्रथमचरमे-त्यादिना । 'सर्वशब्दपर्यायस्येति' । अस्ति च सर्वशब्दपर्यायः समशब्दो 'नभन्तामन्यके समे' 'मानो वृकाय वृक्ये समस्मै' 'उरुष्याणो ऽघायतः समस्मात्' । 'उतो समस्मिन्नाशिशी हि नो वसो' 'मानः समस्य दूढ्य' इति यथा, एतच्च सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञा-करणाल्लभ्यते, स एव हि समशब्दः सर्वेषां नाम भवति यः सर्वशब्दपर्यायः । यद्यन्वर्थसंज्ञा पूर्वपदात् संज्ञायामिति णत्वं[1] कस्मान्न भवति, अस्मादेव नि-पातनात् । यदि 'सर्वादीनि सर्वनामानि' तर्हीहापि प्राप्नोति, सर्वो नाम कश्चित् तस्मै सर्वाय देहीति, इह चातिक्रान्तः सर्वस्मै अतिसर्वाय देहीति, तस्मात्संज्ञानामुपसर्जनानां च सर्वादीनां संज्ञाप्रतिषेधो वक्तव्यः, न केवलं संज्ञायाः, पाठोपि तेषां गणे नास्तीति वक्तव्यं.[2] संज्ञामात्रप्रतिषेधे हि सर्वनामप्रयुक्तमेव कार्यं तेषां न स्यात् पाठाश्रयं तु स्यादेव 'त्यदा-दीनामः' तदाख्यः कश्चित् तत्, तदौ, तदः । अतिक्रान्तस्तमतितत्, अतितदौ, अतितदः । 'डतरादिभ्यः पञ्चभ्यः,' कतरमतिक्रान्तं ब्राह्म-णकुलमतिकतरमिति संज्ञाप्रतिषेधस्तावच्च वक्तव्यः ॥

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥

तत्र यथा बाहुर्नामकश्चित्तस्यापत्यं बाहवः, 'बाह्वादिभ्यश्चे'-तीञ् न भवति । संज्ञा, श्वशुरस्यापत्यं 'राजश्वशुराद्य' च भवति । धान्यमातुः स्वसा, 'मातृपितृभ्यां स्वसे' ति षत्वं न भवति, एवमिहापि संज्ञाभूतानां सर्वादीनां संज्ञा तन्निबन्धनं च कार्यमन्तर्गणकार्यं च न भविष्यति, यद्वा व्यवस्थायामित्यत्रासंज्ञायामिति विभज्यते, तेन च गण-पाठो विशेष्यते, यान्येतान्यनुक्रान्तानि सर्वादीनि तान्यसंज्ञायां द्रष्टव्या-नीति । उपसर्ज्जनप्रतिषेधोपि न कर्त्तव्यः, सर्वादीनां संज्ञा विधीयते तत्र कः प्रसङ्गो यत् सर्वाद्यन्तस्य स्यात्, सर्वशब्दस्य तु सत्यामपि संज्ञाया-

१ प्राप्नोति, अस्मादेव निपातनाच्च भविष्यतीति पा० २ ।
२ यतः संज्ञाप्रतिषेधे इति पा० २ ।

मङ्गस्यासर्वनामत्वात् स्मायाद्यप्रसङ्गः । यद्येवं परमसर्वस्मादित्यादावपि न स्याद् यतो यदङ्गं न तत्सर्वनाम यच्च सर्वनाम न तदङ्गमिति, मा भूदङ्गं सर्वनाम, अवयवस्यैव तु सर्वनामत्वे 'ऽङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति' समुदायस्य च कार्यं भविष्यति, यथा ऽस्थ्यादीनामनङ् परमास्थ्नेति । न चैवमन्यत्रेत्यादिवदतिसर्वायेत्यादावुपसर्जनेऽपि प्रसङ्गो ऽर्थद्वारकस्य सम्बन्धस्याश्रयणात्सर्वनामार्थगतमेकत्वादिकं या विभक्तिराहेति,[1] यथा 'ऽष्टाभ्य औश्' 'षड्भ्यो लुग्' इति परमाष्टौ परमपञ्चेत्यादौ भवति, प्रियाष्टानः प्रियपञ्चान इत्यादौ न भवति तद्वदत्रापि, 'त्यदादीनाम' इत्याद्यन्तर्गणकार्यमप्येवमेव द्रष्टव्यम् । यत्तु रूपाश्रयं कार्यं 'युष्मदस्मदोरनादेशे' इति न पाठाश्रयं नापि संज्ञाश्रयं तदस्थ्याद्यनङ्वदुपसर्जनेऽपि भवति, [2]यत्तूपसर्जन[3]दशायाः प्रागेव प्राप्तं तदपि भवति अतिक्रान्तो भवकन्तमतिभवकानिति. तस्माचार्थस्तदन्तस्य संज्ञया, उच्यते । अव्ययसर्वनाम्नामित्यकच् परमभवकानिति तदन्ताच्च स्यात् । 'पञ्चम्यास्तसिल्' परमसर्वतः 'सप्तम्यास्त्रल्' परमसर्वत्र । 'आ सर्वनाम्नः' · 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ[4] वप्रत्यये' परमतद्र्यङ् परमयद्र्यङित्यादौ न स्यादिति तदन्तस्य संज्ञेषितव्या, कथं पुनरियमापि लभ्यते, ज्ञापकादिति वक्ष्यामः, ततस्तदन्तस्य च भवन्ती परमसर्वादिवद् अतिसर्वादेरपि स्यादिति उपसर्जनप्रतिषेधोऽपि वक्तव्यो, न वक्तव्यः, अन्वर्थसंज्ञाविज्ञानादेव सिद्धं, वृत्तौ हि प्रधानार्थसंसर्गादुपसर्जनानि न सर्वार्थानि यथा सम्भवं च सार्वार्थ्यमिति प्रत्यक्षपरोक्षतादिविशेषवाचित्वेऽपि तदिदमादीनां भवत्येव, अन्वर्थत्वादेव च संज्ञाभूतानामपि संज्ञाऽभावः, एवं तावत्संज्ञानिबन्धनं स्मायाद्युपसर्जनानां निवारितं त्यदाद्यन्तर्गणकार्ये तु स्यादेव पाठस्य स्थितत्वात् । एवं तर्हि तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात् द्वितीयोऽपि सर्वनामशब्द उपात्तस्तेन पाठो

१ तदित्यधिकम् २ पुस्तके ।

२ यत्त्विति पा० २ ।

३ तावा इत्येवपाठः २ पुस्तके ।

४ तावप्रत्यये इति पा० २ ।

विशेष्यते, यानि सर्वेषां नामानि तानि सर्वादीनीति, तेन सर्वादिपाठोपजीवनेन प्रवर्त्तमानमन्तर्गणकार्यमपि व्यवस्थाप्यते, यद्वा संज्ञाया अन्वर्थत्वात्तत्संबन्धयोग्यानां सर्वादीनां तावत्पाठोऽवश्याभ्युपगन्तव्यस्ततश्च प्रकारान्तरजुषां पाठे प्रमाणाभावादेव सिद्धः पाठात्पर्युदासः॥

विभाषा दिक्समासे बहुव्रीहौ॥ अत्र समासावयवानां सर्वादीनां संज्ञा विकल्प्यत इति वृत्तौ लक्ष्यते,[1] यथाह। 'दिगुपदिष्टेत्यादि'। दिशामुपदिष्टवक्ते 'दिङ्नामान्यन्तराल' इत्यस्मिन्समासेऽवयवत्वेन वर्त्तमानानीत्यर्थः, न चावयवानां संज्ञाविकल्पे किं चित्प्रयोजनमस्ति स्मायादिकं तावद्बह्वाश्रयं काकचोश्च नास्ति विशेषो दिग्वाचिनामकारान्तत्वात्। सर्वनाम्नो वृत्तिमात्र इति पूर्वपदस्य पुंवद्भावोऽपि न प्रयोजनं, तत्र हि मात्रग्रहणं क्व चित्सर्वनामत्वेन दृष्टानां संप्रत्यसर्वनामत्वेऽपि यथा स्यात्, तथा च दक्षिणपूर्वाया इति संज्ञाभावपक्षेऽपि भवति। स्यादेतत्। अवयवानामेव संज्ञा, कार्यं 'त्यदाद्यधिकारे तस्य च तदुत्तरपदस्य चे'ति। एवमपि दक्षिणपूर्वतः दक्षिणपूर्वत्रेत्यत्र तसिलादयो न स्युस्तस्मात्सर्वाद्यन्ते बहुव्रीहौ संज्ञा विकल्प्यते, सर्वादीनीत्ययं तु वृत्तिग्रन्थः सर्वाद्यन्ते प्रवर्तमाना संज्ञा सर्वादीन्यपि गोचरयतीत्येवं परो व्याख्येयः। यद्वाऽवयवानां संज्ञाविधानेन तदन्तस्यापि सिध्यति तदन्तविधेरभ्युपगमादिति। 'समासग्रहणं किमिति'। न बहुव्रीहिः समासत्वं व्यभिचरतीति प्रश्नः। 'दक्षिणदक्षिणस्या इति'। 'एकं बहुव्रीहिव'दित्यनुवृत्ता 'वा बाधे चे'ति दक्षिणशब्दस्य द्विर्वचनं'न बहुव्रीहा'वित्ययमपि निषेधो न भवति, तत्रापि समासाधिकारात्। 'दक्षिणोत्तरपूर्वाणामिति'। असति बहुव्रीहिग्रहणे यथा 'न बहुव्रीहावि'ति प्रतिषेधं बाधत एवं 'द्वन्द्वे चे'त्येतमपि बाधेत। अथ क्रियमाणेऽपि बहुव्रीहिग्रहणे या पूर्वा सोत्तरा यस्योन्मुग्धस्य तस्मै पूर्वोत्तराय देहीत्यत्र कस्मान्न भवति। प्रतिपदोक्तो यो दिक्समासो 'दिङ्नामान्यन्तराल' इति तस्य

१ सर्वनामानीत्यधिकम् ३ पुस्तके तदसंबद्धम्।
२ स्वावयवानीय इति पा॰ २।
३ यदेति पा॰ २।

ग्रहणं, यद्येवं तत एव हेतोर्द्वन्द्वे न भविष्यति, सत्यम् । उत्तरार्थमवश्यं कर्त्तव्यं बहुव्रीहिग्रहणमिहापि विस्पष्टार्थं भविष्यतीति मन्यते ॥

न बहुव्रीहौ ॥ अत्र वृत्तौ द्विधा सूत्रार्थो लक्ष्यते, बहुव्रीहाविति निषेधाधिकरणं [1]बहुव्रीहौ संज्ञा न भवति, बहुव्रीह्याधारा संज्ञा न भवतीति । बहुव्रीहेः संज्ञा न भवतीति, सर्वाद्यधिकरणं वा, बहुव्रीहौ यानि सर्वादीनि तानि सर्वनामसंज्ञानि न भवन्तीति, तत्र सर्वनामसंज्ञायामित्यादिना ऽऽद्यं पक्षं दर्शयति । कथं पुनर्ज्ञायते ऽभ्युपगतस्तदन्तविधिरिति । अत एव निषेधात् । द्वितीयं सूत्रार्थं दर्शयति । 'बहुव्रीहावित्यादि' । प्रथमस्योदाहरणमाह । 'प्रियविश्वायेति' । 'सर्वनामसंख्ययोरुपसंख्यानमिति' सर्वनाम्नः पूर्वनिपाते प्राप्ते 'वा प्रियस्येति' [2]प्रियशब्दस्य पूर्वनिपातः । 'द्व्यन्यायेति' । सर्वनामसङ्ख्ययोरिति द्व्यन्ययोः पूर्वनिपाते प्राप्ते परत्वात् सङ्ख्यायाः पूर्वनिपातः । द्वितीयस्योदाहरणमाह । 'इह चेति' । अत्र च प्रतिषेधो ऽयमारभ्यतइत्यनुषङ्गः, ऽत्रासति निषेधे ऽकचि सति त्वकत्पितृको मकत्पितृक इति प्राप्नोति सति तु 'प्रागिवात्क' इति के सति 'प्रत्ययोत्तरपदयोश्चेति' त्वमादेशयोस्त्वत्कपितृको मत्कपितृक इति सिद्ध्यति 'न द्व्यतश्चे' ति [3]समासान्ते कपि । ननु च बहुव्रीहावयं निषेधः, इह च प्रागेव ततस्त्वकं पिता ऽस्य अहकं पिता ऽस्येति वाक्यावस्थायामेवाकच् प्राप्नोति, एवं तर्हि प्रतिषेधसामर्थ्यात् यद्वाक्योपमर्द्देन बहुव्रीहिर्भवति तस्यामेवावस्थायां निषेधो भविष्यति, अत्र च प्रथमः सूत्रार्थस्तदन्तविधिज्ञापनायैवोपन्यस्तो न तु प्रियविश्वायेत्यादौ समुदायस्य संज्ञाप्रसङ्गो ऽसर्वार्थत्वात् यथा ऽतिसर्वायेत्यादौ । बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं किमर्थमित्याह । 'बहुव्रीहावित्यादि' । वस्त्रान्तरवसनान्तरा इति' । वसनमन्तरं येषामिति बहुव्रीहौ द्वन्द्वः । अत्रासति बहुव्रीहिग्रहणे वर्तमानद्वन्द्वाश्रयो निषेधः स्यात् ततश्च जसि विभाषा स्यात् पुनर्बहुव्रीहिग्रहणात्तु

१ बहुव्रीहौ संज्ञा न भवतीति नास्ति २ पुस्तके
२ प्रियशब्दस्येति नास्ति ३ पुस्तके ।
३ कबिति पा० २ ।

यदन्तो द्वन्द्वः सो ऽन्तरशब्दो बहुव्रीहिः पूर्वमत्रासीद् इति बहुव्रीह्याश्रयो नित्य एव निषेधो भवति, इदं तु तदन्तस्य संज्ञानिषेध इति प्रथमपक्षानुरोधेन प्रत्युदाहरणं न त्वत्र प्रसङ्गो ऽसर्वार्थत्वात्। वसन्त्यस्मिन्निति वसनं गृहं, तेन 'विरूपाणामपि समानार्थाना' मित्येकशेषाभावः॥

तृतीयासमासे॥ 'समासइति वर्त्तमानइत्यादि'। मुख्यस्यैव ग्रहणे प्राप्ते गौणस्यापि ग्रहणार्थं पुनः समासग्रहण[1]मित्यर्थः। न च तृतीयासमासमात्रार्थं वाक्ये प्रसङ्ग इत्याह। 'पूर्वसदृशेत्यादि'। एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। 'त्वयका मयकेति'। युष्मदस्मदोस्तृतीयैकवचने 'त्वमावेकवचने' 'योऽचि' सुबन्तयोः प्राक् टेरकच्॥

द्वन्द्वे च॥ अयं समुदायस्यैव निषेधो नावयवानां, कुत,स्त्यदादीनां तावत् 'त्यदादीनि सर्वैर्नित्य'मिति एकशेषेण भाव्यम्, प्राक् च त्यदादिभ्यो ऽकारान्तास्तत्र न काकवोर्विशेषः, 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' स्त्वप्यतएव दक्षिणोत्तरपूर्वाणामिति, सोयं प्रतिषेधो ज्ञापयति अस्ति सर्वनामसंज्ञायां तदन्तविधिरिति॥

विभाषा जसि॥'जसः कार्यं प्रति विभाषेति'। तत् कथं, व्यवस्थितविभाषेयं, यद्वा जसीति कार्यापेक्षयाधिकरणसप्तमी, जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्यइति, अन्ये त्वाहुः। जस ई जसी शब्दरूपापेक्षया नपुंसकह्रस्वत्वे सप्तम्या लुका निर्देशो जस ईकारे कर्तव्यइति, किं पुनः कारणमेवं व्याख्यायते तत्राह। 'अकज्भीति'। हिशब्दो यस्मादर्थे, यद्यविशेषेण विकल्पः स्यात् कतरकतमअस् इति स्थिते कुत्साद्यर्थविवक्षायां यस्यामवस्थायामकच्विधिं प्रति संज्ञा स्यात् ततश्च तन्मध्यपतितत्वात्तद्ग्रहणे शीभावस्स्यात्, के तु सति न भवति॥

प्रथमचरमतयाल्पार्धकतिपयनेमाश्च॥ 'उभयशब्दस्येत्यादि'। उभावयवावस्य 'उभादुदात्तो नित्य' मिति तयपो ऽयजादेशः। स्थानिवद्भावाद्भवत्ययं तयबन्तस्तथापि गणे पाठाद् नित्यैव संज्ञा भवति। ननु गणे

[1] इति भाव इति पा· २।

पाठस्योभयस्मिंस्तुभयेषामित्यादिरवकाशः, इह तयब्ग्रहणस्य द्वितये द्वितया इति, उभयशब्दाज्जस्युभयप्रसङ्गे परत्वादियमेव विभाषा प्राप्नोति, नैष दोषः । अन्तरङ्गा नित्या संज्ञा विभक्त्यनपेक्षत्वादिति सैव प्रवर्त्तते । 'काकचोर्यथायोगं वृत्तिरिति'। नेमशब्दे ऽकचो वृत्तिः, अन्येषु कस्येत्येष यथा-योगार्थः, कः पुनर्दोषो नेमशब्दे यदि जसः कार्यं प्रति न स्यात् पक्षे को ऽपि स्यात् । अस्तु, नेमके नेमकाः नित्येप्यकचि तस्य तद्ग्रहणेन ग्रह-णादस्मिन्विकल्पे सति एतद्रूपद्वयं भवत्येव, सत्यं, प्रथमादिषु पक्षे ऽकज्न भवतीत्येवं परो ग्रन्थः ॥

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ 'असंज्ञा-यामिति'। संज्ञायामसत्यां, पूर्वादयश्चेत्संज्ञारूपा न भवन्तीत्यर्थः । व्यव-स्था, नियमः, स चात्रार्थादवध्यपेक्ष इत्याह । 'स्वाभिधेयापेक्षइत्यादि' । पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोर्थस्तमपेक्षते तेन वापे-क्ष्यते यः स स्वाभिधेयापेक्षो ऽवधिमर्यादा पूर्वदेशस्य यत्पूर्वत्वं तत्परदेश-मपेक्ष्य भवति परस्यापि यत्परत्वं तत्पूर्वदेश,मेवं दिक्कालयोरपि द्रष्टव्यं, तस्मात्पूर्वादिशब्दवाच्यो ऽर्थो ऽवश्यमवधिं कं चिदपेक्ष्य भवति तत्र योऽय-मपेक्षाया नियमः सा व्यवस्थेति तावद्विवक्षितं, तस्यां गम्यमानायां पूर्वा-दिशब्दानां स्वाभिधेय एव वर्त्तमानानामियं संज्ञा भवति न तु वाच्या-याम् । 'प्रवीणा इत्यर्थ इति' । अनेन व्यवस्थाभावमाह । नहि प्रवीण-शब्दः सापेक्षमर्थमाचष्टे । सत्यामेव व्यवस्थायामित्यनेनान्वर्थतां दर्शयति, सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दो वर्त्तते, ऽत्र जसः कार्यं प्रतीति नोक्तं विशे-षाभावात् ॥

स्वमज्ञातिधनाख्यायाम् ॥ अज्ञातिधनाख्यायामित्यस्यार्थमाह । 'न चेदित्यादि'। यत्र शब्दान्तरनिरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपे-णाचष्टे तत्रासौ संज्ञारूपेण प्रवर्त्तते । 'आत्मीया इत्यर्थ इति'। पुत्राणां गवां सत्यपि ज्ञातिधनत्वे न तेनाकारेण तत्र वर्त्तते किं त्वात्मी-याकारेणेत्यर्थः । आख्याग्रहणे त्वसति ज्ञातिधनयोः पर्यवसानाद् अत्रापि प्राप्नोति । 'धूमायन्तइत्यादि' । यथोल्मुकान्यश्लिष्टानि असंहतानि

धूमायन्ते संहतानि तु प्रज्वलन्ति तद्वत् ज्ञातयोपीत्यर्थः । 'स्वा ज्ञातय इति' । स्वशब्दस्यानेकार्थस्य व्यक्तीकरणाय पर्यायस्यापि ज्ञातिशब्दस्य प्रयोगः, स एव तु न प्रयुक्तः, निरङ्कुशाः कवयश्च इति ॥

अन्तरं बहिर्योगोपसंव्यानयोः ॥ बहिरित्यनावृतो देश उच्यते, बहिरित्यनेन योगो बहिर्योग इतीतिशब्दाध्याहारेण विग्रह्य समासः, स चानावृतस्य बाह्यस्य वस्तुनो भवति उपसंवीयते विधीयते वासो ऽन्तरेणेत्युपसंव्यानं कर्म्मणि ल्युट्, 'नगरबाह्या इति'। बहिर्योगं दर्शयति, परिधानीयमन्तर्वासः प्रावरणीयं बहिर्वासः। 'अन्तरे तापस इति'। अत्र संज्ञाभावाद् ङेः स्मिन्न भवति । जसीति वर्तमाने कथं सप्तम्यन्तं प्रत्युदाहरणे दीयतइत्यत आह । 'गणसूत्रस्य चेत्यादि'। गणसूत्रमप्येवमेव पठ्यते, कस्मात्पुनरप्रस्तुतस्य गणसूत्रस्य प्रत्युदाहरणं दीयते न सूत्रस्य, 'अपुरीति वक्तव्य' मिति वक्ष्यति तद्गणसूत्रविषयं यथा स्यादिति । तस्यायं प्रस्तावः । सूत्रस्याप्यनया दिशा प्रत्युदाहरणं गम्यतइति न पृथग्दर्शितम् । 'अन्तरायामिति' । प्राकाराद्बहिर्वर्तिन्यामित्यर्थः । यद्यपि गणसूत्रे ऽन्तरशब्दः पठ्यते तथापि तस्यैव सर्वनामत्वात् टापा सहैकादेशोपि तद्ग्रहणेन गृह्यतइति स्यात् प्रसङ्गः, लिङ्गविशिष्टपरिभाषया वा टाबन्तस्यैव संज्ञाप्रसङ्गे वचनम् । 'विभाषाप्रकरणइत्यादि' । यथायमर्थः सिद्ध्यति तथा 'विभाषा द्वितीयातृतीयाभ्या' मित्यत्र वक्ष्यामः ॥

स्वरादिनिपातमव्ययम् ॥ 'तसिलादिरिति'। 'पञ्चम्यास्तसिलि'-त्यारभ्य 'एधाच्चे' त्येतदन्तः, शस्तसी 'बह्वल्पार्थाच्छस्' 'प्रतियोगे पञ्चम्यास्तसिः' । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' । 'आस्यालाविति' । 'दृग आसिः' । अयाः, प्रक्पूर्वे,त्वं प्रक्याः । च्व्यर्थाः । संपद्यकर्तरि च्विः 'विभाषा साति: कार्त्स्न्ये' 'देये त्रा च' 'अमु चच्छन्दसि' किमेत्तिङव्ययघादाम् । 'निपाता वक्ष्यन्तइति' । अथ किमर्थं स्वरादीनां पृथग्ग्रहणं क्रियते ते चादिष्वेव पठ्येरन्, न । चादीनामसत्त्ववचनानां निपातसंज्ञा, स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां चाव्य-

वृत्तिकारेण यत्नसाध्यत्वादशास्त्रीयोदाहरणानि दर्शितानि, विधिशब्दः कर्म्मसाधनः पूर्वस्येति शेषलक्षणषष्ठी, पूर्वस्य व्यवस्थितस्य सतः सम्बन्धिनि कार्ये कर्त्तव्ये इति, पूर्वत्वं त्वत्रानपेतमाश्रीयते नादेशापेतं निमित्तापेतं वा, न चानपेते पूर्वत्वे विधिशब्दो भावसाधनः सम्भवति, भावसाधने हि तस्मिन् पूर्वस्येति कर्म्मणि षष्ठीविज्ञानात् पूर्वस्मिन्विधातव्ये स्थानिवदित्यर्थः स्यात्, अवस्थिते चाचि ततः पूर्वं किं चिद्विधेयं भवति, इहचादेशः स्थानिवदितिवचनात् आदेशेन स्थानी निवर्त्तित इति नायमर्थः सम्भवति, यत्रादेशः परनिमित्तकस्तस्यैवादेशस्य स्थानिभूतो योऽच् ततः पूर्वस्मिन्विधातव्यइति । तथाहि । अचो य आदेश इत्यादेशात्प्रागवस्थानूद्यते, ततश्च संनिधानात् प्रतीयमानमवधित्वमपि तदवस्थस्यैवाचो युक्तम् । अत एवोच्यते योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावइति । आदेशनमादिष्टं तदकृतं यस्य सोऽनादिष्टः, अकृतादेशादचः पूर्वस्येत्यर्थः । आदेशात्प्रागवस्थायामिति यावत्, न चान्या अवस्थायाः पूर्वस्मिन् विधातव्ये तदादेशः स्थानिवदिति सम्भवति । ननु कर्म्मसाधनेप्यत्रादेशः स्थानिवद्भवति अकृतादेशादचः पूर्वस्य विधाविति नायमर्थः संभवति, स्थानिवद्भावदशायामच आदेशेन निवर्त्तितत्वात्, नात्र सम्भवत्यचः पूर्वस्येत्ययमर्थः किं तर्हि अचोऽवस्थानदशायां पूर्वत्वेन दृष्टस्यान्यावस्थायामपि पूर्वस्येत्यर्थः, तदेवमनपेतस्य पूर्वत्वस्याश्रयणात् कर्म्मसाधन एव विधिशब्दः, किं पुनः कारणमनपेतमेव पूर्वत्वमाश्रीयते न पुनरादेशापेतं निमित्तापेतं वा, उच्यते, तदपेते पूर्वत्वे वैयाकरणः सौवश्व इत्यत्र स्थानिवद्भावादैचोरायावौ प्राप्नुतस्तावपि हि यणादेशान्तन्निमित्ताच्च परस्मादचः पूर्वस्य कार्यं, न च वाच्यं सत्यपि स्थानिवत्त्वेऽन्तर्भूताङ्गनिमित्ततया ऽन्तरङ्गयोरायावोः कर्त्तव्ययोर्बहिर्भूततद्धितापेक्षतया बहिरङ्गावैचावसिद्धावित्यायावौ न भविष्यत इति । नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरितिवचनात् । यथा अक्षद्यूरिति बहिर्भूतक्विबपेक्षोऽप्यूठन्त-

१ चाजादेशइति पा० २ पुस्तके

२ बहिःप्रक्लृप्तिरिति पा० २ पुस्तके ।

भूताजपेक्षे यणो नासिद्धो भवत्यजपेक्षे तु पूर्वत्वे विध्याकारणः सुधश्व-इत्यजवस्थायां ण्वोरभावेनैवोरदर्शनादप्रसङ्गस्तदाह । अचः पूर्वत्वविज्ञाना-द्वैयोः सिद्धमिति, किं च निमित्तापेक्षे पूर्वत्वे द्वाभ्यां देयं लवनमित्यत्रात्वे-त्वगुणाः स्वनिमित्तात्पूर्वेषां स्वेषामेव कार्येषु दीर्घगुणावादेशेषु स्थानि-वत्स्युस्तयोभयोरपि पक्षयोरपीपचदित्यादौ सन्वल्लघुनीति सन्वद्भावो न स्यात्, उपधाह्रस्वस्य स्थानिवत्त्वादलघूपधत्वात्, अजपेक्षे तु पूर्वत्वे पाचि अत् इति स्थिते द्विर्वचनमुपधाह्रस्वत्वं णिलोप इत्येतेषु प्राप्तेषु परत्वादन्तरङ्गत्वाच्च णिलोपे कृते परत्वान्नित्यत्वाच्च ह्रस्वत्वे च पश्चा-द्विर्वचनेऽभ्यासस्य स्थानिनोऽचः पूर्वत्वेनादृष्टत्वान्नास्ति स्थानिवद्भाव-स्तथा च तत्र तत्रोच्यते योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानि-वद्भाव आदिष्टाच्चेदेषोऽचः पूर्व इति, तस्मादजपेक्षमेव पूर्वत्वम् । यद्येवं तन्वन्तीत्यत्रेटि कर्त्तव्ये यणः स्थानिवत्त्वं न स्यात् तनुअन्तीत्यजव-स्थायां यत्पूर्वमङ्गं न तस्येट् किं तर्हि ततः परस्यादेशस्यैव, निमित्तापेक्षे तु यणो निमित्तादन्त्यकारात्पूर्वस्य तस्यैव यण इड्विधेय इति कर्म-साधने भावसाधने च विधिशब्दे स्थानिवत्त्वं लभ्यते, आदेशापेक्षेऽपि भाव-साधने यणः पूर्वत्वेनेटो विधेयत्वात्सिध्यति । नैष दोषः । आर्द्धधातुकस्ये-डित्यत्र एकाच उपदेशइत्यत उपदेशइत्यनुवृत्तेरुपदेशे वलादेरिड्भविष्यति, नन्दक इत्यत्रापि तर्हि प्राप्नोति, 'नेड्वशि कृतीति' निषेधो भविष्यति । तत्राप्युपदेशइत्यनुवृत्तेरेवमपि चोरिष्यतइत्यादौ वलादिलक्षणो चिण्वदिटि च प्राप्ते नित्यत्वाच्चिण्वदिडिति, वक्ष्यति नित्यश्चायं वलिनिमित्तविघाती-ति । तच्चोपपद्यते, उक्तेन प्रकारेण वलादिलक्षणस्यापीटो नित्यत्वात् । एवं तर्हि बहिरङ्गस्य यणो ऽसिद्धत्वादिडभावः । यद्वा पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासोऽप्याश्रीयते, तेन पूर्वस्मादङ्गादिटो निमित्त-त्वेनाश्रितात्परस्य यण इटि कर्त्तव्ये स्थानिवद्भविष्यति ॥

कानि पुनः पञ्चमीसमासप्रयोजनानि । इदं तावत्प्रयोजनं तन्वन्तीति । किञ्च वेभिदिता माथितिकः अपीपचन्, वेभिद्यतेर्यङन्तात्तृचि यल्लोपयलोपयोः कृतयोः 'एकाच उपदेशेऽनुदात्ता' दिति इट्प्रतिषेधः स्यात् यल्लोपस्य स्थानिवत्त्वाच्च भवति, नैतदस्ति । वेभिद्यतृ इति स्थिते ऽल्लोपश्च प्राप्नोति इट् च, परत्वादिट्, नित्योऽल्लोपः,' कृतेऽपीटि प्राप्नोति, इट् पुनरनित्यः नहि कृते ऽल्लोपे प्राप्नोति नित्येनाल्लोपेन बाध्यते । यस्य च निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यम् अत उभयोर्नित्ययोः परत्वादिडेव भविष्यति । इदं तर्हि मथितं पण्यमस्य माथितिक इति ठस्यैकादेशे कृते यस्येति लोपे चैकस्य स्थानिवद्भावेन ठग्रहणेन ग्रहणात् 'इसुसुक्तान्तात्कः' इति कादेशः प्राप्नोति, यस्येति लोपस्य स्थानिवद्भावाच्च भवति, एतदपि सन्निपातपरिभाषया ठस्येति वर्णग्रहणेनाल्विधित्वेन स्थानिवद्भावाभावाद्वा सिद्धम् । इदं तर्हि अपीपचन् अपीपचअन्इति स्थिते ऽन्त्याकारस्य चङकारस्य चातो गुणे इति पररूपत्वे तस्य परं प्रत्यादिवद्भावात् झिग्रहणेन ग्रहणे सति 'सिजभ्यस्तविदिभ्यश्चे' ति जुस् प्राप्नोति णिलोपस्यैकादेशस्य वा स्थानिवद्भावाच्च भवति, तदेवमनपेक्षमिव पूर्वत्वमाश्रीयते विधिशब्दश्च कर्मसाधनः शेषषष्ठ्या च समास इति न कश्चिद्दोष इति स्थितम् ।

'पटयतीति' । णाविष्ठवद्भावादिति टिलोपः । 'अवधीदिति' । 'हनो वध लिङि' 'लुङि चे' ति वधादेशः । 'हलन्तलक्षणेति' । वदव्रजेत्यत्र हलन्तस्येत्यनुवृत्तेर्हलन्तलक्षणा, बहुखट्वक इत्यत्र 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदि' ति वचनात् स्वरविधावप्यत्र स्थानिवत्त्वं भवत्येव । 'प्रश्न इति' । यजयाचयतेत्यादिना नङ्, च्छ्वोः शूडिति छस्य शः[1] । 'तुकि न स्थानिवद्भवतीति' । तुकि कर्त्तव्ये न स्थानिवद्भवतीत्यर्थः । नन्वन्तरङ्गत्वात् पूर्वं तुका भाव्यं यत्र चैकं निमित्तीकृत्य युगपदाङ्गवार्णयोः प्रसङ्गस्तत्र वार्णादाङ्गं बलीयः, यथा करोतेर्लिटि णलि कृअइति स्थिते गौरित्यत्र सावकाशा 'अचो ञ्णिती' ति वृद्धिं बाधित्वाऽन्तरङ्गत्वात्प्राप्तं यणं वृद्धि-

१ परनिमित्तक इत्यधिकं ३ पुस्तके ।

रेव बाधते, प्रश्न इत्यत्र तु शस्य नङ् निमित्तं तुकस्तुच्छः, भिन्नकाला चानयोः प्राप्तिरिति नायमस्या विषय इति तुकि सति च्छोः शूडित्यत्र सतुक्कच्छकारनिर्देशेन तस्यैवादेशः, एवं च सत्यपि स्थानिवत्त्वे सतुक्कच्छग्रहणेन शो गृह्यते न केवलं छग्रहणेनेति कुतस्तुकः प्रसङ्गो ऽत एव नङो ङित्त्वमपि विश्न इति गुणो मा भूदिति, तस्मादप्रत्युदाहरणमेतदिति प्रत्युदाहरणान्तरमाह । 'आक्राष्टामिति' । 'स्पृशमृशकृषतृपदृपां सिज् वा वक्तव्य' इति क्सापवादः पक्षे सिच् । अनुदात्तस्येत्यम् यणि वदव्रजेतिवृद्धिः । 'पूर्वत्रासिद्धे न स्थानिवद्' ति वचनादत्राप्यतृप्यदाह । 'आगत्येति' । 'वा ल्यपि' । 'युवजानिरिति' । बहुव्रीहौ पुंवद्भावः, युवतिशब्दस्य वयोवचनत्वेनाजातिवाचित्वा 'ज्जातेश्चे' ति प्रतिषेधो न भवति । 'यलोपे न स्थानिवदिति' । ननु योऽत्रादेशो नासौ लोपस्य निमित्तं तस्य वल्मात्रनिमित्तत्वात्, यश्च निमित्तं नकारः नासावादेश इति स्थानिवत्त्वं न भविष्यति, न च जायाशब्दस्य जनेरौणादिके यक्-प्रत्यये 'ये विभाषे' त्यात्वे च व्युत्पादितत्वाद् निङः स्थानिवत्त्वे सत्यातो लोपप्रसङ्गः, नह्युणादिषु व्युत्पत्तिकार्यमवश्यं भवति, अत उदाहरणान्तरोपन्यासः । 'वैयाघ्रपद्य इति' । व्याघ्रस्येव पादावस्येति 'पादस्य लोपोऽहस्त्यादिभ्य' इत्यपरनिमित्तः, 'गर्गादिभ्यो यञ्' । ननु सत्यपि स्थानिवत्त्वे वचनात्पद्भावो भविष्यति, यद्येवं पादे इत्यत्रापि प्राप्नोति सति तु परस्मिन्नित्यस्मिन्वैयाघ्रपद्य इत्यत्र पद्भावस्य चरितार्थत्वाद् पादे इत्येकादेशस्य स्थानिवत्त्वात् पद्भावाभावः । कथं पुनरेकादेशस्य स्थानिवत्त्वं, नह्ययमच आदेशः किं तर्हि अचोः, उच्यते । वर्णनिर्देशेषु जातिग्रहणाद्, अच इत्येकत्वस्याविवक्षितत्वाद् अचोरप्यादेशः स्थानिवत् । द्वयोरपि वा स्थानित्वे यदेकस्य स्थानित्वं तदाश्रयं तस्य स्थानिवत्त्वं भविष्यति, अत एव आयसौ गोमन्तौ चतुरौ आनडुहाविति, आयसादिभ्यो ऽणन्तेभ्य औप्रत्ययएकादेशस्यादिवत्त्वात् प्राप्तौ नुमामौ न भवतः, उदकं वहति, 'कर्मण्यण्' संज्ञायामुदभावः, सप्तम्येकवचनएकादेशस्यादिवत्त्वाद्भत्वे सति प्राप्तो वाह ऊठ्न भवति उदवाहे इति । 'आदीध्य इति' । अदा-

दित्वाच्छपो लुक् परस्मिन्नित्युच्यमाने स्थानिवद्भावाभावात् कृते टेरेत्वे लोपो न प्राप्नोति टेरेत्वं तु कृताकृतप्रसङ्गित्वान्नित्यमिति तदेव भवति । ननु च परस्मिन्नित्यसति शब्लुकोपि स्थानिवत्त्वात् तद्व्यवधानादेव लोपो न भविष्यति, न । क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति लुका लुप्तस्य स्थानिवत्त्वप्रतिषेधात् । 'हे गौरिति' । 'गोतो णित्' । 'बाभ्रवीया इति' । बभ्रोरपत्यमिति 'मधुबभ्रुवोर्ब्राह्मणकौशिकयो' रिति यञ् 'ओर्गुणः,' 'वान्तो यि प्रत्यय' इत्यवादेशः । अवादेशो न स्थानिवद्भवतीति । ननु चासत्यपि स्थानिवद्भावे संनिपातपरिभाषया न भवितव्यमेवात्र यलोपेन, नैतदस्ति । अव इत्ययं संघातो यादिसंनिपातकृतो न च स लोपस्य निमित्तं किं तर्हि वकारमात्रं, यद्येवं स्थानिवद्भावस्याप्यप्रसङ्गः । योत्रादेशो नासावाश्रीयते यश्चाश्रीयते नासावादेशः । 'नैधेय इति' । निपूर्वाद्धाञ 'उपसर्गे घोः किः' 'आतो लोपः' । 'द्व्यचः' 'इतश्चानिञ' इति ढक् । ननु च पूर्वस्मादपि विधौ स्थानिवत्त्वमुक्तं तत् कथमेतानि प्रत्युदाहरणानि । नैव दोषः । अत्राप्यजपेतस्य पूर्वस्याश्रयणाद् योनादिष्टादचः पूर्वस्ततः परस्येति, एवमपि हे गौरित्यत्र प्राप्नोति व्यवहितेपि परशब्दवृत्तेर्गकारात्परस्य सोर्लोपः, एवमितरयोरपि, नैतदेवं, पूर्वस्य विधिरिति षष्ठीसमास एवायं तत्रानुवादत्वात् स्थानषष्ठ्यभावात् सम्बन्धसामान्ये षष्ठी, पूर्वसम्बन्धिनि विधाविति । सम्बन्धश्च द्विविधः कार्यित्वेन निमित्तत्वेन वा, यत्र कार्यित्वेन स पूर्वस्य विधिः यत्र निमित्तत्वेन स पूर्वस्मात्ततश्च योनादिष्टादचः पूर्वस्तन्निमित्तत्वेनाश्रित्य यत्कार्यं प्राप्तं स एव पूर्वस्माद्विधिः, यथाऽपीपचन्निति । अत्र हि योनादिष्टो णिच् चङ् वा ततः पूर्वमपीपच् इत्येवाभ्यस्तं परस्य झेर्जुसो निमित्तं, तन्वन्तीत्यत्र यो ऽनादिष्टो ऽच् उप्रत्ययस्ततः पूर्वं यत् तन्निमित्तत्वेनाश्रीयते तद्विधावङ्गस्येत्यनुवृत्तेः । एतदेव तत्राङ्गाधिकारस्य प्रयोजनं, हे गौरित्यादौ तु यो ऽनादिष्टादचः पूर्वो गकारादिर्न तत्सम्बुद्धिलोपादेर्निमित्तं यच्च निमित्तमोकारादिर्नो-

१ अजादेश इति पा० २ ।

स्याचनादिष्टादचः पूर्वं इति न दोषः । इह तर्हि वेतस्वानिति डिलो-पस्य पूर्वविधौ स्थानिवत्त्वात् सकारात्पूर्वस्यानुपधात्वाद् मादुपधाया इति वत्वं न स्यात् । न च स्थानिवद्भावेन सन्निहितमकारमपेत्याकारान्ता-दिति लभ्यते, तस्यानादिष्टादचः पूर्वत्वाभावात् तदपेक्षत्वे स्थानिव-द्भावात्, नैष दोषः 'पूर्वत्रासिद्धे न स्थानिवत्' । विधिग्रहणं किं, ननु पूर्वसूत्रादेवानुवर्तते समासद्वयपरिग्रहार्थम्, असति हि तस्मिन् पूर्वस्ये-त्युक्ते पूर्वस्माद्विधौ न स्यात्, पूर्वस्मादित्युक्ते पूर्वस्य विधौ न स्यात्, नैतदस्ति । पूर्वस्येत्युक्तेऽपि अनुवादत्वात् स्थानषष्ठ्यभावात् सर्वः पूर्वस म्बन्धी विधिः प्रतिपत्स्यते, एवं तर्हि विधिमात्रे स्थानिवत्त्वं स्यात् शास्त्रीये विपरीते च, यद्वा विधिग्रहणं द्वितीयो यत्नस्तत्रायं परस्मिन्पूर्वस्येत्येको योगः, विधावित्येवानेन वव्रश्चेत्यादौ स्यान्यलाश्रयम-तिदिश्यते, ततो विधौ, अचः परस्मिन्पूर्वस्येत्येव, नियमार्थमेतत्, अजादेशः परनिमित्तकः पूर्वविधौ स्थानिवदेव न तु स्वयं निमित्तमिति, तेन पटय-तीत्यादि सिद्धं भवतीति । नन्वसत्यपि द्वितीययत्ने यथा शालिवत् का-श्मीरेषु व्रीहयो, मरुभूमिवदस्मिन्प्रदेशे जलमित्यादौ दृष्टान्ते प्रसिद्धस्य भावस्याभावस्य वा यथादर्शनमतिदेशः, एवमत्रापि भविष्यति, विषम उप-न्यासः । युक्तं तत्र भावस्यैवाभावस्यैव च प्रसिद्धत्वाद्, इह तूदाहरणभे-देन भावाभावयोः प्रसिद्धावपि स्थानिवदादेश इत्युक्ते ऽश्रुतक्रियापदेषु वाक्येषु भवतीत्येवाध्याहारस्य प्रसिद्धत्वाद् भावातिदेशः स्याद् इत्यलम-तिप्रबन्धेन ॥

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चरविधिषु ॥

द्विर्वचने यलोपादौ च तावत् तदेव विधेयं न तु तस्य व्यवस्थितस्य किं चित्, कौ स्त इत्यादौ तु पदान्तस्य सतः कार्यमावादि पदान्तस्य वा ऽऽवादेर्विधानमित्युभयथा सम्भवः, एवं वरे विधावपि, तथा ऽपि सर्वो-पहाय भावसाधन एव विधिशब्दः । 'एतेष्विति' । पदान्तादिविधेयभेदेन भिन्नानि यानि विधानानि एतेष्वित्यर्थः । 'पूर्वविधावित्यादि' । यद्यपि व्याकरणे न पदानि संस्क्रियन्ते न वाक्यं, तथापि वाक्यगते स्त इत्या-

दिके पदे व्युत्पाद्यमाने काविल्यादेः पदस्यासत्यपि निमित्तत्वे सन्निधानमविरुद्धं. ततश्चानादिष्टादचः पूर्वत्वसम्भवाद् अस्ति स्थानिवत्त्वप्रसङ्ग इति भावः । 'द्रध्यत्रेति' । स्थानिवद्भावप्रतिषेधसामर्थ्यादसिद्धं बहिरङ्ग इत्येतदपि न प्रवर्तते, शय्याविन्यादावपि बहिर्भूतानपेक्षत्वाद्यण बहिरङ्ग एव, वरइतिनिपातनादलुक् । 'यायावर इति' । 'नित्यं कौटिल्ये गताविति' यङ् । 'अतो लोपः परनिमित्तक इति' । आर्द्धधातुकइति परसप्तमीपक्षइति भावः । तथा चा 'नुदात्तश्च हलादे' रित्यत्रादिग्रहणम्, असति हि तस्मिन् हलन्तादिति विज्ञायेत ततश्च जुगुप्सनो मीमांसन इत्यत्र युच्न स्यादिति । यदि च सा विषयसप्तमी स्यात् प्रागेव प्रत्ययोत्पत्तेरतो लोपे सति हलन्तत्वादत्रापि युच् सिद्धः स्यात् । यत्त्व 'चो यदि'-त्यत्र वक्ष्यति अज्ग्रहणं किं यावता हलन्ताण्ण्यतं वक्ष्यति अजन्तभूतपूर्वादपि यथा स्याद् दित्स्यन्धित्स्यमिति तद्विषयसप्तमीपक्षइति वेदितव्यं, परसप्तमीपक्षे हि प्राक् प्रत्ययोत्पत्तेरतो लोपाभावादनुपपन्नं तत्स्यात् । 'कण्डूयतेः क्तिनि कृतइति' । क्तिचाबादिभ्यो वक्तव्य इत्यनेनेति भावः । 'क्तिचि इति तु युक्तः पाठः । कण्डूतिरित्यत्राल्लोपस्य स्थानिवत्त्वादुवङ् प्राप्नोति, अस्तु च्छ्वोः शूडित्यूड् भविष्यति, न चात्रापि स्थानिवत्त्वम्, अादिष्टादचः पूर्वत्वात्, अत एवोठः पुनरुवङ् न भवति । 'परसवर्णे न स्थानिवद्भवतीति' । ननु श्नसोरल्लोपे कृते पश्चादनुस्वारो भवत्यादिष्टादचः पूर्व इति कथमस्य परसवर्णे कर्तव्ये स्थानिवत्त्वप्रसङ्गः । स्यादेतत् । स्थानिनो नकारस्यानादिष्टादचः पूर्वत्वादादेशोनुस्वारोपि स्थानिवद्भावादनादिष्टादचः पूर्व इति । तच । नह्यनादिष्टादचः पूर्वत्वं नाम शास्त्रीयं यदतिदिश्येत । एवं तर्ह्यनादिष्टादचः पूर्वश्चापेतेचः परस्मिन्नित्यतिदेशे कर्तव्ये स्थानिवदादेश इत्येतत् प्रवर्तते, अतः सवर्णग्रहणं कृतम् । 'शिंषन्तीति' । यद्यपि शिण्ढीत्येवानुस्वारविधेरप्युदाहरणं तथापि तस्मिन्नेवोदाहृते परसवर्णविधौ स्थानिवत्त्वनिषेधस्तस्य स्थानिनोनुस्वारस्यापि विधौ स्थानिवत्त्वप्रतिषेधमन्तरेणानुपपन्न इति पृथगनुस्वारग्रहणं न कर्तव्यमित्याशङ्कानिराकरणाय केवलानुस्वारोदाहरणं दर्शितम् । 'प्रतिदीव्नेति' । प-

तिपूर्वाद्दिवेः 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव' इति कनिन्प्रत्ययः। 'भस्येत्यधिकृत्येति'। परनिमित्तकत्वोपपादनार्थः। किमिद मुक्तं हलि चोपधायां चेति दीर्घत्वं न स्यादिति, उपधायाञ्चेत्येतल्लेखकैः प्रमादाल्लिखितं, तथा चोपधायाञ्चेत्यत्र वक्ष्यति प्रतिदीव्नेत्यत्र 'हलिचे'ति दीर्घत्वमिति। 'अस्मादुवनाद्भवतीति' 'न भकुर्छुरामि'ति तु प्रतिषेधो रेफवकारान्तस्य भस्येत्यत्र न प्रवर्त्तते। 'भलो भलीति सलोप इति'। सकारे खिचो लोप इत्येतत्तु नाश्रीयते तस्मिंस्त्वाश्रिते छान्दसत्वाद्वर्णलोपः। 'बहुखट्वक इति'। अत्र स्थानिवद्भावाद् 'ह्रस्वान्तेन्त्यात्पूर्व'मिति खकाराकारस्योदात्तत्वं न भवति, 'कपि पूर्व'मित्येतदेव तु भवति। 'कियोः गियोरिति'। 'क्वयोरित्वे' ति व्युत्पत्तिपक्षएतदुदाहृतम्[1]। उपधायाञ्चेत्यत्र त्वव्युत्पत्तिपक्षमाश्रित्य वक्ष्यति 'उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि,' तेन किर्योगिर्योरित्यादिषु दीर्घो न भवतीति 'क्लिलुगु धात्ववङ्परनिर्ह्रासकुत्वेष्वजादेशो न स्थानिवद्भवती'ति वक्तव्यम्, क्वि. क्वौ यद्विधीयते तत्र कर्त्तव्ये यत्र कुत्र चित् कृतोजादेशो न स्थानिवद्भवतीति, लवमाचष्टाणौ लौः, अत्र णिचि यष्टिलोपः यश्च क्वौ णिलोपस्तदुभयमपि क्वौः शूडिति वकारस्य क्विनिमित्तकूठि कर्त्तव्ये न स्थानिवद्भवतीति 'एत्येधत्यूट्स्वि'ति वृद्धिः ये तु क्वौ लुप्तं न स्थानिवदिति पठन्ति तेषामेतच स्यात्, तथा पिपठिषतेः क्वौ अतो लोपे नपुंसके बहुवचने जसि भल्लक्षणे नुमि जस्निमित्तेपि कर्त्तव्ये ऽतो लोपस्य स्थानिवत्त्वनिषेधः स्यात्, क्वौ कृतत्वात्, क्वौ विधिं प्रतीत्यत्र तु पक्षे प्रतिषेधो न भवति पि.ठीषि ब्राह्मणकुलानि, नुम्यसति सान्तमहत इति दीर्घत्वं न भवति देवयतेर्द्युरित्यत्रोभयथापि सिध्यति। लुक् लुका लुप्ते न स्थानिवत्. आमलक्या विकारः फलं 'नित्यं वृद्धशरादिभ्य' इति मयटः 'फले लुक्' 'लुक्तद्धितलुकी' ति ङीपो लुक् परनिमित्तकः यस्येति लोपे न स्थानिवद् भवति, के चित्त्वेतदर्थं सूत्रे वर ई वरे इति ईकारप्रश्लेषं वर्णयन्ति,

[1] हरणमिति पा० २

ईविधिं प्रति न स्थानिवदिति । उपधात्वे, उपधात्वे कर्त्तव्ये न स्थानिवत् परिखाशब्दाच्चातुरर्थिके णिकृते पारिखे भवः पारिखीय इति 'वृद्धाट्ठके-कान्तखोपधा' दिति छो न स्यात्, आकारलोपस्य स्थानिवत्त्वादनुपधा-खकार इति, प्रत्ययविधिविषयं चैतत्, यत्रोपधासंज्ञानिबन्धनः प्रत्ययो विधातुमिष्यते तत्रैवेत्यर्थः, घटयतीत्यादौ तु तत्र भवति । चङ्परो यो निर्ह्रासो ह्रस्वस्तत्र न स्थानिवद्भवति । वादितवन्तं प्रयोजितवान् अवी-वदद् वीणां परिवादकेन, योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् णौ च-ङ्युपधाया ह्रस्वो न स्यात्, यश्चङ्परो णिर्न तस्मिन्नङ्गस्योपधा यस्मिं-श्चाङ्गस्योपधा न चङ्पर इति । कुत्वम्, पाचयतेः क्तिनि पाक्तिः कुत्वमु-पलक्षणं लेहयतेर्लेढिः । दोहयतेर्दोग्धिः,याचयतेर्याक्तिर्वेशयतेर्वेष्टिरित्यादि ॥

द्विर्वचने ऽचि ॥ अचः परस्मिन्नित्यत्र योनादिष्टादचः पूर्व इति स्थितं, साचकस्य द्विर्वचनं न त्वचः पूर्व्वस्येत्यप्राप्तं स्थानिवत्त्वं विधीयते रूपातिदेशार्थं च, अत्र षट् पक्षाः सम्भवन्ति । अचीत्यादेशोपलक्षणम्, द्विर्वचनइतिविषयनिर्द्देशः, अचि योऽजादेशः स द्विर्वचने स्थानिवद्भवतीति प्रथमः पक्षः, अचीत्येतदपि स्थानिवद्भावेनैव सम्बध्यते द्विर्वचनइति विषयनिर्द्देशाद् द्विर्वचने कर्त्तव्ये ऽजादेशः स्थानिवद्भवत्यचि पर इति द्वितीयः । द्विर्वचननिमित्तत्वादजेव द्विर्वचनग्रहणेन विशेष्यते, द्विर्वचनम-स्मिन्नस्तीत्यर्शआद्यच्प्रत्ययान्तेन वाऽधिकरणसाधनेन वा । आदेशोप-लक्षणं, द्विर्वचननिमित्तेऽचि योऽजादेशः स स्थानिवदिति तृतीयः । एवं विशे-षितं वाज्ग्रहणं स्थानिवद्भावस्य विशेषणम्, अजादेशः स्थानिवद्भवति द्विर्व-चननिमित्ते ऽचि परत इति चतुर्थः । द्विर्वचनग्रहणमावर्त्तते, तत्रैकेनाऽज्वि-शेष्यते, परेण विषयो निर्दिश्यतइति स्थिते तद्विशेषितमज्ग्रहणं स्थानि-वद्भावस्य विशेषणं द्विर्वचने कर्त्तव्ये ऽजादेशः स्थानिवद्भवति द्विर्वचन-निमित्ते ऽचि परत इति पञ्चमः । एवमेव स्थितेज्ग्रहणमादेशोपलक्षणं, द्विर्वचननिमित्ते ऽचि योऽजादेशः स द्विर्वचने कर्त्तव्ये स्थानिवद्भवतीति षष्ठः । अत्राद्ये पक्षे ऽचो द्विर्वचनेनाविशेषितत्वाद् द्विर्वचननिमित्तेष्वचि आदेशः स्थानिवत्स्यात्, ततश्चाचिकीर्त्तद् इत्यत्र णिचि 'उपधायाश्च'

तीत्यस्य 'चकी' इति द्विर्वचने स्थानिवद्भावादचकीर्त्तदिति स्यात् । दुद्रूषति कठि यणादेशः स्थानिवत्स्यात्, भवनमिच्छति, भवनीयतेः सन् विभवनीयिषति ल्युटि कृतयोर्गुणावादेशयोः स्थानिवत्त्वे बुभवनीयिषतीत्यनिष्टं रूपं प्राप्नोति, द्वितीये तु अचिकीर्त्तदित्यत्र न दोषः, ह्रस्वस्य तकारेण व्यवहितत्वात् स्थानिवद्भावभाजो ह्रादेशस्य स्थानिवत्त्वविधानवेलायामच्यनन्तरे स्थानिवत्त्वेन भवितव्यम् । एवं ह्यचि परतः स्थानिवद्भावः कृतो भवति, दुद्रूषतीत्यादौ तु स्यादेव, ययावित्यत्रा 'त औ णल' इत्यौकारेण वृद्धौ कृतायां संप्रत्यादेशात्परोऽज्नास्तीति स्थानिवत्त्वं न स्यात् । जग्मतुरित्यादौ च गमहनेत्युपधालोपस्य व्यवहितत्वाच्च स्यात् । तृतीये तु कालावधारणं कर्त्तव्यम्, अन्यथा द्विर्वचनादुत्तरकालमपि स्थानिरूपमेवावतिष्ठेत, चतुर्थे तु ययौ जग्मतुरित्यादौ पूर्वोक्तन्यायेन स्थानिवद्भावो न प्राप्नोति, कालावधारणं च कर्त्तव्यम् । पञ्चमेऽपि ययौ जग्मतुरित्यादौ न स्यात्, अत एतेषु पक्षेष्वेवं दोषसम्भवात् षष्ठं पक्षमाश्रित्याह । 'द्विर्वचननिमित्तेचीत्यादि' । अत्र हि पक्षे द्विर्वचनेनाचो विशेषणादचिकीर्त्तत् दुद्रूषति विभवनीयिषतीत्यादौ न दोषः, आदेशोपलक्षणत्वाच्च ययावित्यादावपि न दोषः, पुनश्च द्विर्वचनग्रहणात् कालावधारणमपि लभ्यते । •

ननु द्विर्वचननिमित्तेऽचि योऽजादेश इत्युच्यमाने नुनावयिषति चुनावयिषति पुस्फारयिषतीत्यादौ णेरद्विर्वचननिमित्तत्वात्तन्निमित्तावादेश आकारश्च न स्थानिवत्स्यात्, ततश्चाभ्यासउकारो न श्रूयेत । नैष दोषः । पुयणजीति ज्ञापकाद् द्वित्वनिमित्तेऽपि णौ स्थानिवत्त्वापायात् । तथाहि । नहि णौ कृतस्य स्थानिवद्भावमन्तरेण ओः पराः पुयण्ज्यो ऽवर्णपराः सम्भवन्ति, पिपविषति, यियविषतीत्यत्र सम्भवतीति चेत्, किमेतावता पुयग्रहणं प्रत्याहारग्रहणं जग्रहणं चार्थवद्भवतीति ज्ञापकमुक्तार्थस्य, यद्येवमचिकीर्त्तदित्यचेत्यस्य स्थानिवत्त्वादचकीर्त्तदिति स्यात्, नैष दोषः । ज्ञापकस्य तुल्यजातीयापेक्षत्वात् यत्रोत्तरभागस्याचो ऽवर्णपरो भावस्तत्रैव स्थानिवत्त्वज्ञापनात् । 'नन्वेवमपि ओः पुयणित्यत्र योरित्यश्रवणात्सामान्येन द्वित्वनिमित्ते स्थानित्वं विज्ञायेत ततश्च विभवनीयिषतीत्यत्रापि स्यात्

नैतदस्ति । येन नाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणात् योरेव केवलस्य व्यवधायकस्य सम्भवात्'[1] * । नन्वचीत्युच्यमाने चक्रतुरित्यादौ न स्यात्, नह्यत्राज्मात्रं द्विर्वचननिमित्तं क्व तर्हि स्यात् चकार चकारेत्यादौ ह्यज्मात्रं प्रत्ययः, स्यादेतत् । परस्मिन्नित्यनुवृत्तमचीत्यनेन विशेष्यते तत्र यस्मिन्विधिस्तदादावल्ग्रहणमिति तदादिविधिर्भवति अजादौ परस्मिन्निति द्विर्वचननिमित्तत्वेनापि अजाद्येव विशेष्यत इति, एवमपि चक्रतुरित्यत्र स्यात्, यद् द्विर्वचननिमित्तमजादि न तदादेशस्य निमित्तमच्येव यणो विधानात्, यच्चादेशस्य निमित्तं न तद् द्विर्वचनस्य निमित्तं पपतुः चक्रतुरित्यादावेव तु स्यात्, किं च यस्मिन्विधिरितिवचनात् यत्र किंचिद्विधीयते तत्रैव तदादिविधिः, इह तु अचि योऽजादेश इत्यनुवादत्वात्तदादिविधेरेवासम्भवस्तस्मादजेव गृह्यते न तदादिः । उच्यते । चक्रतुरित्यादावतुसोऽद्विर्वचनं प्रति निमित्तत्वेनाश्रयणेऽप्यचि परत्रावस्थिते द्विर्वचनं दृष्टमित्येतावताजेव द्विर्वचननिमित्तमित्युच्यते समुदायेप्ययं द्विर्वचनशब्द उपचारेण प्रवर्तते, एवमपि पपतुरित्यत्र न स्यात्, आल्लोपस्याजादिर्निमित्तं नाज्मात्रम्, नैष दोषः । अचि योऽजादेश इति कोऽर्थः, अचि यो दृष्ट इत्यर्थः । यश्चाचि विधीयते यश्चाजादौ द्वावपि अचि दृष्टावेवेति सर्वत्र सिध्यति, अथ वा ऽजादावाल्लोपो न हलादौ तत्र प्राप्ताप्राप्तविवेकेनाच एव निमित्तत्वं द्विर्वचनएव कर्त्तव्यइति एवकारेणेतद्दर्शयति द्विर्वचनग्रहणमचं विशिनष्टि कालं चावधारयतीति, एकस्योभयसम्बन्धे हि भवति एवकारः, देवदत्तो ग्रामं गच्छतु स एव गामानयत्विति । यद्यत्रापि पूर्ववत्कार्यातिदेशः स्यात् चक्रतुरित्यादावनच्कस्यादपात्तं द्विर्वचनं स्थानिवद्भावाद् भवदपि यणाद्यादेशयुक्तस्यैव स्यादित्यभ्यासे स्थानिरूपं न श्रूयेत तदर्थमाह । 'रूपातिदेशश्चायमिति' । चशब्दोऽवधारणे, कथं पुनरवगम्यते रूपातिदेशोऽयमिति, अज्ग्रहणात्. तद्धि जेघ्रीयत इत्यत्र 'ई घ्राध्मो'रिति हलादौ विहितस्येत्वस्य स्थानिवत्त्वं मा भूदित्येवमर्थं क्रियते, यदि च रूपं स्थानिवत् ततो ऽसत्यज्ग्रहणे घ्रायघ्रीयध्माय-

(१) नन्वित्यारभ्य संभवादित्यन्तो ग्रन्थो बहुषु पुस्तकेषु नास्ति

ध्मीय् इतिद्विर्वचनं स्यादिति तन्निवृत्तयेऽज्ग्रहणमर्थवद् भवति । अथ हि कार्यं स्थानिवद् भवति तस्य सत्यपि स्थानिवत्त्वे ईकारयुक्तस्यैव द्विर्वचनमिति नार्थोऽज्ग्रहणेन भसेस्तु क्सौ 'घसिभसोर्हली' त्युपधालोपे कृते सत्यसति वा द्विर्वचने श्वानिनिवृत्तौ विशेषाभावः, छान्दसश्च क्सुः छन्दसि दृष्टानुविधानमतो ज्ञापकमेवाज्ग्रहणं, तत्र यद्यपि स्थान्येव स्वरूपमापद्यते तथाप्यातिदेशिकानातिदेशिकरूपभेदाश्रयस्तु वति, द्विर्वचनएव कर्त्तव्यइत्येतदेव स्पष्टयति । 'नियतकालइति' । कृते द्विर्वचनइत्यादिना नियतकालत्वमेव दर्शयति, यदि कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते यथा चक्रतुरित्यादौ द्विर्वचनादूर्ध्वं पूर्वं कृतो यणादेश एव श्रूयते तथा निन्यतुरित्यादावपि द्विर्वचनात्पूर्वमेकाच्त्वादि, यणादेशे कृते स्थानिवद्भावाद् द्विर्वचनेऽपि पूर्व्वं प्रवृत्त इयङेव स्यात् । अस्तु, तस्यासिद्धवदत्राभादित्यसिद्धत्वाद् एरनेकाच इति यणि सति श्रवणं न भविष्यति, यद्वा पूर्वप्रवृत्तोपीयङ् द्विर्वचनकाले ऽपहृत इति पुनः प्रवर्तयितव्यस्तस्यां च दशायामनेकाच्त्वाद्यणा बाध्यते । यद्येवमियेष उवोषेति इषेरुषेश्च लिटि तिपि णलि प्रवृत्तस्यापि गुणस्य द्विर्वचनकाले ऽपहृतत्वात्कृते द्विर्वचने पुनः प्रवृत्तिस्ततश्चानादिष्टादचः पूर्व्वत्वेनाभ्यासो दृष्ट इति तस्याभ्यासस्य उवङि कर्त्तव्ये गुणस्य स्थानिवद्भावादसवर्णइति प्रतिषेधः स्यात् । असवर्णग्रहणसामर्थ्यात्स्थानिवत्त्वं न भविष्यति । अस्ति वचनस्यावकाश इयर्त्ति इयृतः, नह्येकमुदाहरणमसवर्णग्रहणं प्रयोजयति यद्येतावत्प्रयोजनं स्यादृतौवित्येव ब्रूयात्, किं तर्ह्युच्यते द्विर्वचने पुनरादेशरूपमेवावतिष्ठतइति, अत्र हि पुनःशब्दादवतिष्ठतइतिवचनाच्च पूर्वकृतस्यैवादेशस्योन्मज्जनमेवोक्तं प्रतीयतइति, नायमर्थः, अपि तु कृते द्विवचने स्थानिरूपं नावतिष्ठते यत्प्राप्तं तद् भवतीत्येवं परमेतत् । 'आल्लोपेत्यादि' । उपलक्षणमेतत् ततुरिः पपुरित्यादौ 'ऋत इद्धातो' 'रुदोष्ठ्यपूर्वस्य' 'बहुलं छन्दसी' ति इत्वोत्वयोरपि स्थानिवत्त्वं भवति, । 'आटिटदिति'। अटतेर्ण्यन्तात्लुङि चङि अजादेर्द्वितीयस्येति टिशब्दस्य द्विर्वचनमाडजादीनाम् । 'निनायेत्यादि' । 'णलुत्तमो वे' ति यदा णित्त्वं नास्ति तदा गुणः णित्त्वपक्षे वृद्धिः । 'नेनैलोलाइति द्विर्वचनमिति' । गुणवृद्ध्योस्तु स्थानिवद्भावे विशे-

षाभावाच्चोक्तः । 'ग्ले म्स्ने इति' । भावे लिट्, अनैमित्तिकमात्त्वं शिति तु प्रतिषेधइत्यात्वस्य स्थानिवत्त्वं न भवति । 'अवर्णमित्यादि' । यदि कालो नावधार्येत तदोत्तरकालमपि स्थानिरूपं प्रसज्येत ततश्चाकारस्य श्रवणे सति परेण सह वृद्धिरेचीति वृद्धिः स्यात् । इहाधिजगइति गाङ्लिटीति द्विलकारनिर्देशेन लकारादौ लिटि गाङादेशविधानादङ्निमित्तत्वाभावात् स्थानिवत्त्वाभावः ॥

अदर्शनं लोपः ॥ इह दर्शनं ज्ञानमुपलब्धिस्तच्च शब्दानुशासनत्वात्तावाच्छब्दविषयं सच्छ्रवणं भवतीत्याह । 'अश्रवणमिति' । श्रवणं च श्रोतृव्यापारस्तन्निषेधे 'लोपो व्योर्वली'त्यस्य वकारयकारौ वल्परौ न श्रोतव्यावित्यर्थः स्यात्, ततश्च प्रयोक्तृव्यापार उच्चारणं[1]मनिषिद्धं स्यात् असति श्रवणे उच्चारणमनर्थकमेव स्यादिति श्रवणनिषेधेन[2] तद्धेतुभूतमुच्चारणमेव निषिद्धं भवतीत्याह । 'अनुच्चारणमिति' । 'लोपो व्योर्वली'त्यस्य कोऽर्थः वकारयकारौ वल्परौ नोच्चारयितव्याविति, अनेनापि प्रकारेणास्मिन्विषये तयोरभाव एव व्याख्यापितो[3] भवति, नहि विद्यमानयोरनुच्चारणमुपपद्यतइत्याह । 'अभाव इति' । स्वाभाविक एवाभाव इत्यर्थः । 'विनाश इति' । कार्यशब्ददर्शनमेतत् । 'अनर्थान्तरमिति' । शब्दविषयाणामेवामर्थो न भिद्यतइत्यर्थः, स्वं रूपमिति वचनाद् अदर्शनशब्दस्यैव संज्ञायां लोपप्रदेशेषु अदर्शनशब्दएवादेशः स्यादित्यत आह । 'एतैः शब्दैरिति' । एतच्च 'न वेति विभाषे'त्यत इतिकरणानुवृत्तेर्लभ्यते, अथ वा महती संज्ञा क्रियते ऽन्वर्था यथा विज्ञायेत लोपनं लोप इति, न चादर्शनशब्दो लोपनक्रिया भवति । यद्येवं प्रदेशेष्वेवार्थग्रहणमस्तु किं संज्ञया, नच । असति संज्ञाकरणे स्वं रूपमिति वचनात् प्रदेशेषु लोपशब्द एवादेशः स्यात् सति त्वशब्दसंज्ञेति निषेधाच्च स्वरूपग्रहणं भवति । 'न शब्दस्येति' । अर्थसिद्धमप्येतद्विस्पष्टार्थं पुनरुक्तम् । ननु विधिप्रदेशेष्वितरेतराश्रयः प्राप्नोति, सतोऽदर्शनस्य संज्ञा संज्ञया चादर्शनं भाव्यतइति, नच । नहि लोपविधानात्प्रागसदेवादर्शनं वचनेन भाव्यते ऽनित्यत्वप्रसङ्गात्,

(१) न निषिद्धमित्यधिकं पुस्तक पाठान्तरम् ।
(२) श्रवणनिषेधे इति २ पुस्तके पाठः ।
(३) व्याख्यातो भवतीति पुस्तकान्तरे पाठः ।

किं तर्हि सदेवादर्शनं साधुत्वेनान्वाख्यायते। यद्येवं सर्वस्य स्वविषयादन्यत्र स्वभावतोऽदर्शनमस्तीति लोपसंज्ञा स्यात् ततश्च दधिमथ्विति णिचोऽदर्शनस्य लोपसंज्ञायां प्रत्ययलक्षणेन वृद्धिः स्यात्. अङ्गस्य वृद्धिरङ्गसंज्ञा च विधानप्रतिबद्धा, क्विपस्त्वदर्शनस्य लोपसंज्ञायां तुक् प्राप्नोति तत्राह । 'प्रसक्तस्येति'। एवं मन्यते स्थानइति वर्त्तते स्थानं च प्रसङ्गः तेन प्रसङ्गे यददर्शनं तस्य लोपसंज्ञा, न च दधीत्यत्र क्विपः केन चित्प्रसङ्गोऽस्ति, एवमपि ग्रामणीरित्यत्र कर्म्मधातुकर्तृसमविधानादस्ति अणः प्रसङ्ग इति तददर्शनस्य संज्ञायां वृद्धिः स्यात्. योऽत्राणः प्रसङ्गः क्विपा सोऽपह्रियते सामान्यशास्त्रं हि विशेषसंनिधौ तद्व्यतिरिक्तएव विषये प्रतीतिं जनयति, तेन सत्सूद्विषेत्यस्य संनिधौ कर्म्मण्यणित्यनेन नयतेरण् भवतीति वृद्धिरेव न जन्यते ॥

प्रत्ययस्य लुक्श्लुलुपः ॥ अदर्शनमिति सम्बन्धात् प्रत्ययस्येति कर्मणि षष्ठी, यदि प्रत्ययादर्शनस्य लुगादिसंज्ञासङ्करः प्राप्नोति विधानदशायां यया कया चन संज्ञया भावितस्य प्रत्ययादर्शनस्यानुवादप्रदेशेषु यत्किञ्चन संज्ञोच्चारणेऽपि ग्रहणप्रसङ्गस्ततश्चास्तीति लुक्संज्ञया भावितस्यापि शपोऽदर्शनस्य श्लाविन्यत्र ग्रहणाद् द्विर्वचनं स्यात्. जुहोतीत्यु 'तो वृद्धिर्लुकि हली'ति वृद्धिः स्यात्, हरीतक्याः फलानि 'लुक्तद्धितलुकी'ति ङीपो लुक् स्यात्. 'लवणात् लुक्' लवणाल्लुपः, युक्तवद्भावः स्यात्, तथा लोपसंज्ञया भावितस्यापि लुक्संज्ञया अगोमती गोमती सम्पन्ना गोमतीभूता ब्राह्मणीति च्वेर्लोपे 'लुक् तद्धितलुकी'ति लुक् स्यादित्यत आह । 'अनेकसंज्ञाविधानाच्चेत्यादि'। यद्यतद्भावितस्याप्येताः संज्ञाः स्युरनेकसंज्ञाकरणमनर्थकं स्यात्, एकामेव संज्ञां कृत्वा तयैव सर्वाणि कार्याणि विधीयेरन्, तस्मादनेकसंज्ञाविधानाद्यया संज्ञया यदर्शनं भावितं तस्यैव सा संज्ञेति संज्ञानां सङ्करो न भवति, यद्येवं विधिप्रदेशेष्वितरेतराश्रयः प्राप्नोति, न चात्र नित्यतया परिहारः सम्भवति, अदर्शनमेव हि नित्यं न पुनर्लुगादिसंज्ञया भावितं तत्र यदि तया संज्ञया भावितस्यादर्शनस्य सा संज्ञेति व्यक्तमितरेतराश्रयो भवति, तत्राह । 'विधिप्रदेशेषु चेति'। अदि-

प्रभृतिभ्यः परस्य शपस्तद्भवति यस्य भूतस्य लुक् संज्ञा भविष्यतीत्येवं भाविन्याः संज्ञाया विज्ञानाच्च भवतीतरेतराश्रयत्वदोषः, लोपसंज्ञात्वदर्शनमात्रस्य विधीयतइति लुगादिसंज्ञाविषये ऽपि भवत्येव । न च लुगादिसंज्ञाभिर्बाधः, एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशात्, अत एव 'न लुमताङ्गस्ये' ति निषेधः । 'वरणा इति' । 'अदूरभवश्चे' त्यणो 'वरणादिभ्यश्चे' ति लुप् । 'प्रत्ययग्रहणं किमिति' । न तावदप्रत्ययनिवृत्त्यर्थं लुग्, णिञः तद्राजस्य यञञोश्च शपः यङः सिचः लेः सुप इति सर्वत्र प्रत्ययस्यैव निर्देशात् अनुवादेषु च तद्भावितस्यैव तस्य संप्रत्ययात्, 'गोस्त्रियोरुपसर्जनस्ये' त्यत्र योगो विभज्यते, गोरुपसर्जनस्य स्त्रिया इति, 'लुक्तद्धितलुकी' ति स्त्रिया इत्येव, गोरिति निवृत्तम् इतरथा कृते ऽपि प्रत्ययग्रहणे गमेर्हो लुक् स्यात् 'कंसीयपरशव्ययोर्यञञौ लुक् चे' त्यत्र ङ्याप्प्रातिपदिकाधिकारात् कंसीयपरशव्ययोः प्रातिपदिकात्परस्य भागस्य लुग्विज्ञास्यते न प्रकृतिभागस्य अन्यथा कृते ऽपि प्रत्ययग्रहणे कमेः सः परात् शृणाति परशुरिति उकारसकारयोर्लुक् स्यादतो ऽप्रत्ययनिवृत्त्यर्थं तावत्प्रत्ययग्रहणं न कर्त्तव्यं, यत्र तर्हि न कश्चिन्निर्दिश्यते 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चे' ति अत्र प्रत्ययप्रतिपत्त्यर्थं प्रत्ययग्रहणं भविष्यति, नैवं, तत्रापि 'यस्कादिभ्यो गोत्र' इत्यतो गोत्रग्रहणानुवृत्तेरत्र्यादिभ्यो गोत्रे यो विहितस्तस्य लुक्, तथा 'जनपदे लुबि' त्यत्र ङ्याप्प्रातिपदिकात्प्रत्यय इत्यनुवृत्तेः जनपदे विहितस्य चातुरर्थिकप्रत्ययस्यैव लुप् लवणात् लुगित्यादिष्वपि प्रकृतस्यातः प्रत्ययस्य प्रतिपत्त्यर्थमपि न कर्त्तव्यं भवति, सर्वत्र चाव्यादिभ्यः प्रातिपदिकात्लवणादिति पञ्चम्यधिकारेण सन्निहितस्य षष्ठीं प्रकल्पयिष्यति सा चानियतयोगत्वात् स्थानषष्ठी भविष्यतीति स्थानषष्ठीप्रतिपत्त्यर्थमपि प्रत्ययग्रहणं न कर्त्तव्यं भवति, एवं तर्हि सर्वादेशार्थं प्रत्ययग्रहणमसति तस्मिन् 'यञञोश्च' 'सुपो धातुप्रातिपदिकयो' रित्यादिषु यत्रानेकाल्प्रत्ययस्तत्रालोन्त्यस्य स्यात् लवणाल्लुगित्यादौ तु आदेः स्यात् सति तु प्रत्ययग्रहणे तत्सामर्थ्यात् सर्वादेशो लुगादिर्भवति, ज्ञापकात्सिद्धं, यदयं 'घोर्लोपो लेटि वे' ति लोपे प्रकृते लुग्वादु-

हृदिहेति लुकं शास्ति तज्ज्ञापयति लुगादयः सर्वादेशा इति। अलोन्त्यस्य ह्यदर्शनं प्रकृतेन लोपेनापि सिद्धं विपर्ययस्तु न भवति घेर्लोप इत्यत्र तावदसंजातविरोधित्वाद् अलोन्त्यस्येति प्रवर्त्तते पश्चाल्लुग्ग्रहणं तस्यैव सर्वादेशतां गमयति सामान्येन च ज्ञापकं समर्थयिष्यते लोपव्यतिरिक्तमदर्शनं सर्वादेश इति, अतः सर्वादेशार्थमपि प्रत्ययग्रहणं न कर्तव्यमिति प्रश्नः। इतरो ऽपि विदिताभिप्रायः परिहरति। 'अगस्तयः कुण्डिना इति'। असति प्रत्ययग्रहणे आगस्त्यकौण्डिन्ययोरित्यत्र लुगञिञोरित्यतो लुग्ग्रहणमनुवर्त्तते वा न वा, ऽनुवृत्तौ स्थानिनौ द्वौ लुका सह त्रय आदेशा इति वैषम्यादसति यथासङ्ख्ये एकैकस्य त्रय आदेशाः पर्यायेण स्युस्ततश्चागस्त्योऽपि कुण्डिनाः स्युः कुण्डिनाश्चागस्तयः स्युः लुक् च क्रियमाणो यदि ज्ञापकात्सर्वादेशस्तत उभयत्रापि विभक्तिमात्रश्रवणप्रसङ्गः, अथ निवृत्तं ततो ऽगस्तयः कुण्डिना इत्यत्र न कश्चिद्दोषः। अगस्तीनां छात्रा आगस्तीया इत्यत्र तु प्राग्दीव्यतीये ऽजादौ प्रत्यये विवक्षिते ऽप्यगस्त्यादेशस्य निषेधाभावात् प्रवृत्तावशृद्धत्वाच्छो न स्यात्, प्रत्ययग्रहणे तु सति लुग्ग्रहणानुवृत्त्यागस्त्यकौण्डिन्ययोः प्रत्ययांशस्य लुभ भवति परिशिष्टयोर्भागयोर्यथासंख्यमगस्तिकुण्डिनचावित्यर्थः सम्पद्यते, तेनागस्तयः कुण्डिना इति च सिद्ध्यति, प्राग्दीव्यतीये च विवक्षिते गोत्रे लुगचीति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टत्वादगस्त्यादेशे ऽपि निवृत्ते आगस्त्यशब्दस्य वृद्धत्वाच्छे कृते सूर्यतिष्यागस्त्येति यलोपे चागस्तीया इति सिद्ध्यति। कौण्डिन्ये च नास्ति विशेषो निवृत्ते ऽपि कुण्डिनजादेशे कौण्डिन्यशब्दादपि 'कण्वादिभ्यो गोत्र' इति अणि कृते आपत्यस्येति यलोपे कौण्डिना इत्येव भवितव्यमत आगस्त्यकौण्डिन्ययोरित्यत्रावश्यमनुवर्त्यं लुग्ग्रहणं ततश्च पूर्वोक्तदोषपरिहाराय प्रत्ययग्रहणमपि कर्तव्यम्। वयन्तु ब्रूमः। सर्वादेशार्थमपि प्रत्ययग्रहणं सामान्येन ज्ञापकमगतिकगतिरिति। प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रारम्भस्य प्रयोजनमाह। 'प्रत्ययनिमित्तमित्यादि'। लक्षणशब्दो ऽयमस्ति भावसाधनः प्रादुर्भाववचनः, अस्ति च करणसाधनो निमित्तवचनस्तत्राद्यस्य ग्रहणे प्रत्ययलोपे सति

प्रत्ययस्य प्रादुर्भावो भवतीत्यर्थः स्यात् तत्र लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भावविधो लोपविधिर्व्यर्थः स्यात् । ननु च यः प्रत्यस्यैव लोपो णेरनिटीत्यादि तस्य वैयर्थ्यं नामास्तु यस्तु टेरित्यादिना सामान्येन विहितः स यदा प्रत्ययस्य भवति भित्तुमाचष्टे भित्तयतीति तदा तस्य पुनः प्रादुर्भावे ऽपि न तस्य वैयर्थ्यमप्रत्यये चरितार्थत्वात् । एवं तर्हि लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भावदृष्टे न प्रत्ययस्य लोप इति वक्तव्यम् । सामान्यविहितो लोपः प्रत्ययस्य न भवतीति । अथ प्रत्ययान्तरस्य लुप्तप्रत्ययनिमित्तकस्य प्रादुर्भावो विधीयते यथा ग्रामणीरिति क्विपो लोपे तन्निमित्तकस्य सोर्विधिः, एवमपि प्रत्ययलोपे प्रत्ययइत्येव वक्तव्यं प्रत्ययस्य लोपे न तन्निमित्तकः प्रत्ययो भवतीति अतो निमित्तपर्यायेण लक्षणशब्देन बहुव्रीहिः, कार्यं चान्यपदार्थ इत्याह । 'प्रत्ययहेतुकं कार्यमिति' । प्रत्यासत्तेश्च यः प्रत्ययो यस्य कार्यस्य निमित्तं तस्य लोपे ऽपि तद्भवतीत्यर्थः । 'पदसंज्ञा भवतीति' । ननु च स्थानिवद्भावेनापि सिद्धा पदसंज्ञा इह तर्हि ताता पिण्डानामिति तच्छब्दात्परस्य जसः शिः 'शेश्छन्दसि बहुलमिति लोपे 'नपुंसकस्य झलच' इति नुम् सर्वनामस्थानइति दीर्घश्च भवति, अनड्वान् सोर्लोपे नुम्भवति, अधोक् अड्गुणौ भवतः, न्यमार्ट् मृजेर्वृद्धिः, उन्देर्लङि तिलोपे श्नमाटौ भवतः । श्नाचलोपः चौनत्, अग्निचित् क्विपो लोपे तुग्भवति, एतान्यपि स्थानिवद्भावेनैव सिद्ध्यन्ति, न सिद्ध्यन्ति, अल्विधित्वात्, सर्वत्रैवाल्मात्रप्रत्ययः तदाश्रयो विधिरल्विधिरिति, नैतत्सप्टूच्यते, उक्तं हि कार्यापेक्षमल्विधित्वं नोदाहरणापेक्षमिति नुमादिविधौ च सर्वत्र शास्त्रे यद्रूपमाश्रीयते सर्वनामस्थाने सार्वधातुके पिति कृति सुप्तिङन्तमिति साधारणं तदलश्चानलश्च, केवलं ताता पिण्डानामित्याद्युदाहरणेऽर्थादलात्मकं तदित्येतावत्, इह तर्हि अतृणेट् तृह हिंसायां लङ् तिप् श्नम् इनश्चेतीकारलोपः तकारस्य हल्ङ्यादिलोपे हलादौ पिति सार्वधातुके विधीयमानो ऽल्विधिः तृणह इम् अस्माद्भवति, तथा आशीरित्यत्र 'शासइदङ्हलो'रितीत्वं लुप्ते ऽपि क्विपि भवति । ननु च 'वर्णाश्रये नास्ति

प्रत्ययलक्षणं,' नैवं विधं वचनमस्ति द्वितीयस्य प्रत्ययग्रहणस्य प्रयोजनमिदं पठ्यते ऽत्र हि प्रत्ययलोपे तल्लक्षणमित्येव सिद्धे पुनः प्रत्ययग्रहणाद्यत्र प्रत्ययस्यैवासाधारणं रूपं निमित्तत्वेनाश्रीयते सुपि सार्वधातुके इति सुप्तिङन्तमिति तदेव यथा स्यात् तेन गोर्हितमित्यवादेशो न भवति, नह्येचो यवायाव इत्यत्र प्रत्ययस्यासाधारणं किञ्चिद्रूपमुपात्तं किन्तु यीति यदुपात्तं तद्गवे हितमित्यस्मिन्नुदाहरणे यथा प्रत्ययात्मकमित्येतावत्, इत्त्वेमागमयोस्तु हलादौ क्ङिति हलादौ पिति सार्वधातुक इति प्रत्ययस्य प्राधान्येन निमित्तं हल् तु तद्विशेषणमिति नैमौ वर्णाश्रयौ तस्मादलिवध्यर्थमिदमारब्धव्यं, यद्येवं भसंज्ञाङ्गापृक्तेषु दोषः, भसंज्ञायां तावद्राज्ञः पुरुषो राजपुरुष इति श्रूयमाणे प्रत्यये यथा संज्ञा भवति एवं लुप्ते ऽपि स्यात् ततश्च तया पदसंज्ञाया बाधितत्वाद् नलोपो न स्यात् । ननु च द्वे अत्र पदसंज्ञे स्वादाविति च सुप्तिङन्तमिति च, तत्र या स्वादौ पदमिति पदसंज्ञा सा ऽपवादभूतया भसंज्ञया बाध्यते या तु 'सुप्तिङन्त'मिति पदसंज्ञा सा न बाधनीया यथा श्रूयमाणे प्रत्यये राज्ञ इति समुदायस्य । नैतदेवं, श्रूयमाणे प्रत्यये ततः पूर्वस्य भागस्य भसंज्ञा समुदायस्य तु विसर्जनीयान्तस्य पदसंज्ञेति युक्तं विभिन्नावधिकया भसंज्ञया पदसंज्ञा न बाध्यत इति, लुप्ते तु प्रत्यये यस्यैवावधेः स्वादौ पदमिति पदसंज्ञा सुबन्तं पदमित्यपि तस्यैवावधेः पदसंज्ञा तत्रैवावधौ भसंज्ञा भवन्ती यथा ऽपवादत्वात् स्वादिलक्षणां पदसंज्ञां बाधते तथा सुबन्तलक्षणामपि परत्वाद् बाधेत, एवं तर्हि 'न लुमताङ्गस्ये'ति प्रतिषेधाद् भसंज्ञा न भविष्यति यचीति सप्तमीनिर्देशात् ततः पूर्वस्य भागस्य वस्तुतो ऽस्य प्रवर्तमाना भसंज्ञाप्यङ्गकार्यमेव, एवं च बुद्ध्वा 'न ङिसंबुद्ध्यो'रित्यत्र ङौ नलोपः प्रतिषिध्यते, यदि प्रत्ययलक्षणेन भसंज्ञा स्याद् ऽपवादत्वादेवाह्नि चर्म्मणीति नलोपो न भविष्यतीति किं तेन प्रतिषेधेन, इह तर्हि चित्रायां जाता 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यान'मित्यणो लुकि 'लुक्तद्धितलुकी'ति टापि लुप्ते चित्र इति स्थिते प्रत्ययलक्षणेनाणन्तत्वात् ङीप् प्राप्नोति, नैष दोषः । टिड्ढाणञित्यत्राणत इत्यनुवर्तते तत्र चाणाकारो

विशेष्यते अणयोकार इति ततश्चाकार एव ङीपो निमित्तम् अण् तु तद्विशेषणमिति प्रत्ययलक्षणत्वाभावाद् ङीबभावः । इह तर्हि वतण्ड-स्यापत्यं ऽस्त्री वतण्डाद्वेत्यञो 'लुक् स्त्रिया' मिति लुकि वतण्डी शार्ङ्गर-वादिलक्षणं ङीनं बाधित्वा प्राचां ष्फस्तद्धितः सर्वत्रेति सर्वत्रग्रहणस्य पूर्व-त्रापकर्षात्प्राचां मतेन यञन्तलक्षणः ष्फः प्राप्नोति यथा आवट्याच्चापं वा बाधित्वा ष्फ एव भवतीति । नैष दोषः । अत्रापि यञाकारो विशेष्यते यञोऽकार इति यञवयवो योऽकारस्तदन्तादिति तेनात्राप्यकार एव निमित्तं तद्विशेषणन्तु यञिति ष्फो न भवति । अयं तर्हि दोषः परिखीरिति, परि-पूर्वाद्व्येञः क्विपो लोपे यजादित्वात् संप्रसारणे पूर्वत्वे च तुक् प्राप्नोति 'हल' इति दीर्घश्च तत्र विप्रतिषेधेन दीर्घ इष्यते स विप्रतिषेधो न सिद्ध्यति, किङ्कारणम्, इह प्रत्ययलोपे सर्वाणि प्रत्ययाश्रयाणि कार्य्याणि पर्यवसन्नानि तान्यनेन प्रत्युत्पाद्यन्ते, अनेनैव तुगनेनैव दीर्घस्तदेकयोगलक्षणयोरयुक्तो विप्रतिषेधः, नैष दोषः । अवस्थिते प्रत्यये तन्निबन्धनं यत्कार्यं भवत्येव तदे-वानेन लुप्ते तस्मिन् प्रत्युत्पाद्यते, न तु यस्य प्राप्तिमात्रं तदपि परिवीये-त्यादौ श्रूयमाणे प्रत्यये दीर्घ एव परत्वाद् भवति न तुक् ततश्चात्रापि यदि क्विबेवास्यास्यद् दीर्घ एवाभविष्यदिति स एवानेन प्रत्युत्पाद्यते तदेवमार-भ्यं सूत्रं न कश्चिद्दोष इति स्थितम् । अत्रोच्यते । यदुक्तं गुणाह इम् हलाश्रय इति नायं हलाश्रयः, हलीति तत्र निवर्तिष्यते, यदि निवर्तते गुणहानि अत्रापि प्राप्नोति नाभ्यस्तस्याचीत्यतो नाचीत्यनुवर्त्तते ततश्चानल्वि-धित्वात् स्थानिवद्भावेनैव सिद्ध इमागमः, आशीरित्यत्रापि 'आशा-सः क्वाउपसंख्यान' मित्यस्माद् वचनात्सिद्धमित्त्वम्, आरब्धे ऽपि खल्वस्मिं-स्तदवश्यं वक्तव्यं, यदि ताव 'शास इदङ्हलो' रित्यत्र शासिमात्रस्य ग्रहणं ततो नियमार्थमाशासः क्वावेव यथा स्याद् आशास्त इत्यादौ माभूदिति, अथ यस्माच्छासेरङ् विहितस्तस्य ग्रहणं ततो यथाऽऽशास्त इत्यादौ न भवति तथा क्विप्यपि न स्यादिति विध्यर्थमिदम् । इह तर्हि बिदस्याप-त्यानि बहूनि 'अनृष्यानन्तर्ये बिदादिभ्यो ञ्' बिदाः बिदानामपत्यं युवा, ऽत इञ्' तस्य ण्यक्षत्रियार्षे ञित इति लुकि कृते अञो गो त्रबहुत्वउत्पन्नस्य

लुकि प्राप्ते 'गोत्रे ऽलुगची' ति प्रतिषेध इष्यते सोऽन्नादाविति लुक्तेष्य-स्माद्वचनाद्भवति, एतदपि नास्ति प्रयोजनम् अचीति विषयसप्तमी तेन गोत्रेऽजि विवक्षिते ऽनुत्पन्नएव लुकि प्रतिषिद्धे पश्चादिञो लुगिति सिद्धमिष्टं तदेवमल्विधेः कस्य चिद् दर्शनात् स्थानिवद्भावेनैव सिद्धमिति नार्थो ऽनेन। एवं तर्हि नियमार्थमिदं प्रत्ययलोपे प्रत्ययलक्षणमेव यथा स्यात् प्रत्ययाप्रत्ययलक्षणं मा भूदिति, एतदुक्तं भवति। यस्मिन्कार्ये विधीयमाने प्रत्ययस्यैवासाधारणं किञ्चिद्रूपं निमित्तत्वेनाश्रीयते तदेव प्रत्ययलोपे ऽपि भवति न पुनः प्रत्ययाप्रत्ययसाधारणं रूपमाश्रित्य यद्विधी-यते तदिति, तेन शोभना दृषदो यस्य सुदृषदिति 'सौमनसी अलोमोष-सी' इत्युत्तरपदाद्युदात्तत्वं न भवति। अन्यथा लुप्ते ऽपि जसि स्थानि-वद्भावेनासन्तमुत्तरपदमिति स्यात्प्रसङ्गः। प्रत्ययलक्षणं तु न भवति। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ती' त्यस्मा-त्तस्य ग्रहणात्, वृत्तिकारेण तु नियमार्थमप्येतत् प्रत्ययलोपे सर्वत्र प्रवर्त्त-तइति मत्वोक्तं पदसंज्ञा भवतीति। 'आघ्नीयेति'। 'आङो यमहनः'। 'संग्मीयेति'। समो गम्यृच्छीत्यात्मनेपदम् 'इटोत्' 'बहुलं छन्दसी' ति शपो लुक्, उभयत्र गमहनेत्युपधा लोपः॥

न लुमताङ्गस्य॥ लुमतेति लुशब्दो यस्मिन्नस्ति स लुमान् लुगादिः सं-ज्ञाशब्दः, करणे च तृतीया लोपे च करणत्वं, प्रत्ययलोपइत्यनुवृत्तेः लुमता श-ब्देन प्रत्ययलोपे सति अङ्गस्य प्रत्ययलक्षणं कार्य्यं न भवति तत्र च प्रत्यासत्ते-र्लुप्तप्रत्ययापेक्षया येनाङ्गसंज्ञा प्रतिलब्धा तस्य तन्निमित्तं कार्यं न भवती-त्यर्थः। एतदेव वस्तुतो दर्शयति।'लुमता लुप्ते प्रत्यये यदङ्गमिति'। तेनोत्क्रा-मेत्यत्रातो हेरिति लुकि कृते परस्मैपदापेक्षया यदङ्गं शबन्तं न तस्य दीर्घत्वं यस्य च दीर्घत्वं न तत्परस्मैपदापेक्षयाङ्गं किं तर्हि शबपेक्षयेति निषे धाभावात् प्रत्ययलक्षणेन 'क्रमः परस्मैपदेष्वि' ति दीर्घो भवति, तथा 'गमेरिट् परस्मैपदेषु' 'न वृद्भ्यश्चतुर्भ्य' इटो विधिप्रतिषेधौ जिगमिष विवृ-त्सेति परस्मैपदलुक्यपि भवतः, लुमता लुप्ते परस्मैपदे यदङ्गं सनन्तं न

तस्येटो विधिर्निषेधो किं तर्हि सकारादेः प्रत्ययस्येति, इदं चान्यदस्मिन् सूत्रे दर्शितं नाङ्गस्येत्यनेनाङ्गाधिकारः प्रतिनिर्दिश्यते न लुमता लुप्ते प्रत्यये चाङ्गं भवतीति किं तर्हि लुमता लुप्ते प्रत्यये यदङ्गं तस्याङ्गमनाङ्गं च सर्वं प्रतिषिध्यतइति, तेन गर्गाः विदाः यञञोर्लुक्, उष्ट्रग्रीवः 'इवे प्रतिकृतावि' ति कनो 'देवपथादिभ्यश्चे' ति लुप्, पन्थाः प्रियोऽस्य पथिप्रियः, सुपो धात्विति सर्वनामस्थानस्य लुक् अत्र 'ञ्नित्यादिर्नित्यं' 'पथिमथोः सर्वनामस्थान' इति चाद्युदात्तस्यानाङ्गस्यापि निषेधो भवति सप्तमीनिर्देशाद्ध्येतद्वस्तुतो ऽङ्गस्य कार्यं, तथा ऽहर्ददाति 'रोः सुपी' ति रुत्वप्रतिषेधो न भवति । यच्चनाङ्गमपि प्रतिषिध्यते अवधि भवता दस्युः, अगायि भवता ग्रामः, अध्यगायि भवताऽनुवाकः लुङि परतोऽङ्गस्य विधीयमाना हनिणिङादेशाश्चिणो लुगिति लुङो लुकि न स्युः, न लुङि हनिणिङादेशा विधीयन्ते किं तर्हि लुङि यदार्धधातुकं तत्र । ततश्च लुङि यदङ्गं चिणन्तं न तस्य हनिणिङादेशाः अस्य च ते न तल्लुक्यङ्गमिति निषेधाभावः । इह तर्हि 'मा हि दातां सर्पिरागच्छेदिति सिजामन्त्रितयोर्लुकि सति 'आदिः सिचोऽन्यतरस्या'- 'मामन्त्रितस्य चे' ति आद्युदात्तत्वं न स्याद्, नैतदङ्गस्य चिणन्तं कार्यं किं तर्हि तदन्तस्य षष्ठीनिर्देशात् तेन पयः सामेत्यादौ पदसंज्ञा च भविष्यति । ननु यद्यपि तदन्तस्याद्युदात्तत्वं पदसंज्ञा ऽपि तथा लुप्ते इदानीं प्रत्यये वस्तुतोऽङ्गस्य प्राप्नुत इति भवितव्यं निषेधेन, नात्र लुप्ते प्रत्यये यदङ्गस्य प्राप्तं तन्निषिध्यते किं तर्हि अवस्थिते ऽपि प्रत्यये यत्ततः पूर्वस्याङ्गस्य कार्यं तन्निषिध्यते एताः मा हि ताविष्टामित्यादौ च श्रूयमाणे प्रत्यये तदन्तस्यैव पदसंज्ञा स्वरश्चेति लुप्ते ऽपि भविष्यतः, एवं च राज्ञः पुरुष इति श्रूयमाणे ङसि ततः पूर्वस्य भसंज्ञा न तदन्तस्येति अङ्गकार्यत्वात् लुप्ते ऽपि तस्मिन् प्रत्ययलक्षणेन प्राप्ता ऽनेन निषिध्यते ॥

इह तर्हि अत्रेरपत्यानि 'इतश्चानिञः' इति ढकोऽत्रिभृग्विति लुकि कृते अत्रय इति तद्धितस्य 'कित' इत्यन्तोदात्तत्वं स्यात् तदन्तकार्यत्वात् । नैव दोषः । तद्धितस्यैवान्तोदात्तत्वं न तदन्तस्य । इह तर्हि सर्वैः

स्तोमो यस्य सर्वस्तोमः 'सर्वस्य सुपी' त्याद्युदात्तत्वं न स्यात् सुपीति सप्तमीनिर्द्देशात्। कर्त्तव्योऽत्र यत्नः, यत्नश्च सर्वस्य सुप इति षष्ठीनिर्द्देशः षष्ठीनिर्द्देशे तु तदन्तकार्यत्वात् सिद्धस्वरवत् सिध्यति। ननु द्वयोरपि पदयोरभूवन् प्रत्ययलक्षणेन जुस्माप्नोति, 'आत' इति नियमात्र भविष्यति। इह तर्हि देवदत्तं याजयां चकार 'आम' इति लुकं बाधित्वा परत्वात्तिबादिषु कृतेषु तेषां च लुकि प्रत्ययलक्षणेन तिङन्तत्वादामन्तस्य च निघातः ततः परस्यानिघातश्च प्राप्नोति, लेरित्यनुवृत्तेर्लोवस्थायामेव लुग्भविष्यति। इह च देवदत्तो युष्मत्पुत्र इति षष्ठ्यन्तस्य विधीयमानो वांनावौ द्वितीयास्थयोरिति स्थग्रहणात्र भवति षष्ठीचतुर्थीद्वितीयास्ववस्थानं श्रूयमाणस्यैव सम्भवति, इह तर्हि परमवाचा परमगोदुहा परमलिहा परमदण्डिना परमदिवा परमकुमार्येति समासार्था या विभक्तिस्तामाश्रित्योत्तरपदस्य पदसंज्ञायां प्राप्तायां 'चोः कुः' दादेर्धातोर्घः' 'हो ढः' 'न लोपः प्रातिपदिकान्तस्य' 'दिव उत्' 'इको ऽसवर्णे शाकल्यस्य ह्रस्वश्चे' ति एते विधयः प्राप्नुवन्ति, नैष दोषः। भसंज्ञाविषये तावत्सैव पदसंज्ञां बाधिष्यते। ननु च समुदायस्य या पदसंज्ञा स्वादिष्विति प्राप्ता सा तुल्यावधिकया भसंज्ञया बाध्यतां या तूत्तरपदस्य सुबन्तमिति प्राप्ता सा कथं बाध्यते भिन्नावधित्वात्, एवं तर्हि सुप्तिङन्तमित्यतः सुबन्तमित्यनुवर्त्तनीयं ततश्चायमर्थो भवति यजादावसर्वनामस्थाने परतः पूर्वस्समुदायो भसंज्ञो भवति तत्र च समुदाये यत्सुबन्तं वर्त्तते तदपि भसंज्ञं भवति यजादावनन्तरइति, तत्र च समुदायस्य भसंज्ञा प्रधानशिष्टा ऽवयवस्य त्वन्वाचयशिष्टा यत्र च सुबन्तं पश्यति तत्र तस्यापीति, तेन राज्ञ इत्यादौ सुबन्ताभावेपि भवति सुबन्तसद्भावे तु तस्य समुदायस्य चेति विवेक्तव्यम्, सर्वनामस्थानेपि असर्वनामस्थानइति प्रतिषेधात् पदसंज्ञा न भविष्यति। ननु स्वादिष्विति या प्राप्तिः समुदायस्य तस्या एव स प्रतिषेधः, नेत्याह, तत्रापि सुबन्तमित्यनुवर्त्तते प्रसज्यप्रतिषेधश्चाश्रीयते, तत्सामर्थ्या 'दनन्तरस्य विधिर्वा भवति प्रतिषेधो वे' ति नाश्रीयते ततश्चायमर्थो भवति सर्वनामस्थाने परतः पूर्वस्य समुदायस्य स्वादिष्विति

प्राप्ता पदसंज्ञा न भवति तत्र च यत्सुबन्तमवयवत्वेन वर्त्तते तस्य सुब-न्तस्य पदसंज्ञा न भवतीति । यद्येवं सुवाक् सुराज्ञेति सावपि समुदाय-स्यावयवस्य च स्वादिष्विति वा सुबन्तमिति वा पदसंज्ञाया अभावात् कुत्वादि न स्यात्, एवं तर्ह्यसर्वनामस्थानइत्यत्र उत्तरसूत्राद्यची त्यपकृष्यते ततो यजादौ सर्वनामस्थाने या च यावती च पदसंज्ञा सा सर्वा प्रतिषि-ध्यते सौ तु स्वादिष्विति च सुबन्तमिति च भवत्येव, यद्येवं श्रूयमाणेपि सौ पूर्वस्य पदसंज्ञा प्राप्नोति, तत्र को दोषः एचोप्रगृह्यस्येत्यत्र पदान्तग्र-हणं चोदयिष्यति भद्रं करोषि गौरित्यत्र मा भूदिति, तत्र क्रियमाणेपि पदान्तग्रहणे प्लुतविकारः प्राप्नोति । नैष दोषः । वाक्यपदयोरन्त्यस्येत्येवमे-तद्विज्ञायते तदेवं समासेषूत्तरपदस्य पदत्वं नास्तीति स्थितम् । यद्येवं दधिसेचो दधिसेवः 'सात्पदाद्यो'रिति षत्वनिषेधो न प्राप्नोति, नैवं विज्ञा-यते पदस्यादिः पदादिः पदादेर्नेति कथं तर्हि पदादादिः पदादिः पदा-देर्नेति, कथमग्निषु वायुषु त्वक्षु, सात्प्रतिषेधो ज्ञापयति स्वादौ यत्पदं ततः परस्य नेति, अवश्यं च पदादादिरित्येवं विज्ञेयमन्यथा 'गतिकारको-पपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते'रिति यत्र सुबन्तमुत्तरपदं तत्र प्रतिषेधो न स्यात्, इह तर्हि बहुसेचो बहुसेचं बहुचो ऽपदत्वात् प्रतिषेधो न प्राप्नोति, वक्तव्यमेवैतत् 'बहुचूपूर्वस्य ने'ति तत्रायं सूत्रन्यासः सातेः सः षत्वं न भवति, ततो बहुच्, बहुचः परस्य षत्वं न भवति, आ-दिग्रहणं न कर्त्तव्यम् 'आदेः परस्ये'त्येव सिद्धं तदिदं बहुज्ग्रहणेन निमात-व्यम् । 'कार्यते हार्यत इति' । एयन्तात्कर्मणि लकारः यक् णिलोपः । ननु चात्रान्तरङ्गा वृद्धिरत्यचमात्रएव णौ भवति लोपस्तु यकि भवन् बहि-रङ्गः, एवं तर्हि विभज्यान्वाख्यानपक्षे एतत्प्रत्युदाहृतम् ॥

अचोऽन्त्यादि टि ॥ अन्ते भवोऽन्त्यः दिगादित्वाद्यत् अन्त्या-दीति बहुव्रीहिः । यद्यप्यचामित्येतदपेक्षोन्त्यशब्दस्तथापि सम्बन्धिशब्द-त्वेन नित्यसापेक्षत्वाद्विरुद्धः समासः । 'निर्द्धारणे षष्ठीति' । यद्येवं निर्द्धा-रणस्यानेकाश्रयत्वाद् अच इत्येकवचनमनुपपन्नं तत्राह 'जाताविति' । योन्त्योज्जिति निर्द्धारणस्य सजातीयविषयत्वादज्जिति लभ्य, विच्छब्द इत्या-

दि रूपोदाहरणं कार्यन्त्वग्निचितमाचष्टे णिचि णाविष्ठवदिति टिलोपः, पचेते इत्यादि कार्योदाहरणम् ॥

अलोऽन्त्यात्पूर्व्व उपधा ॥ समुदाय एवान्त्यो भवतीत्याह । 'धात्वादाविति' । अल इति प्रसक्तं चेद् अन्त्यस्याविशेषितत्वात् समुदायादपि पूर्वस्य संज्ञायां शिष्ट इति शकारस्येत्वं स्याद् असन्देहार्थमलित्येव च ब्रूयाद् अतोऽन्त्यादित्यनया समानाधिकरणा पञ्चमीत्याह । 'अन्त्यादल इति' । यद्येवं पूर्व्वस्याविशेषितत्वात् समुदायस्यापि संज्ञायां शिष्ट इति शा इति समुदायस्येत्वं प्राप्नोति । अलोऽन्त्यस्येत्यन्त्यस्य भविष्यति । 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारेषु' तत्र यथा ऽऽभ्यामित्यत्र 'हलि लोप' इद्रूपस्य विधीयमानो लोपोऽन्त्यस्य न भवति तथात्रापि न स्याद् अतोऽलोऽन्त्यात्पूर्व्वोऽलिति वक्तव्यमित्यत आह । 'अलेवेति' । एवकारः पौनर्वचनिकः यथान्त्योऽल् एवं पूर्व्वोऽप्यलेवेति । कथं पुनर्द्वितीयमल्ग्रहणमन्तरेणायमर्थो लभ्यते लोकतः । लोके ह्यमीषां ब्राह्मणानामन्त्यात्पूर्व्व आनीयतामित्युक्ते एक एवान्त्यात्पूर्व्वोऽनन्तर आनीयते न समुदायः संयोगोपधग्रहणं कृञर्थमित्यत्रावयवधर्मेण समुदायस्य संयोगस्योपधाव्यपदेशः, अकार इत्यादीनि रूपोदाहरणानि कार्यं तु पाचक इत्यादा 'वत उपधाया' इति वृद्धिः, भेदक इत्यादौ पुगन्तलघूपधस्य चेति गुणः । 'शिष्ट इति' । शासेर्निष्ठा 'शास इदङ्हलो' रितीत्वं 'शासिवसिघसीनां चे' ति षत्वम् ॥

'तस्मिन्निति निर्दिष्टे पूर्वस्य' ॥ इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात् तस्मिन्वणि चेत्यत्रोपात्तस्येदमनुकरणं ततश्च तत्रैवास्य प्रवृत्तिः स्याद्, अस्ति च तत्र व्यवच्छेद्यं हे योऽस्माकीण अस्मभ्यं देहि आस्माकीन युष्मभ्यं ददामीति परनिवृत्तिस्तामिमां भ्रान्तिमपाकरोति 'तस्मिन्निति सप्तम्यर्थनिर्देश इति'। एतेन 'तस्यापत्यं' 'तत्र भव' इत्यादिवत् स्वतन्त्रस्य सर्वनाम्नोऽयं निर्देशस्तद्वदेव तस्मिन्निति सामान्यविशेषणमचिहलीत्यादीनामुपलक्षणं न स्वनुकरणमिति दर्शयति । एतच्चेतिकरणाल्लभ्यते, स हि पदार्थविपर्यासकृत् शास्त्रे

च स्वरूपपदार्थस्तस्य विपर्यासोर्थपदार्थकता, यदि च तस्मिन्नणि चेत्यत्रैवै-
तदुपाख्यास्यत तत्रैव पूर्वग्रहणमकरिष्यतेति भावः, किमर्थं पुनरिदमार-
भ्यते इको यणचीत्यादौ सन्देहः किं सत्सप्तमी किं वा गङ्गायां घोष इतिव-
दौपश्लेषिकाधिकरणे सप्तमीति तत्र सत्त्वं परस्य च पूर्वस्य च सम्भवति
एवमुपश्लेषोपि । तत्र पूर्वस्य परस्य च व्यवहितानन्तरस्य यण् प्राप्तः ।
दध्युदकादिषु तु युगपदेकस्य कार्यित्वनिमित्तत्वायोगात्पर्यायेण यण् प्राप्तः
इष्यते च पूर्वस्यैव स्यादनन्तरस्यैवेति तत्र नियमार्थमिदं सप्तमीनिर्देशे
पूर्वस्य भवति अनन्तरस्यैवेति । इको यणचीत्यादेश्च सकृत्प्रवृत्तिः सा
चैवं विशेषितेति न क्वाप्यनिष्टशङ्का । तत्राद्यं नियमं दर्शयति । 'पूर्वस्यै-
वेति' । व्यावर्त्यं दर्शयति । 'नोत्तरस्येति' । 'पचन्त्योदनमिति' । यद्यप्य-
त्रानियमप्रसङ्गो नास्ति तथापी 'को यणची' त्यस्मिन्सूत्रेऽनियमप्रसङ्गे नियमः
क्रियतइत्येतदपि भवत्येवोदाहरणम् । द्वितीयं नियमं दर्शयति । 'निर्दि-
ष्टग्रहणमिति' । दिशिरुच्चारणक्रियः निःशब्दो नैरन्तर्यं निरन्तरं दिष्टो
निर्दिष्ट इत्येवमानन्तर्यमर्थो भवति, तत्रैवं वचनव्यक्तिः, अचि हलीत्यादौ
पूर्वस्यैव कार्यं भवति तत्र निर्दिष्टे निरन्तर एवोच्चारित इति तत्रार्थात्पूर्व-
स्यानन्तरस्येत्यर्थो भवति तदाह । 'व्यवहितस्य माभूदिति' । अन्यथा व्यव-
हिते मा भूदिति वक्तव्यं पूर्वपदस्य व्यवहितेपि वृत्तेः तस्य प्रसङ्गात् ॥

तस्मादित्युत्तरस्य ॥ 'निर्दिष्टग्रहणमनुवर्त्तत इति' । तेनात्रापि
व्यवहिते कार्यं न भवतीति भावः । अत्रापीतिपरत्वादनुकरणमिति
कस्य चिद्भ्रान्तिः स्यात् 'तस्मान्नुड् द्विहल' इत्यत्र 'त आदे' रिति दीर्घात्पू-
र्वस्याङ्गस्यासम्भवात् प्रयोजनाभावात्, यद्यपि तस्यानुकरणं न भवति
'तस्माच्छसो नः पुंसि' 'तस्मान्नुडचि' त्यत्र तु व्यवच्छेद्यमस्ति उच्चारितो
ऽनुपलभ्यते गौरनश्व इति, पूर्वस्य माभूदिति, अतस्तयोरेवेदमनुकरणमिति
तामिमां भ्रान्तिमपाकरोति 'तस्मादिति पञ्चम्यर्थनिर्देशइति' एतेन
पूर्वसूत्रवत् स्वतन्त्रस्य सर्वनाम्नोऽयं निर्देशात् तद्वदेव च तस्मादिति
सामान्यमतिङ इत्यादीनां विशेषाणामुपलक्षणं न त्वनुकरणमिति दर्श-
यति, एतच्चेतिकरणाल्लभ्यतइत्युक्तम् । किमर्थं पुनरिदमारभ्यते

'तिङ्ङतिङ' इत्यादौ कारकविभक्तेरसम्भवाद्दिग्योगलक्षणा पञ्चमीति दिक्शब्दस्त्वध्याहार्यस्तत्र पूर्वोत्तरशब्दयोरध्याहारः सम्भवतीति नियमार्थो परिभाषेयं तदाह । 'उत्तरस्यैव कार्यमिति' । तदेवं पूर्वस्य चास्य च वृत्तिकारेण नियमार्थत्वं दर्शितम् । षष्ठीप्रक्लृप्तिपक्षोऽपि भाष्ये प्रदर्शितः, कथं, षष्ठीति वर्तते सप्तम्यर्थनिर्देशे पूर्वस्यानन्तरस्य षष्ठी । पञ्चम्यर्थनिर्देश उत्तरस्यानन्तरस्य षष्ठीति तत्रेकोयणचीत्यादौ यत्र पूर्वमेव षष्ठी विद्यते तत्र पूर्वस्यानन्तरस्य नोत्तरस्यानन्तरस्य सा षष्ठीत्युच्यते 'आने मुक्' 'ईदास' इत्यादौ तु यत्र षष्ठी नास्ति तत्र षष्ठ्यपि प्रकल्प्यते सा चानियतयोगत्वात् स्थानषष्ठी भवति यस्य च स्थानषष्ठी तस्यैव कार्यमिति सर्वत्र कार्यनियमोऽपि सिध्यति । यत्र तूभयनिर्देशस्तत्र यानवकाशा सा इतरस्याः षष्ठीं प्रकल्पयति यथानेमुगिति सप्तमी निरवकाशा 'ऽतो येय' इति पञ्चम्याः पूर्वसूत्रे सावकाशायाः, एवमीदास इति पञ्चमी आनेमुगिति सप्तम्या, उभयोस्त्वनवकाशयोः परत्वात्पञ्चमी सप्तम्याः षष्ठीं प्रकल्पयति । यथा 'ऽऽमि सर्वनाम्नः सुडि'ति सर्वनाम्न इति पञ्चम्यनवकाशामीति सप्तम्या अनवकाशायाः, अथ सप्तम्युत्तरार्था तथाप्यादित्यनुवृत्तया पञ्चम्या समानाधिकरणा सर्वनाम्न इति पञ्चम्यपि सावकाशा षष्ठीं प्रकल्पयति । एवं नियमपक्षेऽपि परत्वानवकाशत्वाभ्यां व्यवस्था द्रष्टव्या । दीर्घाच्छे तुग्भवतीत्यत्र षष्ठ्याः स्थाने पञ्चमी व्याख्यानाद् दीर्घस्यैव तुक् भवति न तु ह्रस्य तथा च सुराच्छायेति निर्देश उपपद्यते ॥

स्वंरूपं शब्दस्याशब्दसंज्ञा ॥ स्वरूपस्य पर्यायाणां च ग्रहणे प्राप्ते नियमार्थो परिभाषेयं, शास्त्राङ्गत्वाच्च परिभाषाणां शास्त्रएव नियमो न लोकइत्याह । 'शास्त्रे स्वमेवेत्यादि ग्राह्यमिति' । ग्राह्यमिति णिजन्ताद् यत्, एतच्चाध्याहारेण लभ्यम् । 'शब्दस्येति' 'कृत्यानां कर्तरि वे' ति षष्ठी. शब्दः स्वमेव रूपं ग्राहयति बोधयतीत्यर्थः । संज्ञापक्षे तु वृत्तावेव शब्दः संज्ञा[1]नुच्चारणं च नोपपद्यते सूत्रे षष्ठीनिर्देशोऽपि नातीव युक्तः स्यात् । संज्ञा-

१ शब्दानुच्चारणमिति पा॰ २ पुस्तके ।

संज्ञिसम्बन्धे प्रायेण सामानाधिकरण्यदर्शनात् । रूपशब्देन चेहाग्निशब्द-
त्वादिकं शुकसारिकापुरुषादिभिरुदीरितासु भिन्नासु शब्दव्यक्तिषु सम-
वेतं सामान्यमभिधीयते । 'अग्नेर्ढगि'ति सूत्रकारेण या व्यक्तिरुच्चारिता
तस्याः सर्वोच्चारणेष्वनुगतं सामान्यं वाच्यमित्यर्थः । सामान्यस्य कार्ययोगो
व्यक्तिद्वारक इति तेनतेनोच्चारितायास्तस्या व्यक्तेर्ढग् भवतीत्यर्थः सम्प-
द्यते । एवकारस्य व्यवच्छेद्यं दर्शयति । 'न वाह्योर्थ इति' । 'शब्दसंज्ञां
वर्जयित्वेति' । शब्दसंज्ञासु स्वरूपं ग्राह्यं न भवतीत्यर्थः । अनियमप्रसङ्गे
नियमः कर्त्तव्यस्तं दर्शयति । 'शब्देनेत्यादि' । लोके गौरुपलभ्यता-
मित्युक्तेऽर्थे एव कार्ययोगो गम्यते नहि शब्दरूपमुपलभ्य कृती भवति,
व्याकरणे तु प्रत्ययविधानादिकार्यमर्थे न सम्भवति तेन सह पौर्वापर्या-
योगात् । तेनाग्नेर्ढगित्युक्ते लोकवदर्थे एव तावत्प्रतीयते तत्र सम्भवो
नास्त्यतस्तद्वाचिनां सर्वेषां सम्प्रत्ययः स्याद् यथा आकृतिचोदनायां
व्यक्तीनां, माभूदेव दोषः, उपात्तादेव यथा स्यादिति नियमार्थमिदमारभ्यत
इत्यर्थः । 'औदश्वित्कमिति' । उदश्विति संस्कृतमिति सप्तमीसमर्था-
ट्ठक् 'इसुसुक्तान्तात्कः' । 'घुग्रहणेष्वित्यादि' । अन्यथा 'उपसर्गे घोः
कि'रिति किप्रत्ययो धातोरेव घोः शब्दार्थोत्स्यान्न तु दाधाभ्यः 'ईद्-
त्यघो'रित्यत्र तु घुशब्दस्यानाकारान्तत्वाद्दाधानामेव ग्रहणं सिध्यति ।
कुमारीघ इत्यत्र घरूपेति ह्रस्वप्रसङ्गः । ननु च प्रदेशेषु संज्ञिसम्प्रत्याय-
नार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति, नैतदस्ति ।
उभयगतिरिह शास्त्रे सम्भवतीति सङ्ख्याकर्मकरणादिष्विव स्वरूपस्य संज्ञि-
नश्च प्रदेशेषु ग्रहणं स्यात् ज्ञापकात्सिद्धं, यदयं ष्णान्ता षडिति षकारा-
न्तायाः सङ्ख्यायाः षट्संज्ञां विदधाति तज्ज्ञापयति संज्ञाशब्दो न स्वरूप-
ग्राहक इति अन्यथा 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्चे'त्यादौ स्वरूपस्यापि
षडित्यस्य ग्रहणात् षकारान्तायाः सङ्ख्यायाः षट्संज्ञा न विदध्यात् । ननु
च षकारान्ता संज्ञा षकारान्तस्य कार्यमिष्यते संज्ञापि षकारान्तैव, अतो
नार्थोशब्दसंज्ञेत्यनेन, सत्यं, प्रतिपत्तिगौरवपरिहारार्थः प्रतिषेधः शब्दशब्देन
चाभेदोपचारात् व्याकरणमुच्यते शब्दे संज्ञा शब्दसंज्ञैवं च कर्मकरणमित्या-

दिष्वर्थसंज्ञास्वपि शास्त्रीयासु स्वरूपग्रहणं न भवति । अथ रूपग्रहणं किमर्थं इह यावता प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वान्नित्यसम्बन्धित्वाच्च तदेव शब्दस्य स्वार्थः हि स्वप्रतीतौ सम्बन्धग्रहणमपेक्षते पर्यायैरपि प्रत्यायनात्साधारणश्चानित्यसम्बन्धश्चानुकरणदशायामभावात्, न चार्थो ग्राहकः शक्यते कर्तुं ग्राह्यत्वे च सूत्रमनर्थकं स्यादिति नार्थो रूपग्रहणेन, एवं तर्ह्येतज्ज्ञापयति शास्त्रे स्वरूपेण समानकल्पोऽर्थ इति, तेनार्थवद्ग्रहणेनानर्थकस्येत्युपपन्नं भवति तत्र ज्ञापकादर्थोऽपि ग्राह्यः स्वं रूपमितिवचनाद् रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणं तेन काशे कुशइत्यत्र 'शे' प्रगृह्यसंज्ञाभावः सिद्धः । सित्तद्विशेषाणामिति वार्तिकं व्याचष्टे । 'सिन्निर्देशः कर्तव्यइति' । वृक्षस्इत्येवम् । 'ततो वक्तव्यमिति' । स्वंरूपमित्यस्यानन्तरम् । ननु किं प्रयोजनमित्युक्ते वृक्षादीतिवक्तव्यं किमुच्यते वृक्षाद्यर्थमिति, वृक्षादिषु प्रयोजनमस्येत्युक्ते वृक्षाद्यस्य प्रयोजनमित्यर्थादुक्तं भवतीत्यदोषः । अस्यार्थस्य न्यायतः सिद्धिं विभाषेत्यत्र वक्ष्यामः । 'पित्पर्यायवचनस्य चेति' । चकारात् स्वरूपस्य विशेषाणां च । इदं वाचनिकमेव ञित्पर्यायस्येत्यस्यापि न्यायतः सिद्धिं वक्ष्यामः । 'झित्तस्य चेति' । इदं वाचनिकमेव । मृगपक्षिणोस्तु पिन्निर्देशः कर्तव्य इत्याहुः । 'अथेकस्येति' । इयमिष्टिरेव ॥

अणुदित्सवर्णस्य चाप्रत्ययः ॥ संज्ञासूत्रमेतत् न परिभाषा, प्रसिद्धार्थविनियोगात् । 'परेण णकारेणेति' । एतच्च लणित्यत्र प्रतिपादितम् । 'स्वस्य च रूपस्येति' । यद्यपि प्रथमान्तं प्रकृतं तथापि सवर्णस्य चेति षष्ठ्यन्तस्यानन्तरं श्रूयमाणश्चशब्दोऽन्यस्य षष्ठ्यन्तस्याभावात् तस्यैव षष्ठ्यन्ततां प्रकल्पयतीति भावः । 'प्रत्ययं वर्जयित्वेति' । तेन तत्रोच्चारितमेव रूपं गृह्यते 'आद् गुण' इत्यादि यथेह भवति देवेन्द्र इति एवं खट्वेन्द्र इत्यादावपि भवति । 'अस्य च्वौ' । यथेह भवति शुक्लीभवतीति एवं मालीभवतीत्यादावपि भवति । 'यस्येति च' यथेह भवति दाक्षिः लाक्षिरिति एवं चौडिर्बालाकिरित्यादावपि भवति । चूडाबलाकाशब्दौ बाह्वादौ, ननु चाको ऽचीत्यादौ प्रत्याहारग्रहणे कथं मध्यव

र्त्तिभिरिकारादिभिस्सवर्णग्रहणं उच्चारितो हि संज्ञाशब्दः संज्ञिनं प्रत्याययति, न च मध्यवर्त्तिनामुच्चारणमस्ति ते ह्यगादिसंज्ञाभिः संज्ञित्वेन प्रत्याय्यन्ते, क्व तर्हि स्यात् 'अस्य च्वौ' यस्येति यत्र संज्ञाया उच्चारणमस्ति प्रत्याहारे चाद्यो वर्ण उच्चारितत्वात्सवर्णग्राहकः । स्यादेतत् । अक्षरसमाम्नायउच्चारिता इकारादयः सवर्णानां ग्राहका इति अगादिचोदनासु ईकारादयोऽपि ह्रस्ववत्संज्ञित्वेनैव प्रतीयन्ते न त्विकारादिभिः प्रतीतैः प्रत्याय्यन्त इति नापरकालत्वात्, इह वर्णानामुपदेशस्तावद् उपदेशोत्तरकाला इत्संज्ञा इत्संज्ञोत्तरकालमादिरन्त्येनेत्येतत्प्रवर्त्तते ततोऽण् सवर्णस्येति, तदनेनोपदेशादिष्वङ्गेषु निष्पन्नेषु अन्यत्रास्य च्वावित्यादौ सवर्णानां ग्रहणं भवति नाङ्गेषु नापि स्वात्मन्यनिष्पन्नत्वात् । यदि त्वस्मिन्नपि सूत्रे सवर्णग्रहणं स्यात् आद्गुणमहनः 'वृद्धिरेचि'त्यादौ आकारादयोऽपि सवर्णान् गृह्णीयुः अतोऽस्मिन् सूत्रे ऽक्षरसमाम्नाये चागृहीतसवर्णानां ग्रहणं ततश्च तदेव स्थितं प्रत्याहारेषु मध्यवर्त्तिभिः सवर्णग्रहणं न स्यादिति । नैष दोषः उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति नियमः बुद्ध्युपारूढास्तु प्रत्यायकाः अस्ति च मध्यवर्त्तिनां बुद्ध्युपारोहस्ततश्च संज्ञित्वेन प्रत्याय्यमानस्यापि प्रत्यायकत्वं भविष्यति। अत्र ज्ञापकं 'दीर्घाज्जसि चेति' प्रतिषेधः स हि कुमार्यावित्यादौ 'प्रथमयोः पूर्वसवर्ण' इति दीर्घो माभूदिति तत्र चाक इति वर्त्तते खट्व इत्यादौ तु नादिचीत्येव सिद्धः प्रतिषेधः 'दीधीवेवीटां'त्वादिभ्य इत्यादयश्च निर्देशा एवमेवोपपद्यन्ते, यदि मध्यवर्त्तिभिरपि सवर्णग्रहणं भवति । स्वरानुनासिकेत्यादिरुदात्तः सूत्रे गृहीतः स्वरान्तरभिन्नमपि गृह्णाति एवमनुदात्तस्वरितौ च तथा सानुनासिको निरनुनासिकं सोऽपि तम् । 'दीर्घो न भवतीति' । असति त्वप्रत्यय इत्यस्मिन् प्रत्ययेनापि सवर्णग्रहणात् दीर्घोऽपि स्यात्, । अत्यल्पमिदमुच्यते ऽप्रत्यय इति 'अप्रत्ययादेशटित्किन्मित इति वक्तव्यं,' प्रत्यये प्रत्युदाहृतं तत्रादेशे 'इदम इश्' इतः इह विशेषविहितत्वात्त्यदाद्यत्वं बाधित्वा त्रिमात्रिक आदेशः प्राप्नोति, टिति 'आर्द्धधातुकस्येड्वलादेः' पठितो दीर्घोऽपि स्यात् 'ग्रहो लिटि दीर्घ' इत्येतत्तु

यद्धेर्दीर्घं एव न ह्रस्व इति नियमार्थं स्यात् 'वृतो वे' त्येतदपि ववरि-थेति लिटि दीर्घो माभूदित्येवमर्थं स्यात् । किति 'भुवो वुग्लुङ्लिटो' र्वे-भूव अनुनासिकोऽपि स्यात्, मिति 'अम् सम्बुद्धौ' हेअनड्वन् आमपि स्यात्, एवं तर्ह्यप्रत्यय इति नेह संज्ञायहणं किं तर्हि अन्वर्थग्रहणं प्रतीयते विधीयतइति प्रत्ययो भाव्यमानः सवर्णान् गृह्णातीत्यर्थः । इत्यादयोपि भाव्यन्ते । संज्ञाप्रत्ययस्य तु नावश्यकः प्रतिषेधः । येनार्थम्प्र[1]तियन्ति स प्रत्ययः नहि दीर्घप्लुतयोरर्थस्याभिधानमस्ति । 'कुहोः श्चु' रित्यादौ भाव्य-मानस्याप्युदित्वसामर्थ्यादप्रत्यय इति निषेधाभावः । तथा च पठ्यते भाव्यमानोण् सवर्णान् गृह्णातीति ॥

तपरस्तत्कालस्य ॥ 'तः परो यस्मादिति' 'बहुव्रीहिं दर्शयति' तादपि परस्तपर इति पञ्चमीतत्पुरुषम् ॥ स पुनरस्मादेव निपातनाद्बु-द्धितव्यः । एकस्यापि तपरशब्दस्य तन्त्रावृत्त्योरन्यतराश्रयणादर्थभेदो न विरुद्धः तत्र बहुव्रीहेर्लिङ्गं 'अतो भिस ऐस्' इति तपरकर[2]णं तत्पुरुषस्य लिङ्गं वृद्धिरादैजित्यैजर्थं हि तदित्युक्तम् । 'तपरो वर्ण इति' । वर्णस्यैव सवर्णसम्भवाद्वर्ण इत्युक्तं तत्कालस्येति बहुव्रीहिः स कालोऽस्येति, अयुक्तोयं निर्देशः । तदित्यनेन तपरो वर्णः परामृश्यते । प्रसिद्धपरिमाणा च क्रिया प्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका, कालो यथा दिवसमधीतइति दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते स चाध्ययनस्य परिच्छेदकत्वात् कालः, वर्णस्तु क्रियात्मको न भवतीत्ययुक्तं वर्णवाचिन-स्तच्छब्दस्य कालशब्देन सामानाधिकरण्यम् । एवं तर्ह्युत्तरपदलोपी समासो द्रष्टव्यः उष्ट्रमुखवत् गम्यमानार्थत्वाच्चाप्रयोगएव लोपः, यथा उष्ट्रो मुखम-स्येत्येव विग्रहः, न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात्सादृश्यप्रतीतिः उष्ट्रइव मुखमस्येति मुखेनैव मुखस्य सादृश्यं प्रसिद्धं न कृत्स्नेनोष्ट्रेणेति सामर्थ्यादयमर्थो भवति उष्ट्रमुखमिव मुखमस्येति, एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रिया क्रियान्तरेण निमेषादिना परिच्छिन्ना

१ येनार्थः प्रतीयते इति पा॰ २ पु॰ ।
२ तपरकरणात् इति पा॰ २ पु॰ ।

सती वर्णान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक इत्युच्यते स कालो ऽस्येत्यस्य कोऽर्थः तत्कालसंबन्धिनी क्रिया परिच्छेदिका अस्येत्यर्थः । एतदेव दर्शयति । 'आत्मनेत्यादिना' ॥ तपरवर्णसविधावुच्चारितोऽयमात्मशब्दस्तत्सहचरितायामुच्चारणक्रियायां वर्तते वर्णेन क्रियायास्तुल्यत्वानुपपत्तेर्यादृशी तपरस्य वर्णस्योच्चारणक्रिया निमेषादिपरिच्छिन्ना तादृश्युच्चारणक्रियाऽस्येत्यर्थः । 'गुणान्तरयुक्तस्येति' । यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्येत्यर्थः । किं पुनरिदं नियमार्थमाहो स्विद्विध्यर्थम्, तत्राणित्यनुवृत्तौ नियमार्थं तपरो[1]वर्णस्तत्कालस्यैवेति । निवृत्तौ विध्यर्थं तत्राद्ये पक्षे 'आतो धातोः' 'आतां पुङ् णौ' 'यस्येति च' 'विड्वनोरनुनासिक स्यादि'त्यादौ भेदका गुणा इत्यस्मिन् दर्शने यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्य ग्रहणं न स्यादिति द्वितीयं पक्षमाश्रित्याह । 'विध्यर्थमिति' । अत्र हेतुमाह । 'अणिति नानुवर्त्ततइति' । यदि विध्यर्थमिदं ततोऽस्यानणसु चरितार्थत्वादणसु पूर्वमेव प्रवर्त्तेत तत्राह । 'अणामन्येषां चेति'। एतदेव विशदयति। 'अतो भिस ऐसित्येवमादिष्विति' 'न प्रवर्त्तेत एवेति' । परेणानेन बाधितत्वादिति भावः । विरोधो ह्यत्र वर्तते पूर्वसूत्रेण ह्यष्टादशानां ग्रहणमनेन तु षण्णामिति । 'किमुदाहरणमिति' । अभेदकत्वात् गुणानामनणसु सिद्धमिति प्रश्नः, अणसु भिन्नकालनिवृत्त्यर्थं तावदारब्धव्यं सूत्रं तदेवानण्स्वपि विधिमुखेन प्रवर्तमानमिष्टं साधयतीत्युत्तरम् । 'विड्वनोरनुनासिकस्यादिति' कस्य पुनरत्र सवर्णस्य ग्रहणमिष्यतइति चिन्त्यं तस्मादुपलक्षणमेतत् । 'आतो धातोः' 'यस्येति चे'त्यादावेव प्रयोजनं, 'तत्कालस्येति किमिति' । प्रधानावयवद्वारेण सूत्रमेवाक्षिप्यते । 'खट्वाभिरिति' । वर्णाश्रयविधावन्तादिवद्भावो न भवति ॥

आदिरन्त्येन सहेता ॥ इदमपि संज्ञासूत्रमाद्यन्तयोर्मध्यापेक्षत्वात् मध्यवर्तिनां संज्ञित्वं विज्ञायते स्वंरूपमित्यनुवृत्तेः स्वरूपस्य चेत्याह । 'मध्यवर्त्तिनामिति' । यद्यप्याद्यन्तावयवाश्रयपर्वाविनः समुदायरूपस्य

१ आ इति पा॰ ३ पुस्तके ।

सम्बन्धिनौ तथापि तस्य युगपल्लब्धि प्रयोगाभावात्समुदायिनां संज्ञेति दर्शयति । 'वर्णानामिति' 'स्वस्य च रूपस्येति' । स्वरूपमादेरेव गृह्यते नान्त्यस्याप्राधान्यादिति द्रष्टव्येति केवल एव यकारः प्रवर्त्तते न णकारेण सहितः सहग्रहणादाद्यन्तौ समुदितौ संज्ञेति समुदायादेव विभक्तिर्भवति 'इको यणची'ति नादिमात्रात् । 'टाइत्यनेन ग्रहणं माभूदिति' । तावतोवधेरविवक्षितत्वादयमन्त्यः 'टाङसिङसामिनात्स्याः' 'द्वितीयाटौस्स्वेन' इति तृतीयैकवचनस्यासौ विशेषणार्थः ॥

येन विधिस्तदन्तस्य ॥ स्वरूपविधिपरिहारायायमारम्भः । इदमपि संज्ञासूत्रं येनेति करणे तृतीया विधीयतइति विधिः कर्म्मसाधनः किप्रत्ययः । 'विधिर्विधीयतइति' । विधिशब्देन विधानयोग्यं वस्त्वभिधीयते तस्य सांप्रतिकक्रियाविशेषद्योतनायाख्यातप्रयोगः । आसने आस्ते करणेन करोतीतिवत् । तदन्तस्येति बहुव्रीहिः । तदित्यनेन येनेति निर्दिष्टः करणभूतः शब्दो निर्दिश्यते तदाह । 'आत्मान्तस्येति' । अन्तशब्दस्यावयववाचित्वात्तदाक्षिप्तस्य समुदायस्येयं संज्ञेत्याह । 'समुदायस्य संज्ञा भवतीति' 'अवश्यलाव्यमिति' । मयूरव्यंसकादित्वात्समासः, लुम्पेदवश्यमः कृत्यइति मलोपः । अथेह कस्मादेजन्तस्य संज्ञा न भवति 'एचोयवायाव' इति, किं स्यात् अनेकाल्त्वादयादयः सर्वादेशाः स्युस्ततश्च चयनलवनादिष्वयनमिति प्राप्नोति प्रकरणादिवशाच्चातादिवदर्थविशेषावगतिः स्यात्, नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं भविष्यन्ति, अथ वा यथा एचा तदन्तविधिः एवमयादिभिरपि भविष्यति एवम् 'आद् गुण' इत्यत्र आदित्यवर्णान्तो गृह्यते अचीति चाज्ञादेरिति खट्वेन्द्र इत्यादाववर्णान्तस्य समुदायस्याज्ञादेश्च गुणप्रसङ्गः षष्ठीनिर्दिष्टान्निर्दिश्यमानस्येत्यपि नास्ति एवं तर्हि नैवंविधोऽस्य विषयः । येनेति करणे तृतीयेत्युक्तम्, करणं च परतन्त्रं कर्त्रधिष्ठितस्यैव करणत्वात् न चैरज्ञित्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं स्वरूपतोऽवभासते । 'वा स्यादिति' । इकादीनामतो विवक्षानिबन्धनं तदुभयमिति विशेषणत्वेन विवक्षितं परतन्त्रमप्रधानं विशेष्यत्वेन विवक्षितं स्वतन्त्रं प्रधानं तेन विशेषणं विशे-

ण्यस्य तदन्तस्य संज्ञेत्युक्तं सम्भवति विशेष्यसंनिधौ च विशेषणं भवति संनिधिश्च क्व चित्साक्षान्निर्देशेन यथेदूदेद्द्विवचनमिति द्विवचनस्य । क्व चिदधिकाराद्यथा 'एरजि' ति धातोः, क्व चिदाक्षेपाद्यथे 'को झलि' ति सना धातोः । 'एचो ऽयवायाव' इत्यादौ न कथं चिद्विशेष्यसंनिधिरिति नैतत्प्रवर्तते, यदि विशेषणं तदन्तस्य संज्ञा तत 'उदोष्ठ्यपूर्वस्ये'त्यत्र ऋकारस्तदन्तस्य धातोः संज्ञेति ओष्ठ्यपूर्वग्रहणं धातोरेव विशेषणं स्याद् न ऋकारस्य संज्ञायाः संज्ञिप्रत्यायनार्थत्वात् ततश्चेह स्यात् सङ्कीर्णमिति, पूर्तमित्यादौ च न स्यात्, एव 'मुतश्च प्रत्ययादसंयोगपूर्वादि' त्यत्रासंयोगपूर्वग्रहणमङ्गस्य विशेषणं स्यात् नोतः, नैष दोषः । इयं हि संज्ञा गुणप्रधानभावापेक्षा ततश्चोतश्च प्रत्ययादित्यादौ विशेषणसम्बन्धवेलायां गुणभावास्फुरणात्तमनुभूय पश्चात् विशेष्येण सम्बन्धे संज्ञा भवति । 'समासेति' । अनेनैतदाह श्रितादयो पश्चात् विशेष्यास्तद्विशेषणं च सुप्, एवं 'नडादिभ्यः फगि' त्यादौ नडादिविशेष्यं प्रातिपदिकं विशेषणमिति । 'कष्टं परमश्रित इति' । श्रितान्तमेतत्सुबन्तं न भवतीति सम्बुध्यन्तं पठितव्यं तद्धि प्रत्ययलक्षणेन सुबन्तं भवति श्रितान्तं च श्रूयते । 'नेत्याहेति' । कः पुनराह उत्तरवादी आचार्यो वा । 'उगिद्वर्णेति' । उगिता वर्णेन च प्रातिपदिकं विशेष्यमित्यर्थः । यस्मिन्विधिरिति तदन्तविध्यपवादस्तदादिविधिः, अतो विशेषणेनैव भवति ॥

वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ समुदायस्यैवाचामादिः सम्भवतीति स एव यस्येत्यनेनोच्यत इत्याह । 'यस्येति समुदाय उच्यत इति' । संज्ञिनिर्देशार्थं चेदम्, अन्यथा तच्छब्देन किं परामृश्येत तदित्यस्यानुपादाने वृद्धिरेव सा वृद्धसंज्ञा स्यात् । 'अचां मध्य इत्यादि' । अत्र यस्येत्यस्याचामित्यनेन सम्बन्धः आदिश्च निर्धार्यते वृद्धिर्विधेयो धर्म आदिशब्दश्चोपक्रमवचनः उपक्रम्यत इत्युपक्रमः प्रथम उच्चार्यत इत्यर्थः । यस्य समुदायस्य सम्बन्धिनामचां मध्ये प्रथमत उच्चार्यमाणो वृद्धिसंज्ञक इत्यर्थः । 'अचाविति जातौ बहुवचनमिति' । तेन द्वयोरपि भवतीति भावः । एकस्यापि व्यपदेशिवद्भावाद् भवति । 'शालीय इति' । अत्र समुदायस्य हलादित्वेऽप्यज्व्यपेक्षया प्रथमोऽच् वृद्धिरिति संज्ञा भवति ।

ननु च निर्द्धारणस्य तुल्यजातीयविषयत्वान्निर्द्धार्यमाण आदिरप्यत्रैव प्रती-
यते न वा ऽऽकारोऽच् । अक्षरसमाम्नायेऽनुपदेशात् कथं तर्हि सोमपं
ब्राह्मणकुलमिति अच्कार्यं ह्रस्वत्वं भवति सवर्णग्रहणाच्च त्वच्त्वात् ॥
इहापि तर्हि सवर्णग्रहणाद्भविष्यति । स्यादेवं यदि अज्ग्रहणमुच्चारितं
स्याद् इह तु निर्धारणस्वभावात्प्रतीयते, अस्तु तथाप्रतीयमान एव सवर्णं ग्रही-
ष्यति यथाऽग्रहणे मध्यवर्त्तीकारादिः । किन्त्वाचामिति निर्द्धारणाश्रये तावद-
कारस्योच्चारितत्वाद् आकारोऽपि प्रतीयते तेन निर्द्धार्यमाणस्याप्याकारा-
देस्तथा भूतमेवाच्त्वं प्रतीयतइति यत्किञ्चिदेतच्चोद्यम् । 'वा नामधेय-
स्येति' । नामधेयशब्दः साङ्केतिकेषु रूढः । 'देवदत्तीया इति' । काश्या-
दिषु देशवाची देवदत्तशब्दः पठ्यते । 'एङ् प्राचां देश' इति वृद्धसंज्ञकः
काश्यादिभिः साहचर्यादित्यदेशवाचिनश्छ एव भवति, वाहीकग्रामवाचि-
नोऽपि देवदत्तशब्दस्यानादित्वेनासाङ्केतिकत्वाद् अप्राचां देशवाचित्वाच्च
वृद्धसंज्ञायाश्चाभावात् काश्यादिलक्षणौ ठञ्ञिठौ न भवतः । 'गोत्रान्ता-
दित्यादि' । गोत्रशब्देन गोत्रप्रत्ययान्तं गृह्यते तदन्तादसमस्तवत् केव-
लात् गोत्रान्ताद्यः प्रत्ययो भवति स एव तदन्तादपि भवतीत्यर्थः ।
'घृतरौढीया इति' । रूढस्यापत्य 'मतइञ्' शैषिकेष्वर्थेष्विञश्चेत्यणो 'न
द्व्यचः प्राच्यभरतेषु' इति निषेधाद् 'वृद्धाच्छः' एवं वृद्धाम्भीयाः अम्भसो-
ऽपत्यं 'सम्भूयोम्भसोः सलोपश्चे'ति बाह्वादिषु पाठादिञ् सलोपश्च ।
'ओदनपाणिनीया इति' । पणिनोऽपत्यमित्यण् गाथिविदथीति प्रकृतिभावा-
'ट्टे'रिति टिलोपाभावः पाणिनस्यापत्यं पणिनोयुवेति इञ् तस्य छात्रा
इति विवक्षिते 'यूनि लुगि'ति इञो लुकि कृतेऽपि प्रत्ययलक्षणेन 'इञश्चे'-
त्यण् प्राप्तो गोत्राधिकाराच्च भवति 'कण्वादिभ्यो गोत्र' इत्यत्र तावत्
पारिभाषिकं गोत्रं गृह्यते तद्वदेवेञश्चेत्यत्राप्यनुवर्त्तते तेन यूनीञ् न भवति
कश्यपशब्दो विदादिः, कतशब्दो गर्गादिः, जिह्वावपतो हरितभवश्च'
कात्यस्ततोऽणेव भवति कः पुनरत्र प्रत्ययातिदेशप्रस्तावः यावताशैषा-
धिकारे प्राग्दीव्यतोऽणित्यत्र चैतद्वक्तव्यं, सत्यं,केचित्तु गोत्रान्तस्य वृद्धसंज्ञा
विहिता एवमपि वृद्धाम्भीया इति सिद्धेः वार्तिककारस्तु वृद्धसंज्ञायां सत्यां

पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वा इति 'वृद्धाच्छः' स्यात् प्रत्ययातिदेशे तु 'कण्वादिभ्यो गोत्र' इत्यण् लभ्यतइति मन्यमानः पूर्ववाक्येन परमतमुपन्यस्यानेन वाक्येन निरस्यति स्म, तदेव पठितं वृत्तिकारेण ॥

"त्यदादीनि च" ॥ 'उत्तरार्थमिति'। तत्र प्रयोजनवत्त्वात् यस्याचामादिरेङिति सम्बन्धसम्भवाच्च । 'इह तु न सम्बध्यतइति'। अयोग्यत्वाद् निर्द्धारणस्य सजातीयविषयत्वात् त्यदादीनां चाजात्मकत्वाभावाद् नह्यस्ति सम्भवः। 'यस्याचामादयस्त्यदादय इति'। न च त्यदादिष्वेचि त्यदादिशब्दो वर्त्ततइति क्लिष्टकल्पना युक्ता, उत्तरार्थमप्यनुवृत्तिसम्भवात् । तदुक्त'मुत्तरार्थमनुवर्त्तत इति'। 'त्यादायनिरिति'। 'उदीचां वृद्धादगोत्रादि' ति फिञ् 'प्रत्ययोत्तरपदयोश्च' ॥

'एङ् प्राचां देशे' ॥ 'प्राचां देशाभिधानइति'। प्राचि देशे ये वसन्ति ते प्राचः पुरुषास्तेषां सम्बन्धी यो देशस्तदभिधानइत्यर्थः । एतेन श्रुतस्य विशेषणं प्राचां ग्रहणं नाचार्याणामिति दर्शयति, तथा हि सति मतेनेत्यध्याहार्यं स्यादिति भावः । 'एणीपचनीय इत्यादि'। एणीपचनादिभ्यश्छः । 'देवदत्ता इति'। 'वाहिकग्रामेभ्यश्चे' ति वृद्धादिति विहितौ ठञ्ञिठौ न भवतः । काश्यादिपाठादपि न भवतस्तत्रापि वृद्धाधिकारात् । एवं क्रोडा नाम ग्रामस्तत्र भवः क्रौड इत्यणेव भवति । कुणिना तु प्राचांग्रहणमाचार्यनिर्द्देशार्थं व्याख्यातं, भाष्यकारोपि तथैवाशिश्रियत् । तेन सैपुरं स्कौनगरं च वाहीकग्रामौ तत्र 'वाहीकग्रामेभ्यश्चे' ति ठञ्ञिठौ भवतः । सैपुरिकी सैपुरिका । स्कौनगरिकी स्कौनगरिका । अस्य व्यवस्थितविभाषाविज्ञानाच्च क्रौडदेवदत्तशब्दयोरप्राग्देशवाचिनोष्ठञ्ञिठौ न भवतः, शैषिकेष्वेवार्थेष्वियं वृद्धसंज्ञेष्यते । तेनापत्यविकारयो 'रुदीचां वृद्धादगोत्रात्' 'नित्यं वृद्धशरादिभ्य' इति वृद्धलक्षणप्रत्ययाभावः । एतदपि व्यवस्थितविभाषयैवसिद्धं, वृत्तिकारपक्षे त्वेतत्सर्वं वचनात्साध्यम् । 'गोमता इति'। गोमती प्राग्देशे नदी देशग्रहणेन न गृह्यते नदीदेशो ऽयामा इति नद्याः पृथग्ग्रहणात् 'एङ् प्राचां देशे' 'उदीचां वृद्धादगोत्रादि' त्यादिषु प्रागुदञ्चौ श्रुतौ तयोर्विभागज्ञानार्थमाह। 'प्रागुदञ्चाविति'। शरावतीनाम

नदी उत्तरपूर्व्वाभिमुखी तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देश उत्तरापरस्यामुदग्देशः तौ शरावती विभजते तया मर्यादया तयोर्विभागो ज्ञायते । 'क्षीरोदकमिति' । 'जातिरप्राणिना' मित्येकवद्भावः । क्वचित् क्षीरोदके इति पाठस्तत्र नियतव्यक्तिविवक्षया जातिपरत्वाभावाद् द्विवचनम् । किमर्थं विभजते विदुषां शब्दसिद्ध्यर्थं यद्यपि नद्या एवमुद्देशो न भवति विदुषां शब्दा व्यवस्थिताः सिद्ध्यन्ति तथापि तया हेतुभूतया व्यवस्थितं शब्दसाधुत्वमिति उद्देशोऽध्यारोप्यते सैवं भूता सा नोऽस्मात् पातु, क्वचित् प्रागुदीचाविति पाठः तत्राद्यन्तवत्पूर्व्वादित्यत्राजितियोगविभागादच्प्रत्ययः । 'उद ईदि' तीत्वं, प्रागुदीचमिति पाठे समाहारद्वन्द्वः । 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच् । क्वचित्प्रागुदीच इति पाठः तत्रावयवबहुत्वस्य समुदायेऽध्यारोपः, प्राग्देशानुदग्देशांश्चेत्यर्थः ॥

इति हरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

"गाङ्कुटादिभ्योऽञ्णिन्ङित्" ॥ कुट आदिर्येषामिति बहुव्रीहावन्तर्वर्तिन्या विभक्त्या पदत्वेपि जश्त्वं न भवति, अनुक्रियमाणरूपविनाशप्रसङ्गात् । [1]अथ वा कुट कौटिल्यइति धातुपाठे योकारस्तेन सह सानुबन्धानुकरणं द्रष्टव्यम् । अत्र चत्वारः पक्षाः सम्भवन्ति, इत्संज्ञकेन ङकारेण सह सम्बन्धप्रतिपादनं, ङितो वा विधिः, संज्ञाकरणं, तद्वदतिदेशो वेति । तत्राद्ये पक्षे गाङ्कुटादिभ्यः परो ऽञ्णित्प्रत्ययो ङिद् इत्संज्ञकङकारयुक्तः, इत्संज्ञको ङकारस्तस्यास्तीत्यर्थः । अत्र येषामस्ति ङकारः यङादीनां तेषु व्यर्थो ऽनुवादो येषां नास्ति तव्यादीनां तेषु मिथ्या[2]र्थमित्युपक्रममात्रमयं पक्षः । अथ द्वितीयः । गाङ्कुटादिभ्य इति पञ्चम्या अञ्णिदिति प्रथमायाः षष्ठ्यां प्रकल्पितायां ङिदादेशः प्राप्नोति, अत्र प्रथमाया न च वैयर्थ्यं लाघवार्थत्वात्, तत्र ङिदिति कर्म्मधारये ऽसमासे वा 'ऽऽदेः परस्ये' ति तव्यादीनामा-

(१) अथ वेति नास्ति सहेत्यत्र च सह वेति २ पुस्तके पाठः । ३ पुस्तके तु अथ वेति नास्ति कौटिल्ये इतीत्यत्र च इति वेति पाठः ।

(२) मिथ्यावचनमिति २ । ३ । पुस्तके पाठः ।

देङ्कारः प्राप्नोति, कथं पुनरित्संज्ञको नामादेशः स्यात् स्वयं निवृत्त्यभिमुखः, को दोषः स्थानिनं निवर्त्य निवर्तिष्यते । स्यादेतत् । इद्ग्रहणसामर्थ्यादादेशो न भविष्यति आदेशत्वे हि 'लशक्वतद्धिते' इत्येव सिद्धेत्संज्ञेत्यागमो इकारो विधास्यत इति । तच । अनेनेत्संज्ञा यथा स्यात् तेनमाभूदित्येवमर्थमिद्ग्रहणं स्याद् कः पुनरत्र विशेषस्तेन वा सत्यामनेन वा, अयमस्ति विशेषस्तेन सत्यां लोपः स्याद् अनेन पुनर्न । तस्येति प्रकृतपरामर्शात् तस्येतस्य प्रकृतस्येत्संज्ञकस्येति, एवं च श्रूयमाण एव इकारे ङित्कार्याणि भवन्ति, तत्र 'नेड्वशि कृती'त्यत्र वरमनादौ कृतीति यदि परिगणनं तदात्र प्रतिषेधाभावात् कुटिङ्गा कुटिङ्गमिति प्राप्नोति । अथ तु सम्भवोदाहरणप्रदर्शनं तदात्रापि प्रतिषेधात् कुट्ङा कुट्ङमिति प्राप्नोति, बहुव्रीहौ तु ये ऽमी प्रसिद्धा ङितश्च ङादयस्त एव तृजादीनामादेशाः स्युः, न चान्तर्यतो व्यवस्था, यत्र खल्वन्तरतमस्यानन्तरतमस्य च प्रसङ्गस्तत्रान्तरतमपरिभाषा, न चात्रान्तरतमानां तव्यङादीनां प्राप्तिः, लोके शास्त्रे वा तेषामप्रसिद्धेः । न चान्तरतमपरिभाषैव तान् कल्पयितुमर्हति, नियामकत्वात्तस्याः । सन्तु वा तव्यङादयस्तेऽपि त्वादेशा भवन्तो 'ङिच्चे'त्यन्त्यस्यैव स्युः । ननु च नात्र श्रौतः स्थान्यादेशभावः किं तर्हि गाङ्कुटादिभ्यः परो ऽञ्णित्प्रत्ययो ङिद् इत्संज्ञकङकारयुक्त इति सिद्धानुवादमात्रात्र व्यापारः स तु सिद्धानुवादो विधानमन्तरेण नोपपद्यत इति ङकारस्येत्संज्ञकस्य विधिः कल्प्यते, किमतो, यद्येवमिदं ततो भवति विधिवाक्यस्याश्रुतत्वात् क्व परिभाषाङ्गतामुपेयात् 'षष्ठी स्थाने योगे'ति वा 'आदेः परस्ये'ति वा 'ङिच्चे'ति वा । नैतदस्ति । यस्मात् षष्ठीप्रकल्पनेन श्रौत एव स्थान्यादेशभाव उपपादितः । अस्तु वा कल्पितविधानं, य एव त्वसौ विधिः कल्प्यते तत्रैव परिभाषाङ्गभावमुपैति विध्यङ्गत्वात्परिभाषाणां, परिभाषाः खलु विधेरङ्गभूता अनुवादवाक्यश्रुतार्थान्यथानुपपत्त्या विधिवाक्यमेव कल्पन्ते सर्वथा दुष्ट एवायं पक्षः । संज्ञाकरणे 'क्ङिति चे'त्यत्रास्य ग्रहणं न[1] स्यात् संज्ञारूपस्यानुच्चारित-

(१) प्राप्नोतीति २ पाठः ।

स्यात्, ङिच्छब्दः संज्ञा ङिच्छब्दश्चोच्चारितः प्रत्येकसम्बन्धमपीद्ग्रहणं कृ इद् यस्येत्येतावदेव सम्पादयेत्। न वान्वर्थो ऽवयवद्वयपुक्ता संज्ञेति प्रत्यभिज्ञाभावात् कृङित्प्रदेशेष्वस्य ग्रहणं न स्यादेव तथा केवले ङिच्छब्द-उच्चारिते तस्यैव ग्रहणं स्याद् न ग्रहादीनां 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्,' ततश्च ग्रहिज्यादिसम्प्रसारणं गृह्णातीत्यादावेव स्याद् न जरीगृह्यतइत्यादौ, न च ग्रहादीनां ङित्करणस्य वैयर्थ्यं, क्ङित्प्रदेशेषु यत्र संज्ञारूपं न प्रत्यभिज्ञायते तत्र ग्रहणार्थत्वात्। ननु चैवं गाङ्कुटा-दिभ्यः परस्य ङित्संज्ञाविधानमनर्थकमापद्यते कथं कृङित्प्रदेशेष्वस्य ग्रहणं नास्तीत्युक्तमेव केवलश्च ङिच्छब्दो ग्रहिज्यादिसूत्रएव न च तत्र गाङ् गृह्यते नापि सर्वे कुटादयः किं तु व्यतिरेक एव, सत्यम्। न्यायागतेर्थे किं कुर्मस्त्यज्यतामयं पक्षः, तदेवमेतेषां पक्षाणां दुष्टत्वात् चतुर्थं पक्ष-माश्रित्याह। 'अतिदेशोऽयमिति'। 'इङादेशो गृह्यतइति'। 'इङश्च' 'गाङ् लिटि' 'विभाषा लुङ्लृङो' रिति विहितः। 'ङकारस्यानन्यार्थत्वा-दिति'। इङादेशस्य हि यो ङकारस्तस्यैतदेव प्रयोजनमिह तस्यैव ग्रहणं यथा स्यादिति। अथ सामान्यग्रहणं कस्मान्न भवति, असमानत्वादा-देशस्य। ङकारो ऽन्यार्थ आत्मनेपदस्य स्थानिवद्भावेनैव सिद्धत्वात्। धातोस्तु चरितार्थः, यद्येवम्, चाब्ग्रहणे चाप एव ग्रहणं प्राप्नोति पकार-स्यानन्यार्थत्वात्, न। एवं हि चापोनुबन्धावनर्थकौ स्यातां टापश्च टकारः,। अतो यच्च यावच्च समानं सम्भवति चरितार्थपित्त्वमचरितार्थ-पित्त्वमपि तत्सर्वमाश्रीयते न चाप्रूपमेव यावत्। 'कुङ् शब्दइति'। तदनन्तरं वृत्करणाद् आकृतमिति प्रयोगदर्शनात् कूङ् दीर्घान्तो ङिद्वद्भव-तीत्यर्थं इत्यन्तरेणापि वर्तिं वत्यर्थोगम्यते यथा सिंहो माणवक इति, यद्ययमतिदेशः, 'असंयोगाल्लिट् किदि' ति प्रकरणेपि कित्कार्यातिदेशो ऽङ्गीकर्तव्यस्ततश्च सिसृवतीत्यत्र सत्यपि 'हलन्ताच्चे' ति सनः कित्त्वा-तिदेशे स्वाश्रयमकित्त्वमाश्रित्य सृजिदृशोरित्यमागमः प्राप्नोति, अतिदेशेन पराश्रयं कार्यं प्राप्यते न तु स्वाश्रयं निवर्त्यते, सिद्धं तु प्रसज्यप्रतिषेधात्

त्विति न भवतीति, ततश्च स्वाश्रयस्य कार्यस्याभावादातिदेशिकङित्त्वाश्रयः प्रतिषेधो भविष्यति । इह तर्हि उच्चुकुटिषति ङित इत्यात्मनेपदं प्राप्नोति, ङितो धातोरात्मनेपदमुच्यते इह चातिदेशेन सन एव ङित्त्वं न धातोः, यत्रावयवे लिङ्गमचरितार्थं तत्र समुदायस्य विशेषकं भवति, इह त्ववयवएव गुणप्रतिषेधादिकं ङित्त्वस्य प्रयोजनमस्ति, यङन्तादपि तर्हि न प्राप्नोति तस्माच्चैवं शक्यं विज्ञातुं ङितो धातोरिति ततश्चैकं सनमेव ङितमाश्रित्यात्मनेपदं प्राप्नोति, नैष दोषः । सप्तमीसमर्थाद्वतिः ङितीव ङिद्वत् । ननु च नात्र वतिर्निर्दिश्यते, सत्यं, परत्र परशब्दप्रयोगात् कल्प्यमानो वतिर्व्याख्यानात् सप्तम्यन्तादाश्रीयते, एवमपि प्रतियोगिनि सप्तमी प्राप्नोति अङ्गानीति, एवं तर्हि अनुदात्तङित इत्यत्र उपदेशइति वर्त्तते उपदेशे यो ङित् तत आत्मनेपदं भवति । 'अध्यगीषतेति' । 'विभाषा लुङ्लृङो'रिति गाङादेशः । 'आत्मनेपदेष्वनतः' घुमादिसूत्रेणेत्वं, 'व्यचेरित्यादि' । व्यच व्याजीकरणे तुदादौ कुटादिभ्यः प्राक् पठ्यते । 'उद्विविचिषतेति' । ग्रहिज्यादिना सम्प्रसारणम् । 'उरुव्यचा' इतिबहुव्रीहिः । कथं विव्यचिथ, अनसीति पर्युदासोऽयमसुन्प्रत्ययस्य कृत्वा तत्सदृशे कृति कार्यं विज्ञायते, कथं लिखितुं स्वयमेव लिखिष्यत इति, यावता कुटेः पूर्वं लिखिः पठ्यते, कश्चिदाह । कुटस्यादिः कुट आदिर्येषां ते कुटादयः, कुटादिश्च कुटादयश्चेति बहुव्रीहितत्पुरुषयोः सहविवक्षायां 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यत' इति बहुव्रीहेः शेषः, तत्र तत्पुरुषवृत्त्या संगृहीतो लिखिरपि ङित्त्वस्य निमित्तमिति, एवं तु लिखित्वा लेखित्वा लिलिखिषति लिलेखिषति शकुनिष्वालेखन इत्यनुपपन्नं स्यात् तस्मादवश्यमुपपादनीयं 'संज्ञापूर्वको विधिरनित्य' इति गुणो न भविष्यति । धू विधूनने कुटादिः । तस्या'र्त्तिलूधूसूखनसहचर इत्र' इतीत्रप्रत्यये गुणो न प्राप्नोति, नात्र गुण इष्यते धुवित्रमित्येव भवति, कल्पसूत्रकाराणां तु प्रयोगाश्छान्दसत्वादुपपादनीयाः । अथ वा 'भञ्जभासमिदो घुरच्' विदिभिदिच्छिदेर्ङिदिति वक्तव्ये प्रत्ययान्तरकरणं ज्ञापकमातिदेशिकं ङित्त्वमनित्यमिति ॥

"विज इट्" ॥ 'ओविजी भयचलनयोरिति'। यस्तु स्रजिं विजिं विद्वानिट् स्वरानिति विजिः न स गृह्यते ऽनिटत्वाद् इतरस्तु ईदित्त्वसामर्थ्यात् सेट्, वृद्धसंज्ञासूत्राद् यस्यादिरिति वर्त्तते तेनेड्विशेष्यते यस्यादिरिड्डिति तेनोत्तमैकवचनस्य ग्रहणं न भवति नह्यसौ कस्य चिदादिः, अत एवागममात्रस्यायं ङित्त्वविधिर्न भवति किं तर्हि तदादेः प्रत्ययस्येत्याह। 'इडादिः प्रत्यय इति'। 'उद्विजितेति'। ङित्त्वाल्लघूपधगुणाभावः ॥

"विभाषोर्णोः" ॥ ऊर्णुञ् आच्छादने णिद् नोपधः, रषाभ्यामितिणत्वेन पाठः। प्रोर्णुनाव रेफवियोगे ऽभ्यासात्परस्य न॑कारस्य श्रवणं भवति। 'प्रोर्णुवितेति'। ङित्त्वपक्षे उवङ् अन्यत्र गुणः ॥

"सार्वधातुकमपित्" ॥ अपिदिति पर्युदासश्चेत् च्यवन्तइत्यत्र च्युअअन्ते इति स्थिते नित्यत्वादन्तरङ्गत्वाच्चैकादेशः, न च वार्णादाङ्गं बलीयः, नानाश्रयत्वात्, तत्र कृते परस्येहापित आश्रितत्वात्तं प्रत्यादिवद्भावात् पिदपितोरेकादेशो ऽपिद्ग्रहणेन गृह्यतइति शबेकादेशवतः सार्वधातुकस्य ङित्त्वाद् गुणनिषेधः प्राप्नोति। प्रसज्यप्रतिषेधे तु पित्त्वनिमित्तो निषेधः पूर्वस्य कार्यमिति पूर्वं प्रत्यन्तवद्भावाद् ङित्त्वाभावः। अस्तु तर्हि प्रसज्यप्रतिषेधः, यद्येवं तुदानीत्यत्र विकरणोत्तमयोः पिदपितोरेकादेशः परस्य पितो ङित्त्वनिषेधे कर्त्तव्ये आदिवत्स्यादित्यङितमुत्तममाश्रित्य गुणः प्राप्नोति 'अन्तादिवच्चे'त्यत्र पूर्वपरौ समुदायावभिप्रेतौ नाचौ, किं कारणम्। आद्यन्तयोरविवक्षत्वात् स्थानिनोरचोरेकादेशेन निवर्तितत्वाच्च, अतः स्थानिनावचौ पूर्वपरौ ययोः समुदाययोरन्तादी एकादेशोपि तयोरेवान्तादिवद्भवतीत्ययमतिदेशार्थः। अत एव ब्रह्मबन्धूरित्यत्र एकादेशोपि प्रातिपदिकं प्रत्येवान्तवद्भवति धुवै तुवै इत्यत्र च उत्तमैकवचने कृत्स्नयोरेव पिदपितोरेकादेश इति अचावेव प्रत्यादिवत्त्वे स्यादेव दोषः, एवं तर्ह्येकादेशस्य पूर्वविधौ स्थानिवद्भावात्पक्षद्वयेपि यथा स्थानिकाले यथायोगं गुणस्य प्रवृत्तिनिवृत्ती भवतस्तथा कृतेप्येकादेशे स्थानिवुद्ध्या भविष्यतः, एवमुभ-

१ श्रवणं न भवतीति २। ३। पुस्तके पाठः तत्र णकारस्येति शेषः।

योर्निर्देशत्वेऽपि प्रसज्यप्रतिषेध एवाश्रयणीयः । तत्र हि तदाश्रयणसामर्थ्याद्यत्र यावच्च पितो ङित्वं प्राप्तं तस्य सर्वस्य निषेधादिदमपि सिद्धं भवति अचिनोद् अचिनवमिति, अत्र हि ङितो लङ आदेशस्य स्थानिवद्भावेन प्राप्तस्य निषेधो भवति पर्युदासे त्वतिदेशेनैकवाक्यत्वात् तस्यैव पर्युदासात् स्थानिवद्भावकृतं ङित्वं स्यादेवेति यासुटो ङिद्वचनं ज्ञापकमाश्रयणीयं स्यात् । किं च ङिच्च पिच्च भवतीत्ययमप्यत्रार्थ इष्यते ऽतो न ब्रूताद्भवानित्यत्र तातङः स्थानिवद्भावात्प्राप्तस्य पित्वस्य निषेधात् पिदाश्रयो ब्रुव इण् न भवति, तृणढाद् भवान् तृणह इण् न भवतीत्येषा दिक् । अत एतदर्थमपि प्रसज्यप्रतिषेध आश्रयणीयः, तत्र हि पृथक् कृतस्य नञो यथेष्टमभिसम्बन्धो भवति पिद् ङिन्न भवति ङिच्च पिन्न भवति, तत्र यस्यौपदेशिकं पित्वं तस्यातिदेशप्राप्तं स्थानिवद्भावप्राप्तं च ङित्वं निषिध्यते, यस्य पुनरौपदेशिकं ङित्वं तस्य स्थानिवद्भावप्राप्तं पित्वं निषिध्यत इति विवेक्तव्यम् । 'कुरुत इति' । ङित्वाद्विकरणस्य गुणाभावः, 'अत उत्सार्वधातुक' इत्युत्वं च भवति । अत्र च तृतीयासमर्थाद्वतिराश्रयणीयो न पूर्ववत्सप्तमीसमर्थात् तेन पचेते इत्यत्र 'तो ङित' इति ङितो यत्कार्यं तदपि भवति, यद्येवं चिनुत इति तास्यनुदात्तेदिति लसार्वधातुकानुदात्तत्वं प्राप्नोति, नैष दोषः । उपदेशग्रहणमुभाभ्यामपि सम्बध्यते ङिदुपदेशाददुपदेशादिति, अह्न्विङोरिति वा पर्युदासात् तत्सदृशस्योपदेशङकारवतो ग्रहणमिति सर्वमनवद्यम् ॥

"असंयोगाल्लिट् कित्" ॥ लिटा ऽऽक्षिप्तो धातुरसंयोगग्रहणेन विशेष्यत इत्याह । 'असंयोगान्ताद्धातोरिति' । ननु चात्र पर्युदासत्वमुक्तं प्रतीयते ततश्च संयोगान्तसदृशाद् हलन्तादेव स्याद् बिभिदतुः बिभिदुरित्यादौ, निन्यतुरित्यादौ तु न स्यात्, ज्ञापकात् सिद्धं, यदय 'ऋतश्च संयोगादेर्गुणः' इति सस्मरतुरित्यादौ गुणं विधत्ते तज्ज्ञापयति नात्र नञिवयुक्तन्यायो धातुमात्रस्यैव ग्रहणमिति, ङित्वे प्रकृते कित्वातिदेशस्य प्रयोजनम् ईजनम् ईजतुः ईजुः यजादीनां कितीति सम्प्रसारणं यथा स्यात्, जजागतुः जजागरुः 'जाग्रोऽविचिण्णल्ङित्स्वि'ति गुणो यथा स्यात् । यदि

पुनर्गाङ्कुटादिभ्योऽपि[1] किस्त्वमेवातिदिश्येत, नैवं शक्यम्, इह हि दोषः स्याद् णु स्तुतौ धू विधूनने कुच्, नुविता धुविता 'श्युकःकिति' तीट्प्रतिषेधः प्राप्नोति यथा लूत्वा लूनः, नैव दोषः। पूर्वस्य कार्यातिदेशोऽयमित्युक्तम्, इह तर्हि कुटित्वा पुटित्वा 'न क्त्वा सेट्' इत्यातिदेशिकस्यापि कित्त्वस्य प्रतिषेधः स्यात्, ननु च सनि झल्ग्रहणं ज्ञापकं वक्ष्यते 'न क्त्वा सेडि' ति निषेधो नातिदेशिकस्य भवतीति, सत्यम्। असति क्त्वाग्रहणे सति तु तस्मिन् सनो 'न क्त्वा सेडि' ति निषेधो न लभ्यते इत्यज्ञापकं तत्र झल्ग्रहणं, तथा 'सार्वधातुकमपिद्' ति कित्त्वातिदेशे जाग्रतः जागतीति गुणः स्याद् ङित्त्वातिदेशे त्वविचिण्णल्ङित्स्विति पर्युदासो भवति। 'ऋदुपधेभ्यो लिटः कित्वं गुणात् पूर्वविप्रतिषेधेन'। कित्त्वस्यावकाशः ऋजतुः ऋजुः नह्यत्र विध्यन्तरस्य कस्य चित्प्रसङ्गः, गुणस्यावकाशः वर्तित्वा वर्धित्वा, वश्रते वश्रधुरित्यत्रोभयप्रसङ्गे कित्त्वं भवति पूर्वप्रतिषेधेन। इह तु विभिदतुः विभिदुः नित्यत्वादेव कित्त्वं सिद्धं तद्धि कृतेपि गुणे प्राप्नोत्यकृतेपि, गुणस्तु कित्त्वे सति न प्राप्नोति वृश्चतइत्यत्र तु गुणे कृते संयोगान्तत्वात् कित्त्वं न प्राप्नोतीत्युभयमनित्यमिति पूर्वविप्रतिषेध उच्यते, स चायं कार्यातिदेशपक्षे स्फुटमेव वक्तव्यः। तथाहि। अनेनैव कित्कार्यातिदेश ईजतुरित्यादौ यत्र विध्यन्तरस्याप्रसङ्गस्तत्र सम्प्रसारणमतिदिश्य चरितार्थमतिदेशं परत्वाद् गुणो बाधेत, शास्त्रातिदेशे वा 'क्ङिति चे' त्येतच्छास्त्रमतिदिश्यते तच्च यद्यपि गुणस्यापवादभूतं तथाप्यन्यत्र चरितार्थत्वाद् दुर्बलेनातिदेशेनातिदिष्टः 'क्ङिति चे' ति प्रतिषेधो दुर्बल इति तं बाधित्वा गुणः स्यादेव॥

"इन्धिभवतिभ्यां च"॥ इन्धेरागन्तुक इकारो न त्विक्श्तिपौ धातुनिर्देशइतीक् प्रत्ययः, तेनानिदितामिति न लोपो न भवति। 'समीधर्ते'। ञिइन्धी दीप्तौ अनुदात्तेत्, एशः कित्त्वादनिदितामित्युपधालोप-द्विर्वचने सवर्णदीर्घत्वं, 'बभूविव बभूविथेति'। कित्त्वाद्यथाक्रमं वृद्धिगुणौ न भवतः। इन्धेः संयोगार्थमित्यादिना पूर्वेणासिद्धिं दर्शयन् सूत्रारम्भं सम-

१ परस्यापीत्यधिकं २ पुस्तके।

थेयते। अयं योगः शक्यो ऽवक्तुं, कथम्, इन्धेरनन्तरश्छन्दस्येव लिड् भवति, भाषायां त्विजादेश्चेत्यामा भवितव्यं, छन्दसि च 'छन्दस्युभयथे' ति लिटः सार्वधातुकसंज्ञा 'सार्वधातुकमपिदिति' ङित्त्वादुपधालोपः। श्नमि तु कर्त्तव्यआर्धधातुकसंज्ञा छान्दसत्वाद्वा श्नमभावः, भवतेरपि 'भुवो वुग्लुङ्लिटो' रिति वुग्विधीयते तत्र भूव भूवुः इति स्थिते वुक् प्राप्नोति वृद्धिगुणौ च, कृताकृतप्रसङ्गित्वेन नित्यो वुक्, न च शब्दान्तरप्राप्तिः, एकदेशविकृतस्यानन्यत्वाद् वुकि च कृते ऽनजन्तत्वादलघूपधत्वाच्च वृद्धिगुणौ न भविष्यतः, अवश्यं चैतदेवं विज्ञेयं वुका वृद्धिगुणौ बाध्येते इति यो हि मन्यते कित्त्वादिमे गुणवृद्धी न भविष्यत इति तस्य णलि वृद्धिः स्यादेव न 'क्ङिति चे' ति वृद्धेः किति नेति प्रतिषेध, अनिग्लक्षणत्वात्। एवं तर्हि ज्ञापकार्थमिन्धिग्रहणमेतज् ज्ञापयति इन्धेर्भाषायामप्यनित्य आमिति, समीधे समीधां चक्रइति भाषायामपि भवति। भवतेरपि वुगनित्यः, किं कारणं,भुरिति वर्तते न च गुणवृद्ध्योः कृतयोरुवर्णान्तो भवतिर्भवति, उरिति निवर्त्तिष्यते, यदि निवर्त्तते बोभाव अहं किल बोभव यङ्लुक्यपि नित्यत्वाद् वुक् प्राप्नोति, अनुवर्त्तमाने पुनरुरित्यस्मिन् उभयोरनित्ययोः परत्वाद् गुणवृद्ध्योः कृतयोरनुवर्णान्तत्वाद् वुङ् भवति। अथेदानीं यङ्लुक्यप्यनेनैव लिटः कित्त्वं कस्मान्न भवति श्तिपा निर्देशात्। यदि पुनर्वुग्विधावेव श्तिपा निर्देशः क्रियेत, नैवं शक्यम् इह हि दोषः स्याद् बोभूवतुः बोभूवुः, यदा पुनः कित्त्वविधौ श्तिपा निर्देशः क्रियते न वुग्विधौ तदा यङ्लुकि पित्सु वचनेषु लिटः कित्त्वाभावाद्गुणवृद्ध्योः कृतयोरुरित्यधिकाराद्वुङ् भवति, अपित्सु वचनेषु 'असंयोगाल्लिट्कि' ति कित्त्वे सति गुणाभावादुवर्णान्तत्वाद्वुग् भवति। ननु चोक्तमारभ्यमाणेपि कित्त्वे वृद्धेः प्रतिषेधो न सिद्ध्यति अनिग्लक्षणत्वाद् इति। नैष दोषः। ङिद्ग्रहणमप्यनुवर्त्तते तत्सामर्थ्यादनिग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यति, सत्यमस्त्ययं शुष्कस्तर्को वार्त्तिककारस्तु न क्षमते यदाह 'इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्य' मिति। 'श्रन्थिग्रन्थीत्यादि'। श्रन्थ ग्रन्थ संदर्भे, दम्भु दम्भे, ष्वञ्ज परिष्वङ्गे। 'श्रेथतुः

श्रेयुरिति'। कित्त्वादुपधालोपः, एत्वाभ्यासलोपावप्यत्र वक्तव्यौ। 'देभतुरिति'। नलोपे कृते ऽत एकहल्मध्ये नादेशादेरित्येत्वाभ्यासलोपौ, न च लोपस्यासिद्धत्वम्, वा भाच्छास्त्रीयस्यासिद्धत्वस्यानित्यत्वात्। 'परिषस्वजइति'। ष्वञ्ज परिष्वङ्गे, अनुदात्तेत्, उपसर्गात्सुनोतीति षत्वं, सदिस्वञ्ज्योः परस्य लिटीति परस्य प्रतिषेध, अत्र के चिद्वेति पठन्ति शश्रन्थतुरित्याद्यपि भवति। अथ पित्सु वचनेषु कथं यदि संयोगार्थमेव वचनं पित्सु न भाव्यम्, अथ संयोगान्तार्थं पिदर्थं च पित्स्वपि भाव्यं किं पुनरत्रार्थतत्त्वं देवा ज्ञातुमर्हति ॥

"मृडमृदगुधकुषक्लिशवदवसः क्त्वा" ॥ क्लिश हिंसायाम् अनुदात्तेद् दिवादिरकर्म्मकः, क्लिश् विबाधने क्र्यादिः सकर्मकः परस्मैपदी, द्वयोरपि ग्रहणं, किमर्थं पुनरिदं तावता किदेव हि क्त्वा तत्राह। 'न क्त्वा सेडित्यादि'। अपकर्षो, ऽपवादः। नन्विदमेव नियमार्थं भविष्यति मृडादिभ्य एव क्त्वा किद्भवति नान्येभ्य इति नार्थो 'न क्त्वा सेडि' त्यनेन, कथं लूत्वा पूत्वा तुल्यजातीयस्य सेटो नियमः, ननु क्लिशः क्त्वानिष्ठयोरिति विकल्पेनेड्विधानादनिट् क्त्वा सम्भवति, एवं तर्हि मृडमृदवदवसां कित्त्वविधानं नियमार्थमितरेषां तु रलो व्युपधादिति विकल्पबाधेन विधिसम्भवाविधमो न भविष्यति। एवमपि विपरीतोपि नियमः स्याद् मृडादिभ्यः क्त्वैव किदिति। 'उदित्वा उषित्वेति'। यजादित्वात्सम्प्रसारणं 'शासिवसिघसीनां चे' ति षत्वं 'वसतिक्षुधोरिट्' ॥

"रुदविदमुषग्रहिस्वपिप्रच्छः संश्च" ॥ 'सनर्थमिति'। तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥

"इको झल्" ॥ सनाक्षिप्तस्य धातोरिका विशेषणात्तदन्तविधिर्भवतीत्याह। 'इगन्ताद्धातोरिति'। इक् स्मरणइत्यस्य तु धातोर्ग्रहणं न भवति नह्यतः परो झलादिसन् सम्भवति, कथम् 'इणो गा लुङि' 'णौ गमिरबोधने' 'सनि च' 'इणवदिक इति वक्तव्यं' 'गमेरिट् परस्मपदेषु' अधिजिगमिषति। ननु च भावकर्मणोरात्मनेपदे ऽनुदात्तोपदेशेत्यनुनासिकलोपार्थमेतत्स्यात्, तत्र तु रूपे विप्रतिपत्तिः गमेरिङादेशस्य ग्रह-

णमिति वचना'दज्झनगमां सनी'ति दीर्घो न भवति अधिजिगांस्यत-
इति केचित्। अन्ये त्वाहुः। अज्झनगमामित्यत्राज्ग्रहणं न कर्त्तव्यं
कथं, सनि दीर्घ इत्येको योगः, अतश्च, एवं सिद्धे ऽज्ग्रहणं प्रवृत्तिभेदेन
गमेरपि विशेषणार्थम् अजादेशस्य गमेरिति, तेनास्यापि दीर्घेण भाव्यम्,
अजादेशत्वाद् अधिजिगांस्यतइति रूपमिति तदेवं धातोरपि ग्रहणं
युक्तमेव, एवं तर्हि झला साहचर्याद् गणादिषु जिगीषुशब्दस्य पाठाच्च
प्रत्याहारस्य ग्रहणमुत्तरसूत्रे च इक्समीपाद्धलः पर इत्यनुपपन्नं धातुग्रहणे।
'झलादिरिति'। कथं पुनस्सत्सप्तमीनिर्देशे तदादिविधिः शक्यो विज्ञातुं,
झल्मात्रस्य सनो ऽसम्भवात्। ननु च चिकीर्षितेत्यादावतो लोपे सति
सम्भवति, अपूर्वविधित्वाच्च न लोपस्य स्थानिवत्त्वम्, एवं तर्हि अङ्गसंज्ञा-
सूत्राद्यस्यादिरिति वर्त्तते सन् किंभवति कीदृशः यस्य झलादिरिति, एतेन
तदन्तविधिरपि निरस्तो वेदितव्यः। 'चिचीषतीति'। एकाच इतीट्-
प्रतिषेधः। 'तुष्टूषतीति'। 'शर्पूर्वाः खयः'। 'शिशयिषतइति'। 'पूर्व-
वत्सनः'। 'किमर्थमिति'। योगविभागविषयः प्रश्नः, सूत्रं तूत्तरार्थं
कर्त्तव्यं दीर्घत्वं गुणस्य बाधकं भविष्यतीति। ननु कुङ् शब्दे कुटादिः,
चुकूषतइत्यस्ति दीर्घस्यावकाशः दीर्घान्तोऽयमित्यवोचाम, इह तर्हि गु
पुरीषोत्सर्गे ध्रु गतिस्थैर्ययोः कुटादी, जुगूषति दुध्रूषति। एवमपि प्रत्या-
हारग्रहणमनर्थकमुतो दीर्घ इति वक्तव्य,मस्ति प्रत्याहारग्रहणे प्रयोजनं
किं प्रतिभेदेन गमिमपि विशेषयिष्यामीति। यद्येतावत्प्रयोजनं स्यादुतो
दीर्घ इत्युक्त्वा इङ्हन्योरिति वक्तव्यं येषां गमेरिङादेशस्य ग्रहणमिति
पक्षः, येषामनिङादेशस्यापि ग्रहणं तेषामिहन्योरिति वक्तव्यं हना साह-
चर्यादिरिति धातुर्गृह्यते नेकारस्तस्मादज्ग्रहणसामर्थ्याद्दीर्घत्वं गुणस्य
बाधकं भविष्यतीति सुष्ठूक्तं, यथैव तर्हि झलादौ गुणो बाध्यते एवमि-
डादावपि बाध्येत यियविषति नात्र दीर्घः प्रवर्त्तते किं कारणं झलिति
वर्त्तते अनुनासिकस्य क्विझलोरिति। 'यथैव तर्हीत्यादि'। असति हि
क्वित्त्वे नाप्राप्ते विध्यन्तरे आरभ्यमाणं दीर्घत्वं यथा गुणं बाधते एवं
णिलोपमपि बाधेत। ननु यत्र नाप्राप्ते तस्य बाधकः क्व च नाप्राप्ते दीर्घ

आरभ्यते गुणो णिलोपे तु ज्ञीप्सतीत्यत्र प्राप्ते चिचीषतीत्यत्राप्राप्ते पाक्षिक एव परिहारः । यत्र बाध्यं भेदेनापेक्ष्यते इदमस्मिन्विषये प्राप्तमिदमस्मिन्विषय इति तत्रैकबाधेनोपपत्तौ सत्यामनेकबाधो न न्याय्य इति किमेकं बाध्यतामित्यपेक्षायां येन नाप्राप्ते स बाधनीय इत्युच्यते एवं ह्यपेक्षितविधिर्भवति, यदि तु नाप्राप्ते विध्यन्तर इदमारभ्यत इति कार्यसामान्यमपेक्ष्यते तदा सर्वमेव बाधनीयम्, एतेन पुरस्तादपवादन्यायेन णिलोपमेव दीर्घत्वं बाधेत न गुणमित्यपि चोद्यं निरस्तं, यस्मादयमपि न्यायः कार्यसामान्यचिन्तायां नास्त्येव, अतः सुष्ठूक्तं णिलोपमपि बाधेतेति । 'दीर्घत्वस्यावकाशदानायेति' । एतदेव स्फुटयति । 'चिचीषतीत्यादिष्विति' । सनि हि कित्त्वे चिचीषतीत्यादौ कित्त्वेनैव गुणो बाध्यते न दीर्घेणेत्यबाधित्वैव विध्यन्तरं सावकाशो दीर्घः परत्वाण्णिलोपेन बाध्यत इत्यर्थः । 'ज्ञीप्सतीति' । मारणतोषणनिशामनेषु ज्ञा, ज्ञपमिच्चेति चुरादिषु पाठाद् णिचि पुकि 'मितां ह्रस्वः' सन् सनीवन्तर्द्धेतीडभावपक्षे 'आप्ज्ञप्यृधामीत्' इतीत्वम्, 'अत्र लोपोऽभ्यासस्य' । किमर्थो योगविभाग इत्याशङ्क्य प्रयोजनमाह । 'इकः कित्त्वमित्यादि' । गुणो माभूदित्येवमर्थमिक उत्तरस्य सनः कित्त्वं विधीयत इत्यर्थः । दूषयति । 'दीर्घारम्भादिति' । गुणो न भविष्यतीति शेषः । 'कृते भवेदिति' । शास्त्रमावर्तमानं जपादिवद्धर्म्मसाधनमिति भावः । 'अनर्थकं त्विति' । शास्त्रपूर्वकात्प्रयोगाद्धर्म्मो न तु प्रवृत्तिमात्रादिति भावः । ननु च सनि मीमाघ्वित्यत्र मिनोतेरपि मीग्रहणेन ग्रहणार्थं दीर्घविधिः स्याद्, माभून्मीग्रहणेन ग्रहणं 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वे कृते 'गामादाग्रहणेष्वविशेष' इति माग्रहणेन ग्रहणं भविष्यति तत्रायमप्यर्थो मीग्रहणमपि न कर्त्तव्यं भवति । 'ह्रस्वार्थमिति' । ह्रस्वानामेव दीर्घविधानसामर्थ्याद्गुणो न स्याद् दीर्घाणां तु पुनः प्राप्नोति लुलूषति, नहि दीर्घान्तेषु दीर्घशास्त्रं प्रवर्त्तते पूर्वमेव तद्रूपसद्भावादिति भावः । 'सामर्थ्याद्धि पुनर्भाव्यमिति' । सामर्थ्यं प्रयोजनसद्भावः, यथा 'मो राजि समः क्वौ' विति मकारस्यैव

मकारो विधीयते विकारान्तरं माभूदिति तथा दीर्घस्यापि गुणो मा-भूदिति पुनर्दीर्घो भविष्यति, यदि तर्हि ग्रापुवन्विधिः दीर्घेण बाध्यते ऋदित्त्वमपि न प्राप्नोति विकीर्षतीति तत्राह। 'ऋदित्त्वं दीर्घसंश्रयमिति'। दीर्घः संश्रयो निमित्तं यस्य तत्तथोक्तं, यं विधिं प्रत्युपदेशो ऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, न चात्राकृते दीर्घे ऋदित्त्वं प्राप्नोति, इह तर्हि तितीर्षति अकृतेपि दीर्घत्वे ऋदित्त्वं प्राप्नोतीति। ऋदित्त्वनिवृत्त्यर्थमेव दीर्घत्वं स्यात्, अत आह। 'दीर्घाणां नाकृते दीर्घइति'। दीर्घाणामप्यकृते दीर्घत्वे ऋदित्त्वं न प्राप्नोति, किं कारणम्, इत्त्वोत्वाभ्यां गुणवृद्धी भवति विप्रतिषेधेन, अतो यावद्दीर्घेण गुणो न बाधितः तावदित्वं न प्राप्नोति तस्मात्दीर्घे कृतेनेति स्थिते प्रयोजनमाह 'पिलोपस्त्विति'॥

"हलन्ताच्च"॥ 'समीपवचनोन्तशब्द इति'। अवयववचनस्तु न भवति धातावन्यपदार्थे 'येन विधिस्तदन्तस्ये'त्येव तदन्तविधेः सिद्धत्वात्, इकस्त्वन्यपदार्थत्वं नैव सम्भवति, नहि वर्णो वर्णान्तरस्यावयव उपपद्यते 'हल् चासावन्तश्चेति'। कर्मधारयं दर्शयति, निपातनाद्विशेषणस्य परनिपातस्तत्र च कस्यान्तो हलित्यपेक्षायामिक इति पञ्चम्यन्तं संनिहितं षष्ठ्यन्तं विपरिणम्यतइत्याह। 'इगन्तादिति'। इकमपेक्षमाणस्याप्यन्तशब्दस्य नित्यसापेक्षत्वात् सूत्रे कर्म्मधारयः, बहुव्रीहौ तु धातोरन्यपदार्थत्वं नैव सम्भवति, अन्तशब्दो हि नियतदे[1]शमेव समीपमाचष्टे परं नाम न समीपमात्रं न च धातोः परसमीपावस्थिते हलि ततः परः सन्सम्भवति, इकि त्वन्यपदार्थे यस्येकः परसमीपे हल् न तस्यानन्तरः सन् सम्भवतीत्येकेन हला व्यवधाने विज्ञायेतेति धिप्सतीत्यत्र न स्यात्, हलिति जातिग्रहणात् सिद्धावपि प्रतिपत्तिगौरवप्रसङ्गः। ननु च माभूदन्तग्रहणं हल इत्येवास्तु इका हल्विशेष्यते तेन च धातुः, इकः परो यो हल् तदन्ताद्धातोरिति। न चैवमत्र शङ्कनीयमसत्यन्तग्रहणे इग्वतो हलन्तादिति विज्ञायेत ततश्च यजेः सन् 'सन्यतः' यियक्षतइत्यत्रापि कित्त्वे सति संप्रसारणं प्राप्नोतीति।

१ देशस्य समीपवचनमाचष्टे इति ३ पाठः।

नहीकृतशब्दस्य मुख्ये ऽर्थे सम्भवति तद्वृत्ति र्वृत्तिर्युक्ता, किं च इगन्त इत्यस्य व्यावर्त्यमपि न सम्भवति यावज्ज्ञप्तेः सनि प्रार्यज्ञिषतइत्यत्र सन्न झलादिस्तस्मादन्तग्रहणं चिन्त्यप्रयोजनम्, इह धीप्सतीति य इक्समीपे हल् नकारो न ततः परः सन्, यतश्च परः सन् भकारात् न स इक्समीप इति कित्त्वं न स्यादित्यत आह । 'दम्भेरिति' । दम्भेरपि परस्य सनः कित्त्वं सिद्धं, कुतः, हल्ग्रहणस्य जातिवाचकत्वात्, तत्प्रयोजक इतिवत्समासः, जातिवाची हल्शब्दः एकैव च जातिर्नकारभकारयोः व्यक्तिद्वारकं च जातेरिक्समीपत्वं तदपेक्षयात्र सनः परत्वं भकारव्यक्तिरिक्समीपे वर्त्तत इति जातिरपि वर्त्तते भकारव्यक्तेः परः सन्निति जातेरपि परः, विपर्ययस्तु सन्नपि शास्त्रेणानाश्रितत्वादकिं चित्करः, नकारव्यक्तिरिक्समीपे न वर्त्तत इति जातिरपि न वर्त्तते नकारव्यक्तेः परः सन्न भवतीति जातेरपि परो न भवतीति । 'धीप्सतीति' । 'दम्भ ईच्च' कित्त्वादुपधालोपः, 'एकाचो बशो भष् झषन्तस्य स्ध्वो' रिति भष्भावः, द्विर्वचनम् 'अत्र लोपो ऽभ्यासस्य'

"लिङ्सिचावात्मनेपदेषु" ॥ 'आत्मनेपदेषु परत इति' । एतत्सिच एव विशेषणं न लिङ्परस्मैपदस्य झल्ग्रहणानुवृत्त्यैव व्यावर्त्तितत्वात् । 'भित्सीष्टेति' । भिदिः स्वरितेत् 'लिङः सीयुट्' 'सुट् तिथोः' । 'भुत्सीष्टेति' । बुधिरनुदात्तेत् पूर्ववद् भष् । 'अबुद्धेति' । 'झ्लेः सिच्' 'झलो झलि' 'झषस्तथोर्धो धः' 'झलां जश् झशी' ति धकारस्य दकारः । 'यक्षीष्टेति' । स्वरितत्वादात्मनेपदं व्रश्चादिषत्वं, 'षढोः कः सि' । 'अद्राक्षीदिति' । अमागमे यणि च कृते वदव्रजेत्यकारस्य वृद्धिः ॥

"उश्च" ॥ लिङ्सिज्भ्यामात्मिपस्य धातोरहरित्यनेन[१] तदन्तविधिरित्याह । 'ऋवर्णान्तादिति' । ऋ गतावित्यस्य तु ग्रहणं न भवति 'सर्त्तिशास्त्यर्त्तिभ्यश्चे' त्यङो विधानेन सिचो ऽसम्भवात् । नन्वङ्विधौ कर्त्तरीत्यनुवृत्तेः कर्म्मणि सिजपि सम्भवति, एवं तर्हि शैलीयमाचार्यस्य

१ विशेषणादित्यधिकं २ पुस्तके ।

यत्रास्य धातोर्ग्रहणमिच्छति तत्र श्तिपा निर्देशं करोति 'अर्त्तिपिपर्त्योश्च' 'सर्त्तिशास्त्यर्तिभ्यश्च' 'गुणोर्तिसंयोगाद्योरि'ति । नैतदस्ति । 'स्मिपूङ्रञ्ज्वशां सनि' 'अच्छत्यृता'मिति स्वरूपेणापि ग्रहणं दृष्टम्, एवं तर्हि व्याप्तिन्यायाद्गुणग्रहणम् । 'अकृतेति' । 'ह्रस्वादङ्गा'दिति सिचो लोपः । 'अवरिष्टेति' । 'लिङ्सिचोरात्मनेपदेष्वि'तीट् 'वा गमः' । 'सङ्गसीष्टेति' । समो गम्यृच्छीत्यात्मनेपदम् ॥

"हनः सिच्" ॥ सै.त्स्वाचिर्देशस्याल्लोपो न कृतः । 'आहसतेति' । 'आङो यमहन' इत्यात्मनेपद 'मात्मनेपदेष्वनत' इत्यदादेशः । 'सिज्ग्रहणं लिङ्गृत्त्यर्थमिति' । प्रकृतं सिज्ग्रहणं लिङ्संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः । ननु च 'हनो वध लिङी'ति लिङि वधादेशो नित्यः, घानिषीष्टेति चिण्वदिटि वधादेशाभावेऽप्यफलादित्वादप्रसङ्गस्तत् किं लिङ्गृत्त्येत्यत्राह । 'उत्तरत्रेति' । उत्तरार्थमवश्यं सिज्ग्रहणं कर्तव्यं तदिहैव क्रियते न्यायानुसरणे प्रतिपत्तिगौरवं माभूदित्येवमर्थमित्यर्थः । 'आत्मनेपदग्रहणमित्यादि' । यमः परस्मैपदेषु यमरमनमातामिति सगिटौ भवत इति फलादिः सिज्ञ भवति, उपयमने तु नित्यमात्मनेपदं स्याद्योः परस्मैपदेषु सिचो लुग् भवति 'वा गम' इत्यत्रापि परस्मैपदेष्वङ् भवति लिङि यासुटनिवृत्त्यर्थमेव च फलग्रहणमनुवर्त्यम्, एवमस्मिचप्यघानिषातामिति चिण्वदिटि माभूदिति, तदेवं 'वा गम' इत्यारभ्यात्मनेपदग्रहणं चिन्त्यप्रयोजनं, किमर्थं पुनरिदं यावताऽऽत्मनेपदं ङिति सिजन्तस्याङ्गस्यानिदितामित्येव नलोपः सिद्ध, उच्चारणार्था हि सिच इकारो नानुबन्धः, ज्ञापनार्थम् । एतज् ज्ञापयति न सिजन्तस्योपधालोपो भवतीति तेनामंस्तेति सिद्धं भवति । ननु च सिच्यनुदात्तोपदेशेति लोपो यथा स्याद् आत्मनेपदे उपधालोपो माभूदित्येवमर्थमिदं स्यात्, कः पुनरत्र विशेषः सिचि वा लोपो भवत्वात्मनेपदे वा, अयमस्ति विशेषः, आत्मनेपदे लोपे सति 'अतो लोपः' प्राप्नोति

१ यैतर्दिति त पाठः ।

सिचि तु न, आभीयस्यानुनासिकलोपस्यासिद्धत्वात्। यद्यपि उपधालोपो-प्याभीयस्तथापि व्याश्रयत्वाद्सिद्धत्वं न प्राप्नोति आत्मनेपद उपधालोपः सिच्यतो लोपः, यद्येवं बहिरङ्ग उपधालोपो बहिर्भूतात्मनेपदापेक्षत्वाद् अन्तरङ्गोऽल्लोपो ऽन्तर्भूतसिजपेक्षत्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे'। ननु चैषा परिभाषाप्या भाच्छास्त्रीया 'वाह ऊठ्' इत्यत्र ज्ञापितेति तस्या-मन्तरङ्गबहिरङ्गयोरसिद्धत्वाद् यथा पपुष इत्यादावाल्लोपादिषु वसोः संप्रसारणस्यासिद्धत्वं न भवति तथात्रापि न स्यात्तत्रश्चातो लोपः स्या-दिति सिच्येवानुनासिकलोप एषितव्य इति वक्तव्यमेव सिचः कित्त्वमिति ज्ञापकानुपपत्तेरमंस्तेत्यादावुपधालोपः स्यात्, तस्मात् सिच इकारो ऽनु-बन्ध एव नोच्चारणार्थस्तेनानिदितामिति प्रतिषेधादुपधालोपाभावः। इदितो नुमित्यत्र धातुग्रहणं सिजन्तनिवृत्त्यर्थमेव क्रियते न धातूपदेशावस्था-यामेव नुम् यथा स्यादित्येवमर्थं, कुण्डेत्यादिसिद्धये च यत्नान्तरमास्थेयमिति केचित्। नेति वयम्। उपधालोपेऽपि नातो लोपेन भवितव्यं किं कारणमुप-देशइति वर्त्तते उपदेशे यो ऽकारान्तस्तस्य लोप, इहापि तर्हि न प्राप्नोति 'धिन्विकृण्व्योर च' धिनुतः कृणुतः, नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते उपदेशे या प्रकृतिरकारान्तेति किं तर्ह्यार्धधातुकमभिसंबध्यते आर्द्धधा-तुकोपदेशे यदकारान्तं तस्येति, तदेवमुपधालोपेऽपि न कश्चिद्दोष इति ज्ञा-पकार्थमेव वचनमिति सर्वमनाकुलम्॥

"यमो गन्धने"॥ ननु यमिरुपरमे पठ्यते, कथं गन्धने वर्त्तत इत्यत आह। 'अनेकार्थत्वादिति'। 'उदायतेति'। परावद्यं स्वयं प्रकाशित-वानित्यर्थः। 'उदायंस्त पादमिति'। अपकृष्टवानित्यर्थः॥

"स्थाघ्वोरिच्च"॥ चकारेण कित्त्वं समुच्चीयत इत्याह। 'सिच्च किदिति'। प्रयोजनं गुणो माभूदिति। इत्वं तु गुणविधानार्थमेव स्यात् लघुत्वात्। 'उपास्थितेति'। 'उपान्मन्त्रकरणे' 'अकर्म्मकाच्च' त्यात्म-नेपदं 'ह्रस्वादङ्गा' दिति सिचो लोपो, न चेत्वं सिचीत्युच्यते किं तर्हि इका-रश्चान्तादेशस्सिच्च किद्भवतीत्येतावत्, तेनेत्वस्यासिज्निमित्तत्वाद् भव-त्येव लोपः। 'इत्त्वेत्यादि'। तकार इद्यस्य तस्य भावस्तकारेत्त्वम्, इत्त्वे.

त्यत्र निर्देशे कस्य कार्यस्य सिद्धये इकारस्य तकारस्त्वं क्रियतइत्यर्थः । 'दीर्घो माभूदिति' । आन्तर्यतः प्राप्नोतीति भावः । 'अतोपि स इति' । इकारविधानेनापि विनेत्यर्थः । कित्त्वे हि घुमास्यादिसूत्रेणैव दीर्घस्सिद्धस्तस्मादित्त्वविधानसामर्थ्याद् अनन्तरतमोपि ह्रस्व एव भविष्यतीत्यर्थः ।'भाव्यमानो ऽणसवर्णान्न गृह्णाती' त्ययमप्यत्र परिहारः संभवति[1] । 'अनन्तर इति' । असदृशआदेशे क्रियमाणे ह्रस्वइव प्लुतोपि स्यात् स माभूदित्यर्थः । 'प्लुतश्चेति' । अनेन तपरत्वं प्रत्याख्यायते । यद्यनेन प्लुतो विधीयेत तदा यत्र विषये 'ऽनन्त्यस्यापि प्रश्नाख्यानयो' रित्यादिना प्लुतो विहितस्तत्राप्यनेनैव स्याद् अस्मिन्कर्त्तव्ये तस्यासिद्धत्वादिति पक्षे ऽनुवाददोषः प्राप्नोति ततो ह्रस्व एव भविष्यति । अन्ये तु तपरत्वमनेन समर्थितं मन्यन्ते ऽसति तकारआन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति । ननु चोक्तं सिद्धो ऽत्र दीर्घ इति सिद्धे सत्यारम्भो नियमार्थः स्याद् दीर्घ एव यथा स्यात्प्लुतो माभूदिति तदिदमुक्तम् । 'अनन्तरइत्यादिना' । घुमास्यादिसूत्रेणानेन वा दीर्घे सति यद्यपि विशेषो नास्ति तथाप्यनन्तरे ऽविद्यमानेपि विशेषे प्लुतो माभूदिति दीर्घः स्यादित्यर्थः, माभूद् इति चेत् तत्राह । 'प्लुतश्चेति' । स चासति तपरत्वे न प्राप्नोति सति तु तस्मिन् दीर्घस्याप्रसङ्गाद्विधिरेव संपद्यतइति स्वविषये प्लुतो न व्यावर्त्यते तदेवमन्यत्र भिन्नकालनिवृत्त्यर्थं तपरकरणमिह तु दीर्घनिवृत्त्यर्थं प्लुतप्रवृत्त्यर्थं च वस्तुबलात्सम[2]पादि ॥

"न क्त्वा सेट्" ॥ 'न किद्भवतीति' । कित्कार्यं न करोतीत्यर्थः । न पुनः ककारस्येत्संज्ञाभावात् किन्न भवतीति प्रकृतो हि किच्छब्दः कित्कार्यकारिणि वर्ततइति तदर्थस्यैव निषेधो युक्तो देवित्वेत्यादौ गुणप्रतिषेधाख्यं कित्कार्यं न भवतीति । 'निगृहीतिरिति' । अत्र तितुत्रेतीट्प्रतिषेधो न भवति तितुत्रेष्वग्रहादीनामिति वचनात् । 'निकुचितिरिति' । कुञ्च कौटिल्याल्पीभावयोः, ग्रहादिसूत्रेणेषु संप्रसारणं गुणप्रति-

(१) तमनार्षत्योक्तमित्यधिकं ३ पुस्तके ।

(२) संपन्नमिति पा· ३ ।

षेध उपधालोपश्च क्त्वाद्भवन्ति । 'न सेडित्यादि' । पूर्वार्द्धमेको ग्रन्थ उत्तरार्द्धाच्च नेत्यपकृष्यते न सेडित्येतावतापि योगेनाकित्त्वे कृते गुधित्वा गुधितवानित्यत्र निष्ठायामवधारणान्नियमाद्भविष्यति, 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' इति नियमः शीङादिभ्य एव परा निष्ठा न किदिति, विपरीतस्तु नियमो निष्ठैवेति व्याख्यानाद्भवति । लिटि तर्हि प्रतिषेधः स्यात् ततश्च जग्मिव जग्मिम गमहनेत्युपधालोपो न स्याद् अत आह । 'ज्ञापकादिति' । पूर्वाचार्यप्रसिद्ध्या परोक्षे लिडुच्यते । यथा भवन्ती लट्, श्वस्तनी लुट्, किं ज्ञापकमित्यत आह । 'सनीति' । 'इको झलि' त्यत्र झल्ग्रहणस्यैतत्प्रयोजनं शिशयिषत इत्यत्र माभूदिति, यदि च न सेडिति प्रतिषेध आतिदेशिकस्यापि कित्त्वस्य स्याद् झल्ग्रहणमनर्थकं स्यात् प्राप्नोत्यत्र कित्त्वं न सेडिति प्रतिषेधो भविष्यति, तदेतद् झल्ग्रहणमौपदेशिकस्य कित्त्वस्यायं प्रतिषेधो नातिदेशिकस्येत्यस्यार्थस्य ज्ञापकं विदुः । ननु चोत्तरार्थं झल्ग्रहणं स्याच्वोरित्त्वं झलादौ यथा स्यात् विववदिटि माभूदिति उपास्थायिषाताम्, अत्र हि उपास्थास्वातामिति स्थिते इत्वं च प्राप्नोति चिण्वद्भावश्च, परत्वाच्चिण्वद्भावे युक् च प्राप्नोति वृद्धिश्च, अपवादत्वाद्युकि कृते यकारस्येत्वप्रसङ्गः, न च पुनर्वृद्धिर्लभ्यते पूर्वमेव युका बाधितत्वात् तस्मादुत्तरार्थं झल्ग्रहणम्, नैतदस्ति । यस्मादित्वं कित्त्वसंयोगेनोच्यते न चात्र कित्त्वमस्ति न सेडिति प्रतिषेधात् तदत्रास्यां दशायां झल्ग्रहणस्य ज्ञापकत्वं स्थितमित्यातिदेशिकस्यापि कित्त्वस्यायं प्रतिषेधो भवति । 'रेण तुल्यं सुधीवनीति' । शोभना धीवानोऽस्याः सुधीवा स्त्री 'अनो बहुव्रीहे' रिति प्रकृतस्य ङीपो निषेधे सति 'संनियोगशिष्टानामन्यतराभावे उभयोरप्यभाव' इति यथा रेफो न भवति तद्वदिहापीत्यर्थः । 'वस्वर्थमिति' । अर्थशब्दो निवृत्तौ जग्मिवानित्यत्र क्वसोः कित्त्वप्रतिषेधो माभूदित्येवमर्थं तर्हि क्त्वाग्रहणमित्यर्थः । दूषयति । 'किद्वन्निर्देशादिति' । सिद्धमिति शेषः । अस्त्वत्रोपदेशिकस्य कित्त्वस्य प्रतिषेध आतिदेशिकं कित्त्वं भविष्यति, अत्र तर्हि तत्प्रतिषिध्यते संयोगान्तेष्वञ्चेः, आञ्चिवान् अत्र हि नलोपे कृते द्विर्वचनएकादेशे च

'वस्वेकाजाद्घसा' मितीडागमस्तत्र कृते कित्त्वप्रतिषेधाद् नलोपनिवृत्तौ द्विहल्त्वात् नुटि सत्येकाच्त्वाभावादिण्निवृत्तौ कित्त्वनलोपादीनां चक्रकप्रसङ्गः, एवं तर्हि छान्दसः क्वसुः, लिट् छन्दसि सार्वधातुकमपि भवति 'सार्वधातुकमपिद्' ति ङित्त्वं ङितीत्युपधालोपः, न च संयोगान्तेषु कित्त्वङित्त्वयोः कश्चिद्विशेषस्तस्मादुभयथैमपि क्त्वाग्रहणं न भवति । एवं तर्हि 'निगृहीतिः प्रयोजनम्' । किन् क्तिनिवृत्त्यर्थं क्त्वाग्रहणमित्यर्थः । यदि पुनरुत्तरस्मिन्योगविभागः क्रियते, न सेडिनिष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः, मृषस्तितिक्षायाम्, उदुपधाद्भावादिकर्मणोरन्यतरस्यां, ततः पूङश्च । पूङश्च परा निष्ठा सेण् न किद्भवति, ततः क्त्वा च, क्त्वा च सेट् कित्र भवति अत्र पूङ इति निवृत्तमिति, ततः क्त्वाग्रहणं शक्यमकर्तुम् ॥

"निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" ॥ ञिष्विदा स्नेहनमोचनयोरित्यस्य भौवादिकस्य ञिद्धातोर्ग्रहणं न तु ष्विदा गात्रप्रक्षरणइति दैवादिकस्य ञिद्विः साहचर्यात्, अस्य चाञित्वात्. ञिक्ष्विदा स्नेहनमोचनयोरिति दैवादिकस्य ग्रहणं न तु ञिक्ष्विदा अव्यक्ते शब्दे इत्यस्य भौवादिकस्य मिदिना साहचर्यात्, ञिधृषा प्रागल्भ्ये । 'शयितवानिति' । अत्यसन्तस्येति दीर्घः । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवति स एव धातुर्द्विरुच्यतइति कृत्वा, तत्रापवादः स्मर्यते ।

श्तिपा शपा ऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं किञ्चित्पञ्चैतानि न यङ्लुकि ॥

इति । तदिह शीङो ऽनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः शेश्यितः शेश्यितवान्, एरनेकाचइति यण् ॥

'मृषस्तितिक्षायाम्' ॥ इदमेव तितिक्षाग्रहणं ज्ञापकमनेकार्था धातव इति, अन्यथा मृषिस्तितिक्षायामेव पठ्यतइति तदपार्थकं स्यात् । 'अपमृषितमिति' । अविस्पष्टमित्यर्थः ॥

"उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" ॥ 'द्युतितमिति' । द्युत दीप्तौ नपुंसके भावे क्तः । 'प्रद्युतित इति' । 'आदिकर्मणि क्तः कर्तरि चे'-

ति कर्त्तरि क्तः । 'मुदितमिति' । मुदी हर्षे । 'लिखितमिति' । शब्विकरणानामेवेति न तावत् स्थितमित्यशब्विकरणोऽपि लिखिः प्रत्युदाहृतः, एवं प्रभुक्त इति । स्थिते तस्मिन् खिटकिटी भौवादौ त्रासश्च, खिटितं किटितं त्रुष्टमिति प्रत्युदाहर्त्तव्यम् ॥

"पूङः क्त्वा च" ॥ इहान्यतरस्यांग्रहणानुवृत्तौ सेडित्यस्य च निवृत्तौ इड्विधौ पूङश्चेति शक्यमकर्त्तुम् । उत्तरसूत्रे च वाग्रहणं, कथम्, अनिटोरेव क्त्वानिष्ठयोरनेन कित्त्वं विकल्प्यते, तत्र यदा कित्त्वं तदा 'श्र्युकः किती'ति प्रतिषेधात् पूतः पूतवान् पूत्वेति, अकित्त्वपक्षे त्विटि पवितः पवितवान् पवित्वेति भवति, सेड्ग्रहणं तु विच्छिद्येत, तस्मात्सेडित्यस्मिन्नुत्तरार्थमनुवर्त्तमाने पूङश्चेत्यारभ्य उत्तरत्र वाग्रहणमिह नित्यतासिद्ध्यर्थं, पुवित्वेति पक्षे माभूत्तदाह । 'अन्यतरस्यांग्रहणं न स्वर्यते उत्तरसूत्रे पुनर्वावचनादिति' । 'न सेडिति वर्त्तत इति' । ननु पूङः परयोः क्त्वानिष्ठयोरिटा न भवितव्यं 'श्र्युकः किती'ति प्रतिषेधादत आह । 'पूङश्चेति' । 'पूङः परो निष्ठाप्रत्यय इत्यादि' । किं पुनः कारणं साक्षात् श्रुतं क्त्वाप्रत्ययमपहायानुवृत्तस्य निष्ठाप्रत्ययस्यान्वयो दर्शित उदाहरणं च, अत आह । 'क्त्वाप्रत्ययस्येति' । एतदेव द्रढयति । 'तथा चोक्तमिति' । इडाद्योः क्त्वानिष्ठयोर्नित्यमकित्त्वमिष्यते ततश्च क्त्वाग्रहणमुत्तरार्थमिति भारद्वाजीयैरेवमुक्तमुत्तरार्थमपि तदिहैव कर्त्तव्यं सेडित्यनेन सम्बन्धार्थम्, अन्यथा निष्ठानिवृत्तौ तत्सम्बद्धं सेडित्येतदपि निवर्त्तेत । अनुबन्धोच्चारणं विस्पष्टार्थं न पूञो निवृत्त्यर्थम् इड्विधौ पूङ एव ग्रहणात् पूञः क्त्वानिष्ठयोः इडभावा,चापि यङ्लुकि निवृत्त्यर्थम्, इड्विधावनुबन्धनिर्देशेन यङ्लुक्यपि न क्त्वा सेडिति प्रतिषेधस्य स्थितत्वात् । न च क्त्वाग्रहणसामर्थ्यात्तस्यापि प्रतिषेध,स्तस्योत्तरत्राप्युपयोगसम्भवात् । अनुबन्धनिर्देशस्य च निष्ठायां चरितार्थत्वात् । एवं च क्त्वाग्रहणमुत्तरार्थमिति वृत्तिग्रन्थस्याविरोधस्तेन पोपुवितवानिति निष्ठायां भवति क्त्वायां तु गुणे पोपवित्वेति भवति ॥

"नोपधात्थफान्ताद्वा" ॥ 'निष्ठेति निवृत्तमिति' । पूर्वसूत्रे

चानुकृष्टत्वात्। 'गुफित्वेति'। गुफ गुम्फ ग्रन्थने। 'रेफित्वेति'। रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। अथैतद्विकल्पाभावेपि रलो व्युपधादिति विकल्पोत्र कस्मान्न भवति नोपधग्रहणसामर्थ्यात्। ननु ऋकारोपधो नोपधग्रहणस्य व्यावर्त्यं सम्भवति ऋफ हिंसायाम् ऋफित्वेति, नैतदस्ति। न्रेशब्दं ह्यनयोर्धात्वोर्भवति ऋफित्वा ऋफित्वा ऋम्फित्वेति तच्च सत्यमपि नोपधग्रहणे भवत्येव। सति तावन्नोपधस्य 'न क्त्वा सेडि'ति निषेधे सति ऋफित्वेति भवति, नोपधस्य त्वस्मिन्विकल्पे ऋफित्वेति। असत्यपि नोपधग्रहणे सर्वत्रास्मिन्विकल्पे प्रवृत्तेपीदमेव रूपत्रयं भवति ग्रन्थग्रहणं ज्ञापनार्थं यत्नमन्तरेणास्मिन्प्रकरणे न तदन्तविधिर्भवतीति, तेनोत्तरसूत्रस्थत इति धातुर्गृह्यते न त्वदन्तः॥

"वञ्चिलुञ्च्यृतश्च"॥ वञ्चु गतौ भौवादिः, वञ्चु प्रलम्भने चुरादिः, सोपि गृह्यते अनित्यण्यन्ताश्चुरादय इति। लुञ्च अपनयने, ऋतिः सौत्रो धातुः 'ऋतेरीयङि'ति, स च घृणायां वर्त्तते॥

"तृषिमृषिकृशेः काश्यपस्य"॥ ञितृषा पिपासायां, मृष तितिक्षायाम्, कृश तनूकरणे। 'काश्यपग्रहणं पूजार्थमिति'। काश्यपस्यैतद्विषयं विज्ञानं नान्येषामित्यसाधारणज्ञानोद्भावनमाचार्यस्य पूजाद्वारेण शास्त्रस्यापि पारम्पर्यप्रतिपादनेन प्रामाण्यप्रतिपादनात् पूजा भवति॥

"रलो व्युपधाद्धलादेः संश्च"॥ क्त्वाप्रत्ययस्य 'न क्त्वा सेडिति' कित्त्वे प्रतिषिद्धे सनोप्यकित्त्वे स्वतः सिद्धउभयत्र विधिमुखेनेदं प्रवर्त्तत इत्याह। 'वा कितौ भवत इति'। 'द्युतित्वेति'। 'द्युतिस्वाप्योः संप्रसारणम्। 'दिद्युतिषतीति'। इटि कृते 'अज्झादेर्द्वितीयस्य'॥

"ऊकालोज्झ्रस्वदीर्घप्लुतः"॥ ऊकालो यस्य स ऊकालः 'तपरस्तत्कालस्ये'तिवन्निर्देशः समर्थनीयः, एतच्च संज्ञिनो विशेषणं तत्र च ऊ इत्येकस्यैव शब्दस्योच्चारणाद्विशेषणस्यैकत्वात् संज्ञाप्येकैवेति यश्चोदयेत् तं प्रत्याह। 'ऊ इति त्रयाणामित्यादि'। प्रश्लेषणं प्रश्लिष्टं, तेन निर्देशः प्रश्लिष्टनिर्देशः। तेन विशेषणप्रयपरिच्छिन्नास्त्रयः संज्ञिन इत्यर्थः। प्रश्ले-

पक्षे प्रमाणमाह । 'ह्रस्वेति'। ह्रस्वदीर्घप्लुत इति न तावदेका संज्ञा गौरवादनावृत्तेश्च, अतस्तिसृणां संज्ञानां द्वन्द्वोऽयम् । न चैकस्यानेकसंज्ञाकरणे प्रयोजनमस्ति, लुगादिसंज्ञास्वपि सद्भावितत्वेन प्रत्ययादर्शनस्य भेद आश्रितः प्रकारान्तरासम्भवाद् इह तु निर्देश एव त्रयाणां सम्भवति तस्मात्संज्ञानां त्रित्वात् संज्ञिनामपि त्रित्वमनुमीयतइति भावः । बहुवचननिरासार्थमेकवद्भाव इत्युक्तं, समाहारद्वन्द्व इत्यर्थः । 'स नपुंसक' मित्येतत्तु न भवतीत्याह । 'पुंलिङ्गनिर्देश इति'। सौत्र इति भावः । प्रश्लेषे क्रममाह । 'उ ऊ ऊ ३ इत्येवं काल इति' । उकारादीनां परिच्छेदको यः कालो निमेषादिस्तत्काल इत्यर्थः । कुतः पुनरवसितमेष एव क्रम इति आदौ मध्ये वा त्रिमात्रे प्लुताश्रयः प्रकृतिभावः प्राप्नोति, तथा मध्येऽन्ते वा मात्रिके 'द्वन्द्वे घि' त्येतद्बाध्येतेति चेत्, न । अनेन हि प्लुतसंज्ञा ततश्चादौ मध्ये वा पठितस्य त्रिमात्रस्य प्लुतसंज्ञैव न कुतः प्रकृतिभावः, यदि च मात्रिको मध्येऽन्ते वा स्याद् ह्रस्वसंज्ञैव न स्यात् कुतो घिसंज्ञा कुतस्तरां पूर्वनिपातः, एवं तर्हि ज्ञापकात्सिद्धं यदयं 'विभाषा पृष्टप्रतिवचने हे' रिति हेः प्लुतं शास्ति तज्ज्ञापयति नान्ते मात्रिक इति, कथं योऽन्ते स प्लुतः प्लुतस्य प्लुतवचनमनर्थकम्, अनन्तरमप्लुतार्थमेतत्स्यादिति चेत्, नहि सत्यां गतौ परिभाषा बाध्या । यच्च 'सुपि चे' ति दीर्घत्वं शास्ति तज्ज्ञापयति न मध्ये मात्रिक इति, कथं यो मध्ये स दीर्घो दीर्घस्य दीर्घवचनमनर्थकं, यच्चा 'मभ्यादान' इत्योमः प्लुतं शास्ति तज्ज्ञापयति द्विमात्रिको नान्त्य इति, कथं योऽन्ते स प्लुतः प्लुतस्य प्लुतवचनमनर्थकम् । 'दधि मध्विति'। रूपोदाहरणे कुमारीत्यादि कार्योदाहरणं, हल्ङ्याब्भ्य इति दीर्घाश्रयः सुलोपो भवति । 'देवदत्त ३ अन्वासीति' । 'अनन्त्यस्यापि प्रश्नाख्यानयो' रिति प्लुतः देवदत्त त्वमत्र भवसीति प्रश्नः, नुशब्दः प्रश्नं द्योतयति, देवदत्तशब्दात्परस्य सोः 'ससजुषोरु' रिति रुत्वम्, अतो रोरप्लुतादित्युत्वे प्रतिषिद्धे 'भोभगोअघोअपूर्वस्य योऽशि' ति यत्व 'लोपः शाकल्यस्य'। उकारोऽयमणा तेन द्विमात्रयोरपि ग्रह-

स्याद् ह्रस्वसंज्ञा प्राप्नोति, न च दीर्घप्लुतसंज्ञाभ्यां बाधः, एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशाभ्युपगमाद् अत आह। 'कालग्रहणमिति'। कालग्रहणं तावदुकारादिभिः प्रत्येकमभिसम्बध्यते, उकाल इत्यस्मिन्वाक्ये सत्यपि सवर्णग्रहणे कालशब्दस्य न पुनः प्रत्येकपरिसमाप्तिर्युज्यते कुतः एकस्यैव प्लुतत्वात् द्विमात्रत्रिमात्रौ हि संज्ञित्वेन प्रतीयेते न तु साक्षादुच्चरितौ, एवं चैकत्वाद्बहुव्रीहेरेक एव संज्ञी तत्रैकस्य विरुद्धकालद्वयासम्भवेन सवर्णग्रहणाभावाच्छ्रुत एवोकारः कालविशेषणमिति कालग्रहणं संज्ञिनः परिमाणार्थं, यद्वा ऊ अजित्येव कालार्थो लभ्यते कथमुकारादयोऽच्त्वं न व्यभिचरन्तीति नाच्त्वेन ते विशेष्यन्ते ऽपि तु तैरच्, न चाज्मात्रस्योकारादित्वमुपपद्यत इति सामानाधिकरण्यान्यथानुपपत्त्या तत्सदृशस्याचः प्रतिपत्तिस्तत्र च स्थानसाम्यमसम्भवान्न गृह्यते प्रयत्नसाम्यं चाव्यभिचारीति कालसाम्यमेव गृहीष्यते नार्थः कालग्रहणेन तत्क्रियते श्रूयमाणेनैव कालं विशेषयितुमिति कालग्रहणं परिमाणार्थम्। 'आलूयेति'। ह्रस्वाश्रयस्तुङ् न भवति। 'तितउच्छत्रमिति'। असत्यज्ग्रहणेऽच्द्वयसमुदायस्य प्रत्येकवर्णकालसंकलनया द्विमात्रत्वाद्दीर्घसंज्ञा स्याद् यस्तु मध्ये द्विमात्राकालः सवर्णकालो न भवतीति समुदायस्य द्विमात्रत्वं न व्याहन्तीति स्यादेव प्रसङ्गः, अज्ग्रहणे तु न भवति अच्समुदायस्यानच्त्वात्, यद्यपि वर्णग्रहणे जातिग्रहणं सा तु जातिरेकैकव्यक्तिव्यङ्ग्या न समुदायव्यङ्ग्या, तेन दीर्घसंज्ञायामभावात् 'दीर्घा' 'त्पदान्ताद्वे'ति तुग्विकल्पो न भवति, न च सत्यपि विकल्पे तेन मुक्ते ह्रस्वाश्रयस्तुग् लभ्यते समुदाये कार्यमारभमाणे ऽवयवानां स्वकार्यप्रत्यव्यापारात् ॥

"अचश्च" ॥ 'इको गुणवृद्धी' इत्यनेन समानमिदम्। स्वसंज्ञया विधाने नियमार्थमित्यत्र युक्तिमाह। 'अजिति वर्त्तत इति'। ततश्च ह्रस्वादिशब्दा इहानुवृत्ता नाचमुपस्थापयन्ति तस्य स्वयमुपस्थानादिति स्वरूपपदार्थका आश्रीयन्ते, तेन ह्रस्व इत्येवं योऽज्विधीयते सोऽचः स्थाने भवतीत्ययमर्थः सम्पद्यते, एवं दीर्घप्लुतयोः। 'द्यौरित्यादि'। 'दिव औत्'

'पथिमथ्यृभुक्षामात्' 'त्यदादीनामः' 'दिव उत्' इति चौकारादयो न संज्ञया विधीयन्तइति हल एव स्थाने भवन्ति ॥

"उच्चैरुदात्तः" ॥ ननूदात्तादयः शब्दा लोकवेदयोः प्रसिद्धा एव तत्किं संज्ञाकरणेन, तत्राह । 'उदात्तादिशब्दा इत्यादि' । सत्यं प्रसिद्धा एव ते, कुत्र प्रसिद्धाः धर्ममात्रे स्वरे न तु तद्वत्यचि, ततश्चो'दात्तादनुदात्तस्य स्वरित'इति स्वरिताख्यस्य धर्मस्यैव विधिः स्यात्, न च धर्मधर्मिणोः स्थान्यादेशभावः संभवतीति 'षष्ठीस्थाने योगे'त्यस्यानुपस्थानात् तदङ्गभूतं 'तस्मादित्युत्तरस्ये'त्येतदपि न प्रवर्त्तेतेति पूर्वस्याप्यचः स्वरितप्रसङ्गः । स्यादेतत् । यथा 'कृपो रो ल' इत्यत्र ऋकारस्य रेफस्य लृकारस्य लकारेऽपि विहिते कृत्स्नस्य वर्णस्य कृत्स्न एव वर्णो भवति तद्वदिहापि धर्मिणोरेव स्थान्यादेशभावो भविष्यतीति । युक्तं तत्र रेफलकारावृकारलृकारयोरात्मभूतौ न तावन्तरेण तावुच्चारयितुं शक्यौ, इह तूदात्तादिकमन्तरेणाप्यच उच्चारणं शक्यं दृष्टं च भाषायामिति धर्ममात्रमेवादेशः स्यात् । नन्वेवं स्थिते स्थान्यपि धर्म्म एवेति युक्त एव परिभाषाव्यापारः, सत्यं, वर्णमात्रधर्मोऽयमुदात्तादिरिति व्यामोहनिवर्त्तनेनाचामेवायं धर्मो न हलामिति दर्शयितुमिदमारब्धम् । अत एव वर्णधर्म इति सामान्येनोक्तम् । 'तद्गुणेऽचीति' । स उदात्तादिर्गुणो यस्य, एतेन वस्तुतोऽज्धर्मत्वमुदात्तादेर्दर्शितं, तथाहि । अन्तरेणापि हलमच एव धर्म्मा दृश्यते या ते पितर्मरुतां सुम्नमेतु, यथा आकारस्य, नान्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति कुत एव स्वरः, यदि च हलामप्येते गुणास्ततो हलामचां च पृथक् स्वरोऽप्युपलभ्येत, यतस्तु खल्वचामेव स्वरमनुविदधाति हलस्ततो निश्चीयते ऽनुपरागादेषु स्वरप्रतिभासो न स्वत इति, अनुपरागश्च पूर्वपरसंनिधानेऽपि परेणैव भवति न पूर्वेण । 'परिभाष्यन्तइति' । केचिदाहुः । प्रदेशे लोकप्रसिद्ध्या हलामचां च ग्रहणे प्राप्ते ऽचामेव ग्रहणं नियम्यतइति परिभाषेयमिति । अन्ये तु धर्मिण्यप्रसिद्धत्वात् संज्ञात्वेन परिभाष्यन्तइति व्याचक्षते । उच्चैरित्यस्याधिकरणप्रधान-

त्वात् क्रियापेक्षत्वाच्चाधिक[1]रणस्योपलभ्यमानइत्युक्तम् ॥ 'श्रुतिप्रकर्षो न गृह्यतइति' । यदि गृह्येत उपांशुप्रयोगे न स्यादित्यव्याप्तिः, श्रुतिप्रकर्षस्य चानवस्थितत्वात्तदेव कं विब्रमन्युच्चैस्तदेव कं चिब्रमति नीचैरिति सर्वमुदात्तं स्यात् सर्वं वानुदात्तमित्यतिव्याप्तिरव्यवस्था च स्याद् इति भावः । 'स्थानकृतमित्यादि' । उच्चता नाम प्रमाणविशेष ऊर्ध्वतापर्यायस्तत्र ताल्वादिसंबन्धो वर्णानामन्तरङ्ग इति स्थानसंबन्धिन्युच्चता गृह्यते तत्कृतमुच्चैस्त्वं संज्ञिनो विशेषणम् । ननु पूर्वमुच्चैरुपलभ्यमान इति ताल्वादिस्थानवृत्तिरुच्चैःशब्दो दर्शितः, इह तूच्चैःस्थाननिष्पन्नत्वाद् अजेवोच्चैरित्युच्यतइति उक्तिविरोधः । न, पूर्वमन्तरार्थे उक्त इह तु वस्त्वर्थो व्याख्यातः । ननु चोच्चैः स्थानउपलभ्यमानइत्याश्रितेऽपि प्रांशुपुरुषोच्चारितोऽनुदात्तो ऽप्युदात्त एव स्याद् वामनपुरुषोच्चारित उदात्तोऽप्यनुदात्तः स्यात् तत्रान्योन्यमुच्चतानीचतायोगाद् अत आह । 'ताल्वादिषु हीति' । ताल्वादीनि स्थानानि भागवन्ति,भागाश्चोत्तराधर्येण व्यवस्थिताः । 'तत्र यः समान इति' । एकपर्यायोयं समानशब्दः, तेनायमर्थः । एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाणोऽनुदात्तसंज्ञो भवति, एवं चोच्चैरित्यस्योर्ध्वभागइत्यर्थः, सर्वश्चायमर्थो लोकप्रसिद्धेरेव लभ्यते सूत्रं तु व्यामोहनिवृत्त्यर्थम् । ऊर्ध्वभागनिष्पत्तेरत्यन्तत्वात् तन्निश्चये लिङ्गमाह । 'यस्मिन्निति' । आयाम इत्यस्य विवरणं नियहस्तद्गुता, रूक्षतेत्यस्य विवरणम् अस्निग्धतेति । 'संवृततेति' । अणुता । अत एव वायुः शनैर्निष्क्रामन् गलावयवान् शोषयतीति स्वरस्य रूक्षता भवति । 'ये ते के इति' यत्तत्किंभ्यो जसि त्यदाद्यत्वं, 'जसः शी', 'आद्गुणः, ' एकादेश उदात्तेनोदात्तः' ॥

"नीचैरनुदात्तः" ॥ 'अज्जिति वर्त्तते इति' । तेन भस् स्रंसनधर्म्मेणानुदात्तसंज्ञो न भवति, अन्ववसर्ग इत्यस्य विवरणं मार्दवमिति, शैथिल्यमित्यर्थः । मृदुतेत्यस्य स्निग्धतेति, उरुतेत्यस्य महतेति । महत्त्वादेव च शीघ्रं वायोर्निष्क्रमणाद्गलावयवानामशोषणात्स्वरस्य स्निग्धता भवति ।

१ अधिकरणभावस्येति पाठान्तरम् ।

'अनुच्चानीति'। सर्वाद्यावेवमेव पाठात् कितु 'सिमस्याथर्वणे' इत्यन्त उदात्त इत्युक्तम्, अनाथर्वणेऽपि तुच्छन्दस्यन्तोदात्तत्वं दृश्यते, आद्रात्री वासस्तनुते सिमस्मै, उच्छुक्रमज्जते सिमस्मादिति नमस्ते रुद्रेति, 'तेमयावेकवचनस्ये'त्यत्रानुदात्तं सर्वमित्यधिकारात्तेशब्दोनुदात्तः, रुद्रादयोऽप्यामन्त्रितनिघातेन, पदकाले चानुदात्तस्य श्रवणं संहितायां तु स्वरितात्संहितायामित्येकश्रुत्यं भवति ॥

"समाहारः स्वरितः"॥ 'सामर्थ्याच्चात्रेति'। पारिभाषिकयोरुदात्तानुदात्तयोरचोः समाहाररूपस्याचः क्वचिदप्यसम्भवः सामर्थ्यं, ननु च समाहरणं समाहारो विप्रकीर्णानामेकत्र राशीकरणमेकधर्म्मयोर्योगो वा, यथा पञ्चपूली, चवणगरी दृष्टेति। तत्र पूर्वो मूर्त्तानामेव उत्तरस्तु धर्म्मयोरपि सम्भवति किं तु अत्रा सामानाधिकरण्यं न घटते, नहि वर्णधर्मयोरुदात्तानुदात्तयोः समुदायरूपः कश्चिदज् भवतीत्यत आह। 'तौ समाह्रियेते अस्मिन्नचीति'। नानेनाधिकरणसाधनत्वं समाहारशब्दस्य दर्शितं, तत्र हि करणाधिकरणयोश्चेति ल्युटा भवितव्यं वा सरूपविधिश्च वास्ति क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वचनात् तस्मादर्थकथनमात्रमेतत् सामानाधिकरण्यं स्वर्शआदित्वादच्त्यान्तत्वेन समर्थनीयं, 'शिक्यं कन्येति'। 'शिल्पशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्त' इति फिट्सूत्रेणान्तस्वरितत्वम्। 'सामान्य इति'। सामसु साधुः 'तत्र साधु' रिति यत् 'तित्स्वरितम्'। 'क्वेति'। 'किमोत्' 'क्वाति'॥

"तस्यादित उदात्तमर्धह्रस्वम्" ॥ आदौ आदितः सप्तम्यन्तात्तसिः। 'अर्द्धह्रस्वमिति'। 'अर्द्धं नपुंसक'मिति समासः। ह्रस्वशब्द उभयलिङ्गो ह्रस्वो नपुंसके, 'ह्रस्वं लघ्विति', तदिह परवल्लिङ्गत्वेन नपुंसकत्वम् 'एकपरिमाणस्यादौ ह्रस्वसंज्ञा क्रतेति यत्रैव तस्यार्द्धमिति दीर्घप्लुतयोरेतद्विभागवचनं न स्यादित्याशङ्क्याह। 'अर्द्धह्रस्वमिति'। 'चेत्यादि'। ह्रस्वस्य हि मात्रा भवति अतोऽर्द्धह्रस्वग्रहणेनार्द्धमात्रोप-

१ मात्रेति २ पुस्तके नास्ति।
२ व्यक्तेति २ पुस्तके अक्तेति ३ पुस्तके युक्तेति ४ पुस्तके पाठः।

लक्ष्यते । इह प्रकृतत्वादेव स्वरितस्य विभागाख्यानसिद्धे तस्येति वचनं स्वरितमात्रपरिग्रहार्थं, यदि चार्धह्रस्वग्रहणमर्धमात्रोपलक्षणं तत्र स्वरितमात्रपरिग्रहोऽर्थवान् भवति। 'ह्रस्वग्रहणमतन्त्रमिति' । अप्रधानमुपलक्षणत्वाद् यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकाः। नन्वेवमप्याष्टमिकस्वरितस्य विभागो न सिद्ध्यति तस्यासिद्धत्वात्, नैष दोषः । इत आरभ्य नव सूत्राणि असिद्धकाण्डे उदात्तादनुदात्तस्येत्यस्मात्पराणि पठितव्यानि, किं प्रयोजनमिदं तावद्विभागाख्यानमाष्टमिकस्यापि भवति उत्तरत्रापि प्रयोजनं तत्रतत्र वक्ष्यामः । 'एकश्रुतिर्वेति' । उदात्तभागस्य पटुत्वात्पटुत्वकृतो विकल्पः पटुत्वे हि तदुपरागात्तद्रूपतामिवापन्नो नाऽनुदात्तव्यपदेशमर्हति नाप्युदात्तव्यपदेशम्, उपरागमात्रत्वात् तेन भेदतिरोधानलक्षणमैकश्रुत्यं परो भागः प्रतिपद्यते, अन्वर्थं वा एकश्रुतित्वं पूर्वभागश्रुतेरेका ऽभिन्नाकारा श्रुतिरस्येति कृत्वा। 'अध्यर्धमात्रानुदात्तेति'। एकश्रुतिर्वेति नोक्तं पूर्वानुसारेण गम्यमानत्वात् लघुना वा महतानुपरागात् । 'माणवका३ माणवकेति' । स्वरितमाम्रेडिते सूयेति प्लुतः स्वरितः ॥

"एकश्रुति दूरात्संबुद्धौ" ॥ इह यद्यप्यामन्त्रितान्तस्य पदस्याप्यभिमुखीकरणं प्रति सामर्थ्यं तथापि अर्थविशेषस्य कस्य चिदनुष्ठेयतया, संबोधना संबुद्धिः, अन्तर्भावितण्यर्था बुद्धिः, तथा च संबोधयति येनेति णिच् प्रयुक्तः, तत्र च वाक्यस्यैव करणभावो न पदस्येति मत्वाह । 'एकश्रुति वाक्यं भवतीति' । कस्मात्पुनस्तदित्यत आह। 'दूरादिति' । 'संबोधनं संबुद्धिरिति' । अनेनान्वर्थस्य संबुद्धिशब्दग्रहणं न पारिभाषिकस्येति दर्शयति । पारिभाषिकस्य हि ग्रहणे देवा ब्राह्मणा इत्यत्र न स्यात्, अन्वर्थग्रहणं च दूरादित्यनेन सम्बन्धाल्लभ्यते नह्यामन्त्रितैकवचनस्य दूरत्वमदूरत्वं वा सम्भवति संबोधनस्य तु क्रियारूपत्वाद् अपादानतया दूरादिति विशेषणसम्भवा,दूरत्वं च न देशस्वरूपागतमाश्रीयते ऽनवस्थितत्वात् किं तु सम्बोधनक्रियापेक्षया दूरत्वं, यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोध्यमानेन न श्रूयते किं त्वधिकं प्रयत्नमपेक्ष्यते तत्संबुद्धौ दूरं

भवति । 'स्वराणामित्यादि' । एकश्रुति स्वरूपाख्यानं, भेदतिरोधानमित्यनन्तरोक्तस्यैव विवरणम् । 'आगच्छेत्यादि' । दूराद्धूते वाक्यस्य टेः प्लुत उदात्तः परिशिष्टमेकश्रुति । ननु च प्लुतैकश्रुत्योर्द्वयोरपि दूरात्संबोधनं श्रोतव्यमिति फलैक्याद्विकल्पो युक्तः कथं समावेशः, उच्यते । वाक्यमेव प्रतिपादकत्वात् संबुद्धौ करणं प्लुतैकश्रुतीत्यस्यैव संस्कारमात्रं यथा विषयदर्शने चक्षुष उन्मीलनादि तत्कृतः समानफलत्वमिति वाक्यापेक्षया च समावेशः, अन्त्याजपेक्षया तु बाध्यबाधकभाव एव प्रत्युदाहरणे त्रैस्वर्यमेव भवति, तत्राह 'उपसर्गाश्चाभिवर्ज्जं' मित्याद्युदात्तः । गच्छेति तिङन्तस्य 'तिङ्ङतिङः' इति निघातः । भोःशब्दे 'निपाता आद्युदात्ता' इति आद्युदात्तः, शेषयोरामन्त्रितनिघातः ॥

"यज्ञकर्म्मण्यजपन्यूङ्खसामसु" ॥ 'ऐकश्रुत्यमिति' । बहुव्रीहेर्भावप्रत्ययश्चातुर्वर्ण्यादित्वाद्वा कर्म्मधारयात्स्वार्थे ष्यञ् । 'संपाठ इति' । स्वाध्यायकाले अग्निर्मूर्धादिवः ककुत्, 'अङ्गेर्नलोपश्चे' त्यग्निशब्दः प्रत्ययस्वरेणान्तोदात्तः, मुर्व्वि बन्धने, कनिन्युवृषितक्षीति वर्त्तमाने श्वनुक्षन्पूषन् तक्षचित्यत्र सूत्रे मूर्धन्शब्दः कनिन्प्रत्ययान्तो ऽन्तोदात्तो निपातितः, दिवु क्रीडादौ, दिवेर्न्तो डिविः षष्ठीकवचनस्य ऊडिदमित्युदात्तत्वं, ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः, 'पातेर्डतिः' पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः, प्रयेः षिवन् संप्रसारणं च षित्त्वात् ङीष्, षष्ठीकवचनस्य 'उदात्तयणो हल्पूर्वा' दित्युदात्तत्वम्, इदंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, आप्रोतेः क्विप् ह्रस्वश्च, ऊडिदमिति विभक्तेरुदात्तत्वं, री गतौ, स्रुरीङ्भ्यां तुट् चेति असुन् प्रत्ययः, नित्स्वरेणाद्युदात्तो रेतः शब्दः । 'जिन्वतीति' । जिन्वतेः प्रीणनार्थस्य तिपि निघातः 'प्रणवष्टे' रिति प्रयोगकाले प्रणवः । 'ममेत्यादि' । 'युष्मदस्मदोर्ङसी' त्याद्युदात्तत्वम् । अग्नेशब्दस्यामन्त्रितनिघातः, वर्चश्शब्दोसुन्प्रत्ययान्तः, विपूर्वाद् ह्वयते 'ह्वः संप्रसारणं चे' त्यप्प्रत्यये थाथादिसूत्रेणान्तोदात्तत्वम् । 'जपोनुकरणमन्त्र इति' । यद्यपि स एव मन्त्र उच्चार्यते तथापि वर्णाभिव्यक्त्यनभिव्यक्तिभ्यां भेदपरिकल्पनया ऽनुकरणव्यवहारः । अत एवाह । 'उपांशुप्रयोग

इति'। यथा जले निमग्नस्य पाठः, क्व चिदकरणमन्त्र इति पाठः, अने-नेदं कुर्यादिति चोदितः करणमन्त्रः ततोऽन्योऽकरणमन्त्रः, प्रसिद्धस्तु पाठोऽन्तःकरणमन्त्र इति, ननु वागिन्द्रियेण शब्द उच्चार्यते स कथमन्तःकरणेन सर्वेन्द्रियसाधारणेन व्यपदिश्यते। सत्यं, वागिन्द्रियस्य स्थूलो व्यापार उपांशुप्रयोगे नास्ति स एव च तद्व्यापारत्वेन प्रसिद्ध इति सूक्ष्मव्यापारे मन एव प्रधानं मन्यते। 'न्यूङ्खा इत्यादि'। षोडशेति पाठः, ओकारा इति च, न त्वेते मकारान्तास्तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्तास्त्रिमात्रा इतरे त्रयोदश अनुदात्ता अर्द्धौकाराः। एतच्चाश्वलायनेन चतुर्थे हनीत्यस्मिन् खण्डे लक्षणेनोक्तमुदाहृतं च, षडोङ्कारा इति पाठे मूलान्तरं मृग्यम्। 'ए ३ विश्वमित्यादि'। एशब्दो गीतिपूरणः, निपात इत्यन्ये। विश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः, विश्वमत्त्रिणं पाप्मानं संदहेति सम्बन्धः, गीतिवशादेशब्दोऽनेकमात्रः। 'वाक्यविशेषस्था गीतय इति'। तदुक्तमृग्विषया गीतिषु सामाख्येति॥

"उच्चैस्तरां वा वषट्कारः"॥ 'वषट्छब्देन चात्र वौषट्शब्दो लक्ष्यत इति'। समानार्थत्वाद् द्वावपि हि तौ देवतासंप्रदानस्य द्योतकौ कारग्रहणं तु ज्ञापकमवर्णादपि कारप्रत्ययो भवतीति, तेन एवकार इत्यादि सिद्धं भवति। 'यद्येवमिति'। लक्षणायां हि प्रतिपत्तिगौरवं भवतीति भावः। 'विचित्रा हीति'। क्व चिदक्षरलाघवमाश्रीयते क्व चित्प्रतिपत्तिलाघवमिति वैचित्र्यम्। 'उच्चैस्तरामिति'। उच्चैःशब्द उदात्तभवने वर्तते तत्र भवनक्रियापेक्षया प्रत्ययः, उदात्ततर इत्यर्थो विवक्षितः प्रकर्षश्च वौषट्छब्दे ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेरिति यः प्लुतो विहितः तदपेक्षया वेदितव्यः, सन्त्युदात्ता अयं तूदात्ततरः। अन्यसदेशस्येत्येके, प्लुतोदात्तस्य च विधानसामर्थ्याच्छेषनिघाताभावेऽसिद्धत्वाद्वा, द्वयोरप्येवोदात्ततरो भवतीत्येके। तदा याज्यान्तापेक्षः प्रकर्षः स्वार्थिकस्तरबित्यन्ये। ततो ह्युदात्तमात्रमप्रथमस्य सिद्धमिति द्वितीयस्यायो विधीयते वषट्कारशब्दोऽयं मन्त्रब्राह्मणयोः कल्पसूत्रेषु वौषट्शब्दे निरूढः वषट् क्रियतेऽनेनेति वषट्कारः। मा मामसृजदिति मन्त्रे त्रयो 'वैवषट्काराः वौषडिति

वषट्करोती'ति शास्त्रयो च वषट्कारोऽन्त्यः 'सर्वत्रोच्चैस्तरां वलीयान्याज्याया' इति सूत्रे उच्चैस्तरामिति श्रुतिप्रकर्षो विधीयतइत्याहुः ॥

"विभाषा छन्दसि" ॥ 'यज्ञकर्म्मणीत्यस्य निवृत्त्यर्थमिति'। ननु यद्ययं योगो यज्ञकर्म्मणि स्यात् पूर्वो योगो निर्विषयः स्यात्, न च जपन्यूङ्खसामान्यस्य विषयो जपादिव्यतिरिक्तस्तु पूर्वस्य विषय इति व्यवस्था। तथा हि सत्यत्रैव जपादिग्रहणं कर्त्तव्यं स्यात् किं छन्दोग्रहणेन, छन्दोग्रहणात्तु छन्दोमात्रेऽयं विकल्प इति गम्यते ततश्च यज्ञकर्म्मणीत्यस्यानुवृत्तौ पूर्वो नित्यो विधिर्निर्विषयः स्यात्, एवं मन्यते। ऊहमन्त्राणामच्छन्दस्त्वात्तु पूर्वयोगस्य विषया इति छन्दोरूपेषु मन्त्रेष्वयमेव विकल्पः स्यादिति, यद्यूहमन्त्रेषु सावकाशः पूर्वो योगस्तदा यज्ञकर्म्मणीत्यस्य विभाषाग्रहणेन निवृत्तावपि छन्दोरूपेष्वनूहितेषु मन्त्रेषु परत्वादयमेव विकल्पः प्राप्नोति, नैष दोषः। यज्ञकर्म्मणीत्यत्र कर्म्मग्रहणं यज्ञानुष्ठानमात्रे सर्वत्र नित्यो विधिर्यथा स्यादित्येवमर्थं, यद्यप्यूह्यमाना मन्त्रा न भवन्ति तथाप्यमन्त्राणामेव तेषां यज्ञकर्म्मणि प्रयुज्यमानानां पूर्वयोगस्य विषयत्वं भवत्येव, ये तु जपादिपर्युदासेन मन्त्राणामेव तत्र ग्रहणमिच्छन्ति तेषां सामर्थ्यलभ्या यज्ञकर्म्मणीत्यस्य निवृत्तिरिति विभाषाग्रहणमनर्थकं स्यात्। 'इषइत्यादि'। इडन्नम्, ऊर्ग् बलं, चतुर्थ्येकवचनस्य सावेकाच इत्युदात्तत्वं, 'त्वामौ द्वितीयाया' इति त्वादेशोऽनुदात्तः, अग्ने इत्यामन्त्रिताद्युदात्तत्वम् आङुपसर्गः। 'याहीति'। 'तिङ्ङतिङः' वी गत्यादिषु, मन्त्रे वृषेषपचेत्यादिना क्तिन्नुदात्तः, अग्निशब्दोऽन्तोदात्तः। अमि पूर्वत्वम् 'एकादेश उदात्तेनोदात्तः'। 'ईळे इति'। ईडस्तुतौ लडुत्तमैकवचनं, बह्वृचा द्वयोः स्वरयोर्मध्ये स्थितस्य डकारस्य ळकारं विदधति। 'पुरोहित,' 'पुरोऽव्यय'मिति गतिसंज्ञा गतिरनन्तर इति पूर्वपदप्रकृतिस्वरः पुरःशब्दोऽसिप्रत्ययान्तोऽन्तोदात्तः, सनुशब्दो निपातः नसादेशोऽनुदात्तः। देवडिति पचादिषु पठ्यते टित्वान् ङीप् 'अनुदात्तस्य च यत्रोदात्तलोपः' अभिपूर्वाद्दिवेः क्तिनि शकन्ध्वादित्वात् पररूपे ऽभिष्टित्यादौ च क्तिति कृत्यतौ इति पूर्वपदप्रकृतिस्वरेणाभिशब्दस्यान्तोदात्तत्वं चतुर्थ्येकवचनम् ॥

"न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" ॥ 'सुब्रह्मण्या नाम निगद इति' । अपादबन्धे गदिर्वर्त्तते यथा गद्यमिति, निशब्दः प्रकर्षे उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं पठ्यते स निगदः, नितरां गद्यतइति कर्म्मणि नौ गदनदेत्यप्, तस्य च सुब्रह्मण्याशब्दोपलक्षितत्वात् सुब्रह्मण्याशब्दोऽपरित्यक्तस्त्रीलिङ्ग एव नाम, ओङ्कारस्तित्स्वरेण स्वरित इति सुब्रह्मणि साधुरिति यत्प्रत्ययः तित्स्वरेण स्वरितः, तस्य टाबेकादेशः स्वरितानुदात्तयोरान्तर्यात् स्वरितः, ततो निपातेनैंशब्देन 'ओमाङोश्च' त्युदात्तस्वरितयोरेकादेशः स्वरित एव, आमन्त्रितमाद्युदात्तमिति आष्टमिकस्तु निघातो ऽसमानवाक्यत्वान्न भवति । 'तस्यानेनेति' । न च तस्यासिद्धत्वम्, इदं हि प्रकरणमसिद्धकाण्डउत्कृष्टव्यमित्युक्तम्, अत एवास्मिन्नुदात्ते कृते शेषनिघातोऽपि न भवति यथोद्देशपक्षे ऽनुदात्तपरिभाषायां कर्त्तव्यायाम् असिद्धत्वेन वर्त्तमानाभावात् तेनेह द्वावप्युदात्तौ सम्पद्येते इति पश्चिम एकोनुदात्तइति, न च तस्योदात्तादनुदात्तस्येति स्वरितप्रसङ्गः, प्रकरणोत्कर्षणास्यासिद्धत्वाद् नोदात्तस्वरितोदयमिति निषेधाच्च । 'द्वावनुदात्ताविति' । वकारश्चकारौ, शिष्टं स्पष्टम्, 'असावमुष्येत्यन्तः' एतस्मिन्नेव सुब्रह्मण्यानिगदे प्रथमान्तस्य षष्ठ्यन्तस्य चान्त उदात्तो भवति, गार्ग्यो यजते दाक्षेः पिता यजते तित्स्वरे प्राप्ते वचनं, 'स्यान्तस्योपोत्तमं च' स्यशब्दान्तस्योपोत्तममुत्तमं चोभयमुदात्तं भवति गार्ग्यस्य पिता यजते 'वा नामधेयस्य' देवदत्तस्य पिता यजते ॥

"देवब्रह्मणोरनुदात्तः" ॥ 'स्वरितस्योदात्ते प्राप्तइति' । कथं प्राप्तो यावता ऽसिद्धः स्वरितः, एवं तर्ह्येतज्ज्ञापयत्याचार्यस्तस्यादित इत्यारभ्य नवसूत्री 'उदात्तादनुदात्तस्य स्वरित' इत्यस्मात्परा द्रष्टव्येति, उक्तानि प्रयोजनानि उत्तरत्र च वक्ष्यामः, सामान्यापेक्षत्वाज्ज्ञापकस्य नवसूत्र्यप्युत्कृष्यते न सुब्रह्मण्यास्वर एव । 'द्वयोरपि पदयोरिति' द्वितीयस्य पदात्परस्यापि निघातो न भवति 'आमन्त्रितं पूर्वमविद्यमानवदि' ति पूर्वस्याविद्यमानत्वात् प्रथमस्यापि न भवति भिन्नवाक्यत्वात् ॥

"स्वरितात्संहितायामनुदात्तानाम्" ॥ 'अनुदात्तानामिति'। बहुवचनं जातौ तेनैकस्य द्वयोर्बहूनां च भवति, एकस्य पचति, द्वयोरामिनेश्यः, बहूनां तु वृत्तावेव दर्शितम्। 'इमामित्यन्तोदात्तमिति'। इदंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, विभक्तिरनुदात्ता, त्यदाद्यत्वे ऽमि पूर्वः 'एकादेश उदात्तेनोदात्तः'। 'विधिकाल एवेति'। यद्यप्यत्र विहितस्यानुदात्तविधानेऽपि न कश्चिद्दोषस्तथापि तत्त्वेन व्यवहर्त्तव्यमित्येवमुक्तम्। 'तस्मात् स्वरितादिति'। न च तस्यासिद्धत्वमुत्कृष्टत्वाद् नवसूत्र्यास्तेन कार्यं देवदत्तेत्यादावविकश्रुतिर्भवत्येव। 'गङ्गाप्रभृतीनामिति'। न च यमुनेप्रभृतीनां व्यवधानं जातेरेकत्वाद् व्यक्तीनां सतीनामप्यनाश्रितत्वाद् ब्राकिञ्चित्करत्वम्। 'ततः परेषामिति'। नामन्त्रिते समानाधिकरण इति माणवकशब्दस्याविद्यमानत्वं न भवति। 'अवग्रहे माभूदिति'। इदमेव च संहिताग्रहणं ज्ञापकं पञ्चमीनिर्देशे कालो न व्यवधायक इति, तेन 'तिङ्ङतिङः' इत्यवग्रहेऽपि भवति अग्निमीळे ॥

"उदात्तस्वरितपरस्य सन्नतरः" ॥ परशब्दः प्रत्येकमभिसम्बध्यत इत्याह। 'उदात्तः परो यस्मादिति'। सन्नशब्देन नीचैरर्थ उच्यते तेनानुदात्तत्वं लभ्यत इत्याह। 'अनुदात्ततर इति'। प्रकर्षं स्यात्यनुदात्तापेक्षः। 'मातर इत्यनुदात्त इति'। समासैकदेशो निष्कृष्यानुक्तः देवा इत्यादीनां त्रयाणामामन्त्रितानामेकीभूतानामाद्युदात्तत्वे शेषनिघातः। 'विभाषितं विशेषवचने बहुवचन'मिति विद्यमानपक्षे चामन्त्रितनिघातः, जसः सकारस्य रुत्वं तस्य संसनयुक्ष्यातो रोप्लुतादिति उकारोऽनुदात्तः 'आद्गुणः' सोऽप्यान्तर्यतोऽनुदात्तः, अच्छब्दाकारस्य शेषनिघातः सतयोरनुदात्तयोः 'एङः पदान्तादति' त्येकादेश आन्तर्यतोऽनुदात्तः। 'सरस्वतीकारस्येति'। ननु च नवसूत्र्युत्कृष्यत इति ज्ञापितं ततश्च गङ्गाप्रभृतीनामिव सरस्वतीकारस्यापि पूर्वेणैकश्रुतिरेव प्राप्नोति, कः पुनः सन्नतरस्यावकाशः यः स्वरितात्परो न भवति अग्निरिति। न च विप्रतिषेधेन सन्नतरो लभ्यते, पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य, एवं तर्हि 'नमु न' इत्यत्र नेति योगविभागात् सिद्धत्वं भविष्यति, इह देवदत्तस्य

त्यङ्गिति 'न्यधी च' ति पूर्वपदप्रकृतिस्वरे उदात्तस्वरितयोर्यण इत्यस्वरितत्य-कारस्य स्वरितः पूर्वस्य सवर्णं प्रत्यासिद्धो न भवति प्रकरणोत्कर्षाद्, उदात्तस्वरितयोरित्येव सिद्धे परग्रहणं बहुव्रीहावेकवचनविवक्षार्थमिति गङ्गाप्रभृतीनां सवर्णाभावः॥

"अपृक्त एकाल् प्रत्ययः"॥ 'घृतस्पृगिति'। 'क्विन्प्रत्ययस्य कु' रिति कुत्वम्। 'अर्धभागिति'। अत्र 'वेरपृक्तस्ये' ति लोपः प्रयोजनम्। 'एकाल्-ग्रहणं किमिति'। समुदायद्वारेणायमेकपदविषयः प्रश्नः, अन्यथा प्रत्य-यमात्रस्य संज्ञा स्यादिति प्रदेशेषु प्रत्ययग्रहणमेव कर्तव्यं स्यात् किं सञ्ज्ञ-या, तत्र यद्यन्तत्तस्य स्यात् केवलस्य चाप्यन्तवद्भावाद् अल्ग्रहणं व्यर्थं स्या-दिति तत्सामर्थ्यादलसमुदायस्य न भविष्यतीति भावः। 'दर्विरिति'। दृ विदारणे औणादिको विन् प्रत्ययः, वर्णग्रहणे जातिग्रहणादल्समुदाया गृह्यन्त इति भावः। स्यादेतत्। वेरपृक्तस्येत्यत्र वोऽपृक्तस्येत्यस्तु क्विबादिषु च माभूदिकारः, न चान्यः प्रत्ययो वकारोऽस्तीति। तच्च। 'राजनि युधिकृञः' राजकृत्वा तमाचष्टइति णिचि टिलोपे क्विपि णिलोपे च कृते क्वनिपः सम्बन्धी प्रत्ययो वकारोऽस्ति, अवश्यं व क्विबादीनामुच्चारणार्थं कश्चिदजा-संजनीयस्तत्राकारे सुद्युभ्यां व इत्यादिष्वपि लोपः प्रसज्येत, उकारे तु ण्वुलादिषु, अन्यत्र तु गौरवमिति यथान्यासमेव साधीयः। ननु च यद्यल्-समुदायोऽपि गृह्येत अल्ग्रहणमनर्थकं स्याद् अतो यद्यपि 'निपात एका-जनाङि' त्यत्रैकग्रहणाद्वर्णग्रहणे जातिग्रहणं ज्ञापितं तथाप्यत्राल्ग्रहण-सामर्थ्यात्समुदायस्य न भविष्यतीति चिन्त्यप्रयोजनमेकग्रहणं, तथाऽपृक्त-प्रदेशेष्वल्ग्रहणेनैव सिद्धे नार्थः संज्ञया नतराम्महत्या नतमाम्पूर्वनिर्दि-ष्टया। 'सुरा इति'। सुरां सुनोतीति क्विपि तुक् सुरासुतमाचष्टइति णिचि टिलोपः क्विप् णिलोपः, अत्र धातुसकारस्य हल्ङ्याब्भ्य इति लोपो न भवति प्रत्ययपरिभाषया। सिद्धं, तिपा साहचर्याच्चैकवचनस्य ग्रहणं सिद्धमिति प्रत्ययग्रहणमपि चिन्त्यप्रयोजनमेव॥

"तत्पुरुषः समानाधिकरणः कर्मधारयः"॥ अत्र तत्पुरुषः समाना-धिकरण इति द्वयोरपि पदयोर्मुख्यार्थत्वे ब्राह्मणराज्यं शोभनमित्यादौ यत्र

वाह्येन पदेन तत्पुरुषस्य सामानाधिकरण्यं तत्रैव संज्ञा स्याद् न तु परमराज्यमित्यादौ शब्दान्तरस्याप्रयोगादित्यन्यतरद्गौणार्थमिति स्थिते कामचारात्यदि तत्पुरुषशब्दो गौणः स्यात् तत्पुरुषार्थानि पदानि समानाधिकरणानीति ततः सहग्रहणाभावात् प्रत्येकं संज्ञा इति शङ्केत, अतस्तत्पुरुष इति पदं मुख्यार्थमित्याह। 'तत्पुरुष इति'। 'समासविशेषस्येत्यादि'। इतरद्गौणार्थमित्याह ।'समानाधिकरणपद इति'। समानाधिकरणानि पदान्याश्रयत्वेन यस्य सन्ति स तथोक्तः, अवयवद्वारकं सामानाधिकरण्यमौपचारिकमपि पदान्तरनिरपेक्षमन्तरङ्गमिति तदेवाश्रीयतइति भावः, भवति ह्यवयवधर्म्मेण समुदायस्य व्यपदेशो यथा समं चूर्णमिति, अत्र ह्यवयवद्वारकं चूर्णस्य साम्यं न तु कृत्स्नस्य चूर्णस्यान्येन । 'परमराज्यमिति' । 'अकर्म्मधारये राज्य' मित्यत्राकर्म्मधारयइति निषेधादुत्तरपदाद्युदात्तत्वाभावे समासान्तोदात्तत्वमेव भवति । 'पाचकवृन्दारिकेति'। 'न कोपधाया' इति प्रतिषेधं बाधित्वा पुंवत्कर्मधारयेति पुंवद्भावो भवति। 'तत्पुरुष इति किमिति'। प्रतिपदोक्तत्वादधिकारावगतेर्दा समानाधिकरणाधिकारविहितस्तत्पुरुष एव प्रतिपत्स्यतइति प्रश्नः। 'पाचिकाभार्य इति'। अयमेवार्थो दुरवधार इति भावः। 'ब्राह्मणराज्यमिति'। अत्रोत्तरपदाद्युदात्तत्वमेव भवति। अथ पूर्वकालैकेत्यस्य प्रकरणस्यान्ते कर्मधारय इति कस्मान्नोक्तं, योयं समानाधिकरणाधिकारविहितस्तत्पुरुषः स कर्म्मधारय इति, एवं हि तत्पुरुषः सामानाधिकरण इति न वक्तव्यं भवति। सत्यम्। एकसंज्ञाधिकारात्तु कर्मधारयसंज्ञया तत्पुरुषसंज्ञाया बाधः स्यादिति द्विगोरिव पुनस्तत्पुरुषसंज्ञाविधानाय कर्मधारयपदमुपादेयं पुनश्च पर्यायप्रसङ्गे समावेशाय चकारोपि वक्तव्यः। नन्वेवं करिष्यते द्विगुकर्मधारयौ चेति, एवं तु न कृतमित्येव ॥

"प्रथमानिर्दिष्टं समासउपसर्जनम्" ॥ समासइत्यधिकरणनिर्देशोयं, कष्टश्रितादयश्च समासास्तेषु किं प्रथमानिर्दिष्टं भवितुमर्हति समासे सति यस्मात्प्रथमा विधीयते न च तथाभूतं सम्भवति समासे हि कृते तत एव प्रथमोत्पद्यते न तदवयवाद् अन्तर्वर्तिन्या च विभक्त्या

श्रितशब्द एव प्रथमानिर्दिष्टो न कष्टशब्दः सापि न समासे सत्युत्पत्ता किं तर्हि वाक्यकालएव निर्दिष्टग्रहणं चानर्थकं स्यात् समासे प्रथमान्तमित्येव वाच्यं स्याद् अतो मुख्यस्यासम्भवाद्गौणः समासो गृह्यते इत्याह । 'प्रथमयेत्यादि' । कथं पुनः समासइति शास्त्रस्य ग्रहणमित्याह । 'समासविधायीति' । समासविधायित्वात्तादर्थ्यात्ताच्छब्द्यमित्यर्थः । निर्दिष्टग्रहणादेव च तुल्येपि समासार्थत्वे वाक्यं न गृह्यते, नहि तत्र निर्द्दिशायां प्रथमा अर्थेप्रयुक्तत्वात् । 'द्वितीयेत्येतत्प्रथमानिर्द्दिष्टमिति' । प्रथमया विभक्त्या उच्चारितं, यद्येवं तस्यैव संज्ञा स्याच्च कष्टादीनां नहि ते शास्त्रे प्रथमानिर्दिष्टाः । य एव द्वितीयेत्यस्य प्रथमानिर्द्देशः स एव कष्टादीनामपि तत्परत्वात्तस्य, यथा वक्ष्यति तस्येति सामान्यं विशेषोपलक्षणार्थं तदीयप्राथम्यं विशेषाणां विज्ञायतइति। कष्टश्रितादिषूपसर्जनत्वात् पूर्वनिपातो, महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं लोके ऽप्रधानमुपसर्जनमुच्यते इहाप्यप्रधानमुपसर्जनं, प्रधानमप्रधानमिति च सम्बन्धिशब्दावेतौ तेन यत्प्रति यदप्रधानं तदेव प्रति तदुपसर्जनं भवति तेन राज्ञः कुमारीश्रित इति द्वितीयाश्रितेत्यत्र प्रथमानिर्दिष्टस्यापि कुमारीशब्दस्य संज्ञा न भवति, यदि स्यात् पूर्वनिपातानियम उपसर्जनह्रस्वत्वं च स्यात्, अन्वर्थत्वे तु श्रितादीनेवापेक्ष्य द्वितीयान्तमुपसर्जनमिति न प्रसङ्गः, एवं राज्ञः कुमार्या इत्यत्र द्वयोरपि 'षष्ठी'त्यत्र प्रथमानिर्द्देशेपि कुमारीमपेक्ष्य राज्ञ उपसर्जनत्वं न तं प्रति तस्याः । यद्यन्वर्थसंज्ञा नार्थोनेन प्रदेशेष्वेवान्वर्थग्रहणमस्तु, वाक्येपि तर्हि स्यात् कुमारीं श्रिता गवां कुलम्,अथ संज्ञाविधिर्वाक्ये कस्माच्च भवति यावता समासइति प्रथमानिर्द्दिशस्याधारो न संज्ञायाः, तथा गोकुलं कुमारीपुत्र इत्यत्र समासेपि पूर्वनिपातवद् ह्रस्वत्वं कस्माच्च भवति, तस्मात्सत्येवोपसर्जनत्वे उपसर्जनगोशब्दान्तस्योपसर्जनत्वात् स्त्रीप्रत्ययान्तान्तस्य प्रातिपदिकस्य ह्रस्वविधानात्समासाधिकारे पूर्वनिपातवचनाच्च वाक्ये तौ न भवत इति वाच्यं, संज्ञाविधानं तून्मत्तगङ्गमित्यादौ द्वयोरप्यप्राधान्ये पूर्वनिपातनियमार्थं यत्र चानन्यार्थः प्रथमानिर्द्देशस्तत्र प्रधानस्यापि यथा

स्यादित्येवमर्थं च, यथा पावकवृन्दारकः पुरुषव्याघ्रो ऽर्द्धपिप्पली पूर्वकाय इति, अत्र 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' उपमितं व्याघ्रादिभिः 'अर्द्धं नपुंसकं' पूर्वापराधरोत्तरमिति, प्रथमानिर्दिष्टस्येदमेव प्रयोजनं समासस्य विशेषणं विशेष्येण षष्ठीत्येव सिद्धत्वाद्, न च पूज्यमानतादिविषय एव यथा स्यादिति नियमार्थस्तदारम्भः, उपसर्जनसंज्ञार्थत्वे ऽर्द्धादिपूर्वपदस्य विशिष्टरूपस्यार्द्धपिप्पलीत्यादेः समासस्य विधिसम्भवात् तस्मादेतदर्थोपि संज्ञा ऽन्यथैत्वं तु सति संभवे व्यवस्थापकम् ॥

"एकविभक्ति चापूर्वनिपाते" ॥ विभक्तिशब्दः सुपां वाचकः कारकशक्तिवचनो वा विभज्यते ऽनया प्रातिपदिकार्थ इति कृत्वा । 'समासे विधीयमानइति' । यदुपमर्देनेन समासो भवति तस्मिन्वाक्यइत्यर्थः, समासरूपप्राप्त्यभिमुखे पदत्रयइति यावत् । एतेन समासार्थं वाक्यमत्र समासो न पूर्वसूत्रइव शास्त्रमिति दर्शयति । शास्त्रे सर्वमेकविभक्तिकमित्येकविभक्तीत्यनर्थकं स्यात्, मुख्येपि समासे प्रत्ययलक्षणेनैकविभक्तित्वं समर्थनीयमिति वाक्यमेवात्र समासः, एकस्मिंश्च प्रयोगे सर्वमेकविभक्तिकमिति विशेषणोपादानसामर्थ्यात्प्रयोगभेदेनापि यस्य न सर्वविभक्तित्वं तदाश्रीयतइत्याह । 'यच्चियतविभक्तिकमिति' । एतदेव स्पष्टयति । 'द्वितीये सम्बन्धिनीत्यादि' । केचिदाहुः । येन सह समस्यते स द्वितीयसम्बन्धीति, एवं तु पञ्चानां खट्वानां समाहारः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे उपसर्जनह्रस्वत्वं न स्यात् समाहारो ह्यत्र नानाविभक्तियुक्तो न पञ्चन्शब्दः तस्मात्प्रधानार्थवाची शब्दो द्वितीयः सम्बन्धी, निष्कौशाम्बिरिति कौशाम्बीशब्दो निष्क्रमणक्रियापेतयाऽपादानशक्तियोगात् पञ्चम्यन्त एव न तस्य क्रियान्तरमपेत्य शक्त्यन्तरावेशः सम्भवति निःशब्दस्तु निष्क्रान्तप्रधानो नानाशक्तिभिर्युज्यते । 'निष्कौशाम्बिरिति' । निकुशाम्बेन निर्वृत्ता नगरी कौशाम्बी, 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वः । 'निर्वाराणसिरिति' । वनो जलं तद्वरं यस्याः सा वराणा गङ्गा, तस्या अदूरभवा नगरी वाराणसी । पुराणे तु वरणा चासिश्च नद्यौ शक्रःध्वादिः तयोरदूरभवा पृषोदरादित्वाद्रेफाकारस्य दीर्घः निसः पूर्ववोप-

सर्जनत्वं प्रधानस्यापि हि प्रथमानिर्दिष्टसामर्थ्यात् भवतीत्युक्तम् । इहा-स्यावकाशोऽप्रथमानिर्दिष्टः पूर्वस्यावकाशोऽनेकविभक्तिः नीलोत्पलादि-रर्द्धपिप्पल्यादिश्च, कष्टश्रितादिषु कष्टादय एकविभक्तिकाः प्रथमानि-र्दिष्टाश्चेत्युभयप्रसङ्गे परत्वादनेनैव प्राप्नोति, ततश्चापूर्वनिपात इति प्रतिषेधप्रसङ्गः, न, अप्रतिषेधा,चायं प्रसज्यप्रतिषेधः पूर्वनिपाते नेति किं तर्हि पर्युदासोयं पूर्वनिपाते न विधिर्न प्रतिषेधः प्रसज्यप्रतिषेधेप्यन-न्तरप्राप्तिः प्रतिषिध्यते कुत एतद् अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा भवति पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति, न चेयं प्राप्तिः पूर्वा प्राप्तिं बाधते प्रतिषिद्धत्वात् ॥

"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" ॥ 'अभिधेयवचनोऽर्थशब्द इति' । न प्रयोजनवचनो ऽव्यभिचारात्, न निवृत्तिवचनः, स्वयं निवृत्तस्य किं संज्ञया, न धनवचनः, स्वस्वामिभावस्यासम्भवात् । तच्चाभिधेयं चतुर्द्धा जातिगुणक्रियाद्रव्यभेदेन गौः शुक्लः पाचको डित्थ इति, यद्यर्थवतः संज्ञा ऽभावशशविषाणादीनां न प्राप्नोति अर्थाभावान्माभूदनेन समासइति भविष्यति, न । अर्थवदित्यनुवृत्तेः, अन्यथा ऽनर्थकेत्र विधिसम्भवात् समास-ग्रहणं नियमार्थं न स्यात् । उच्यते । येषां तावद्भूतलाद्यात्रयं घटादिप्रतियो-गिकं नास्तीति बुद्धिबोध्यं तत्त्वान्तरमभावस्तन्मते तेनार्थेनार्थवत्त्वं, येषा-मप्याश्रयाभिमतं भूतलादिस्वरूपमेव तद्बुद्धिविशेषो वा प्रतियोगिनो घटादेरभावस्तन्मते तेनैव भूतलादिना ऽर्थवत्त्वमित्यभावस्य ताव-त्सिद्धा संज्ञा शशविषाणमित्यत्रापि गवादिष्वनुभूतविषाणं शशमस्तक-वर्तितया बुध्योत्प्रेक्ष्य तस्यैवाभिधानाय शब्दप्रयोगः, बुध्युपारोह एव चा-र्थस्य शब्दप्रयोगे कारणं न बहिःसत्ता । यदि बहिःसन्तमेवार्थं शब्दा अभिदधति घटोऽस्ति घटो नास्तीति प्रयोगो न स्याद् एकत्र पौनरुक्त्याद् अपरत्र विरोधाद् बुध्युपारूढस्य बहिःसत्त्वासत्त्वप्रतिपादनायोपपद्यते प्रयोगः । एवमपाक्षीत् पक्ष्यति अस्य सूत्रस्य शाटकं वयेत्यादावपि बुद्ध्यु-पारूढ एव पच्यादीनामर्थो न तु शब्दप्रयोगकाले बहिः सिद्धः । डित्था-दीन्यव्युत्पन्नान्युदाहरणानि। व्युत्पत्तौ कृदन्तत्वादेव सिद्धं सर्वनामधातुज्ञमि-

न्यत्रापि पदेऽव्ययार्थमनुकरणशब्दार्थे च सूत्रमारभ्यमेव । ननु लौकिके प्रयोगे शब्दानामर्थवत्ताध्यवसायः स च वाक्यस्यैव पदस्य वा विभक्त्यन्तस्य न तु प्रकृतिभागमात्रस्येति कथं तस्य निष्कृष्यार्थवत्त्वनिश्चयः, येषां हि सदैव प्रयोगस्तेषां सङ्घातस्यैवार्थवत्ता यथा वर्णानाम् । उच्यते । अन्वयव्यतिरेकाभ्यां शब्दार्थनिश्चयो यस्य शब्दस्यान्वये योऽर्थः प्रतीयते व्यतिरेके च व्यतिरिच्यते स तस्यार्थः वृक्षौ वृक्षा इत्यादौ च प्रत्ययमात्रव्यभिचारेऽपि तद्विशेषव्यभिचारो वृक्षौ सामान्यव्यभिचारश्च वृक्षखण्डं वार्क्षी शाखेति, अर्थस्तु मूलस्कन्धफलपलाशादिमान् यावद्वृक्षशब्दं प्रतीयते । 'नान्तस्यावधेरिति' । ननु वन षण सम्भक्तौ, धन धान्य इत्येतयोर्धात्वोरेतौ शब्दौ पचाद्यचि व्युत्पादितौ तत्राधातुरिति निषेधो भविष्यति एवं तर्ह्यव्युत्पत्तिपक्षएतदुक्तम्, अत एवोदाहरणत्वेनाप्यनयोरुपन्यासः । किं चासत्यर्थवद्ग्रहणे प्रतिवर्णं संज्ञाप्रसङ्गः, न च प्रतिवर्णं धातुसंज्ञा, न चाधातुरप्रत्यय इति पर्युदासाश्रयणाद् अर्थवतो ग्रहणम् । अनर्थकयोरपि धातुप्रत्यययोः सम्भवाद् यथा ऽधीते यावक इति, अत्र ह्यधिपूर्वस्येङोऽर्थवत्त्वं न तु इङि तस्य क्वचिदप्यप्रयोगाद् यावक इत्यत्रापि यावशब्दस्यैवार्थवत्त्वं न तु कनः, अन्तरेणापि तदर्थावगमात् । न च ज्ञायते केन धर्मेण सादृश्यमिति, न चार्थवद्ग्रहणपरिभाषयार्थवतो ग्रहणम् एवा हि नियतरूपोपादाने व्यवस्थापयति न चात्र रूपविशेषोपादानम् । ननु सत्यामप्यनर्थकस्य संज्ञायां संख्याकर्म्मादिषु विधीयमानाः स्वादयो न भविष्यन्ति । नैतदस्ति । अविशेषेणोत्पद्यन्ते उत्पन्नानामर्थनियमः, ततश्चाव्ययवत् स्वादयः स्युरेव । 'नलोपो हि स्यादिति' । विभक्तेस्तु श्रवणं न भवति समुदायस्यापि पृथक् प्रातिपदिकसंज्ञायां तदन्तर्भावाल्लुको भावात् । यद्येवं द्विर्वचनन्यायेनावयवस्य न भविष्यति, युक्तं तत्र पच् इत्यत्र येनैवाचा समुदाय एकाच् तेनैव तदवयवोऽच्शब्दः पशब्दश्च, न चैकस्यैकदा ऽनेकं प्रत्ययवत्त्वं निरूपयितुं शक्यं, किञ्च समुदायद्विर्वचनेनावयवा अपि द्विरुच्यन्ते तदात्मकत्वात्तस्य इह त्ववयवानां समुदायस्य च संज्ञानिबन्धनं शब्दत्वं पृथगेव तत्र समुदायस्य यत् तेन तस्यैव कार्ये

नावयवानाम् । ननु च एति आभ्याम् औपगवः अ अपेहीति, धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् वृक्षादिष्वपि वर्णा अर्थवन्तः, तथा कूप इति ककारे सति कश्चिदर्थो गम्यते यूप इति यकारोपजनेऽर्थान्तरं तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य यो यूपे यूपार्थः स यकारस्येति, तथा ब्राह्मण इत्युक्ते योऽर्थो गम्यते नासौ बकारादीनामन्यतरापायेऽपि गम्यते येषां च सङ्घातो यत्कार्यं करोति प्रत्येकमपि तत् कुर्वन्ति यथा तिलानां खारी तैलमुत्पादयति प्रत्येकं च तिलाः, ये च यस्मिन् प्रत्येकमसमर्थास्तेषां सङ्घातोऽपि तत्रासमर्थः, यथा प्रत्येकं सिकतास्तैलं नोत्पादयन्ति तथा खार्यपि तासाम्, अतः सङ्घातार्थवत्त्वाच्चार्थवन्तो वर्णास्तत्कथमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिः । अनर्थकास्तु प्रतिवर्णानामर्थानुपलब्धेः, नहि अ इत्युक्ते कश्चिदर्थो गम्यते ऽतो धात्वादीनामेकवर्णानामर्थवत्त्वाद् अन्येऽपि वर्णा अर्थवन्त इत्यनुपलब्धिबाधितमेतद्, एवमन्येऽपि हेतवो बाधितविषयाः । किं च कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वे यूप इति चतुर्णां वर्णानामानर्थक्यमभ्युपगतं स्यात्, अथ तेषामर्थवत्त्वं भूयिष्ठः कूपे यूपार्थः स्यात् कूपार्थश्च यूपे, यत्र भूयसामर्थवत्तामन्वयो व्यतिरेकस्तु कस्य चित्तत्रतत्रार्थानामपि भूयसामनुवृत्तिर्भवति व्यतिरेकस्तु कस्य चिद् यथा देवदत्त गामभ्याज शुक्लां देवदत्त गामभ्याज कृष्णामिति, अतः सङ्घाता एव तेनार्थवन्तः सङ्घातार्थवत्त्वाच्चेति हेतुरनैकान्तिकः, तैलाभिनिर्वर्तिसङ्घातेन दीपो न प्रत्येकं, रथावयवैश्चक्रादिभिः संहतैर्व्रजिक्रिया । किञ्चार्थवतां विपर्यासे ऽर्थप्रत्ययस्यापि विपर्यासः, आहर पात्रं पात्रमाहरेति, अपाये चापायः गामभ्याज शुक्लां गामभ्याजेति, उपजने चोपजनः गामभ्याज गामभ्याज शुक्लामिति, वर्णेषु तु नैवं हिनस्तीति सिंहो हन्ति हतः घ्नन्ति अतः संघाता एवार्थवन्तः । 'अहन्निति' । हन्तेर्लङि तिप् 'इतश्च' लोपे हल्ङ्यादिलोपो ऽट् स हन्ग्रहणेनैव गृह्यते, अत्र प्रागेव लङुत्पत्तेः संज्ञायां सत्यामुत्तरकालं पदत्वे सति नलोपः स्यात् । यद्वा प्रातिपदिकसंज्ञा पदसंज्ञासमकालमेव स्यात्, न वाप्रत्यय इति प्रतिषेधः 'न ङिसम्बुद्ध्यो' रिति लिङ्गात्, अन्यथा हे राजन्नित्यादावप्रत्यय इति निषेधादप्रातिपदिक-

त्वादेव नलोपप्रसङ्गात्। अधातुरिति शक्यमकर्तुं, सुपो धात्विति धातुग्रहणं ज्ञापकं न धातोरियं संज्ञेति, नैतदस्ति ज्ञापकं, प्रतिषिद्धार्थमेतत् स्यात् श्येनायतइत्यादावप्रत्यय इति निषिद्धा संज्ञेति भिद् छिद् भूः ग्रूरित्येवमादौ क्विबन्तत्वे कृदन्तत्वादुत्तरसूत्रेण संज्ञा, न च तस्या अपि प्रतिषेधोयं मध्ये ऽपवादा इति न्यायात् पर्युदासत्वाद्वा। 'काण्डे इति'। प्रथमाद्विवचनस्य 'नपुंसकाच्चे'ति शीभावः, अप्रत्यय इति च प्रत्ययग्रहणपरिभाषया तदन्तस्य निषेधः, यत्र हि प्रत्ययः संज्ञिरूपे ऽनुप्रविशति यथा 'तरप्तमपौ घ' इति तत्र पदसंज्ञायामन्तवचनेन तदन्तविधिप्रतिषेधः, इह तु पर्युदासे प्रत्ययव्यतिरिक्तः संज्ञी प्रसज्यप्रतिषेधेपि न संज्ञाविधौ प्रत्ययग्रहणं किं तर्हि प्रतिषेधइति नास्ति निषेधः। ननूत्तरसूत्रे कृत्तद्धितग्रहणं नियमार्थं भविष्यति प्रत्ययान्तस्य यदि भवति कृत्तद्धितान्तस्यैवेति, उच्यते। अस्मिन् सत्यप्रतिषेधे संज्ञाविधौ तदन्तविधिप्रतिषेधात्प्रत्ययस्य यदि भवति कृत्तद्धितस्यैवेति स्यान्नियमः स्यात् सति त्वस्मिन् अत्र तावत्प्रत्ययान्तस्य निषेध इति उत्तरसूत्रेपि तद्धितान्तस्य ग्रहणं भवति, अथ क्रियमाणेप्यप्रत्ययइत्यस्मिन्नपुंसकह्रस्वत्वं कस्मान्न भवति पर्युदासे तावत्प्रत्ययाप्रत्यययोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावः, प्रसज्यप्रतिषेधेप्यन्तरङ्गत्वात् प्रागेव प्रत्ययोत्पत्तेः काण्डशब्दस्य प्रवृत्ता संज्ञेति एकादेशस्यान्तवद्भाव इत्यस्यैव प्रातिपदिकत्वं तथा च ब्रह्मबन्धूरित्यूङेकादेशस्यान्तवत्त्वात् स्वाद्युत्पत्तिः, न चाप्रत्यय इत्यस्य वैयर्थ्यं, त्रपुणी इत्यादौ यत्रैकादेशत्वं नास्ति तत्रार्थवत्त्वात् एवं तर्हि नपुंसके यद्वर्तते तस्य ह्रस्वो विभक्त्यन्तं तु संख्याप्रधानं कारकशक्तिप्रधानं च न च तयोर्लिङ्गयोगः, न चान्तवद्भावेनार्थः शक्योतिदेष्टुमिति न भवति ह्रस्वः, यद्येवं त्रपुणी इत्यादावप्येवमेव न भविष्यति नार्थोनेन, न चान्यः प्रत्ययान्तो व्यावर्त्यः सम्भवति। तथाहि। षड्विधाः प्रत्ययाः सनादयः कृतः तिङः सुपः स्त्रीप्रत्ययाः तद्धिताश्चेति। प्रातिपदिककार्यमपि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'गोस्त्रियोरुपसर्जनस्ये' ति ह्रस्वत्वं 'ङ्याप्प्रातिपदिका'-दिति प्रत्ययविधिश्च तच्च कृत्तद्धितान्तस्येष्यतएव सन्प्रभृतिषु येषां तावद्धा-

तुत्वं तेषामधातुरित्येव प्रतिषेधः श्यशबादीनामपि विकरणानां लिङ्गा-भावः संख्याकर्माद्यभावो ऽपत्याद्यर्थायोगश्च, एवं तिङन्तानां यथा यः पचतिरूपं तस्यापत्यम् इति रूपबन्तत्वात्सत्यपि प्रातिपदिकत्वे, ये तु सम्भवन्ति स्वार्थिकास्ते 'तिङश्चे' ति ज्ञापकान्न भवन्ति स्त्रीप्रत्ययानां तु विरुद्धेन नपुंसकेनायोग एव, कुमारीपुत्र इत्यत्र गोस्त्रियोरिति ह्रस्वः स्यादिति चेद् अथ क्रियमाणेऽपि प्रतिषेधे राजकुमारीपुत्र इत्यत्र कस्मान्न भवति अत्र हि समासत्वादस्त्येव प्रातिपदिकत्वम्। अतो यस्तत्र परिहारः स एवात्रापि भविष्यति, प्रत्ययविधिस्त्विष्यतएव 'ङ्याप्-प्रातिपदिकादि' ति सुबन्तस्य ह्रस्वत्वं न प्राप्नोतीत्युक्तमेव, सुपां चा-प्रसङ्गस्तद्विधानदशायां तदन्तस्यासम्भवात्, लिङ्गाभावात् स्त्रीप्रत्यया-भावः, तद्धितास्त्विष्यन्त एव 'समर्थानां प्रथमाद्वे' ति। अतो नार्थो-ऽनेन उत्तरसूत्रे तद्धितग्रहणेन च। उच्यते। 'बहुषु बहुवचनं' 'कर्मणि द्वि-तीये' त्यादिनां स्वादिविधिवाक्येन भिन्नवाक्यतापत्तेः सर्वेभ्यः प्रत्यया-न्तेभ्यः स्वादयः स्युः, यथाऽव्ययेभ्यः, विकरणान्ताच्च स्वार्थिकास्तद्धिता स्युरेवेत्यतोऽप्रत्ययग्रहणं कर्तव्यं तद्धितग्रहणं च, काण्डे कुड्यइत्येत-योस्तु प्रत्युदाहरणत्वं ह्रस्वो नपुंसक इत्यत्रोपपादयिष्यामः। अथ प्रत्य-यमात्रस्य संज्ञा कस्मान्न भविष्यति सत्यां हि संज्ञायामुक्तेन न्यायेन बहु-पटव इत्यादौ स्वादयः स्युः, उच्यते। व्यपदेशिवद्भावेन प्रत्ययान्तवदप्रत्यय इति प्रतिषेधो भविष्यति यद्येवं कृत्तद्धितमात्रेपि विधिसम्भवात् उत्तरसूत्रे तदन्तविधिर्न भवति। अत्र परिहारं वक्ष्यामः॥

"कृत्तद्धितसमासाश्च"॥ कृतो विहितास्तदादय इति वेदित-व्यम्। अत्र हि कृद्ग्रहणपरिभाषा नोपतिष्ठते, तेन मूलकेनोपदंशमिति वाक्यस्य संज्ञा न भवति मध्येपवादन्यायेन ह्यप्रत्यय इति निषेधः कृद्-ग्रहणेन बाध्यते न तु समासग्रहणेन कृतो नियमः। संज्ञाविधौ प्रत्ययग्र-हणेप्यत्र तदन्तविधिर्भवतीत्यत्रोपपत्तिमाह। 'अप्रत्यय इति'। पूर्वसूत्रे प्रत्ययान्तस्य निषेधो न केवलस्य प्रत्ययस्येत्याश्रित्यैतदुच्यते, अप्राप्त-

प्रापणं विधिः न च तदा कृत्तद्धितमात्रस्याप्राप्ता संज्ञा तदन्तस्य त्वप्राप्नोति विध्यर्थत्वात्तदन्तस्यैव ग्रहणं, येषां तु पूर्वत्र प्रत्ययमात्रस्यापि निषेधस्तेषामर्थवद्ग्रहणानुवृत्तेरर्थवद्विशेषस्य तदन्तस्य ग्रहणं समासग्रहणमनर्थकमर्थवत्त्वात्पूर्वेणैव संज्ञासिद्धेरित्यत आह। 'अर्थवत्समुदायानामिति'। कर्मणि षष्ठी। 'नियमो' व्यावृत्तिः। ननु सुराजा अतिराजेत्यादौ अन्तर्वर्तिन्यां विभक्तौ लुप्तायां समुदायस्य संज्ञा तामपेक्ष्य सोहल्ङ्यादिलोपे तस्यामवस्थायां नलोपार्थं या संज्ञा प्राप्नोति तस्याः प्रत्ययलक्षणेनाप्रत्यय इति निषेधे प्राप्ते विध्यर्थमेतत्स्यात्, ज्ञापकात्सिद्धम्, 'न ङिसंबुद्ध्यो'रिति निषेधो ज्ञापयति न प्रत्ययलक्षणेन निषेध इति, अन्यथा उक्तेन न्यायेन हे राजन्नित्यादौ नलोपाप्रसङ्गात्। नैतदस्ति ज्ञापकम् हे सुराजन्नित्यादौ यत्र समासग्रहणेन संज्ञा विहिता तत्र नलोपप्रसङ्गनिषेधः स्याद् एवं तर्ह्यत्राप्यप्रत्यय इत्यनुवर्त्तते तेन प्रत्ययान्ते समासे विध्यर्थत्वासंभवान्नियमार्थमेव समासग्रहणम्। यद्वा ऽनुद्दिश्य प्रयोजनविशेषं न कृत्संज्ञा प्रवर्तते तस्यां तु सत्यां यस्यामवस्थायां यत्कार्यं प्राप्नोति तस्यां तद्भवति न प्रतिकार्यमावर्त्तनीया संज्ञेत्ययं पक्ष आश्रीयते अत्र च पक्षे सुबुत्पत्त्यर्थं नलोपार्थं च समाससंज्ञानन्तरमेव सकृत्संज्ञा प्रवर्त्तते न तु नलोपदशायामिति विध्यर्थत्वासम्भवान्नियमार्थमेव समासग्रहणं, तुल्यजातीयस्य च नियमेन व्यावृत्तिः, कश्च तुल्यजातीयो यस्यार्थवत्समुदायस्य पूर्वो भागस्तावत्पदं यश्चैव हि सुबन्तानां समास राजपुरुष इति, यश्चैव हि तिङन्तानाम्। 'आख्यातमाख्यातेन क्रियासातत्ये' अश्नीतपिबता खादतमोदतेति, यश्च सुबन्तानां तिङन्तानां च जहि कर्म्मणा बहुलमाभीक्ष्ण्ये जहिजोडः जहिशकट इति, यश्च सुबन्तानां प्रातिपदिकानां च गतिकारकोपपदानामिति वस्त्रक्रीती निष्क्रीतीति, सर्वत्रात्र पूर्वो भागस्तावत्पदम्। अतः स तुल्यजातीयो नियमेन व्यावर्त्यते, तेन बहुपटव इत्यत्र जसन्तस्य पुरस्ताद्बहुचि कृते नोत्तरत्र संघाते पूर्वो भागः पदमित्यसति नियमे ईषदसमाप्तिलक्षणेनार्थेनार्थवत्त्वात्सत्यां संज्ञायां पूर्वोत्पन्नस्य जसः सुपो धात्विति लुकि कृते वित्स्व-

रोऽपि भवं 'श्वितः सप्रकृतेर्बहुजकजर्थमिति' पटुशब्दोकारस्य भवति पूर्वोत्पन्नस्य तु जसो ऽवस्थाने तस्यैव स्यात् । 'वाक्यस्यार्थवत इति' । प्रत्येकं पदैरप्रतीतस्य संसर्गस्य वाक्येन प्रतीयमानत्वात् तस्यार्थवत्त्वं समुदायाच्च प्रत्ययस्याविधानाचास्त्यप्रत्यय इति निषेधः । न च नास्ति यस्मिन् प्रत्ययः सो ऽप्रत्यय इति बहुव्रीहिः शक्य आश्रयितुं, बहुपटव इत्यत्रापि निषेधप्रसङ्गात् ॥

"ह्रस्वो नपुंसके प्रातिपदिकस्य" ॥ सूत्रे नपुंसकशब्देन तद्वद्द्रव्यं विवक्षितं न लिङ्गमात्रमित्याह । 'नपुंसकलिङ्गेऽर्थेइति' । नपुंसकं लिङ्गमस्येति बहुव्रीहिः । 'ग्रामणीरिति' । सत्सूद्विषेत्यादिना क्विप् । 'प्रातिपदिकस्येति किमिति' । नपुंसकलिङ्गं द्रव्यस्यैव धर्म्मो द्रव्याभिधानं च प्रातिपदिकस्यैव न सुबन्तस्य शक्तिसङ्ख्याप्राधान्यात्, न धातोस्तिङन्तस्य वाक्यस्य वा क्रियाप्रधानत्वात्, वर्णास्त्वनर्थकाः, स्त्रीप्रत्ययानां तु विरुद्धेन नपुंसकेनायोग इति प्रश्नः । 'काण्डे कुड्ये इति' । अत्राप्रत्यय इति निषेधात् प्रातिपदिकत्वं नास्ति । ननु च एकादेशः पूर्वं प्रत्यन्तवद्भावात् प्रातिपदिकग्रहणेन गृह्यतइति क्रियमाणेऽपि प्रातिपदिकग्रहणे ह्रस्वत्वं स्यादेवात आह । 'प्रातिपदिकग्रहणसामर्थ्यादिति' । कथं पुनः सामर्थ्यं यावता यत्रान्तवद्भावो नास्ति वाः वारी चतुर्णी इत्यादौ तद्भावार्थं स्यात् । अथ शक्तिसङ्ख्याप्रधानत्वात् तत्र नपुंसकेनायोगः काण्डे इत्यादावपि एवमेव न भविष्यति, नह्यन्तवद्भावेन प्रातिपदिकत्वे सत्यपि शक्तिसङ्ख्याप्राधान्यं हीयते । एवं मन्यते । असति प्रातिपदिकग्रहणे नपुंसकवृत्तेरनपुंसकवृत्तेश्च य एकादेशः स नपुंकवृत्तिग्रहणेन गृह्यते नपुंसकइति स्यात्प्रसङ्गः प्रातिपदिकग्रहणे तु मुख्यप्रातिपदिकग्रहणार्थत्वाद् अतिदिष्टप्रातिपदिकत्वस्य ह्रस्वस्याभाव इति, उत्तरार्थं च प्रातिपदिकग्रहणम् । इह वनाय वनाभ्यां वनाऽर्थं वनेभ्य इति ह्रस्वो न भवति बहिरङ्गयोर्दीर्घैत्वयोरसिद्धत्वात्, काण्डीभूतमित्यत्र पूर्वं नपुंसकस्यापि स्व्यन्तदशायाम् अव्ययत्वेनालिङ्गत्वाद् ह्रस्वाभावः ॥

"गोस्त्रियोरुपसर्जनस्य" ॥ 'स्त्रीति प्रत्ययग्रहणमिति' । अत्र

हेतुमाह । 'स्वरितत्वादिति' । स्वरितेनाधिकार इत्यस्य यत्र स्वरितत्वं प्रतिज्ञायते तत्र तदधिकारो ग्राह्य इत्ययमप्यर्थः, इह च स्त्रीग्रहणं स्वर्यते तेन स्त्रियामित्यधिकृत्य विहितानां टाबादीनां ग्रहणं भवति नार्थस्य नापि स्वरूपस्य, क्तिबादीनां तु ह्रस्वभावित्वाभावादग्रहणम् । 'उपसर्जनग्रहणं तयोर्विशेषणमिति' । प्रत्येकं सम्बन्धात्तु द्विवचनं न भवतीत्याह । 'गोरुपसर्जनस्येत्यादि' । स्त्रीप्रत्ययान्तस्येति पाठः । पारिभाषिकं ह्यत्रोपसर्जनं गृह्यते न च स्त्रीप्रत्ययमात्रस्य पारिभाषिकोपसर्जनत्वसम्भवः । 'ताभ्यामिति' । उपसर्जनेन गोशब्देन स्त्रीप्रत्ययान्तेन च यदि ताभ्यां तदन्तविधिर्न विज्ञायते तदा उपसर्जनस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्व इत्यर्थः स्यात्तश्च गोकुलं राजकुमारीपुत्र इत्यत्रापि स्यादिति भावः । इह तु कुमारीपुत्र इत्यत्र प्रातिपदिकत्वादेवाप्रसङ्गः । उपसर्जनस्त्रीप्रत्ययान्तस्येति पाठः । उपसर्जनं यत् स्त्रीप्रत्ययान्तं तदन्तस्येत्यर्थः । यदि तु लौकिकेनोपसर्जनेन स्त्रीप्रत्ययमात्रं विशेष्य पश्चात्तेन प्रातिपदिकस्य तदन्तविधिर्विज्ञायत उपसर्जनं यः स्त्रीप्रत्ययस्तदन्तस्य प्रातिपदिकस्येति ततो हरीतक्यः फलानीत्यत्रापि स्यात् स्त्रीप्रत्ययार्थस्य फलं प्रत्युपसर्जनत्वात्तद्धितान्तत्वेन प्रातिपदिकत्वाच्च, अत एवमेवाश्रयणीयं स्त्रीप्रत्ययान्तं यच्चास्त्रीयमुपसर्जनं तदन्तस्य प्रातिपदिकस्येति । 'निष्कौशाम्बिरिति' । कौशाम्बीत्येकविभक्तीत्युपसर्जनं स्त्रीप्रत्ययान्तं तदन्तं समासप्रातिपदिकम् । अथेह कथं ह्रस्वत्वम् अतिराजकुमारिरिति यावता कुमारशब्दात् ङीब्विहितो न तु राजकुमारशब्दात्, सत्यम् । अनुपसर्जने स्त्रीप्रत्यये तदादिनियमो नास्ति । अथ गोशब्देन स्त्रीप्रत्ययान्तेन च प्रातिपदिकस्य तदन्तविधौ सत्यपि गोकुलं राजकुमारीपुत्र इत्यत्र कस्मान्न भवति यावता 'येन विधिस्तदन्तस्य' त्यत्र स्वंरूपमित्यनुवर्तते ततश्च येन तदन्तविधिः तत्स्वरूपस्यापि ग्रहणेन भाव्यम्, एवं तर्हि गोशब्देन प्रातिपदिकस्य विशेषणसामर्थ्यात् केवलस्य न भवति, अन्यथा गोशब्दस्यैवोपसर्जनस्य ह्रस्वं विदध्याद् 'येन विधिस्तदन्तस्य' त्यत्र वा स्वंरूपमिति

निवर्त्यं, व्यपदेशिवद्भावो ऽपि प्रातिपदिके नास्ति राजकुमारीपुत्र इत्यत्र तु परिहारः शास्त्रीयमप्युपसर्जनं सति सम्भवे ऽन्वर्थमेवाप्रधानमुपसर्जनमिति प्रधानं चापेक्ष्याप्रधानं भवति स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासमन्तरेणानुपपन्नं समासश्चावयवात्मको द्वयं चात्र संनिहितं प्रधानमप्रधानमिति तत्रैवं विज्ञास्यामो यत् स्त्रीप्रत्ययान्तं समासप्रातिपदिकं तदन्तर्भूतमेवापेक्ष्य स्त्रीप्रत्ययान्तस्याप्राधान्यमिति, इह तु तत्रानन्तर्भूतं पुत्रमपेक्ष्याप्राधान्यमिति न भवति ह्रस्वः । 'ईयस इत्यादि'। इयसुबन्ताद्यः स्त्रीप्रत्ययो विहितस्तदन्तान्तस्येत्यर्थः । 'बहुश्रेयसीति' 'प्रशस्यस्य श्रः' ङीप् बह्व्यः श्रेयस्योऽस्येति बहुव्रीहिः 'नद्यृतश्चेति कप् 'ईयसश्चे'ति प्रतिषेधः, पुंस्यपि सोर्हल्ङ्याब्भ्यादिलोपः । बहुव्रीहेरिति किम् । अतिश्रेयसिः ॥

"लुक्तद्धितलुकि" ॥ 'स्त्रीग्रहणमनुवर्तते इति' । न तु गोग्रहणं कुतः प्रत्ययादर्शनस्य लुक्संज्ञाविधानाद् गोशब्दस्याव्युत्पन्नत्वाद् व्युत्पत्तिपक्षेऽप्यस्वरितत्वात् । 'उपसर्जनस्य चेति' । अनुवर्त्तत इत्यपेक्षते, लौकिकं चात्रोपसर्जनं गृह्यते न शास्त्रीयं, पूर्वेण ह्रस्वत्वे प्राप्त इति क्वचित्पठ्यते, तत्र क्व चिदिति विशेषः । पूर्वसूत्रेण हि शास्त्रीयमुपसर्जनं गृहीतं तस्यावकाशो यत्र न तद्धितलुग् निष्कौशाम्बिरिति, अस्यावकाशो यत्र शास्त्रीयमुपसर्जनम् आमलकमिति, तद्धितलुक्च यथा पञ्चेन्द्र इति, अत्र हि समासार्थे नानाविभक्तिके पञ्चेन्द्राणीत्येकविभक्तिकमिति अस्त्युपसर्जनत्वं तत्रोभयप्रसङ्गे परत्वादयमेव लुग् ह्रस्वं बाधत इत्यर्थः । के चित्तस्मादेव ग्रन्थात् पूर्वसूत्रे ऽपि लौकिकस्योपसर्जनस्य ग्रहणं मन्यन्ते तेषां हरीतक्यः फलानि इति लुब्विषये ह्रस्वप्रसङ्ग इत्युक्तं, स्यादेवं लुपि युक्तवदिति शब्दार्थयोरप्यतिदेशः प्रकृत्यर्थस्य यल्लिङ्गं यश्च तदभिधायी प्रत्ययः तयोर्द्वयोरतिदेशस्तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यतीति । यद्येवं युवतिरिव पुरुषः 'लुम् मनुष्ये' युवतिः, द्वौ तिशब्दौ श्रूयेयातां तस्मा'ल्लुब्योगाप्रख्याना'दिति लुपः प्रत्याख्यानेन वात्र परिहारो वाच्यः शास्त्रीयं वोपसर्जनं ग्राह्यं ग्रन्थस्य च व्याख्यात एवार्थः । अभावरूपेण

लुका पौर्वापर्यासम्भवात् लुकीति सत्सप्तमीत्याह । 'लुकि सतीति' । 'पञ्चे-न्द्र इति' । तद्धितार्थ इति समासः, 'सास्य देवते' त्यणो 'द्विगोर्लुगनपत्य'-इति लुक्, इन्द्रवरुणेत्यादिना विहितस्य ङीषो ऽनेन लुक्, सन्नियोगशिष्टानामन्यतराभावइत्यानुको निवृत्तिः । 'पञ्चशष्कुल इति' । 'तेन क्रीत'-मित्यार्हीयस्य ठको ऽध्यर्द्धपूर्वेति लुक् । 'आमलकमिति' । 'नित्यं वृद्धशरा-दिभ्य' इति मयटः 'फले लुक्' बदरीकुवलीशब्दाभ्याम् 'अनुदात्तादेश्चे' ति अञ्, शष्कुल्यादयो गौरादिङीषन्ताः । 'अवन्तीत्यादि' । अवन्तिकुन्तिशब्दा-भ्यामपत्ये 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' कुरोः 'कुरुनादिभ्यो ण्यः' स्त्रिया-मवन्तीति लुक्, कुरुशब्दाद् 'ऊङुत' इत्यूङ् । इतराभ्या 'मितो मनुष्यजाते' रिति ङीष् अत्रापत्यलक्षणा जातिः स्त्रीप्रत्ययान्तेन प्राधान्येनाभिधीयते ॥

"इद्गोण्याः" ॥ 'पञ्चगोणिरिति' । गोणीशब्दः परिमाणवचनः आवपनवचनश्च तत्राद्या 'त्प्राग्वतेष्ठञ्' द्वितीयादार्हीयष्ठक् तयोः पूर्ववल्लुक् । 'इदिति योगविभाग इति' । इहेद्ग्रहणमनर्थकं गोण्या इत्येवास्तु ह्रस्व इत्येव लुकस्तु वचनसामर्थ्यादननुवृत्तिः, तदेतदिद्ग्रहण-मेव लिङ्गं योगविभागस्य, यदि योगविभागः क्रियते सर्वत्रेत्वं प्राप्नोति तत्राह । 'स चेति' । यदि सर्वत्र स्याद् गोणीग्रहणमनर्थकं स्यादिति भावः । ननु तद्धितलुकि लुग्व्यक्त इत्वं चेति तयोर्विकल्पप्रसङ्गे नित्य-मित्वमेव यथा स्यादित्येवमर्थं गोणीग्रहणं स्यात् तत्कथं ततो विशिष्ट-विषयत्वं योगविभागस्य । उच्यते, एक एव तावद्योगः सूत्रकारेण पठित-स्तत्सामर्थ्याद् विभागसंस्कारोऽप्यनुवर्त्तते, अविभक्तश्च योगो विशिष्टविषयः इद्ग्रहणसामर्थ्यात्क्रियमाणो विभागो विशिष्टविषय एव कल्प्यते । अत एवोच्यते योगविभागादिष्टसिद्धिरिति स पुनर्विशिष्टो विषयो व्याख्या-नादवसेयः, तपरकरणन्तत्कालार्थं दीर्घस्य दीर्घो मा भूद् वचनं तु लघु-त्वसाधनार्थं स्याद्, असति च तकारे प्राप्तप्रतिषिद्ध ईकार एव प्रतिप्रसूतः स्याद् न त्वपूर्व इकारो विहितः स्याद् इति भाव्यमानत्वमेव न स्यात् ॥

"लुपि युक्तवद्व्यक्तिवचने" ॥ अभिधेयवल्लिङ्गवचनयोः प्राप्तयोरय-मारम्भः । अभावरूपस्य लुपो लिङ्गसङ्ख्यातिदेशासम्भवादाह 'लुपीति' ।

'लुप्संज्ञेत्यादि'। क्व चित्तु सप्तम्यन्तो लुप्शब्द उपादीयते तत्रापि प्रकृत्यर्थ-एवाभिधातुमिष्टः सप्तम्युपादानन्तु सूत्रे पठितत्वाद्, यथा मताविति मत्वर्थे उच्यतइति । 'युक्तवदिति' 'निष्ठाप्रत्ययेनेत्यादि'। अत्र हेतुमाह । 'स हीति'। युनक्ति, सम्बध्नाति, यद्यपि प्रत्ययार्थोपि प्रकृत्यर्थ-मात्मना युनक्ति तथापि न तस्येह ग्रहणमानर्थक्याद् नहि तस्यैव लिङ्ग-सङ्ख्ये तस्यैव विधातव्ये । 'अथ वेत्यादि'। पूर्वं युजिर्योगइत्यस्य क्तव त्वन्तस्य षष्ठीसमासो दर्शित इदानीं तु तस्यैव धातोः क्तान्तस्य वति-निर्देशो ऽसमासश्चेति प्रदर्श्यते । 'युक्तः प्रकृत्यर्थ इति'। अत्र हेतुः 'प्रत्ययार्थेन सम्बद्ध इति'। अस्मिन्नपि पक्षे पूर्ववदेव प्रत्ययार्थस्याग्रहणं सप्तम्यर्थे वतिरिति, 'लुपीति'। प्रतियोगिनि सप्तमीनिर्द्देशात् सप्तम्यर्थं वर्त्तमानादिवार्थे वतिरित्यर्थः। व्यक्तिशब्द आविर्भावादिके ऽप्यर्थे वर्त्तते वचनशब्दो ऽपि भीमसेनो भीम इतिवद् एकवचनादिशब्दानां एकदेश-प्रयोगो ऽपि सम्भाव्येत तस्य च ग्रहणे पञ्चालानां निवास इति वाक्या-वस्थायां षष्ठीदर्शनात्तस्या एवातिदेशः स्यात्, कुरुपञ्चाला इति च द्वन्द्वे वाक्यावस्थायामतिदिष्टस्य वचनस्य लुकि समुदायाद् बहुवचनं न स्यात् ततस्तत्सम्प्रत्ययो माभूदित्याह । 'व्यक्तिवचने इति चेत्यादि'। पूर्वाचार्यनिर्द्देशाश्रयणे कारणमाह । 'तदीयमेवेत्यादि'। कुत इत्यत आह । 'तथा चेत्यादि'। नहि स्वकृतमेव स्वयं प्रत्याचष्टइति युक्तम्, विषवृक्षो ऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमिति न्यायादिति भावः। 'पञ्चालाः क्षत्रिया इति'। पञ्चालस्यापत्यानि बहूनि 'जनपदश-ब्दात् क्षत्रियादञ्' 'ते तद्राजाः' तद्राजस्य बहुषु । 'तेषां निवासो जनपदइति'। अस्य वक्ष्यमाणेन पञ्चाला इत्यनेन सम्बन्धः 'तस्य निवास' इत्यणो 'जनपदे लुप्'। 'कुरव इत्यादि'। कुरवः क्षत्रिया इत्यादिकं तु पूर्वानुसारेण गम्यमानत्वान्नोक्तं कुरुशब्दादपत्ये 'कुरुनादिभ्यो ण्यः' मग-धादिभ्यो द्व्यञ्मगधेत्यण् शेषं पूर्ववत् । 'लुपीति किमिति'। तद्धितो ऽनु-वृत्तः साहचर्यादर्थमुपस्थापयिष्यतीति प्रश्नः। 'लुकि माभूदिति'। अन्यथा तद्धितलुकीत्यनुवृत्तिस्तत्रैव स्यादिति भावः । 'लवणः सूप इति'।

‘संसृष्टे’ ‘लवणाल्लुक्’ । ‘व्यक्तिवचने इति किमिति’ । युक्तवदिति क्तान्ताद्वृत्तिरेवाश्रयिष्यते षष्ठीनिर्देशो वा करिष्यत इति मन्यते । ‘शिरीषाग्रामदूरभवइत्यादि’ । अरीहणादिषु वराहादिषु कुमुदादिषु शिरीषशब्दस्य पाठाद् वुञ्छणादिसूत्रेण वुञादयो ऽस्माद्भवन्ति तेषां च विशेषविहितत्वाल्लुका न भवितव्यं, सत्यम् । औत्सर्गिको ऽपि तत्र इष्यत इति वक्ष्यति तस्य वरणादिदर्शनाल्लुप्, असति व्यक्तिवचनग्रहणे शिरीषेषु यद्वनस्पतित्वं तस्यापि ग्रामे ऽतिदेशः स्यात् ततश्च णत्वं प्राप्नोति, णत्वविधौ विफली वनस्पतिरिति नाश्रीयते विशेषः । अत एव इहवृत्तिणत्वं भवत्येव । ‘शिरीषवणमिति’ । ननु च ग्रामे ऽपि वर्त्तमानो गुणभूतं वनस्पतित्वमाहेति णत्वप्रसङ्गः, न चात्र किञ्चित्प्रधानाश्रयं कार्यमस्ति येन गुणः स्वकार्यं नारभेत, न च व्यक्तिवचनग्रहणस्य वैयर्थ्यं,असति हि तस्मिन्प्रकृत्यर्थगतस्य व्यतिरेकस्याप्यतिदेशात् षष्ठी प्रसज्येत, सति तु तस्मिन् सङ्ख्यामात्रातिदेशे व्यतिरेकसहितायाः सङ्ख्याया अनतिदेशाद् नायं दोषः, एवं तर्हि णत्वविधौ प्रधानवनस्पतिग्रहणाद् अत्र तदभावः । ‘हरीतक्यः फलानीति’ । हरीतकीशब्दाद् गौरादिङीषन्ताद् अनुदात्तादेश्चेत्यञो ‘हरीतक्यादिभ्यश्चेति’ लुप्, अत्र व्यक्तिरेव युक्तवद्भवति वचनं स्वभिधेयवदेव । ‘खलतिकं वनानीति’ । खलतिकशब्दो वरणादिः समासे उत्तरपदस्य बहुवचनस्य लुपो नियमार्थमेतद् लुबर्थस्य बहुत्वातिदेशः समासे यदि भवति उत्तरपदस्यैवेति मधुरापञ्चालाः, इह न भवति पञ्चालमधुरे इति बहुवचनस्येति वचनाद् । द्वित्वातिदेशः पूर्वपदस्याऽपि भवति गोदौ च ग्रामः मधुरा च गोदमधुरा इति ॥

“विशेषणानां चाजातेः” ॥ पूर्वं प्रकृत्यर्थगतयोर्लिङ्गसङ्ख्ययोर्लुबर्थे ऽतिदेशः कृतो न तु लुबन्ते शब्द इति तत्र वर्त्तमानानां[1] विशेषणानां सिद्ध एव युक्तवद्भावो वचनं तु जातिप्रतिषेधार्थम् । अथ व्यधिकरणानां विध्यर्थं कस्मान्न भवति ब्रह्मदत्तस्य पञ्चाला इति, तत्पुरुषः समानाधिकरण इत्यतः समानाधिकरणानुवृत्तेः । ‘गोदाविति’ । गोदौ ह्रदौ वरणादिः, ग्रा-

१ शब्दानामिति पा· ३ ।

निर्देशात् तत्र विभक्तेर्भेदेनोच्चारणाच्च। तथा 'विदो लटो वे' त्यत्रानन्तर्यो-न्मसो मेत्येव सम्बध्येत, तदाह संज्ञासमासनिर्देशात् सर्वप्रसङ्गानुदेशस्य तत्र यथासंख्यवचनं नियमार्थं संज्ञासमासनिर्देशश्च पृथग्विभक्तिसंज्ञ्य-नुच्चारणार्थः प्रकरणे च सर्वसम्प्रत्ययार्थं इति, तोदेय इत्यादो 'सोस्या भिजन' इत्यत्रार्थं प्रत्ययः। 'इहेत्यादि'। एकयोगत्वपक्षे चोद्यमिभयोगपक्षे तु योगविभागो यथासंख्यनिरासार्थइति वक्ष्यति। केचित्तु विभज्य योगं पठन्ति। अन्ये त्वेकमेव। स्वरितेनेत्यादिपरिहारः। कथं पुनरयं विशेषो लभ्यत-इत्याह। 'स्वरितेनाधिकार इत्यादि'। यद्येवं स्वरिते दृष्टे सन्देहः स्यात् न ज्ञायते किमयं यथासंख्यार्थ आहो स्विदधिकारार्थ इति सन्देहमात्रमे-तद् भवति सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति तत्र व्याख्यानाद्विशेषो भविष्यति॥

"स्वरितेनाधिकारः"॥ अत्र पारिभाषिकस्य स्वरितस्य ग्रहणे रषाभ्यां नो ण इत्यादो नकारादेर्व्यञ्जनस्याधिकारोपलक्षणं नोक्तं स्यात् पारिभाषिकस्याजूधर्म्मत्वादिति मत्वाह। 'स्वरितो नाम वर्णधर्म इति'। वर्णमात्रधर्म इत्यर्थः। स चायं धर्मः कलाध्माताादितुल्यः केवलं सूत्रेष्वेव भवति न प्रयोगे, क्व चित्तु स्वरितो नाम स्वरदोषो वर्णधर्म्म इति पाठः। तत्र स्वरदोष उच्चारणदोषः, अधिकारशब्दो भावसाधनः। 'विनियोग इति'। व्यापारणम्। अथ शब्दस्य विनियुक्तस्य कोव्यापार इत्याह। 'अधि-कृतत्वादुत्तरत्रोपतिष्ठतइति'। उपस्थानमप्येतदेव यदुत्तास्य तत्र बुद्धिस्थता। उत्तरत्रेत्युपलक्षणं क्व चित् पूर्वत्राप्युपतिष्ठते सूत्रकारेण पठितस्याप्यस्य स्व-रितत्वस्य संकीर्णत्वात् पाठस्य विषयविभागो दुर्ज्ञेय इत्याह। 'प्रतिज्ञा-स्वरिता इति'। प्रत्यय इत्याद्युदाहरणानि। किमर्थं पुनरिदमुच्यते यावता निर्द्दिश्यमानं लोकेधिक्रियते यथा देवताय गौर्द्दीयतां कम्बलश्चेति देवद-त्तायेति गम्यते तथा 'सृ स्थिर' इत्यादीनां साकाङ्क्षत्वादनुवृत्तैर्घञादिभि-रेव सम्बन्धो भविष्यति, अन्यनिर्देशस्तन्निवर्त्तकः, तद्यथा देवदत्ताय गौर्द्दीय-तां विष्णुमित्राय कम्बल इति कम्बलो गोर्निवर्त्तको भवति तथेहाप्य-भिविधौ भाव इनुण् इति घञो निवर्त्तकः स्यात् ततश्चा 'क्रोशेऽवन्योर्यह'

इत्यादिष्वनन्तर इनुणेव स्यात् तस्मात्परिभाषा, ऽधिकारपरिमाणज्ञानं तु न ज्ञायते कियन्तमवधिमधिकारोऽनुवर्त्तत इति यथा प्रागभ्यासविकारेभ्योऽङ्गाधिकार उतासप्तमपरिसमाप्तेः, धातोरिति प्राक् लादेशेभ्य उताध्यायस्य परिसमाप्तेः, एवं तदुभयार्थमिदम्। अधिकारार्थं च निवृत्त्यर्थं च कथं स्वरितेनाधिकारः स्वरिते दृष्टे ऽधिकारो न भवतीत्यर्थः, तेन 'विंशतिकात् ख' इत्यत्र स्वरितत्वं प्रतिज्ञेयं तद्दर्शनाच्च द्वित्रिपूर्वादित्यस्य निवृत्तिरवसीयते, एवमपि स्वरिते दृष्टे संदेहः स्यात् किमयमधिकारार्थ आहो स्वित् प्रकृतस्य निवृत्त्यर्थ इति एवं तर्हि यस्य यावत्सु योगेष्वनुवृत्तिरिष्यते तत्र तावतिथोऽलनुबन्धनीयः यथा द्वित्रिपूर्वान्निष्कादित्यत्रेकारः तेन द्वयोर्योगयोरनुवृत्तिर्भविष्यति एवमन्यत्रापि यत्र तावतिथोऽल् नास्ति तत्र प्राग्वचनं कर्त्तव्यं यथा अङ्गस्य प्राक् टेरिति तद् गुरु भवति। स्यादेतत् व्याख्यानात् परिमाणं ज्ञास्यत इति, अधिकारोऽपि तर्हि व्याख्यानात् ज्ञायताम् इनुणघञिति संदेहे घञिति व्याख्यास्यामः, इनुण आनन्तर्यं घञोऽप्यनुवृत्तिसामर्थ्यं दृष्टमित्यस्त्येव संदेहः 'ग्रहवृदृनिश्चिगमश्चे'त्यादिषु त्वनन्तरस्यापि एवाधिकारो न दृष्टानुवृत्तिसामर्थ्यस्यापि घञः सिद्धत्वाद्व्याख्यानाद्वा। यदप्युत्प्रेक्षितम् आकाङ्क्षारहितेऽपि वाक्ये प्रकृतस्य सम्बन्धार्थं शास्त्रीयोऽधिकारो यथा 'दूरान्तिकार्थेभ्यो द्वितीया चे'त्यत्र पञ्चम्यधिकार इति तत्रापि व्याख्यानमेव शरणमिति तदेव सर्वत्रास्तु नार्थ एतेन, इदं तर्हि प्रयोजनम्, अन्यत्र दृष्टस्याधिकारस्य स्वरितेनोपलक्षणं यथा स्याद् यथा गोस्त्रियोरुपसर्जनस्येत्यत्र स्त्रीग्रहणस्य, न ह्येतल्लौकिकेनाधिकारेण सिद्धमानुषङ्गिकं वास्य प्रयोजनं यत् साकाङ्क्षेषु व्यवहितस्य चानुवृत्तिः॥

“अनुदात्तङित आत्मनेपदम्”॥ 'अविशेषेणेत्यादि'। लस्य तिबादयः, लटः शतृशानचौ 'लिटः कानज्वा' 'क्वसुश्च' 'लृटः सद्वे'त्यात्मनेपदपरस्मैपदयोर्विहितत्वादापादपरिसमाप्तेर्नियमार्थं प्रकरणमित्यर्थः। एकवाक्यतया विधावितरेतराश्रयप्रसङ्गः। स्यादेतत्, यथा 'बहुषु बहुवचनं' 'कर्म्मणि द्वितीया' 'ङ्याप्प्रातिपदिका'दित्येतैरेकवाक्यभूतैः

स्यादीनां विशिष्टविधिः, एवमनेन प्रकारेण लस्य तिबादय इत्यादिभिश्च तिङामपि विशिष्टविधिरस्त्विति । यद्येवमात्मनेपदपरस्मैपदसंज्ञाभ्यां तिबादीनां विधिः विहितानां च संज्ञाभ्यां भाव्यमितीतरेतराश्रयं प्राप्नोति स्वरूपेण विशिष्टविधौ शत्रादिष्विति प्रसङ्गः, स्यान्मतं, लस्य तिप्तस्झिसिप्थस्थमिब्वस्मसः, लस्य तिबादयो भवन्ति ततो 'ऽनुपराभ्यां कृञः' कर्त्तर्यनुपूर्वात् करोतेः परस्य लस्य तिबादयो भवन्ति किमर्थमिदं गन्धनावक्षेपणस्वरितञित इति वक्ष्यति तद्बाधनार्थं, कर्तृग्रहणं 'भावकर्म्मणो'रिति वक्ष्यमाणस्य तङो बाधो मा भूदिति, एव 'अभिप्रत्यतिभ्यः क्षिप' इत्यादि, 'लुटि च कॢप' इत्येवमन्तं कृत्वा ततोनुदात्तङितस्तातांझथासाथांध्वमिड्वहिमहिङ्, अनुदात्तङितः परस्य लस्य तादयो भवन्ति तिबादीनामपवादः, ततो भावकर्म्मणोरित्यादि विभाषोपपदेन प्रतीयमानइत्येवमन्तं करिष्यते तत्रायमप्यर्थः आत्मनेपदग्रहणं शेषग्रहणं परस्मैपदग्रहणं न कर्तव्यं भवति । एवमपि प्रकरणान्तरावस्थितानां शत्रादीनां नियमो न स्याद् अतो न स्वरूपेण विशिष्टविधिर्युक्तः संज्ञाश्रयणे तु यत्रैतत्संज्ञकयोर्विधानं तत्र सर्वत्रोपस्थानादयं दोषः किं त्वितरेतराश्रयं प्राप्नोति, यदि त्वस्य सूत्रस्य शाटकं वयेतिवद् भाविनी संज्ञा विज्ञायेत ततो नेतरेतराश्रयं लाघवं प्रति न कश्चिद्विशेष इति किं मुधा भाविसंज्ञाश्रयणखेदेनेति भिन्नवाक्यतया नियमपक्ष एवाश्रितो वृत्तिकारेण, यद्येवं विकरणव्यवधाने नियमाप्रसङ्गः लिङ्लिट्श्नम्श्लुलुक्षु वचनानुबन्धयोरर्थवत्त्वाद्, इह हि विकरणानामवकाशो ऽलादेशाश्चानशादयः, नियमस्यावकाशो यत्र विकरणा न सन्ति स्पर्द्धिषीष्ट पस्पर्द्धे आस्ते शेते अर्त्ति जुहोति भिनत्ति भूयादित्यादि । एधते स्पर्द्धते कुरुते निक्षिशतइत्यादावुभयप्रसङ्गे परत्वाद्विकरणेषु कृतेषु तैर्व्यवधानान्नियमो न स्याद् असति नियमे यदि तावत् प्रकृतिनियमोऽनुदात्तङिदादिभ्य आत्मनेपदमेव शेषाद्धातोः परस्मैपदमेवेति ततोऽस्मिन् विषये उभयप्रसङ्गः, प्रत्ययनियमेऽपि तुल्यजातीयस्य नियमेन व्यावृत्तिरिति धातोरनन्तरस्य लस्य यद्यात्मनेपदपरस्मैपदे भवतोऽनुदात्तङिच्छेषानन्तरमेवे-

त्येवं नियमो विज्ञायमानो धात्वन्तरादेव व्यावर्तयेदिति विकरणव्यवधाने नियमाप्रवृत्तावुभयप्रसङ्ग एव । एकवाक्यतया विधाने तु नायं दोषो विहितेषु लादेशेषु सार्वधातुकापेक्षैर्विकरणैर्भाव्यं विधानं चानेन प्रकरणेन सहेति नेतः प्राग्विकरणसम्भवः स्यादयो लावस्थायां विधीयमाना अपि लकारविशेषापेक्षत्वाद्बहिरङ्गा इति लमात्रापेक्षेष्वन्तरङ्गेष्वादेशेषु कृतेष्वेव भविष्यन्तीति न तत्रापि दोषः । ज्ञापकात् सिद्धं, यदयं 'वृद्भ्यः स्यसनो'रिति स्ये विकल्पं शास्ति तज्ज्ञापयति विकरणेभ्यो नियमो बलीयानिति, एतेनैतदपि निरस्तं चङङ्भ्यामात्मनेपदप्रसङ्ग इति, कथं, पूर्वनियमे प्रवृत्ते पश्चात् चङङौ भवत इति । प्रत्येकमिच्छब्दस्यान्वय इत्याह । 'अनुदात्तेति' । 'ये धातवो ङितश्चेति' । समुदायसम्बन्धे तु चक्षिङ एव स्यात् स ह्यनुदात्तेत् पठ्यते विचक्षण इत्यत्र युज्यथा स्याद् अकारस्त्वनुदात्तेत्त्वनिबन्धनस्यात्मनेपदस्यानित्यत्वज्ञापनार्थस्तेन स एवायं नागः सहति कलभेभ्यः परिभवं, न सहामि साहसमसाहसिकीत्यादि सिद्धम् । धातव इत्येतत् कुतो लभ्यते, के चिदाहुः । 'भूवादयो धातव' इत्यतो धातुग्रहणमनुवर्तते तच्चानुदात्तङित इत्यनेन सामानाधिकरण्यात् पञ्चम्या विपरिणम्यते अत एव चङङ्भ्यामात्मनेपदं न भवतीति यङन्तादपि तर्हि न प्राप्नोति बेभिद्यत इति यद्येवं अत्र ङिद् न तदन्तो धातुः, अवयवे चाचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति, तस्मादिह धातोरिति नानुवर्त्यं प्रायो वृत्त्या तु एतो धातव इत्युक्तं चङङोस्तु परिहार उक्त एव । यद्ययं प्रकृतिनियमः स्याद् अनुदात्तङित आत्मनेपदमेवेति वृतादयो न स्युः वचनाद् भविष्यन्ति अस्ति वचनस्यावकाशः परस्मैपदिनस्तत्रापि नियमः शेषात् परस्मैपदमेवेति तेन वचनाद् भविष्यन्ति तुल्यजातीयस्य च नियमेन व्यावृत्तिः कश्च तुल्यजातीयः आत्मनेपदस्य परस्मैपदं तस्य च तत् । एवमपि शेषात् कर्तरीति शेषग्रहणं न कर्तव्यं प्रकृतिनियमपक्षे कथं प्रकृतयो नियता आत्मनेपदं परस्मैपदं चानियतं ततो वक्ष्यामि परस्मैपदमिति तन्नियमार्थं भविष्यति यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेवेति प्रत्ययनियमस्तु नान्तरेण शेषग्रहणं शक्यो विज्ञातुमिति शेषग्रहणं कुर्वतः

सूत्रकारस्य स एवाभिप्रेत इत्याह । 'तेभ्य आत्मनेपदं भवति नान्येभ्य इति' । यदि प्रत्ययनियमोऽयं शेषात् कर्त्तरि परस्मैपदमित्यत्र यदि तावदेवं नियमः कर्त्तरि यदि भवति शेषादेवेति ततोऽशेषात् कर्त्तरि मा भूद् भावकर्म्मणोस्तु शेषाच्च परस्मैपदं प्राप्नोति, अथ शेषाद्यदि भवति कर्त्तर्य्येवेति ततः शेषाद् भावकर्म्मणोर्मा भूद् अशेषात्तु भावकर्म्मकर्त्तृषु त्रिष्वपि प्राप्नोति, न चैकस्मिन्वाक्ये नियमद्वयं शक्यं विज्ञातुं शेषादेव भवति तत्रापि कर्त्तर्य्येवेति एवं तर्हि योगविभागेन नियमद्वयं तत्रैव साधयिष्यामः । 'आस्त इत्यादि' । आस उपवेशने, वस आच्छादने, षूङ् प्राणिप्रसवे, शीङ् स्वप्ने, अदादयः 'शीङः सार्वधातुके गुणः' ॥

"भावकर्मणोः" ॥ भाव्यत इति भावः, ण्यन्ताद् भवतेः कर्म्मणि घञ् धात्वर्थः क्रियात्मक उच्यते कर्म्म तु पारिभाषिकं, घञादिविधौ तु 'भाव'-इति शुद्धाद् भवतेर्भावे घञ् भावः सत्ता धात्वर्थस्य सिद्धतावस्थोच्यते । अयमपि नियम इति दर्शयितुमन्यतः सिद्धिमाह । 'लः कर्म्मणि चेत्यादि' । कथं पुनरयं नियमः यावता ऽनुदात्तङित एवात्मनेपदमिति पूर्व्वेण नियमेन यथा शेषात् कर्त्तर्य्यात्मनेपदं व्यावर्त्तितमेवं भावकर्म्मणोरपीति तद्विषये विध्यर्थमिदं युक्तं, सत्यं, यदि पूर्वसूत्रे प्रवृत्तेऽस्य प्रवृत्तिर्विपर्य्ययोऽपि शक्यते वक्तुं भावकर्म्मणोरेवात्मनेपदमित्यस्मिन्नियमे प्रवृत्ते ऽनुदात्तङितः कर्त्तर्य्यात्मनेपदमप्राप्तमिति पूर्वसूत्रमपि विध्यर्थमिति तेन द्वयोरपि लस्य तिबादय इत्येतदपेक्षया नियमार्थत्वं परस्परापेक्षया तु विध्यर्थत्वमेवमापादपरिसमाप्तेर्द्रष्टव्यम् । अत एवास्या ऽन्यथा सिद्धिं दर्शयताप्येवशब्दो न प्रयुक्तः तिबादिसूत्रेण धातुसामान्यविहितं च लकारमाश्रित्य तिबादयो विहितास्तत्रेभ्य एव धातुभ्य इति पूर्वो नियमो ऽयन्त्वेतयोरेवार्थयोरिति । ननु चात्रार्थनियम एव ग्रन्थे प्रतीयते ऽयन्त्वत्रार्थो लः कर्म्मणि चेति भावकर्मणोर्यो विहितो लकारस्तस्य सामान्येन तिबादयः सर्वे वक्ष्यन्ते न त्वात्मनेपदमेवातस्तदेव यथा स्यादित्ययमारम्भ इति, प्रत्ययनियमे तु भावकर्म्मकर्त्तृष्वपि विहितस्य लस्य सामान्येन तङ् वक्ष्यत इति वाच्यं स्यात्, सत्यम् । अयन्त्वत्रार्थः भावकर्मणोरित्युपलक्षणम्, भावकर्मकर्तृष्वि-

त्यर्थः, तिबादय इति सूत्रे तिपः प्रथमनिर्देशादेवमुक्तं तिबादिष्वन्तर्भूतास्तङ इत्यर्थः, तङानाविति यावत्, किं पुनः स्याद् यद्ययमर्थनियमः स्याद् इह को भवता लाभो लब्धः को भवता दायो दत्त इति कर्म्मणि घञ् न स्याद् अकर्त्तरि चेत्यस्य त्वपादानादिरवकाशः, यद्यपि तुल्यजातीयस्य परस्मैपदस्य नियमेन व्यावृत्तिरिति परिहारोऽस्ति तथापि पूर्वसूत्रे तावत् प्रत्ययनियम इतीहापि स एवाश्रितः। 'ग्लायतइति'। ग्लै म्लै हर्षक्षये। 'सुप्यतइति'। ञिष्वप् शये, वचिस्वपीत्यादिना संप्रसारणम्। 'क्रियतइति'। 'रिङ्शयग्लिङ्क्षु' यदा कर्म्मवत्कर्म्मणेत्ययं शास्त्रातिदेशो व्यपदेशातिदेशो वा तदा शास्त्रव्यपदेशयोरतिदिष्टयोः स्वेन स्वेन शास्त्रेण तत्तत्कार्यं भवति तत्र कर्मण्यात्मनेपदमित्यस्यावकाशः शुद्धं कर्म्म, कर्त्तरि परस्मैपदमित्यस्य शुद्धः कर्ता कर्म्मकर्त्तर्युभयप्रसङ्गे परत्वात्परस्मैपदं प्राप्नोति अत आह। 'कर्म्मकर्त्तरीत्यादि'। 'द्वितीयं कर्तृग्रहणमनुवर्त्ततइति'। 'कर्त्तरि कर्म्मव्यतिहार'इत्यतः कार्यातिदेशपक्षे त्वात्मनेपदमेव। 'परमिति'। नायं परिहारो वाच्यः॥

"कर्त्तरि कर्मव्यतिहारे"॥ अत्र लौकिकं कर्म्म गृह्यते न पारिभाषिकमित्याह। 'कर्म्मशब्दः क्रियावाचीति'। ननु कृत्रिमत्वात्पारिभाषिकस्यैव ग्रहणं युक्तं ततो देवदत्तस्य धान्यं व्यतिलुनन्तीत्यत्रैव स्यात्, एवं मन्यते इह कर्त्तरि व्यतिहारइतीयता सिद्धं, करणादिव्यतिहारे कस्मान्न भवति, उच्यते, क्रियायाः साध्यत्वात् प्राधान्यं क्रिययाप्तुमिष्टतमत्वात्तादर्थ्येन क्रियाप्रवर्तनात् कर्म्मणोऽपि प्राधान्यमित्युभयव्यतिहारे लब्धे कर्म्मग्रहणं क्रियते तद्यदि साधनं कर्म्म गृह्येत तदा क्रियाया अपि संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् कृत्रिमकर्म्मत्वमिति पुनरुभयोरपि ग्रहणात् कर्म्मग्रहणमनर्थकं स्यात्, किं चात्मनेपदेनाविष्टोनुवृत्तो वा धातुः कर्म्मव्यतिहारेण विशिष्यते तत्र वर्त्तमानाद्धातोरिति न च साधनकर्म्मणि धातोर्वृत्तिः सम्भवति तस्य क्रियावाचित्वादिति। विनिमयो व्यत्यास इत्यर्थः, एतदेव स्पष्टयति। 'यत्रेति'। योग्यतावशादस्येदं साधनमस्येयं क्रिया साध्येति निर्ज्ञातयोर्विपर्यासः साध्यसाधनभावस्य स व्यतिहार

इति विवक्षितं यत्रेत्युपक्रमात्तु स व्यतिहारस्य विषयो विवक्षित इत्यर्थः । परस्परकरणमपि कर्मव्यतिहार उच्यते संप्रहरन्ते राजानः व्यात्युक्षीमभिसरणग्लहामदीव्यन्निति । 'व्यतिलुनन्त इति । 'लूञ् छेदने 'आत्मनेपदेष्वनत' इत्यदादेशः श्नाभ्यस्तयोरित्याकारलोपः 'प्वादीनां ह्रस्वः,' अन्योन्ययोगमन्योन्यविषये वा लवनं कुर्वन्तीत्यर्थः । एवंरूपस्यार्थस्यानेककर्तृकत्वे सति प्रतीयत इत्येकवचनं न भवतीति केचिदाहुः । व्यत्यसे व्यतिहे इत्येकवचनमपि तत्र तत्रोदाहरिष्यते अन्यो व्यतिस्ते तु ममापि धर्म इति भट्टिप्रयोगः । 'कर्मव्यतिहार इति किमिति' । कर्तृग्रहणमेव व्यतिलुनत इत्यादौ प्रापकत्वेनोपयोक्ष्यत इति भावः । अथ कर्तृग्रहणं किमर्थं भावकर्मनिवृत्त्यर्थं न वा पूर्वेण भावाद् भावकर्मणोर्हि पूर्वेणात्मनेपदं भवत्येव व्यतिलूयते व्यतिलूयत इति तेन यथा स्याद् अनेन मा भूत्, कः पुनरत्र विशेषः, तेन वा स्यादनेन वा, अयमस्ति विशेषः अनेन सति 'न गतिहिंसार्थेभ्य' इति प्रतिषेधः प्राप्नोति व्यतिगम्यते ग्रामः व्यतिहन्यन्ते दस्यव इति । न वानन्तरस्य प्रतिषेधाद् व्यतिहन्यत इत्यत्र द्वे प्राप्ती भावकर्मणोरिति च कर्मव्यतीहार इति च तत्रानन्तरस्य विधिर्भवति प्रतिषेधो वेति अनन्तरा कर्मव्यतिहारलक्षणा प्राप्तिः प्रतिषिध्यते पूर्वा तु भविष्यति नार्थ एतेन कर्तृग्रहणेनेत्यत आह । 'कर्तृग्रहणमिति' । शेषात्कर्तरीति प्रदर्शनमितदा 'हो दोनाम्यविग्रहण'-इत्यादावप्यस्योपयोगं वक्ष्यामः ॥

"न गतिहिंसार्थेभ्यः" ॥ 'व्यतिगच्छन्तीत्यादि' । गम्लृ सृप्लृ गतौ वृहि हिसि हिंसायां हन हिंसागत्योः गमे 'इषुगमियमां छः' 'छे चे' ति तुक् सृपेर्लघूपधगुणः हन्तेर्गमहनेत्युपधालोपः हो हन्तेरिति कुत्वम् । 'हसादीनामिति' । हसिप्रकाराणां शब्दक्रियाणामित्यर्थः । 'उपसंख्यानमिति' । संख्यायते संक्षिप्य प्रतिपाद्यते ऽनेनार्थ इति संख्यानं सूत्रं तस्योपोच्चारितमुपसंख्यानं सूत्रं समीपदमपि सूत्रं पठितव्यमित्यर्थः । 'हरतेरप्रतिषेध इति' । अर्थग्रहणसामर्थ्याद्ये शब्दान्तरनिरपेक्षा गतिहिंसयोर्वर्त्तन्ते त इह गृह्यन्त इति उपसर्गवशेन हिंसार्थत्वाद्धरतेरप्रतिषेध इत्याहुः । इह तु ततः संप्रहरिष्यन्तो द्रष्टुं कर्णार्धनञ्जयाविति योत्स्यमानाविति विग्र-

चितं न व्यतिहारः, इह च संव्यवहरन्ते गर्गैरिति वहेरगत्यर्थत्वादप्रतिषेधः देशान्तरप्रापणं हि वहेरर्थः भारं वहतीति नान्तरीयकस्तु गतिप्रत्ययः कन्याप्रापणमुखेन गर्गैः सम्बध्नन्तइत्यर्थः ॥

"इतरेतरान्योन्योपपदाच्च" ॥ उपोच्चारितम्पदमुपपदञ्च पारिभाषिकम् असम्भवाद्, असत्युपपदग्रहणे पञ्चमीनिर्देशे परस्यैवानन्तरस्य स्यात् 'तस्मादित्युत्तरस्ये' ति वचनात्, सप्तमीनिर्देशे तु 'तस्मिन्निति निर्दिष्टे पूर्वस्ये' ति पूर्वस्यैवानन्तरस्य स्यात् तत्र यद्यपि लकारोऽनन्तरः परो न सम्भवति धातुस्तु सम्भवति पूर्वस्तु धातुरनन्तरो न सम्भवति लकारस्तु सम्भवति, तृतीयानिर्देशस्तु पञ्चमीसाधारणत्वा[1]दनध्यवसान इत्युपपदग्रहणं क्रियते । 'इतरेतरस्येत्यादि' । लौकिके तु शब्दव्यवहारे लाघवं प्रत्यनादराद् इतरेतरादिशब्दास्तङ् उपसर्गाश्च कर्मव्यतिहारद्योतनाय समुच्चीयन्ते, कर्मव्यतिहारे 'सर्वनाम्नो द्वे भवतस्समासवच्च बहुलं' यदा न समासवत् प्रथमैकवचनं तदा, पूर्वपदस्येति षष्ठ्येकवचनान्तस्येतरशब्दस्य द्विर्वचने समासवद्भावेन सुब्लुकि समासत्वादेव प्रातिपदिकत्वात्[2] पुनः षष्ठ्येकवचनम् । अन्यशब्दस्य तु बहुलग्रहणादसमासवद्भावे पूर्वपदस्यास्य षष्ठ्येकवचनस्य प्रथमैकवचनम् एवम्परस्परस्येत्यत्रापि कस्कादिषु दर्शनाद्विसर्जनीयस्य सत्वं पदस्य द्विर्वचनविधानादन्योन्यपरस्परेति सूत्रवाक्ययोः प्रकृतिभागमात्रस्यानुकरणं द्रष्टव्यम् ॥

"नेर्विशः" ॥ 'शेषात्कर्तरि परस्मैपदे प्राप्तइति'। अनारम्भस्यापि शेषपदे निपातात् । 'आत्मनेपदं विधीयतइति' । यद्यपि नियमादिसूत्रापेक्षया सर्वस्यैव प्रकरणस्य नियमार्थत्वम् । 'अनुदात्तङित आत्मनेपदं' 'भावकर्मणो' रिति सूत्रद्वयापेक्षया तु विध्यर्थत्वमपि सम्भवतीति मत्वैवमुक्तम्, एवं सर्वत्र द्रष्टव्यम् । न्यविशतेत्यत्र लङि निविश् ल् इति स्थिते लादेशो लकारमात्रापेक्षत्वाद् अन्तरङ्गो ऽडागमस्तु लुङादिविशेषापेक्षत्वा-

१ तृतीयानिर्देशात्वस्य इति पा० २ ।

२ समुदायादित्यधिकं २ पुस्तके ।

द्वहिरङ्ग इति पूर्वं लादेशे विकरणश्च प्राप्नोति अडागमश्च, नित्यत्वाद्विकरणो, ऽडागमो हि विकरणे कृते तदन्तमेव लङि परतोऽङ्गम्। तदादिग्रहणस्य 'स्यादिनुमर्थेत्यादिति तस्यैव प्राप्नोति अकृते विकरणे धातुमात्रस्येति शब्दान्तरप्राप्तेरनित्यः, ततश्च विकरणान्तस्य विधीयमानोऽडागमो धातुमात्रं प्रत्यभक्त इति नेश्च धातोश्च व्यवधायक इत्यात्मनेपदं न प्राप्नोतीत्यत आह। 'यदागमा इत्यादि'। एवं मन्यते बाह्योपसर्गसम्बन्धापेक्षत्वादयं [1]विधिर्बहिरङ्गः, अस्मिंश्चाप्रवृत्ते लादेशोऽप्यप्रवृत्त एव, अपवादविषयपरिहारेण हि तेन प्रवर्तितव्यम्। अनिर्वृत्तश्च लादेशो विकरणोत्पत्तौ न निमित्तं तेन लावस्थायामेवाड् भवन् धातुमात्रस्यैव भवति ततश्च तदवयवत्वाच्च तस्यैव व्यवधायक इति, कथं तर्ह्युक्तं व्यवधानेपि भवतीति, श्रुतिमात्रापेक्षया, क्वचित्त्वटा नास्ति व्यवधानमित्येव पाठः। 'मधु निविशतीति' अङ्गभक्तो नुम् इरेनवयव इति निशब्दस्यानर्थक्यं क्वचित्तु मधूनि निविशन्ति भ्रमरा इति शसन्तं पठ्यते॥

"परिव्यवेभ्यः क्रियः"॥ पर्यादय उपसर्गा एवान्तदिति कथं क्रिय इति षष्ठी, उपसर्गैरेव पर्यादिभिरर्थद्वारको विशेषणविशेष्यभावलक्षणसम्बन्धः, न च क्रियो ये उपसर्गास्तेभ्यः परं धात्वन्तरं सम्भवतीति क्रीणातेरेवात्मनेपदं भवतीति। यद्वा पर्यादिविशेषणाय षष्ठीमनुभूयात्मनेपदसम्बन्धे क्रिय इति पञ्चमी सम्पद्यते तदाह। 'इत्येतेभ्य उत्तरस्मात् क्रीणातेरिति'। 'बहुवीति'। बहवो वयः पक्षिणोऽस्मिन्निति बहुव्रीहिः, कर्मपदं चैतत्, पक्षिवाचिनो विशब्दस्य नपुंसकत्वाभावाद् विभक्त्यास्य व्यवधानात्केवलो नोदाहृतः। ननु बहुव्रीहावपि जहत्स्वार्थायां वृत्तौ वेरानर्थक्यम् अजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वमिति न भविष्यति, एवं तर्ह्युदाहरणदिगियं दर्शिता, इदं तत्रोदाहरणं वे क्रीणासि अत्रैकदेशविकृतस्यानन्यत्वात्प्रसङ्गः, वी क्रीणीतः अत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्प्रसङ्गः॥

"विपराभ्यां जेः"॥ 'साहचर्यादिति'। द्वयोर्दृष्टापचारत्वेऽपि परस्परसाहचर्यादित्यर्थः।'नेर्विश' इत्यादिप्रकरणसाहचर्याद्वा।'बहुवीति'।

[1] विधिरिति २ ४ पुस्तकयोर्नास्ति।

अत्रापि वे जयसि वी जयत इत्युदाहार्य्यं, परा, उत्कृष्टा। अथ कथं जेरिति निर्द्देशः, यावता प्रकृतिवदनुकरणं भवतीति अचि श्नुधात्वित्यादिनेयङादेशेन भवितव्यं, न च दीर्घेषु सावकाशमियङं परत्वात् 'घेर्ङिती'ति गुणो बाधतइति युक्तं, ह्रस्वेष्वपि पूर्व्वविप्रतिषेधेनेयङ् दृष्टत्वात्, तथा च 'त्रिय' इति निर्द्देशः, उच्यते, धातुत्वं तावदर्थाश्रयं क्रियावचनो धातुरिति इह वा विवक्षितार्थं रूपमात्रमनुकृतमिति अनुकार्यस्यापि धातुत्वं नास्ति प्रागेवानुकरणस्य ॥

"आङो दोऽनास्य विहरणे" ॥ यथैवावत्सा धेनुरानीयतामित्युक्ते सम्भवद्वत्ससम्बन्धा गोधेनुरेवानीयते न महिष्यादिधेनुः, तथेहापि सम्भवदास्यविहरणस्य डुदाञ् दानइत्यस्यैव ग्रहणं न तु गामादाग्रहणेष्वविशेष इति सर्व्वेषां दाग्रूपाणामित्याह। 'आङ्पूर्व्वाद्दाञ इति'॥'आदत्त इति'। श्लौ द्विर्वचनं पूर्व्ववदाकारलोपः दकारस्य चर्त्वं, क्व चिदाङो ङिद्विशिष्टस्य ग्रहणं किं भिक्षामाददातीति पठ्यते तत्र स्मृतावाकारः। 'आस्यविहरणसमानक्रियादपीति'। कथ,मिहाङो दोऽनास्य इतीयता सिद्धं द्रव्ये धातोर्वृत्त्यसम्भवादास्यसमवायिन्यां क्रियायां वर्त्तमानस्य समुदायस्य निषेधो विज्ञायते, नचैवं स्वं मुखमादत्तइत्यत्रापि मुखविषयत्वादादानस्य प्रतिषेधप्रसङ्गः, ग्राह्यास्यएव समवेता क्रिया तस्यां वर्त्तमानो ददातिरास्ये वृत्तिर्भवति ग्रहणन्तु ग्राह्यग्राहिणोरुभयोरपि समवेतम्। अनास्य इति पर्युदासः, आस्यानास्यसमुदायश्चास्यादन्य इति विधिरेव भविष्यति, एवं सिद्धे विहरणग्रहणं विहरणविशेषोपलक्षणार्थं तेनासत्यप्यास्ये तादृशे विहरणे भविष्यति यादृशमास्यविहरणम् आस्यव्यादानम्। 'विपादिकेति'। पादस्फोटो विपादिका। 'स्वाङ्गकर्म्मकाच्चेति'। स्वमङ्गं स्वाङ्गं न तु पारिभाषिकमद्रवादिलक्षणं, एतच्च न्यायसिद्धमेवोक्तं, कथं, कर्त्तरीति वर्त्तते आस्यशब्दश्चायं सम्बन्धिशब्दः कस्यास्यमित्यपेक्षायां यस्मिन् कर्त्तर्यात्मनेपदं तस्य चेत्तदास्यमिति विज्ञाते तेन परकीयास्यविहरणे विधिरेव भवति ॥

"क्रीडोऽनुसम्परिभ्यश्च" ॥ 'माणवकमनुक्रीडतीति'। माणवकेन सह क्रीडतीत्यर्थः। 'तृतीयार्थे' इत्यनुः कर्म्मप्रवचनीयसंज्ञकः 'आगमेरिति'

ण्यन्तस्येदं ग्रहणम् आगमयस्व तावदिति सहस्व कञ्चित्कालं मा त्वरिष्ठा इत्यर्थः । 'शिक्षेरिति' । शिक्ष विद्योपादान इत्यस्यानुदात्तेत्त्वादेव सिद्धमिति शकेः सन्नन्तस्य ग्रहणं, 'शिक्षत इति' । सनि मीमाघ्वित्यच इस्, स्कोः संयोगाद्योरिति सलोपः, 'अत्र लोपोऽभ्यासस्य' धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः, क्रियाविषयो हि शकेः प्रयोगः भोक्तुं शक्नोति गन्तुं शक्नोतीति, तदिह ज्ञानं विषय आत्मनेपदेनैव ज्ञानविषयत्वस्य गमितत्वात् ज्ञानमिति न प्रयुज्यते । 'आशिषि नाथ इति' । नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु अनुदात्तेत्, नियमार्थं तु वचनम्, आशिष्येव यथा स्यात् याच्ञादिषु माभूदिति, अनुदात्तेत्त्वं युजर्थं, 'सर्पिषो नाथ इति' । 'आशिषि नाथ' इति कर्म्मणि षष्ठी, सर्पिर्म्मे भूयादित्याशास्त इत्यर्थः । 'हरतेरिति' । गतिः प्रकारः, 'पैतृकमिति' । पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः । 'च्छत्र' 'इसुसुक्तान्तात्कः' प्रत्युदाहरणे सादृश्यमात्रं विवक्षितं न प्रकारताच्छील्यं, 'किरतेरिति' । विक्षेपार्थः किरतिः, हर्षादयस्तु विषयत्वेनोपात्ताः, तत्र हर्षो विक्षेपस्य कारणं जीविकाकुलायकरणे तु फलम् एतेष्वर्थेष्वपाच्चतुष्पाद्इति सुड्विधीयते । 'आनुत इति' । उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः । णु स्तुतौ अदादिः । 'आपृच्छत इति' । प्रच्छ ज्ञीप्सायां तुदादिः, ग्रहीत्यादिना सम्प्रसारणं, 'वाचा शरीरस्पर्शनमिति' । त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवं रूपः शपथविशेषः । 'देवदत्तायेति' । श्लाघह्नुङ्स्थाशपामिति सम्प्रदानसंज्ञा ॥

"समवप्रविभ्यः स्थः" ॥ 'सन्तिष्ठत इति' । पाघ्रादिसूत्रेण तिष्ठादेशः । अत्राप्युपसर्गग्रहणादिह न भवति वे तिष्ठसि वी तिष्ठत इति । 'अस्ति सकारमिति' । स्तः सन्तीत्यादौ सकारमात्रस्य दर्शनात्स भुवीत्येव धातुः पाठ्यः, अस्तीत्यादौ पिति सार्वधातुके अडागमो विधेयः, आस्ताम् आसन्नित्यादौ आडागमस्यादित्यापिशला मन्यन्ते । 'आगमौ गुणवृद्धी इति' । वैयाकरणाः सौवश्व इत्यादौ वृद्धेरागमत्वमित्याहुः । गुणस्य त्वागमत्वे उदाहरणं मृग्यम् ॥

"प्रकाशनस्थेयाख्ययोश्च" ॥ 'स्वाभिप्रायकथनमिति'। कथनमाविष्करणमात्रं न तु शब्देनैव, तेनाभाषमाणायामपि कन्यकायां भवति। 'तिष्ठत्यस्मिन्निति'। प्रकरणादिनात्र विवादपदनिर्णेतुः प्रतीतिर्न तु शाब्दीति विग्रहवाक्ये आत्मनेपदं न कृतं, 'संशय्य कर्णादिष्विति'। संशयस्थानेषु कर्णादीन् निर्णेतृत्वेनाश्रयतीत्यर्थः ॥

'उदोनूर्ध्वकर्म्मणि'॥ 'कर्म्मशब्दः क्रियावाचीति'। साधनकर्म्मणि धातोर्वृत्त्यसम्भवादिति भावः। 'उद ईहायामिति'। ईहा परिस्पन्दः, 'ईहाग्रहणमित्यादि'। ईहात्मकं यदनूर्ध्वकर्मेत्येवमनूर्ध्वकर्म्मण एव विशेषणम् ईहाग्रहणं न पुनरनूर्ध्वकर्म्मग्रहणमपनीय ईहाग्रहणं कर्त्तव्यमित्युक्तं भवत्यर्थः। तथा हि सत्यासनादुत्तिष्ठतीत्यत्रापि स्यात्परिस्पन्दरूपत्वादुत्थानस्येति भावः, उद ईहायामित्येतत्कर्म्मग्रहणात् सिद्धमित्याहुः। कथम् ईहाऽनूर्ध्वे इत्येतावताऽनूर्ध्वताविशिष्टं क्रियावाचित्वं सिद्धं धातोः क्रियावाचित्वात्, एवं सिद्धे कर्म्मग्रहणात् लोकप्रसिद्धं परिस्पन्दात्मकं कर्म्म गृह्यत इति ॥

"उपान् मन्त्रकरणे"॥ पारिभाषिकमत्र करणं गृह्यते, मन्त्रः करणं यस्यार्थस्य तस्मिन्वर्त्तमानादित्यर्थः। 'उपादित्यादि'। अमन्त्रकरणार्थमिदम्। 'सङ्गतकरणमुपश्लेष इति'। विनापि मैत्रीसम्बन्धात्। 'सुघ्नमुपतिष्ठतइति'। प्राप्नोतीत्यर्थः। 'भिक्षुक इति'। लिप्सया हेतुभूतया ब्राह्मणकुलमुपगच्छतीत्यर्थः ॥

"अकर्मकाच्च"॥ यत्रासम्भवात् क्रिया कर्म्म न गृह्यते, न ह्यस्ति सम्भवो धातुश्च भवत्यक्रियावचनश्चेति। ननु च साधनकर्म्मणाप्यकर्मकत्वमव्यभिचारादविशेषणं नहि शब्दात्मकस्य धातोः कर्मणा योगवियोगौ सम्भवतः साधनयोगस्य क्रियाधर्म्मत्वादत आह। 'अकर्म्मकक्रियावचनादिति'। एतेनार्थद्वारकमेतद् धातोर्विशेषणमिति दर्शयति। 'यावद्युक्तमिति'। यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः। सप्तम्यन्तं चैतत्। 'संनिधीयतइत्यर्थ इति'। भावे लकारः, अर्थतो व्याख्यानं चैतत्, यो ह्युपतिष्ठते स संनिधत्ते यश्च संनिधत्ते तेन संनिधीयते। 'अकर्म्मकादिति किमिति'। पूर्व-

सूत्रे उपाद्वितियोगविभागादिष्टस्य सिद्धिं पश्यति, न चैवमतिप्रसङ्गः, मन्त्रकरणइत्यस्य नियमार्थत्वात् सकर्म्मकाच्चद्वि भवति मन्त्रकरणएवेति। 'राजानमुपतिष्ठतीति'। विपरीतोपि नियमः स्यात्, करणे यदि भवति मन्त्रकरणएवेति ततश्चात्र स्यादेवेति भावः ॥

"उद्विभ्यां तपः" ॥ उत्तपति सुवर्णमित्यत्र सन्तापने विलापने वा तपिर्वर्त्ततइति सकर्म्मकत्वं, 'स्वमङ्गं स्वाङ्गमिति'। यस्मिन्कर्त्तर्यात्मनेपदं तस्य चेत् स्वमङ्गमित्यर्थः। यद्यन्वर्थग्रहणं ततोप्राणिन्यपि कर्त्तरि यस्य यदङ्गं तत्कर्म्मकादपि प्रसङ्गः परिभाषिके त्वेव दोषो न भवति तस्य प्राणिस्थत्वात्। अन्वर्थेपि न दोषः तपेः प्राणिकर्तृकत्वात्। पारिभाषिकस्य त्वसम्बन्धिशब्दत्वात् कर्तुश्चेत्स्वमङ्गमित्येवं न प्रतीयेतेति भावः ॥

'आङो यमहनः' ॥ 'आहतेति'। अनुदात्तोपदेशेत्यनुनासिकलोपः। 'आघ्नत इति'। पूर्ववदादेशोपधालोपो कुत्वं च। 'आहन्ति शिरः परकीयमिति'। आजघ्ने विषमविलोचनस्य वक्ष इत्यत्र तु गाण्डीवी विषमविलोचनस्य वक्ष इत्य स्वं वक्षो हतवानित्यर्थः। मल्लोप्युत्साहवर्धनाय स्वं वक्ष आस्फालयति ॥

"समो गमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः" ॥ समो गमृच्छिभ्यामित्येतावत्सूत्रं, प्रच्छ्यादयस्तु वार्तिकदृष्टाः सूत्ररूपेण पठिताः सूत्रकारवद्वार्तिककारोपि शास्त्रस्य कर्ता न व्याख्यातेति दर्शयितुम्। 'तत्र हीति'। उत्तरार्थमनुवर्त्तमानमपि योगविभागसामर्थ्यात् तत्र न सम्बध्यतइत्यर्थः। 'न लाभार्थस्येति' सत्ताविचारणार्थयोस्त्वनुदात्तेत्त्वादात्मनेपदेन भाव्यमेवेति भावः। 'दृशेश्चेत्यादि'। इदं वक्तव्यरूपेणैव पठितं विचित्रा हि वृत्तेः कृतिः वृत्तिकारेण, अथास्मिन्नकर्मकाधिकारे ये सकर्मका हनिगमिप्रभृतयस्तेषां कथमकर्म्मकत्वम्, उच्यते ॥

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्म्मणोकर्म्मिका क्रिया ॥

वहति भारमिति, प्रापणे सकर्म्मको वहिः स्यन्दनेत्वकर्म्मकः। वहन्ति नद्य इति, प्राणविशिष्टं धारणं जीवतिराह, तत्र प्राणानां

धातुनैवोपात्तत्वाच्च तेन कर्म्मणा सकर्म्मकत्वं, न च प्राणकर्म्मके धात्वो ऽन्यस्य कर्म्मत्वमिति जीवतिरकर्म्मकः, प्रसिद्धेर्येथा वर्षतीत्यनुपात्ते कर्म्मान्तरे नियमेन जलं प्रतीयतइति न तेन सकर्म्मकत्वं, तेन वृष्टे देवइति कर्त्तरि क्तो भवति व्यभिचारिणा तु रुधिरादिना सकर्म्मक एव, रुधिरं वर्षति शरान्वर्षतीति, कर्म्मणो ऽविवक्षयाप्यकर्मकत्वं यथा नेह पच्यते नेह भुज्यते इत्यत्र कर्म्मविवक्षायां तत्कर्मिकैव क्रिया प्रतिषिद्धा स्याद् न पाकमात्रमित्यविवक्षा कर्म्मणः ॥

"निसमुपविभ्यो ह्वः" ॥ 'निह्वयतइति'। कथं पुनरत्रात्मनेपदं यावता ह्वा इत्याकारान्तादियं पञ्चमी एकारान्तश्चायं न च विकृतिः प्रकृतिं संगृह्णाति, सत्य माकारान्तात्पञ्चमी न त्विदं प्रयोगस्यस्याकारान्तस्यानुकरणं किं तर्हि धातुपाठे ऽवस्थितैकारान्तस्य तस्यैव लक्षणवशादात्वं, न चानुक्रियमाणरूपविनाशप्रसङ्गः शास्त्रवासनया तस्यैव प्रतीतिः, यथा 'यस्येति चे' तीकाराकारयोः ॥

"स्पर्द्धायामाङः" ॥ 'सविषय इति'। हेतुभावेन च विषयत्वम्, अत एव हेतौ शानच् प्रयुक्तः। 'स्पर्द्धमानस्तस्याह्वानमिति'। 'शब्दक्रिय एवेति'। यद्यपि स्पर्द्धायां पठ्यते तथाप्याङ्पूर्वस्तत्र न वर्त्तते किं तर्हि शब्दनक्रियावाचीत्यर्थः ॥

"गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" ॥ 'अपकारयुक्तमिति'। अपकारेण प्रयुक्तमनेन मेपकृतमित्येतया बुध्या कृतमित्यर्थः, अथ वा कथं मया ऽपकृतं स्यादिति बुध्या प्रवर्तितमित्यर्थः। 'हिंसात्मकमिति'। सूचितस्य वधबन्धनादिका हिंसा इह तु तत्करणत्वात् सूचनमेव हिंसा स्वभावमित्युक्तं, कथं पुनर्ज्ञायते गन्धनं हिंसात्मकमित्यत आह। 'तथाहीति'। 'चुरादाविति'। स्वभावानुवादः। 'साहसिक्यमिति'। सहसा वर्त्तते साहसिकः 'ओजःसहोम्भसा वर्त्तते'-इति ठक्, तस्य कर्म्मणि ष्यञ्, वर्तिका शकुनिविशेषः 'एधोदकस्येति'। समाहारद्वन्द्वः। 'कृञः प्रतियत्न' इति षष्ठी। 'उपस्कुरुतइति'। उपात्प्रतियत्नेत्यादिना सुट् ॥

"अधेः प्रसहने" ॥ 'प्रसहनमभिभव इति'। सा साह्या युधा नृभिः पृतनाषाडित्यादौ दर्शनात्, के चित्तु वह मर्षणे ऽभिभवे छन्दसीति पठन्ति तत्र छन्दसीति प्रायिकं द्रष्टव्यम्, 'अपराजयो वेति'। पराजेतुं समर्थस्येव तमया यस्तदभावः स इत्यर्थः, तथा च भारविः । भवादृशाश्चेदधिकुर्वते परान् इति, भवादृशाश्चेत्परानधिकुर्वते तमया न पराजयन्ते वमन्त-इत्यर्थस्तदाह । 'न वा तेन पराजित इत्यर्थ इति' । तेनात्मनेपदवाच्येन कर्त्रा तमित्येतद्वाच्यः कर्मभूतो न पराजित इत्यर्थः । 'पृथग्योगकरणमित्यादि' । प्रकथनोपयोगप्रसहनेष्वधेरित्युच्यमाने गन्धनादिष्वपि अधिपूर्वाद्देव स्यात्, अथ तत्राधिग्रहणं न क्रियेत प्रसहनेप्यध्यभावेपि प्रसङ्गः, अत उत्सर्गाय प्रसहनं विशेषयिष्यामीति प्रसहने वा उत्सर्गं विशेषयिष्यामीति योगविभाग इत्यर्थः ॥

"वेः शब्दकर्म्मणः" ॥ उदोनूर्ध्वकर्म्मणीत्यादिवत् कर्म्मशब्दः क्रियावाची मा विज्ञायीत्याह । 'कर्म्मशब्दइत्यादि'। विपूर्वस्य करोतेः शब्दक्रियायां वृत्त्यसम्भवात् कृत्रिमसम्भवे लौकिकस्य ग्रहणायोगाच्च, किं च वेः शब्दइत्येव वक्तव्यं कर्म्मग्रहणमनर्थकं, 'विकरोति पय इति,' सकर्म्मकत्वाद् उत्तरेणापि न भवति ॥

"अकर्म्मकाच्च" ॥ 'ओदनस्य पूर्णा इति' । सुहितार्थयोगे षष्ठी भवति ज्ञापनात्, यदयं पूरणगुणसुहितार्थेतिसुहितार्थयोगे या षष्ठी सा न समस्यतइत्याह, तज्ज्ञापयत्याचार्यो भवति सुहितार्थयोगे षष्ठीति । 'अकर्म्मकादिति किमिति'। पूर्वसूत्रे वेरिति योगविभागेनेष्टसिद्धिं मन्यते, न चैवमतिप्रसङ्गः शब्दकर्म्मण इत्यस्य नियमार्थत्वात् कर्म्मणि यदि भवति शब्दएवेति, कटं विकरोतीति, विपरीतोपि नियमः सम्भाव्येत शब्दे यदि भवति कर्म्मण्येवेति ततश्चात्रापि स्यादिति भावः ॥

"सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" ॥ 'सम्माननादिषु विशेषणेषु सत्स्विति'। युक्तं सम्माननाचार्यकरणवेतनानां विशेषणत्वं तत्र हि प्रापणमेव धात्वर्थः सम्माननादीनि तु तमेव विषयतया व्यवच्छिन्दन्ति, उत्संजनादीनां त्वयुक्तस्तेषामेव धात्वर्थत्वात् तद्व्यतिरिक्तस्य विशेष्यस्यासम्भवात्, उच्यते, सम्माननादेरुत्सञ्जनादेश्च विशे-

पणत्वं समानं पूर्वोक्तं धात्वर्थविशेषणम्, उत्तरस्तु धातुविशेषणमिति विशेष्यमात्रं भिद्यते ऽतः सुष्ठूक्तं सम्माननादिषु विशेषणेष्विति । 'चार्वी बुद्धिरिति'। चारुशब्दात् 'वोतो गुणवचनादि' ति ङीष् । 'आचार्योऽपि चार्वीति'। यथा यष्टीः प्रवेशयेति पुरुषेष्वजहत्स्वलिङ्ग एव यष्टिशब्दः तद्वच्च चार्वीशब्दः । 'ते युक्तिभिरित्यादि'। पूर्वस्मिन् वाक्ये गुणभावेनापि प्रकृताः शिष्याः तच्छब्देन परामृश्यन्ते, 'स्थाप्यमानेति' तिष्ठतिः प्रतिपादनेऽत्र वर्त्तते ते शिष्याः युक्तिभिः प्रतिपाद्यमानाः निष्पाद्यमाना इत्यर्थः । 'पूजिता भवन्तीति' । अभिलषितार्थसम्पादनमेवैतेषां पूजा, पदार्थो युक्तिभिः स्थाप्यमाना इति तु व्याख्याने पदार्थानामचेतनत्वात् न मुख्यं संम्माननम् । 'उत्क्षिपतीत्यर्थे इति'। तेनोत्सञ्जनं नयतेरर्थ इति दर्शयति । आचार्यकरणमाचार्यक्रियेति, सूत्रवृत्तौ च कारणावस्थाया विवक्षितत्वात् च्विः प्राप्तोऽपि विकल्पाधिकाराच्च कृतः, तथा चाचार्यी कुर्वंवेति च्विः प्रयुक्त, ननूपनयनं माणवकस्य संस्कारो येनासावध्ययने योग्यो भवति न त्वनेनाचार्ये कश्चिदतिशयो जन्यते आचार्यशब्दस्य तु प्रवृत्तिनिमित्तमुपनीयाध्यापनं नाम क्रियाविशेषो यथोपाध्यायशब्दस्यैकदेशाध्यापनं तत्कथमाचार्यकरणआत्मनेपदं विधीयतइत्यत आह । 'माणवकमीदृशेनेत्यादि' । एवं मन्यते, उपनीयाध्यापनेनादृष्टरूपः कश्चिदतिशय आचार्ये जन्यते तदेव प्रवृत्तिनिमित्तमाचार्यशब्दस्येति तदाह,'स्वयमाचार्यः सम्पद्यतइति'। 'आत्मानमाचार्यीकुर्वविति च' हेतुलक्षणे लटः शत्रादेशः । 'ईदृशेनेति' । यादृशः शास्त्रोक्तो विधिस्तादृशेनेत्यर्थः । ननु यदाचार्यकमुपनयनस्य प्रयोजनं तत्कर्त्रभिप्रायमिति नार्थ आचार्यकरणआत्मनेपदविधानेन, उच्यते । नोपनयनेनाचार्यकं जन्यते किं तर्हि तत्पूर्वकेणाध्ययनेन, उपनयनक्रियायास्तु माणवकसंस्कारः साक्षात्फलम्, एवं संस्कृतस्य माणवकस्य यदध्यापनं तेनाचार्यकं जन्यतइति न तदुपनयनायाः क्रियायाः फलं, यच्च तस्याः फलं तन्माणवकगामि न कर्त्तृगामि। 'निश्चिनोतीत्यर्थे इति' । अनेन ज्ञानं नयतेरर्थ इत्याह । 'कारं विनयतइति' । कर एव कारः प्रज्ञादिः, राजग्राह्यो भागः कर्षकैः कल्पितः ॥

"कर्तृस्थे चाशरीरे कर्म्मणि" ॥ नयतेरात्मनेपदविधानात्तत्सम्बन्ध्येव कर्त्ता लकारवाच्यः प्रत्यासत्त्या गृह्यतइत्याह। 'नेयतेः कर्त्तेति'। 'तदेकदेशोपि शरीरमिति'। अपिशब्दोवधारणे, इह शरीरस्यैव चैतन्यविशिष्टस्य कर्तृत्वं लौकिकाः प्रतियन्ति न तद्व्यतिरिक्तस्य बुद्धीन्द्रियादिमतश्चेतनस्य, न च शरीरमेव शरीरस्थं भवति अतस्तदेकदेश एव तद्ग्रहणेन गृह्यते इत्यर्थः, अत्र क्रोधाद्यपनयनफलं कर्त्रभिप्रायमिति स्वरितञित इत्येव सिद्धे नियमार्थमिदं कर्तृस्थे कर्म्मण्यशरीरस्थएवेति, अथ कथं विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषव इति। केचिदाहुः। अपगमे वर्तमानादिदमात्मनेपदविधानं भवति, अत्र तु करोत्यर्थे प्राप्त्यर्थे वा वर्तते ऽनेकार्थत्वाद्धातूनामिति ॥

"वृत्तिसर्गतायनेषु क्रमः" ॥ 'सर्ग उत्साह इति'। सृष्टश्चेद्रावणवधे येनेन्द्रलोकापजयाय सृष्ट इत्यादौ दर्शनात्सृजिरुत्साहार्थः। इत्यादिष्विति किम्। अपक्रामति ॥

"उपपराभ्याम्" ॥ 'उपपराभ्यामिति किमिति'। उपसर्गनियमः किमर्थं इत्यर्थः। 'संक्रामतीति'। 'क्रमः परस्मैपदेष्वि'ति दीर्घः ॥

"आङ उद्गमने" ॥ 'आक्रामति माणवकः कुतुपमिति'। अवष्टभ्नातीत्यर्थः। ह्रस्वा कुतूः कुतुपः, कत्वा डुपच्। कुतपमिति पाठे कुतपो दर्भसंस्तरः। 'आक्रामति धूमो हर्म्यतलमिति'। उद्गमने क्रमिरकर्म्मकस्तस्माद्धर्म्यतलादिति पञ्चम्यन्तं पठितव्यं, यद्वा उद्गमनपूर्विकायां व्याप्तावत्र क्रमिर्द्रष्टव्यः, इह तु नभः समाक्रामति चन्द्रमाः क्रमादिति क्रमिर्व्याप्तौ वर्तते नोद्गमने ॥

"वेः पादविहरणे" ॥ 'विक्रामत्यजिनसन्धिरिति'। द्विधा भवति स्फुटतीत्यर्थः ॥

"प्रोपाभ्यां समर्थाभ्याम्" ॥ अन्योन्यसाहचर्यात्प्रोपयोरुपसर्गयोर्ग्रहणं न प्रातिपदिकान्तकर्म्मप्रवचनीययोर्नापि क्रियान्तरसम्बन्धिनोर्नाप्य-

१ प्राप्त्याविति पा॰।

नर्थकयोरित्याह । 'प्र उप इत्येताभ्यामुपसर्गाभ्यामिति' । 'तुल्यार्थयोरिति' । एतेन समोऽर्थो ययोरिति समर्थौ शकन्ध्वादित्वात्पररूपं संशब्दस्यैव वा ऽनेकार्थत्वात्तुल्यार्थत्वमिति दर्शयति । ननु 'समर्थः पदविधिरि' त्यादौ सम्बन्धार्थत्वं प्रसिद्धं, सत्यम्, इह तु धात्वर्थं प्रति पारतन्त्र्याच्च परस्परेण सम्बन्धार्थत्वं धातुना चोपसर्गयोः सम्बन्धो ऽव्यभिचारी तस्मात्पूर्वोक्त एवार्थः । 'प्रक्रमतइति' । आरभतइत्यर्थः ॥

"अनुपसर्गाद्वा" ॥ 'अप्राप्तविभाषेयमिति' । उपपराभ्यामित्यस्य नियमार्थत्वात् वृत्त्यादिसूत्रमनुपसर्गविषयमेवेति न तत्रायं विकल्प इति भावः ॥

"अपह्नवे ज्ञः" ॥ 'शेषादित्यादि' । असत्यस्मिन् सूत्रे अयमविशेष एव भवतीति भावः । 'सोपसर्गश्चेति' । तेना 'नुपसर्गाज्ज्ञ' इत्यनेन कर्त्रभिप्राये क्रियाफले न सिद्ध्यतीति भावः । 'अपजानीतइति' । 'आजनोर्ज्ञा' ॥

"अकर्मकाच्च" ॥ 'अकर्त्रभिप्रायार्थमिदमिति' । अथ कर्त्रभिप्राये कथं तत्राह । 'कर्त्रभिप्राये हीति' । ननु सोपसर्गात्कर्त्रभिप्रायेप्यनेनैवात्मनेपदमेषितव्यम् औपधस्यानुजानीते औपधस्यानुजिज्ञासतइति तस्मात्सर्पिषो जानीतइत्युदाहरणाभिप्रायमेतद्वेदितव्यम् । 'कथं चायमकर्म्मक इति' । सर्पिष इति कर्म्मणि शेषत्वेन षष्ठी न मापाणामश्नीयादितिवत्, तेन सर्पिरादिना ज्ञेयेन सकर्म्मक इति मत्वा प्रश्नः । 'अकर्म्मकादिति किमिति' यदि सर्पिरादि करणत्वेन विवक्षितं तर्हि करणादिति वक्तव्यमित्यभिप्रायः । एवमुच्यमाने सकर्म्मकादपि स्यादेवेति दर्शयति 'स्वरेणेति' ॥

"सम्प्रतिभ्यामनाध्याने" ॥ उत्कण्ठास्मरणं, 'मातुरिति' । अधीगर्थदयेशामिति षष्ठी । ननु शेष इति तत्रानुवर्त्तते तेन कर्म्म शेषत्वेन विवक्षितव्यमिति अकर्मकत्वात्पूर्वेणात्मनेपदप्रसङ्गः, अनाध्यानइत्यस्य तु मातरं संजानातीति व्यावर्त्त्यं स्यात्तत्र कर्मतैव विवक्षिता, नैष दोषः । अनाध्यानइति विभज्यते तेन पूर्वयोगस्यापि शेषो भविष्यति ॥

“भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः” ॥ ‘भासनादिष्विति’। अत्रापि किंचिद्धातोर्विशेषणं किञ्चिद्धात्वर्थस्य । उपसान्त्वनमुपच्छन्दनं धातोर्भासनादिधात्वर्थस्य भासमानइति हेतौ लटः शानजादेशप्रयोगेण भासनं हेतुत्वेन विशेषणमित्याह । शिष्यैस्तूयमानो भासते तथा चोपर्युपरि शास्त्रार्थस्य प्रतिभासनात् सुष्ठु वदनं भवति तेजोभङ्गे तु न शक्नुयाद्वदितुं, जानाति वदितुमिति शकधृषेत्यादिना तुमुन्, अत्र वदत्यर्थो ज्ञानस्य विषयः ज्ञानं विषयि । ‘तद्विषयमित्यादि’। अत्र यत्नस्याविष्करणरूपस्य वदत्यर्थस्य कर्म्म, ‘विमतिपनिता इति,’ हेतुगर्भं विशेषणं, प्रयुञ्जानो विमतिर्हेतुत्वेन विशेषणमित्याह । विमतौ हि सत्यां विचित्रभाषणरूपो वदत्यर्थो निवर्तते । ‘उपच्छन्दयतीति’। भद्र भजस्व माम् इदन्ते दास्यामीति स्वाभिलषिते प्रवर्तयतीत्यर्थः ॥

“व्यक्तवाचां समुच्चारणे” ॥ ‘मनुष्याः पमिह्वा इति’। यद्यपि कुक्कुटादिरुतमपि स्वरूपेण व्यक्तमस्येदं रुतमस्येदमिति, मनुष्यवाक्तु व्यक्ततरा भवति वर्णात्मकत्वाद् अर्थावगतिहेतुत्वाच्च, अतस्त एव गृह्यन्ते, शुकशारिकादीनां तु पुरुषप्रयत्नवशेन क्वाचित्कं व्यक्तवाक्त्वं न ‘स्वाभाविकमिति’[1] न तेषां ग्रहणम्. ‘वरतनु सम्प्रवदन्ति कुक्कुटा इति’। अपनय पादसरोजमङ्कतः शिथिलय बाहुलतां गलाहृतां, क्व च वदनैः शुकमाकुलीकृतम्, पूर्वपादाः क्व चित्तु कृत्स्न एव श्लोकः पठ्यते, तत्र वरतनुरिति बहुव्रीहौ यदि ह्रस्वान्तस्तनुशब्दः ततः ‘संबुद्धौ चेति’ गुणप्रसङ्गः दीर्घान्ते तु नदीलक्षणः कप् प्राप्नोति, केचिदाहुः, तनुशब्दः स्त्रीजातौ कविभिः प्रयुज्यते तस्माद् ‘ऊङुत’ इति ऊङि कृते कर्म्मधारयोऽयमिति ॥

‘अनोरकर्म्मकात्’ ॥ ‘व्यक्तवाचामिति वर्त्तते इति’। न तु समुच्चारणइति सर्वानुवृत्तौ वचनमिदमनर्थकं स्यादिति भावः, तद्व्यक्तवाक्सम्बन्धिनो वदेरिति सूत्रार्थमाह । ‘व्यक्तवाग्विषयादिति’। ‘अनुः सादृश्यइति’। तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठीति भावः । ‘यथेत्यादि’।

१ सार्वत्रिकमिति पा० २ ।

वदनमात्रसादृश्ये तात्पर्य्यमिति कर्म्म न विवक्षितमिति भावः । 'अनुवदतीति' । पुनर्वदतीत्यर्थः ॥

"विभाषा विप्रलापे" ॥ संवत्सरान् वदन्तीति सांवत्सराः, ज्यौतिषिका, एवं मौहूर्त्तिकाः ॥

"अवाद्ग्रः" ॥ गिर इति पाठे धात्वनुकरणत्वाद् विभक्ताविত्वं, ग्र इति तु पाठे रूपमात्रानुकरणं द्रष्टव्यं, 'तस्य क्ष्णवपूर्वस्येति' । नियतविषयाण्यपि क्रियाविशेषणानि भवन्ति यथोर्योदयः कृभ्वस्तिभ्योऽन्यत्रियया न भवन्तीति भावः ॥

"समः प्रतिज्ञाने" ॥ 'प्रतिज्ञानमभ्युपगम इति' । के चिदाहुः परोपदेशनिरपेक्षमात्मनैव विप्रतिपन्नस्य पक्षस्य परिग्रहोऽभ्युपगमः । परेण प्रार्थितस्यार्थस्य नियमवचनमेतावद्दास्यामीति, अस्मिन्काले दास्यामीत्येवं रूपः प्रतिश्रवः, परेण युक्त्या साधितस्यार्थस्य सम्माननं समीचीनमुक्तमत्र भवतेत्येवं रूपमङ्गीकरणमिति, प्रतिज्ञासामान्यावान्तरभेदा एते न तु पर्याया इति । वृत्तिकारस्तु परस्परविषये ऽङ्गीकरणादिव्यहारदर्शनात् पर्यायत्वमेव मन्यते ॥

"उदश्चरः सकर्म्मकात्" ॥ 'उत्क्रम्येति' । उल्लङ्घ्येत्यर्थः । 'उच्चरतीति' । उपरिष्टाद्गच्छतीत्यर्थः ॥

"समस्तृतीयायुक्तात्" ॥ 'विभक्तिर्यद्यपीति' । तत्रैव तृतीयाशब्दस्य मुख्यत्वात् । यद्येवं तया सह धातोः सम्बन्धो न भवति नहि तृतीया धातुवाच्या नापि धातुस्तृतीयान्त इत्यत आह । 'तयेत्यादि' । तृतीयार्थेन धात्वर्थस्य योगादौपचारिको धातोस्तृतीयायोग इत्यर्थः । 'यद्यप्यत्रेति' । न हि चेष्टारूपसञ्चरणमन्तरेण करणं सम्भवति अतोऽश्रुतेपि करणपदे तपसा श्रुतेन वेति गम्यमानत्वात्तदर्थयोगस्य सम्भवः । 'तृतीया त्विति' । एतदर्थमेव हि पूर्वमुक्तं विभक्तिर्यद्यपि इति । तृतीयायुक्तादिति वा ऽनर्थकं स्यात् । यदि तदर्थयोगः स्यात् सर्वत्रैवं तदर्थभावादिति भावः ॥

"दाणश्च सा चेच्चतुर्थ्यर्थे" ॥ 'वक्तव्यमेवैतदिति'। सूत्रे चेच्छब्दश्चशब्दश्चार्थे, अनेकार्थत्वान्निपातानामिति, के चिद्दाणस्तृतीयायुक्तादात्मनेपदं भवति सा च तृतीया चतुर्थ्यर्थे वेदितव्येति व्याचक्षते, एवमपि अशिष्टव्यवहार इति वक्तव्यमेव, अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहार आचारः तस्मिन्नित्यर्थः। 'दास्या सम्प्रयच्छत इति'। यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुङ्क्ते स्वयं च तस्यै ददाति तद्विषयोऽयं प्रयोग इत्याहुः। 'कथमात्मनेपदमिति'। न कथं चित् तस्मादित्युत्तरस्येत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति भावः। 'विशेषणषष्ठीति'। एवं च पूर्वसूत्रेप्यश्वेन समुदाचरत इत्यादावपि भवितव्यम् ॥

"उपाद्यमः स्वकरणे" ॥ इह स्वस्य सतो रूपान्तरेण यत्करणं तत्स्वकरणमिति न गृह्यते किं तर्हि यदा ऽस्वं स्वं करोति तदा भवितव्यं, च्विप्रत्ययस्तु विकल्पितत्वान्न भवति। 'पाणिग्रहणविशिष्टमिति'। पाणिग्रहणं नाम कश्चित्कन्यासंस्कारस्तद्विशिष्टमित्यर्थः। भाष्ये त्वस्वस्य सतः स्वत्वापादनमेव स्वकरणमित्युक्तं, भट्टिकाव्येपि तदनुगुणः प्रयोगः उपायंस्त महास्त्राणि, उपायंसत नासतं, नोपयंस्त दशानन इति। देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति, यज्ञदत्तसम्बन्धिनीं भार्यां दास्यादिरूपेण स्वीकरोतीत्यर्थः। पाणिग्रहणाभावाद् वृत्तिकारमते युक्तं प्रत्युदाहरणं भाष्यकारमते त्वत्रापि भवितव्यम् ॥

"ज्ञाश्रुस्मृदृशां सनः" ॥ 'श्रुदृशोरपीति'। श्रुवः सूत्र एव निर्देशाद् दृश उपसंख्यानात् ॥

"नानोर्ज्ञः" ॥ 'पूर्व्वेणेति'। अनन्तरसूत्रेण यत्प्राप्तं तत्प्रतिषिध्यते, कुत एतत् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति। 'तथा चेति'। अनन्तरस्य प्रतिषेध इत्युक्तम्, एवं सति सकर्म्मकस्यैवायं प्रतिषेधः सम्पद्यते अनन्तरयोगस्य सकर्म्मकविषयत्वादकर्म्मकाविषयत्वाद 'कर्म्मकाच्चेति' प्रागेव विहितत्वात् तेनाकर्म्मका 'त्पूर्ववत्सन'इत्यात्मनेपदं भवत्येव चौषध्यस्यानुजिज्ञासत इति । चौषधेन प्रवर्तितुमिच्छतीत्यर्थः ॥

"प्रत्याङ्भ्यां श्रुवः" ॥ 'उपसर्गग्रहणं चेदमिति'। परस्परसाहचर्यात्। 'देवदत्तं प्रतीति'। लक्षणेत्थंभूतेत्यादिना प्रतिः कर्मप्रवचनीयो नोपसर्गः॥

"शदेः शितः" ॥ यद्यत्र शदेः परो यः शित् तत आत्मनेपदं भवतीत्येवं व्यधिकरणे पञ्चम्याावाश्रित्य व्याख्यायेत ततोऽपि विकरणे सत्यनेन विधिना भवितव्यं सार्वधातुके च परतो विकरणो विधीयते ततश्च प्रागेवास्मादिविधेः सार्वधातुकं भवच्छेपत्वात्परस्मैपदं स्यात्, तस्मिंश्च सति तन्निमित्ते शिति विकरणे कृते परस्मैपदस्य निवृत्तिर्न सिध्येत्, नहि निर्वृत्तस्य निवृत्तिर्वचनशतेनापि शक्यते कर्तुमिति, इमं व्यधिकरणपक्षे दोषं दृष्ट्वा सामानाधिकरण्ये पञ्चम्याविति दर्शयन्नाह। 'शदियः शिदिति'। कथं पुनः शदिः शिद्भवति विकरणे हि शकार इद् भवति तत्राह। 'शिद्भावीति'। शिद्भावी यस्मात् स तथोक्तः, शिद्भावित्वाद् उपचारेण शदिरेव शिदित्युक्तमित्यर्थः। 'शितो वा सम्बन्धीति'। शित इत्यस्य षष्ठ्यन्ततां दर्शयति, कश्च शदिः शितः सम्बन्धी यस्तस्य प्रकृतिः प्रागेव च शिदुत्पत्तियोग्यतया तत्प्रकृतित्वमस्त्येव। 'शीयत इति'। पाघ्रादिसूत्रेण शीयादेशः॥

"म्रियतेर्लुङ्लिङोश्च" ॥ लुङ्लिङोरिति स्थानषष्ठीयं विषयसप्तमी वा। 'नियमार्थमिति'। यदि नियमः क्रियते ङित्करणं किमर्थं यावता ऽप्राप्ते विधिरेवास्तु इह मा हि मृतेति लुङि तास्यनुदात्तेदिति ङित्त्वलक्षणः सार्वधातुकनिघातो यथा स्यात् तिङ्ङतिङ इति निघातोऽत्र 'हि च' ति प्रतिषिद्धः॥

"पूर्ववत्सनः" ॥ 'पूर्ववदिति'। तेन तुल्यमित्यादिना तृतीयान्ताद्वतिर्न पञ्चम्यन्तात्, लक्षणाभावात्, यथा च ब्राह्मणेन तुल्यं वैश्यादधीतमित्युक्ते ब्राह्मणादिवद् वैश्यादधीतमिति पञ्चम्यर्थो गम्यते तथेहापि पूर्वस्मादिव सन्नन्तादप्यात्मनेपदमित्यर्थो लभ्यते तुल्यार्थैरिति हि तृतीया सर्वविभक्त्यर्थानन्तर्भावयति। 'यदि सनः पूर्वो यो धातुरिति'। एतेन सन इति पूर्वस्यावधिनिर्देशो न त्वात्मनेपदापेक्षया परपञ्चमीति दर्शयति।

यद्येवं सन्नन्तादात्मनेपदमिति न लभ्येत सन इत्यस्य सन्नः[1]च्छ्रुतस्यावधिनिर्देशेनोपक्षीणत्वाद् अत आह । 'तदुत्सनन्तादपीति' । अवधित्वेनापि तावत्सनः श्रुतत्वात् प्रत्यासत्त्या तदन्तादेव विधिर्विज्ञायतइति भावः । अथैवं कस्माच्च विज्ञायते सनन्तादात्मनेपदं भवति पूर्ववदिति श्रोतो ऽन्वयः तत्र कुतः पूर्ववदित्यपेक्षायां सविहितत्वात्सन एव पूर्ववदिति विज्ञास्यतइति । एवं मन्यते, एवं विज्ञायमाने ऽयमेव योगः पूर्वस्यावधिः सम्भाव्येत यथा 'पूर्वत्रासिद्ध' मित्यत्र तत एव योगात् पूर्वत्रेति, ततश्चायमर्थः स्याद् अनुदात्तङित इत्यारभ्येतः पूर्वं ये धातवो निर्दिष्टास्तेभ्यः सनन्तेभ्यस्तद्वदेवात्मनेपदं भवतीति ततश्चोत्तरो विधिः सनन्ताव स्यात् 'भुजोनवने' बुभुक्षतइति, तस्मात्सनः पूर्ववदित्येव श्रोतोन्वय एष्टव्य इति । यद्ययं कार्यातिदेशः शास्त्रातिदेशो वा विज्ञायेत तदा सन्प्रकृतौ प्रयोगान्तरे दृष्टमित्येव निमित्तनिरपेक्षं कार्यं शास्त्रं वातिदिश्यमानमिहाप्यतिदिश्येत शिशत्सति मुमूर्षति, शीयते म्रियतइत्यत्र दृष्टत्वादिति मतेऽनयोः पक्षयोर्दोषं दृष्ट्वा निमित्तातिदेशमाश्रित्याह । 'येन निमित्तेनेति' । निमित्तस्य तुल्यत्वात्तद्द्वारकं यदात्मनेपदविधेस्तुल्यत्वं तदाश्रीयतइत्यर्थः । 'पूर्वमिति' । सनुत्पत्तेः प्राक् प्रयोगान्तरइत्यर्थः । पूर्वस्मादिति युक्तः पाठः, तथा च सनन्तादपीति सङ्गच्छते, यद्यपि प्रकृतिगतं ङित्त्वादिकं सनन्ते धातौ वचनशतेनापि प्रापयितुमशक्यं शिशयिषति । तथापि प्रकृतिगतमेव तत्सना व्यवधानेऽपि तदन्तादात्मनेपदस्य निमित्तं भवतीत्यतिदेशार्थस्तावता च निमित्तातिदेशवाचो युक्तिः । 'आसिसिषतइति' । इटि कृते 'अजादेर्द्वितीयस्ये' ति सिशब्दस्य द्विर्वचनम् । 'निविविक्षतइति' । 'हलन्ताच्चेति' सनः कित्त्वं व्रश्चादिषत्वं 'षढोः कः सि' । 'आचिक्रंसतइति' । आङ आत्मनेपदनिमित्तत्वात् स्नुक्रमोरितीड् नैव भवति । निमित्तातिदेशाश्रयणस्य फलमाह । 'इहेति' । कारणमाह । 'नहीति' । 'शिद्राद्यपीति' । शिद्रा-

१ सङ्कच्छ्रुतत्वादिति पा॰ २ ।

वित्वादिकमपीत्यर्थः। आदिशब्देन लुङ्लिडोर्ग्रहणम्, तत्रेह नास्ति कृते सति तदन्तमेव णिद्वावि न शद्विम्रियतिभ्यां, शिशयिषतइत्यादौ तु कृतेऽपि सति तदानीमपि ङित्वादिकं प्रकृतिगतं विद्यतइति भावः। यदि तर्हि निमित्तातिदेशः, अनुचिकीर्षतीत्यत्रापि प्रसङ्गः, गन्धनादेरर्थस्य ङित्वस्य वात्मनेपदनिमित्तस्य सन्यपि परस्मैपदे निमित्तत्वात्, कार्यातिदेशे तु न दोषः, 'अनुपराभ्यां कृञः' इति परस्मैपदेनापवादेनात्मनेपदस्य बाधितत्वादत आह। 'यस्य चेति'। न योग्यतामात्रेण निमित्तत्वं किन्तर्हि कुर्वद्रूपस्येति सुकर्मोरित्यत्र वक्ष्यतइति भावः। यदि कुर्वद्रूपं निमित्तं जुगुप्सतइत्यादौ कथं, नह्यत्र प्रकृतिगतमनुदात्तेत्त्वं तत्रात्मनेपदं कदा चिदपि करोति नित्यसन्त्वाद् गुपादीनामत आह। 'इहेत्यादि'। न वात्रानेनात्मनेपदं किं तर्हि अनुदात्तङित इत्यनेनेत्यर्थः। कथं पुनः समुदायस्य जुगुप्सादेरनुदात्तेत्त्वमत आह। 'अवयवइति'। अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यात्समुदायस्य विशेषकं भवति। यद्येवं गोपयति तेजयतीत्यादावपि प्रसङ्गः, अथ यं समुदायं योऽवयवो न व्यभिचरति तत्र कृतं लिङ्गं तस्य विशेषकं भवति णिजन्तं च व्यभिचरति विनापि तेन जुगुप्सतइति गुपेः प्रयोगादित्युच्येत, यद्येवं सनन्तादपि न स्याद् विनापि तेन गोपायतीत्यत्र गुपेः प्रयोगात्, वक्तव्यो वा विशेषः, अयमुच्यते गुप गोपनइत्यस्य सन्निधौ यद्ग्रहणं तस्माच्च नित्यं सनेव भवति नापरः प्रत्ययः, गोपायतीत्यादिकस्तु प्रयोगो गुपू रक्षणइत्यस्य स चान्य एव, अवश्यञ्चैतदेवं विज्ञेयमन्य एव सन्प्रकृतिः तस्माच्च सनेव भवतीति, अन्यथा निन्दाया अन्यत्र यथा णिज् भवति तथा लङादिरपि स्यात्, एवं तिजिग्रभृतयोऽपि क्षमाद्यर्थे यत्र सन्निष्यते तत्रानुदात्तेतो नित्यसनन्ताश्च, क्षमादिभ्योऽन्यत्र तु यत्र णिजिष्यते तत्राननुबन्धका एव चुरादौ पठितव्याः॥

"आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य"॥ नन्वामन्तस्याधातुत्वाददृष्टमात्मनेपदं तत्कथं कृञोऽतिदिश्यते, स्यादियमनुपपत्तिः, यदि प्रत्ययग्रहणं न क्रियेत कृतेऽपि वा तस्मिन् प्रत्ययग्रहणे कर्म्मधारयस्तद्गुणसंविज्ञानो वा बहुव्रीहिराश्रीयेत इह त्वतद्गुणसंविज्ञानो बहुव्रीहिः, धातुरन्यपदार्थस्तदाह।

'आम् प्रत्ययो यस्मादिति' । तद्गुणसंविज्ञाने ऽवयवेन विग्रहः समुदायः समासार्थ इति आम् प्रत्ययो यस्येति विग्रहः स्यात्, प्रतियोगिनि षष्ठीनिर्देशात् तत्र तस्येति षष्ठ्यन्ताद्वतिरित्याह । 'आम्प्रत्ययस्येवेति' । 'कृञोऽनुप्रयोगस्येति' । समानाधिकरणे षष्ठी अनुप्रयोगशब्दः कर्म्मसाधनः । 'ईक्षां चक्र इति' । ईक्ष दर्शने ईह चेष्टायां लिट् इजादेश्चेत्याम्, 'आम' इति लेर्लुक् । अकर्त्रभिप्रायार्थो ऽयमारम्भ इति ब्रुवता विध्यर्थमेवैतदित्युक्तं तत्र दोषमुद्भावयितुमाह । 'यदीति' । किं पुनः कारणं विध्यर्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्यते न पुनर्नियमार्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्येत, सत्यम्, अकर्त्रभिप्राये पाचयाञ्चकारउज्जांचकारेति प्राप्ते आम्प्रत्ययवद्वेव तत्र विधिनियमसम्भवे विधिरेव न्यायान् तस्मादेवमुच्यते उब्ज आर्जवे उम्भ पूरणे, उभयमित्यादिपरिहारः । 'कथमिति' । नैकेनैव यत्नेनोभयं लभ्यमिति भावः । 'ईक्षां बभूवेति' । 'भवतेरः,' 'भुवो वुग् लुङ्लिटोः' । 'कथं पुनरिति' । कृञ इत्यत्र स्वरूपग्रहणं मन्यमानस्य प्रश्नः । प्रत्याहारग्रहणमिति' । यदि तत्र स्वरूपग्रहणं स्याद् इह कृञ्ग्रहणमनर्थकं स्याद् अन्यस्यानुप्रयोगस्याभावादिति भावः । अत एव विपर्ययोपि न भवति तत्र स्वरूपग्रहणं स्याद् इह प्रत्याहारग्रहणमिति, इह हि प्रत्याहारग्रहणे भ्वस्त्योरप्यात्मनेपदविधिः प्रयोजनं, यदि चानुप्रयोगविधिना कृञ् एवानुप्रयुक्तः स्यात् तदा भ्वस्त्योरनुप्रयोगाभावादात्मनेपदविधिरनुपपन्नः स्यात् तस्मादिह स्वरूपग्रहणम्, आमनुप्रयोगविधौ प्रत्याहारस्येति सिद्धम्, 'अभिविधौ सम्पदा चे' ति सम्पदोपि तत्रान्तर्भावादनुप्रयोगः प्राप्तः 'सनाद्यन्ता धातव' इत्यतो धात्वधिकाराद्धातूपसर्गसमुदायस्य न भवति, योऽत्र धातुस्तस्यापि न भवति अर्थविप्रतिषेधादिति तत्रैव वक्ष्यामः ॥

"प्रोपाभ्यां युजेरयज्ञपात्रेषु" ॥ 'युजिर्योग इति' । युज समाधावित्यस्य न दैवादिकस्यानुदात्तेत्त्वादेव सिद्धं युजेरिति च विवक्षित इकारो न त्वागन्तुकः, यज्ञपात्रविषयता चास्यैव सम्भवतीति भावः । 'प्रयुङ्क्त इति' । 'रुधादिभ्यः श्नम्' 'श्नसोरल्लोपः' कुत्वचर्त्वे, अनुस्वारपरसवर्णौ ।

'स्वराद्यन्तोपसृष्टादिति'। स्वरः अ इ,आदिरन्तो वा यस्य स स्वराद्यन्तः। तेनोपसर्गेण सम्बन्धः, स्वराद्यन्तोपसृष्टः सम् निस् दुस् इत्येतान् वर्ज्जयित्वा सर्वएवोपसर्गास्संगृहीताः॥

"समः क्ष्णुवः"॥ इह 'शर्परे विसर्ज्जनीय' इत्यस्यावकाशो यत्र कुप्वोरसम्भवः पुरुषःत्सरुकः 'कुप्वोः ⁐क⁐पौ च' त्यस्य यत्र शर्परो कुप् न सम्भवतः पुरुषः करोतीति शर्परयोरुभयोः प्रसङ्गे पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति 'शर्परे विसर्ज्जनीय' इति नित्यं विसर्ज्जनीय एव भवति तेन 'समः क्ष्णुव' इतिसूत्रे विसर्ज्जनीयस्यैव पाठः समो गम्यृच्छीत्यत्रेवेति, एवं हि द्विःसमो ग्रहणं न कर्त्तव्यमिति भावः। 'सङ्क्ष्णुवतइति'। अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनत' इति झस्यादादेशः, अचि श्नुधात्वित्यादिनोवङ्॥

"भुजोनवने"॥ 'अनवनप्रतिषेधेनेत्यादि'। संसर्गवद्विप्रयोगोपि विशेषस्मृतिहेतुः, यथा दोग्ध्रीपर्यायो धेनुशब्दः संसर्गिभिः विशेषे ऽवस्थाप्यते सवत्सा धेनुरानीयतां सकिशोरा सवर्करेति, तथा ऽवत्सा ऽकिशोरा ऽवर्करेति यस्या आनयने दृष्टः संसर्गः सैव तत्र गृहीता आनीयते तद्वदिहापीत्यर्थः॥

"णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने"॥ अत्र णेरिति यद्यपि सामान्यनिर्द्देशस्तथापि पुच्छभाण्डादिणिङ् न गृह्यते ऽणौ कर्म्मणो ऽसम्भवात्, कमेर्णिङस्त्वा 'यादय आर्द्धधातुके वे' ति वचनाद्ण्यन्तावस्था सम्भवति कर्म्मणश्च कर्तृत्वं कमिष्यते योषितं देवदत्तः कामयिष्यते योषित्स्वयमेवेति, तथापि ङित्त्वादेव सिद्धे सो ऽपि न गृह्यतइति णिच एव ग्रहणमित्याह। 'णिचश्चेति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदमिति'। 'अकर्त्रभिप्रायार्थं इति'। उपलक्षणमेतत्, कर्त्रभिप्राये पदान्तरेण द्योतिते 'विभाषोपपदेन प्रतीयमान' इति विकल्पं बाधित्वा नित्यो विधिर्यथा स्यादित्यपि द्रष्टव्यम्, अत्रैकवाक्यतायामयमर्थो भवति ण्यन्तादात्मनेपदं भवत्यण्यन्तावस्थायां यत्कर्म्म ण्यन्तावस्थायां यदि स कर्त्ता भवति आध्यानादन्यत्रेति, तत्र कर्म्मान्तरनिवृत्तिर्न कृता स्यात् ततश्चेहापि प्रस-

ज्येत आरोहन्ति हस्तिनं हस्तिपकास्तानारोहयति हस्तीति, किं च उक्तेऽर्थे णेरणौ कर्म्मणीत्येतावदेव वाच्यं कर्त्तरीत्येव ण्यन्तादात्मनेपदं भवति अणौ कर्म्मणि कर्त्तरीत्युक्ते को नाम विवक्षितोऽर्थो न सिध्यति स इत्येतस्यानर्थक्यं यत्तदोर्नित्यसम्बन्धादेवाध्याहारतः सिद्धेः, तस्माद्यथाश्रुतमात्रं न विवक्षितमिति मत्वा पृच्छति। 'कथमिति'। इतरोऽपि वाक्यभेदाश्रयणेन परिहरति। 'अणौ यत्कर्म्मेत्यादि'। णेरात्मनेपदं भवति आध्यानादन्यत्रेत्येकं वाक्यं, ततोऽणौ यत्कर्म्मेति द्वितीयम्, अत्र वाक्ये यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्द आक्षिप्यते कर्म्मान्तरस्य चानिर्देशाद् उद्दिश्यतयापि श्रुतं कर्म्मत्वमेव विधीयते तच्च विधीयमानं सामर्थ्याण्णेरिति सन्निहितत्वाण्ण्यन्तावस्थायामेव विधीयते किं तत्सामर्थ्यम् अणौ यत्कर्म्मेत्यनुवादसामर्थ्यादेवाणौ कर्म्मत्वसिद्धेस्तत्रैव तद्विधानस्यासम्भवः, तदेवमणौ यत्कर्म्मेत्येतावत एवाणौ यत्कर्म्म णौ चेत्तत्कर्म्मेत्यर्थो भवति, अनेन च कर्म्मान्तरनिवृत्तिः क्रियते न त्वणौ कर्म्मणो णौ कर्म्मभावः प्रतिपाद्यते, स कर्त्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् एकस्य युगपदेकस्यां क्रियायां कर्म्मत्वकर्तृत्वयोरुभयोरसम्भवात्, ततो णौ चेदिति तृतीयं वाक्यम् अणौ यदित्येवाणौ यत्प्रतिपाद्यं वस्तु णौ चेत्तदेव प्रतिपाद्यमित्यर्थः, ततः स कर्त्तेति चतुर्थम्, अत्राणौ यत्कर्म णौ चेदिति सर्वमनुवर्त्तते। अनाध्यानइत्येतदपि प्रसज्यप्रतिषेधे पञ्चमं वाक्यं, तत्र वृत्तिकारेण त्रीणि वाक्यानि स्ववाचा दर्शितानि ण्यन्तादात्मनेपदं भवतीत्येकं वाक्यम्, अणौ यत्कर्म णौ चेत्तदेव कर्मेति द्वितीयम्, स एव कर्ता भवतीति तृतीयम्, णौ चेद्ग्रहणं समानक्रियार्थमिति तु वक्ष्यत्यतस्तदपि वाक्यमभ्युपगतमेव। 'आरोहन्तीत्यादि'। (१) अणौ कर्मप्रदर्शनार्थमिदमुक्त,मिदं तत्रोदाहरणम् आरोहयते हस्ती स्वयमेवेति, आङ् पूर्वो रुहिः न्यग्भवनोपसर्ज्जने न्यग्भावने वर्त्तते न्यग्भवन्तं हस्तिनं न्यग्भावयतीत्यर्थः। यदा तु हस्तिनः सौकर्यातिशयप्रतिपादनाय हस्तिपकव्यापारो न विवक्ष्यते तदा न्यग्भावमात्रे रुहिर्वर्त्तते तत्र च हस्तिनः कर्तृत्वम्, उक्तं च

(१) कर्मणोऽकर्मकत्वप्रतिषेधार्थमिदमिति २ पुस्तके।

निवृत्तप्रेषणं कर्म्म स्वक्रियावयवे स्थितम् ।
निवर्त्तमाने कर्म्मत्वे स्वकर्तृत्वेवतिष्ठते ॥

इति । अस्य च कर्त्तुः कर्म्मस्थक्रियेषु कर्म्मकार्य्याण्यतिदिश्यन्ते 'कर्मवत्कर्म्मणा तुल्यक्रिय' इति, तद्यथा लूयते केदारः स्वयमेवेति लुनातिर्हि द्विधाभवनोपसर्ज्जने द्विधाभावने वृत्तः कर्तृव्यापाराविवक्षायां द्विधा भवनमात्रे वर्त्तते, दुहिस्तु कर्तृस्थक्रियत्वात् कर्म्मकार्य्याणि न लभतइत्येतावत्, ततो न्यग्भवनवृत्ते रुहेर्हस्तिपकव्यापारे णिजुत्पद्यते तदा च य एवार्थ आरोहन्ति हस्तिनं हस्तिपका इति स एवार्थ आरोहयन्ति हस्तिनं हस्तिपका इति । पुनः सौकर्य्यातिशयविवक्षायामविवक्षिते हस्तिपकव्यापारे न्यग्भवनमात्रे रोहिर्वर्त्तते आरोहयते हस्ती स्वयमेवेति । सुष्ठु न्यग्भवतीत्यर्थः । उक्तं च

न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते ।
न्यग्भावनं न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥
अवस्थां पञ्चमीमाहुर्ण्यन्तानां कर्मकर्त्तरि ।
निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजुच्यते ॥

इति, एवं सिञ्चतेरप्यार्द्रीभवनोपसर्ज्जनमार्द्रीभावनमर्थः, ततो निवृत्तप्रेषणमित्यादि पूर्ववत्, सेचयते हस्ती स्वयमेव, सेचनेत्यन्तमनुकूलो भवतीत्यर्थः । एवं दृशेरपि कर्म्मव्यापारमात्रवृत्तेर्णिजुत्पत्तौ पुनस्तत्रापरेऽपि तदुदाहरणं, दर्शयते राजा स्वयमेव दर्शनेनानुकूलो भवतीत्यर्थः । सोयं निवृत्तप्रेषणापक्ष उच्यते । अपरः प्रकारः । आरोहन्ति हस्तिनं हस्तिपकाः, तान् सौकर्य्यातिशयाद्धस्ती प्रयुङ्क्तइति हस्तिव्यापारे णिजुत्पद्यते, आरोहयति हस्ती हस्तिपकानिति तत्र सौकर्य्यातिशयप्रतिपादने तात्पर्यमिति कर्म्म न विवक्ष्यते ततोऽकर्म्मको भवति यथा नेह पच्यते नेह भुज्यतइति पाकमात्रप्रतिषेधे तात्पर्यमिति कर्म्माविवक्षायां भावे लो भवति, आरोहयते हस्ती स्वयमेव सुष्ठु न्यग्भवतीत्यर्थः । एष एव हि हस्तिनः प्रयोजकव्यापारः, एवमितरयोरपि द्रष्टव्यं, सोयमध्यारोपितप्रेषणापक्ष

इति गीयते, तदेवमुभयोरपि पक्षयोः सैव क्रिया याऽण्यन्तावस्थायां, न च कर्म्मान्तरमस्ति कर्त्तापि स एवेत्युदाहरणोपपत्तिः, स्वयमिति वचनं कर्त्रन्तरव्युदासार्थम् । 'णेरिति किमिति' । अणौ कर्म्मत्वानुवादेन णौ कर्तृत्वविधानात् प्राधान्याण्ण्यन्तादेव भविष्यतीति प्रश्नः । 'साध्वारोहतीति' । साधु न्यग्भवतीत्यर्थः, अत्र कर्म्मव्यापारमात्रे रुहिर्वर्त्तते कर्तृस्थक्रियत्वात्तु कर्म्मवद्भावाभावाद्यगात्मनेपदे न भवतः, शप्परस्मैपदे भवतः, अणौ यत्कर्म्मेत्यण्यन्तावस्थायामपि श्रुतत्वात्ततोऽपि स्यादिति भावः । ननु प्राधान्याण्ण्यन्तादेव भविष्यतीत्युक्तं, किमर्थमणौ यत्कर्म्म णौ चेत्स कर्त्तेत्ययमुपाधिर्यस्मिन्नेव प्रयोगे संभवति तत्रैवात्मनेपदं युक्तं साध्वारोहतीत्यत्र च नायं प्रकारः सम्भवति, आरोहयते हस्तीत्यत्र तु णिचः प्रकृतिभूते रुहावण्यन्ते यत्कर्म्म ण्यन्ते स एव कर्त्तेति तत्रैव भविष्यति, सत्यं, तदेवमुत्तरार्थमवश्यं णेरिति वक्तव्यमिहापि विस्पष्टार्थं भविष्यतीति मन्यते । 'अणाविति किमिति' । कर्म्मत्वकर्तृत्वयोर्यौगपद्यासम्भवात् णौ च कर्तृत्वस्य श्रुतत्वादवस्थान्तरे णावेव कर्म्मत्वं विज्ञास्यतइति प्रश्नः । 'गणयतीति' । गण संख्याने चुरादावदन्तः पठ्यते, अतो लोपस्य स्थानिवद्भावाद् उपधावृद्ध्यभावः, गण्यमानो गणो यदा गणनक्रियायामानुकूल्यं प्रतिपद्यते तदा तद्व्यापारमात्रवृत्तेर्हेतुमण्णिचि पुनः कर्म्मव्यापारमात्रे आरोपितस्यैवायं प्रयोगः। 'गणयति गणः स्वयमेवेति' । अत्र णावेव गणेः कर्म्म णावेव कर्त्ता इत्यात्मनेपदं न भवति, कर्मवद्भावेनापि न भवति कर्तृस्थक्रियत्वात्, गणनं हि संख्यानिमित्तः परिच्छेदो ज्ञानविशेषः । भाष्ये तु भागशोवस्थापने गणिर्वर्त्तते भागशोवतिष्ठमानं गणं गोपालकोवस्थापयतीत्यर्थमङ्गीकृत्य तत्रानुकूलत्वाद् गणस्यैव कर्तृत्वविवक्षायामस्ति कर्मस्थभावकत्वमिति कर्म्मवद्भावादात्मनेपदमुदाहृतम् । ननु चाणावकर्म्मकादित्यत्र वक्ष्यति हेतुमण्णिचो विधिरिति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्य इति तच्चेत्सत्यम् इदमपि प्रत्युदाहरणमयुक्तमेव, उच्यते । युक्तं तत्र हेतुमण्णिचो विधिरिति तत्र बुधादिसूत्रे णेरिति वर्त्तते । बुधादिभ्यश्च हेतुमण्णिजेव सम्भवति इह तु सामान्येन

ग्रहणं विशेषहेत्वभावात् । ननु चाणौ यत्कर्म्मेत्युच्यते चुरादीनां च नित्यण्यन्तत्वात्केवलानां प्रयोगाभावाद् अणौ कर्म्मणोऽसम्भवाद् अत्रापि हेतुमण्णिच एव विधिः, नेत्याह, 'आधृषाद्वेति' विभाषितणिचामपि केषां चित्सम्भवात्, भाष्ये तु हेतुमण्णिचो विधिरिति स्थितम् । 'लावयति दात्रं स्वयमेवेति' । करणस्य दात्रस्यापि तैक्ष्ण्यातिशयेन लवने यदानुकूल्यं तत्प्रतिपादनाय लावकान्प्रति प्रयोजकत्वविवक्षायां णिच् । इह ण्यन्तादात्मनेपदं भवत्यणौ यत्कर्म स चेत्कर्तेत्युक्ते गम्यत एतद् यस्माद् ण्यन्ताद्विधिः तत्रैवाण्यन्ते यत्कर्म स चेत्कर्त्तेत्य,तो णौ चेद्ग्रहणमनर्थकं तत्राह । 'णौ चेद्ग्रहणं समानक्रियार्थमिति' । प्रयोज्यप्रयोजकभावलक्षणेपि क्रियाभेदे मा भूत् णिच्प्रकृत्यर्थभूतायामेव क्रियायां यथा स्यादित्यर्थः, यथा पुनरयं शब्दार्थस्तथोक्तं पुरस्तात् । 'आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेणेति' । येन प्रयोज्यप्रयोजकभावलक्षणेपि क्रियाभेदे आत्मनेपदं वार्यत एवानेन धातुभेदादत्यन्तभेद इति मत्वैतत्प्रत्युदाहृतं भीताश्चात्रारोहयतेः कर्म । 'आरोहयमाण इति' । 'णिचश्चे' त्यात्मनेपदं शानच्,भीता ह्यारोह्यमाणा भीत्या मूत्रयन्ति तेन हस्ती सिच्यते, कर्माविवक्षायां तु सेचयतेरकर्मकत्वम् । उद्देशप्रतिनिर्देशात् लब्धं यत्सग्रहे पुनस्तद्ग्रहो वाक्यभेदेन कर्म्मान्तरनिवृत्तये इत्याह । 'यत्सग्रहणमनन्यकर्मा।र्थमिति' । स्थलमारोहयति मनुष्यानित्यत्र कर्म्मान्तरमप्यस्ति मनुष्याः, रुहेर्गत्यर्थत्वान्मनुष्याणां कर्म्मसंज्ञा, कथं पुनरत्राणौ कर्म्मणो णौ कर्तृत्वं यावता स्थलमणौ कर्म हस्ती तु णौ कर्ता, स्यादेतत् । आरोहयमाण इत्यत्राणौ कर्म्मणो हस्तिन एव कर्तृत्वं स एव च स्थलमारोहयतीत्यत्रापि कर्त्तेति । एवमपि प्रत्यासत्तेरेवात्र न भविष्यति, तथाहि । ण्यन्तादात्मनेपदं भवति अणौ यत्कर्म णौ चेत् स कर्त्तेत्युक्ते प्रत्यासत्तेरेतद्गम्यते येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तेनैव णिचा ऽण्यन्ते तत्प्रकृतिभूते धातौ यत्कर्म्म स एव चेत्कर्ता तस्मिन्नेव ण्यन्त इति, अत्र च यत्रायमुपाधिः कृतमेव तत्रात्मनेपदम् आरोहयमाण इति, यत्र तु न कृतं स्थलमारोहयतीति न तत्रायमुपाधिरिति

नैवात्मनेपदप्रसङ्गः, इह तर्हि आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति हस्तीति, किं पुनरत्र नेष्यते, वृत्तिकृता नेष्यते भागवृत्तिकारेण त्विष्यते, तथा माघः प्रयुङ्क्ते, करेणुरारोहयते निषादिनम् इति । 'कर्त्तेति किमिति' । भावकर्म्मणोः सिद्धत्वात् कर्त्तर्येव भविष्यतीति मन्यते । अणौ यत्कर्म्म तस्मिन्नेव कर्त्तरि यथा स्यात् कर्त्रन्तरे मा भूदित्येवमर्थं कर्तृग्रहणमिति दर्शयन्नाह । 'तानारोहयति महामात्र इति' । गत्यर्थत्वाच्च रुहेः हस्तिपकानां कर्म्मसञ्ज्ञा । यद्येवं कर्मान्तरसम्भवादेवात्र न भविष्यति, नैतदेवम् । अस्तीत्यत्राणौ कर्म्मणो हस्तिनो णावपि कर्म्मत्वेनान्वयः । न वा सति कर्तृत्वविधौ कर्म्मान्तरव्यावृत्तिर्लभ्यते । यद्वा प्रयोजकव्यापारमात्रे तात्पर्याद्यदा हस्तिपकाः कर्म्मत्वेनाविवक्षितास्तदेदं प्रत्युदाहरणं द्रष्टव्यम् । 'वनगुल्मस्येति' । कर्मोपलक्षणमेतत्, न त्वत्र वनगुल्मस्य कर्म्मत्वमस्ति शेषत्वेन विवक्षितत्वात्तस्माद्वनगुल्ममिति प्रदर्शनीयं, 'स्मरयत्येनमिति' । स्मृ आध्याने घटादिः, वनगुल्मस्य रमणीयत्वप्रतिपादनाय प्रयोजकत्वे विवक्षिते णिच् । 'एनमिति' । बुध्यर्थत्वात्कोकिलस्य कर्म्मसंज्ञा । एतदप्युपलक्षणम् । अत्र हि कर्म्मान्तरसद्भावादेव प्राप्तिर्नास्ति कर्म्माविवक्षायां प्रत्युदाहरणं द्रष्टव्यं, 'ननु चात्र कर्म्मकर्तरि मूलोदाहरणानीति' । ननु चाध्यारोपितप्रेषणपक्षे आरोहयतौ हस्तिनः कर्म्मत्वाभावात्कर्मणा समानधातौ तुल्यक्रियत्वाभावात् पचत्योदनं देवदत्तो राध्यत्योदनं स्वयमेवेतिवत्कर्म्मवद्भावो न प्राप्नोति । सत्यम् । आरब्धएतास्मिन् सूत्रे सोपि पक्षः सम्भवात् प्रदर्शितः, अनारब्धे तु निवृत्तप्रेषणपक्षप्रक्रियैवाश्रयिष्यते, ननु तत्रापि व्यापारद्वयाभिधायिषु रुहादिषु भवत्येवं ये तु केवलकर्तृव्यापारवाचिनो दृश्यादयः तेषु कथं, नहि दृशिः कर्म्मव्यापारं कंचिदाचष्टे, स्यादेतत्, विषयभावापत्तिः कर्म्मव्यापारस्तदापादनं कर्तृव्यापार इति, यद्येवम् इच्छापि दृश्यर्थः स्यात्, नन्वत्रापि विषयभावापत्तिः तदापादनं च विद्यते, अथ दर्शनविषयभावापादनं दृश्यर्थः, ननु तदेव निरूप्यते किं नाम तद्दर्शनम् इति । अत्रोच्यते । मा नामाध्या-

तत्कर्म्मव्यापारो,ऽस्ति तावत्कर्म्मणोपि व्यापारः कारकत्वात्तत्र विक्लित्यु-त्पत्तिदशायां तावत्येव वर्त्तिष्यते उदाहरणदशायां व्यक्तोपीति मन्यते तथा च रुहिः कर्तृयुक् कर्म्मणाभिधेय इति युक्तं केवलकर्तृव्यापारवाचिनां गमिदृशिप्रभृतीनां कर्तृस्थक्रियत्वं, कथं तु विक्लित्त्युपसर्जनविक्लेदवचनः पचिः द्विधाभवनोपसर्जनद्विधाभावनवचनश्च लुनातिः कर्म्मस्थक्रियः, न्यग्भवनो-पसर्जनन्यग्भावनवचनस्तु रुहिः कर्तृस्थक्रियः । उच्यते । रुहिरपि गत्यर्थः तथा च 'चट्टितुपरं छन्दसी' त्यत्र भाष्यकारो वक्ष्यति हस्तिनमारोहती त्यत्र हि उपरिगमनलक्षण एव रुहेरर्थः, तत्पुनर्न्यग्भवनहेतुत्वाद् न्यग्भावन-मित्युच्यते उपरिगमनरहितं तु न्यग्भावनमात्रं रुहेरर्थो न भवति, यदा खलु क्व चिद्भूमावेव तिष्ठन् वृक्षस्य शाखां हस्ताभ्यामवनमयति तदा नारोहा-रोहतीत्युच्यते तस्माद्गतिविशेष एव रुहेरर्थः, कस्तर्हि क्रियाणां कर्म्मक-र्तृस्थतायां हेतुः । उक्तमत्र

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥

इति, विशेषदर्शनेन शब्दानुसारेण वा क्रियायास्तात्स्थ्यं कथ्यते एतच्च कारणगतमारोहस्य कर्तृस्थत्वं प्रतिपादयति न तु कर्मस्थतां नहि हस्तिनमारोहति वृक्षमारोहति पर्वतमारोहतीत्यादौ कर्म्मभेदे-प्यारोहणे रूपभेदः प्रतीयते यथा घृतमांसतन्दुलादिषु पाकः, न च हस्ती न्यग्भवत्वित्येवं कारकव्यापारः किं तर्हि हस्तिपका उपर्यासीरन्निति, पाके तु तण्डुलादिगतो विक्लित्त्यादिरूपो विशेषो यथा स्यादित्येव कारकव्यापारः, तस्मात्कर्मभेदे रूपभेदात्तदुद्देशस्य च कर्म्मगतत्वात् पचिः कर्म्मस्थक्रियः, विपर्ययाद्रुहिः कर्तृस्थक्रिय इति सिद्धम् । एवं चारुह्यते हस्ती स्वयमेवेति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्याः, 'दुहि कर्तृस्थभावक इति' । अथ सिचिः कस्मादुपेक्षितः कर्मस्थक्रियत्वाद् यार्द्रीभवनं ह्यत्र प्रधानं तदर्थत्वात्कारकव्यापारस्य, किमर्थं तर्ह्युदाहृतः विशेषाभावात् नह्यत्रानेन कर्मवत्कर्म्मणेत्यनेन वा आत्मनेपदे सति

कश्चिद्विशेषः, तेनापि सति यक्चिणो न भवतः, णिश्रन्थिग्रन्थीति प्रति षेधात् । भाष्येपि कर्म्मवद्भावात् सिद्धिमाशङ्क्याध्यानप्रतिषेधार्थमित्युक्त्व स्मरतेः कर्तृस्थभावकत्वात् कर्म्मवद्भावस्य प्राप्तिर्नास्तीत्यभिधायोक्तम् ए तर्हि सिद्धे सति यदाध्यानप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येव- ञ्जातीयकानाम् आत्मनेपदमिति । किमेतस्य ज्ञापने प्रयोजनं पश्यन्ति भृ- त्या राजानं दर्शयते भृत्यान् राजा स्वयमेव अत्रात्मनेपदं सिद्धं भवतीति । 'एवं जातीयकानामिति' । कर्तृस्थक्रियाणामित्यर्थः । एवं च ब्रुवता विध्य- र्थमेतदित्युक्तं भवति विशेषप्रतिषेधेन सामान्यविधेरनुमानात्, अत्र दर्शयते भृत्यान् राजेत्येतदेकमुदाहरणमनुपपन्नं कर्म्मान्तरसद्भावात् । तत्र वृत्तिका- रस्त्यजेदेकं कुलस्यार्थइति न्यायाद् उदाहरणमेतद्गमयितव्यं मन्यते ऽस्मिन्नु- दाहरणे कर्मव्यापारमात्रे विवक्षिते सिद्धं भवतीत्यर्थः । अन्ये त्वाहुः । अस्माद्देवोदाहरणाद्यौ ये कर्तृकर्म्मणी तद्व्यतिरिक्तकर्म्मान्तरसद्भावएवा- त्मनेपदं न भवति यथा स्थलमारोहयति मनुष्यानिति इह त्वणौ कर्तॄणां भृत्यानां णौ कर्म्मत्वमिति, एवं स्मारयत्येनमिति कोकिलस्य कर्म्मत्वेपि प्रत्युदाहरणमुपपन्नं करेणुरारोहयते निषादिनमिति प्रयोगश्चोपपन्न इति तेषां सूत्राक्षराण्येव तावदधिकानि भाष्यं च सर्वमुदाहरणवर्जमनुपपन्नम् ॥

प्रयोगाणां तु निर्वाहो णिचश्चेत्यात्मनेपदात् ।
ज्ञयादित्यस्य हृदयं गूढमेतत्प्रकाशितम् ॥

"भीस्म्योर्हेतुभये" ॥ भयमनिष्टापातशङ्कासाधनमात्रं लौकिको हेतुः, न वान्तरेण साधनं क्रिया संभवतीति विशेषणसामर्थ्यात् कृत्रिम- त्वाच्च पारिभाषिकस्य हेतोर्ग्रहणमित्याह । 'हेतुः प्रयोजक इत्यादि' । 'ततश्चेद्भयं भवतीति' । यद्येवं स्मयत्यर्थो न विशेषितः स्यात् नहि स्मय- तेर्भयमर्थो ऽत आह । 'भयग्रहणमिति' । चित्तविकारस्योपलक्षणमित्यर्थः । 'विस्मयोपि तत एवेति' । अत्र चेद्भवतीत्यनुषङ्गः, 'भीषयतइति' । 'भियो हेतुभये षुक्' । 'भापयतइति' । 'बिभेतेर्हेतुभय' इति वैकल्पिक- मात्वम् एवं च अत्र षुक् न भवति तद्विधावाकारप्रश्लेषात् । 'विस्मापयत-

इति। "नित्यं स्मयते' रित्यात्वम्। वर्त्तिह्वीत्यादिना पुक्, 'कुञ्चिकयेति'। करणादत्र भयं न हेतोः, यद्यपि तद्व्यापारे णिज्विधानात् प्रयोजकसाध्यमेव भयं तथापि विशेषणोपादानसामर्थ्यादेवं विज्ञायते ऽन्यनिरपेक्षाद्धेतोरेव यद्भयमिति, एवं च मोण्डैनं भाययतीत्यत्रापि गुणगुणिनोर्भेदविवक्षायां न भवति, उदाहरणे तु तादात्म्यस्य विवक्षितत्वाद्धेतोरेव भयम् ॥

"गृधिवञ्च्योः प्रलम्भने" 'परिहरतीत्यर्थ इति'। वञ्चयतीति यावत् ॥

"लियः सम्माननशालीनीकरणयोश्च" ॥ 'विशेषाभावादिति'। निरनुबन्धकपरिभाषा तु 'वामदेवाड्ड्यड्ड्या' वित्यत्र ज्ञापिता प्रत्ययग्रहणविषयैवेति मन्यते। 'संमानने शीलीनीकरणे च वर्तमानादिति'। संमाननं विषयो न धात्वर्थः। यदाह 'पूजामधिगच्छतीत्यर्थ इति'। धात्वर्थे तु पूजयतीति वाच्यं स्यात्, यथा न्यक्कुरोतीत्यर्थ इति। अकर्म्मकश्चायमस्मिन् प्रयोगे पूजाख्यस्य कर्म्मणा आत्मनेपदसहितेन धातुनैवोपात्तत्वात् पुत्रीयतीतिवदित्याहुः। 'जटाभिरिति'। हेतौ तृतीया यस्य हि जटाः सन्ति लोके स पूज्यते ॥

"मिथ्योपपदात् कृञोऽभ्यासे" ॥ उपोच्चारितं पदमुपपदं मिथ्याशब्द उपपदं यस्य स तथोक्तः। 'मिथ्याकारयतइति'। आत्मनेपदेनैवाभ्यासस्य द्योतितत्वान्नित्यवीप्सयोरिति द्विर्वचनं न भवति। 'सदोषमिति'। एतेन मिथ्याशब्दस्यार्थमाचष्टे, अस्यैव विवरणं 'स्वरादिदुष्टमिति'। आदिशब्देन रूपं गृह्यते। 'असकृदिति'। अभ्यासं दर्शयति। 'उच्चारयतीत्यर्थ इति'। णयन्तस्य करोतेरुच्चारणे वृत्तिरनेकार्थत्वाद्धातूनाम्, एवं च प्रकृतिभूतः करोतिरुच्चारणे वर्त्तते ऽकर्म्मकश्च ॥

"स्वरितञितः कर्त्रभिप्राये क्रियाफले" ॥ कर्त्तारमभिप्रैतीति कर्त्रभिप्रायं, कर्म्मण्यण्, क्रियाफलं चेह कर्म्मैवेति नास्ति नियमस्तेनाकर्म्मकेभ्योऽपि यजिप्रभृतिभ्यः स्वर्गादिके फले कर्तृगामिन्ययं विधिर्भवत्येव।

'कर्तारञ्चेदिति' । क्रियाफलस्य कर्तृगामित्वद्योतनायात्मनेपदं भवतीत्यर्थः । यदि यस्य यावच्च क्रियानन्तरभावि फलं तत्र कर्तृगामित्ययं विधिर्भवति इहापि स्याद् यजन्ति याजकाः पचन्ति पाचका इति, दक्षिणादेः कर्तृगामित्वादित्यत आह । 'प्रधानभूतमिति' । किं पुनस्तदित्यत आह । 'यदर्थमिति' । यदुद्दिश्येत्यर्थः । 'क्रिया आरभ्यतइति' । सामग्रीसमवधानात्मिका ऽऽद्या प्रवृत्तिरारम्भो यामन्तरेण याजकादीनामप्रवृत्तिः, स्वर्गादिकं हि फलं प्रेप्सुः सामग्रीं समवधाप्य प्रवर्तयति सा प्रवर्तिता यथायथं प्रवर्त्तते, कथं पुनरेतल्लभ्यते प्रधाने फले कर्त्रभिप्रायइति, प्रधानत्वादेव । किञ्च यत् किंचन फलं सर्वत्र कर्त्रभिप्रायं भवति, ननु यत्र क्रियाभ्यासमात्रे तात्पर्यं तत्र न किञ्चित्फलं कर्तृगामि तत्रापि किञ्चित्फलं कर्तृगामि किं कौशलं, पुनःपुनरभ्यासे हि क्रियासु कौशलं भवति तस्मात्प्रधाने फले कर्त्रभिप्रायइति सिद्धम् । 'यजन्त इति' । केचिदाहुः । देवतायै इदं न ममेत्येवं विधो मानसः सङ्कल्पो याग इति तेषां यजन्ति याजका इति ऋत्विग्व्यापारे प्रयोगो नोपपद्यते, अन्ये त्वाहुः । होमादिष्वभिषवादिऋत्विग्व्यापारो याग इति तेषां यजतिव्यापारप्रयोगो नोपपद्यते, एवं तर्ह्युभयं यजेरर्थः ऋत्विग्व्यापारश्च यजमानव्यापारश्च, तदुक्तं यज्ञादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वादिति । 'न तदर्थः क्रियारम्भ इति' । ननु ऋत्विजामारम्भस्तदर्थ एव, नैतदेवम्, आद्या प्रवृत्तिरारम्भ इत्युक्तं सा च यजमानस्य स्वर्गमहं लभेयेति न पुनरिमे दक्षिणां लभेरन्निति यथा ऽवघाते क्रियमाणे स्वेदश्च भवति वैतुष्यं च भवति भृतिश्च लभ्यते, अथ च वैतुष्यार्थ एवावघातः तद्वदत्रापि, तदुक्तं हरिणा

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥

इति । 'इह स्वामिदासौ पचत इति' । क्रियामात्रविवक्षायां परस्मैपदं भवति स्वामिगते तु धर्मे दासव्यारोपिते स्वामिदासौ पचेते

इत्यात्मनेपदं भवति, अथाभिप्रग्रहणं किमर्थं, विप्रकृष्टेपि फले यथा स्याद्,-द्विविधं क्रियाफलं दृष्टम् अन्नपुत्रवृष्टिशत्रुवधादिकम्, अदृष्टं च स्वर्गादि, तत्र पूर्वं प्रत्यासन्नमवश्यंभावीति प्रधानम् इतरत्तु विधुरप्रत्ययोपनिपाते सति व्यभिचारसंभवाद्विप्रकृष्टत्वाच्चाप्रधानं, संभवति ह्यविकलमनुष्ठितु यागस्यापि मध्ये वैराग्योत्पत्तौ मोक्षार्थप्रवृत्तौ सत्याम् अनुत्पत्तिः स्वर्गस्य, ततश्चेह तस्य ग्रहणं न स्याद् अभिप्रग्रहणे तु सति अभिराभिमुख्ये वर्त्तते प्रशब्दस्त्वारम्भइति कर्त्तारं प्रत्याभिमुख्येन क्रियाफलं चेतस्येति एतुम् आरभते एवमात्मनेपदं भवतीत्यर्थो भवति, तथा च यद्यपि स्वर्गादिकं स्वरूपेणाचादिवत् तदानीं नैति तस्य त्वङ्कुरावस्था कर्त्तारमेतीति तद्द्वारेण फलमेवैतुमारभतइति सर्वत्र सिध्यति फलस्यैव ह्यङ्कुरावस्था पूर्वशब्द-वाच्या ॥

"णिचश्च" ॥ अत्र कश्चिदाह । इदमात्मनेपदं चुरादिणिचो न भवति, कुतः ज्ञापकात्, किं ज्ञापकं, लक्षयतेः स्वरितेत्त्वमिति, नात्राप्राप्तभाषितमस्ति । पारायणेपि चुरादिणिच आत्मनेपदमुदाहृतम्, एव विधिश्चुरादिणिजन्तात्स्यादिति । कश्चन निश्चुनुते स्म । अप्राप्त-चनोत्र न किंचन दृष्टं, लक्षयतेः स्वरितेत्त्वमनार्षम् ॥

"समुदाङ्भ्यो यमोग्रन्थे" ॥ उद्यच्छति चिकित्सामित्यत्राधिगम-पूर्वके उद्यमे यमिर्वर्त्तते चिकित्सा शास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः ।

"अनुपसर्गाज्ज्ञः" ॥ सकर्म्मकार्थमिदम् अन्यथा 'कर्म्मकात्त्रे' ति सिद्धत्वात् तदाह । 'गां जानीतइति' । 'स्वर्गं लोकं न प्रतिजानातीति' । 'संप्रतिभ्यामनाध्यानइत्यनेनापि न भवति आध्यानविषयत्वात्, प्रजानातीति वा पाठः ॥

"विभाषोपपदेन प्रतीयमाने" ॥ अप्राप्तविभाषेयमित्याह । 'तदु-पपदेनेति' । अत्र च स्वरितञित इत्यारभ्य पञ्च सूत्राण्यनुवर्तन्ते । 'समीपे श्रूयमाणमिति' । न तु पारिभाषिक,मसंभवात् । एवं पञ्चसू-

व्यामुदाहार्यमिति'। न केवलमुदाहृतयोर्द्वयोरपि तु पञ्चस्वपि सूत्रेष्वित्यर्थः। स्वं यज्ञं कारयते कारयति वा। स्वं व्रीहिं संयच्छते संयच्छतीति वा। स्वं गां जानीते जानातीति वा॥

"शेषात्कर्तरि परस्मैपदम्"॥ 'आत्मनेपदनियमः कृत इति'। प्रकृत्याश्रयोर्थाश्रयश्च, अनुदात्तङितोरेवात्मनेपदं भावकर्म्मणोरेवेति। 'सर्वत्र इति'। सर्वाभ्यः प्रकृतिभ्यः सर्वेषु चार्थेष्वित्यर्थः। 'तदर्थमिति'। सर्वतःप्राप्तिनिवृत्त्यर्थमित्यर्थः। 'येन विशेषणेनेति'। अनुबन्धादिना। याति वातीत्यनुबन्धशेषः, आविशति प्रविशतीत्युपसर्गशेषः, गन्धनादेरन्यत्र करोतीत्यादिरर्थशेषः, गन्धनादिविशिष्टो हि कृञादिः शेषग्रहणेन पञ्चम्यन्तेन निवर्त्यमानो नागृहीतविशेषणन्यायेन विशेषणं गन्धनाद्यपि व्यावर्त्तयति शेषादेव नान्यस्मादिति। उपलक्षणमेतत्, कर्तर्येव नान्यत्रेत्यपि द्रष्टव्यं, 'पठ्यते गम्यतइति'। ननु क्रियमाणेपि कर्त्तरिग्रहणे यदि तावदेवं नियमः कर्त्तरि यदि भवति शेषादेवेति ततोऽशेषात्कर्त्तरि माभूत् शेषात्तु भावकर्म्मकर्तृषु त्रिष्वपि प्राप्नोति। अथाप्येवं नियमः शेषाद्यदि भवति कर्त्तर्येवेति ततः शेषाद्भावकर्म्मणोर्माभूदशेषात्तु त्रिष्वपि प्राप्नोति। उक्तोत्र परिहारो योगविभागोऽत्राभिप्रेत इति, तत्र प्रथमे योगे शेषादेवेति नियमः, द्वितीये तु कर्त्तर्येवेति, कर्म्मकर्त्तरीत्यपि भावकर्म्मणोरित्यत्रोक्त एवार्थो विस्मरणशीलाननुग्रहीतुं पुनरपि स्मारितः॥

"अनुपराभ्यां कृञः"॥ अत्रापि द्वितीयं कर्त्तृग्रहणमनुवर्त्तते। अनुक्रियते स्वयमेव पराक्रियते स्वयमेव॥

"उपाच्च"॥ उपपूर्वो रमिर्निवृत्तिविनाशयोर्वर्त्तते उपरतोऽध्ययनाद् उपरतो निधनादिति, न चानयोरुभयोरप्यर्थयोः सकर्मकत्वमुपपद्यते तत्कथं सकर्म्मकस्योदाहरणम्, अत आह। 'उपरमयति यावदिति'। कथं पुनरण्यन्तो ण्यर्थे वर्त्तते ऽत आह। 'अन्तर्भावितण्यर्थं इति'॥

"बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः"॥ 'प्राप्नोतीति'। गम्यतइतिवचनं तु प्राप्तिहेतुर्व्यापारः। 'कुण्डिका स्रावयतीति'। कुण्डिकायामुदकं

कुण्डिकोदकव्यापारो वा कुण्डिकायां छिद्रवत्यामुपचर्यते, ननु स्पन्दनमपि द्रवद्रव्यकर्तृकं चलनमेव, तथा प्रसिध्यभावात् ॥

"निगरणचलनार्थेभ्यश्च" ॥ 'चलयतीति'। चल कम्पने घटादिः। 'आदयते देवदत्तेनेति'। गतिबुद्धीत्यादिना ऽणौ कर्तुः कर्मसंज्ञा प्राप्ता अत्तिखाद्योः प्रतिषेध इतिवचनाच्च भवति ॥

"अणावकर्मकाच्चित्तवत्कर्तृकात्" ॥ 'अणाविति किमिति'। एयन्तस्य प्रयोज्येन कर्म्मणा सकर्म्मकत्वमवश्यम्भावीति मन्यमानस्य प्रश्नः। 'चेतयमानमिति'। चिती संज्ञाने चुरादिः । 'हेतुमण्णिचोवधिरिति'। बुधादिसूत्रादिह णिज्ग्रहणमनुवर्तते, बुधादिभ्यश्च हेतुमत्येव णिच् सम्भवति तस्मादिहापि तस्यैव ग्रहणमिति भावः। तत्र यथा ब्राह्मणा आनीयन्तामन्यत्राधीयानेभ्य इत्युक्ते प्रत्यासत्तेर्यदध्ययनं ब्राह्मणानां सम्भवति तदधीयानेभ्य इति गम्यते न त्वध्येतव्यमात्रमधीयानेभ्य इति तद्वदिहापि प्रतिषेधोपि तस्यैव गम्यते यज्जातीयस्य विधौ ग्रहणमिति। 'आरोहयमाणमिति'। णेरणावित्यात्मनेपदं शानच् तत्रैवास्याकर्म्मकत्वमुपपादितं, प्रयुङ्क्तइति पाठः। प्रयोजयतीति पाठे णेरर्थो मृग्यः ॥

"न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" ॥ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणमिति पिबतिवसत्योर्ग्रहणं न पातिवस्त्योः, तेनाणावकर्म्मकत्वविवक्षायां परस्मैपदं भवत्येव। 'पाययतइति'। 'शाच्छासाह्वाव्यावेपां युक्'। 'पादिष्विति'। धेडप्यस्मिन् सूत्रे पठितव्य इत्यर्थः। 'समीची इति'। प्रथमाद्विवचने 'वा छन्दसी' ति पूर्वसवर्णदीर्घः ॥

"वा क्यषः" ॥ 'लोहितायते इति'। अलोहितो लोहितो भवतीत्यत्रार्थे क्यष्, अकृत्सार्वधातुकयोरिति दीर्घः। 'पटपटायतीति'। पटच्छब्दस्य डाविषये द्विर्वचनम्, अव्यक्तानुकरणादिति डाच्, टिलोपः, 'नित्यमाम्रेडिते डाचि'। 'कथमिति'। न कथञ्चिदित्यर्थः। किं कारणमित्याह। 'यावतेति'। न नियमेन व्यावर्त्तितमात्मनेपदमनेन शक्यं प्रापयितुं नस्वशक्यार्थं वचनस्य व्यापारो वा वचनं तु केवलस्य तस्य प्रयोगार्थं स्यादिति भावः। एवं तर्हीत्यादि परिहारः, विकल्पितं विभाषितं पाक्षिक-

मित्यर्थः । कथं पुनः परस्मैपदप्रकरणेन विच्छिन्नमात्मनेपदं शक्यं विधातुम् अत आह । 'तच्चेति' । ननु शाब्दः सन्निधिः सम्बन्धकारणं प्रतिषेधेन चापवादभूतस्य परस्मैपदस्य भावमात्रं प्रतिपाद्यते आत्मनेपदं तु स्वेन शास्त्रेण भवति न भावना तस्य सन्निधिर्भवति, उच्यते, तात्पर्यतोपि सन्निधिः सन्निधिरेवापवादापनयनस्य चोत्सर्गप्रवृत्तौ तात्पर्यं तेन परस्मैपदं भवतीत्यस्यात्मनेपदं भवतीति तात्पर्यार्थः । यद्वा इहापि प्रतिषेध एव विधेयः, स च पूर्व्वसूत्रवदिहात्मनेपदं प्रवर्त्तयिष्यति, किं तर्ह्युच्यते ऽनन्तरं सन्निधापितमिति, नन्वेवमिहैव सन्निधापितं भवति, स्यादेवं यदि परस्मैपदेन क्यषन्तादात्मनेपदं बाधितं स्यात् नियमेन तद्व्यावृत्तिः, तत्र स्वविषये परस्मैपदप्रतिषेधो विकल्प्यमानः किं कारणमात्मनेपदं प्रवर्त्तयेत् पूर्वत्र त्वपवादमपनयता प्रतिषेधेनात्मनेपदं प्रवर्त्त्यते तस्मादिहापि तदनुवृत्तिसामर्थ्याद् यादृशः प्रतिषेध आत्मनेपदप्रवृत्त्यविनाभावी प्रकृतः तादृश एव विधीयतइति मत्वोक्तम् अनन्तरं सन्निधापितमिति । यद्यात्मनेपदं विधीयते केनेदानीं परस्मैपदं पक्षे भवतीत्यत आह । 'तेन मुक्तइति' । इह 'प्रोपाभ्यां समर्थाभ्याम्' 'अनुपसर्गाद्वे' त्यनन्तरं क्यष इति सूत्रङ्कर्त्तव्यं क्यषन्तादात्मनेपदम्भवतीति नेदन्दुःखमनुभवितव्यम्भवति वा ग्रहणस्य न कर्त्तव्यम्भवति उत्तरमपि योगद्वयन्तत्रैव कार्यम्, तथा तु न कृतमित्येव ॥

"द्युद्भ्यो लुङि" ॥ द्युतेरेकत्वाद्बहुवचनमनुपपन्नमित्याशङ्क्याह । 'तत्साहचर्यादिति' । छत्रिन्यायेनेति भावः । 'लुठादयोपीति' । प्रत्यासन्नानामेव साहचर्यात् प्रतीतिः स्यादित्याशङ्कामपनेतुं दूरवर्तिनामुपादानं, क्वचित् श्वित्यादय इत्यनन्तराणामेव पाठः, 'कृपूपर्यन्ता इति' । तदनन्तरं वृत्करणाद् एतदुक्तं भवतीत्याह । 'बहुवचननिर्देशादिति' । 'व्यद्युतदिति' । पुषादिसूत्रेणाङ्, न च तत एवाङ्विधानात् परस्मैपदं शक्यं विज्ञातुं, नित्यत्वप्रसङ्गात् लुङोन्यत्रापि प्रसङ्गाच्च, अनुदात्तेत्त्वं तु युज्यं स्यात् ॥

"वृद्भ्यस्यसनोः" ॥ स्यसनोरिति सतसप्तमी । 'द्युतादिष्वेव वृता

दयः पदान्तइति'। यद्येवमियं प्राप्तिर्द्वयोः पूर्वा प्राप्तिं बाधेत ततश्चावृत-द्वर्तिष्येति लुङि विकल्पो न स्यात्, तथा चोत्तरत्र चकारः क्रियते इमां प्राप्तिं पक्षे इतरा प्राप्तिर्न बाधेतेति, द्युतादिपाठसामर्थ्यात्सोऽपि भविष्यति। यद्वा लुङीत्यत्र स्वरयिष्यते, वर्त्स्यतीत्यादौ 'न वृद्भ्यश्चतुर्भ्यः' इति इट्-प्रतिषेधः॥

"लुटि च क्लृपः"॥ 'एवं तर्हीति'। सामान्यस्य विशेषो बाधक इति भावः। कल्प्तेत्यादौ 'तासि च क्लृप' इतीट् प्रतिषेधः॥

इति हरदत्तविरचितायां पदमञ्जर्यां प्रथमाध्यायस्य तृतीयः पादः॥

---

"आ कडारादेका संज्ञा"॥ 'आङ्मर्यादाभिविध्योरिति'। समासस्य विकल्पितत्वादा कडारादिति निर्देशः, समासे त्वाकडारमिति स्यात्। इह द्वौ कडारशब्दौ भवतः 'प्राक्कडारात् समासः' 'कडाराः कर्म्मधारये' इति च तत्र को ऽवधिरित्यत आह। 'कडाराः कर्मधारयइति वक्ष्यतीति'। कुतः पुनरेतत् स्वातन्त्र्यात्, स्वतन्त्रो ह्यसौ प्रथमानिर्देशेन स्वयं कार्ययोगित्वात् प्राक्कडारादित्ययं तु परतन्त्रो ऽवधित्वेन स्वयं कार्ययोगित्वाभावाद् व्याप्तेश्च न्यायाद्, एवं हि भूयसामनुग्रहो भवति। लिङ्गाच्च। यदयं 'तत्पुरुषो' 'द्विगुश्चे' ति द्विगोस्तत्पुरुषसंज्ञां शास्ति तज्ज्ञापयति अनुवर्त्तते द्वितीयेऽप्येकसंज्ञाधिकार इति, अन्यथा 'दिक्संख्ये संज्ञाया' मित्यत्र तत्पुरुषाधिकारादेव समावेशसिद्धेस्तदर्थो यत्नोऽनर्थकः स्यात्। किमर्थं पुनरिदानवधिरुपादीयते न आ द्वन्द्वाद् इत्येवोच्येत नहि चार्थे द्वन्द्व इत्यतः परत्रास्योपयोगः। उच्यते। द्वन्द्वश्च प्राणितूर्येत्ययमप्यवधिः सम्भाव्येत ततश्च सम्बुद्धिसंज्ञामन्त्रितसंज्ञयोः समावेशो न स्यात्। 'का पुनरसाविति'। एका संज्ञा भवतीत्येतावत् सूत्रव्यापारस्तत्र विशेषादर्शनात् प्रश्नः। या परानवकाशा चेति वचनाद् न्यायाच्च व्यवस्थेति भावः। ननु यद्यारभ्येऽप्यस्मिन् परत्वानवकाशत्वाभ्यामेव व्यवस्था वाच्याऽनारभ्येऽप्यस्मिन् आभ्यामेव व्यवस्था भविष्यति नार्थ एतेन, तत्राह। 'अन्यत्रेति'। अयम्भावः। यत्र प्रयोजनमेकं भवति सहानवस्थानलक्षणो वा विरोधस्तत्रैवानवकाशः सावकाशं बाधते यथा नैवारश्चरुर्नखावपूतानामिति, नखावपनेन वैतुष्यफलकेन

तत्फलकोऽवघातो बाध्यते, अष्टाश्रिर्यूपः कर्त्तव्यो वाजपेयस्य तु चतुरश्र इति अष्टाश्रित्वचतुरश्रत्वयोर्विरोधात् बाध्यबाधकभावः, विप्रतिषेधोऽपि विरोधात्मकत्वात्तत्रैव भवति। न चासत्यस्मिन् सूत्रे संज्ञानामेतदुभयं भवति, अत एवान्यत्र समावेशो भवति तद्यथा कृत्कृत्यप्रत्ययसंज्ञानां तद्धिततद्राजप्रत्ययसंज्ञानां च, सति त्वस्मिन् सूत्रे एकस्यैकैवेति नियमाद्विरोधो जायते विरोधे च सति परत्वानवकाशत्वाभ्यां व्यवस्था शक्यते वक्तुमिति, तत्रानवकाशाया उदाहरणमाह । 'वत्स्यतीति' । 'शिक्षा भिक्षेति' । 'गुरोश्च हल' इत्यकारप्रत्ययः । यद्यप्यत्र समावेशेऽपि न कश्चिद्दोषस्तथापि वस्तुतः समावेशो नास्तीत्येतावता इदमुदाहरणम् । सम्प्रति यत्र समावेशे सति दोषस्तद्दर्शयति । 'अततक्षदिति' । परस्यास्तूदाहरणं धनुषा विध्यतीति, शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकतमत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञापादानसञ्ज्ञां बाधते तथा कांस्यपात्र्यां भुङ्क्त इत्यधिकरणसञ्ज्ञा धनुर्विध्यतीति कर्तृसंज्ञा, उक्तं चापादानमुत्तराणीति । इह गार्ग्यो धानुष्क इति अनवकाशाभ्यां भपदसंज्ञाभ्यामङ्गसंज्ञाया धातुप्रत्ययेषु सावकाशाया बाधः प्राप्नोति, ज्ञापकात्सिद्धं, यदयं 'सुपि च' 'बहुवचने झल्येत्' 'तद्धितेष्वचामादे' रिति स्वादिषु तद्धितेषु चाङ्गस्य सतः कार्यं शास्ति तज्ज्ञापयति समाविशत्यङ्गसंज्ञा भपदसंज्ञाभ्यामिति, द्वये हि स्वादयो यजादयो हलादयश्च तत्र याजादिषु भसंज्ञा हलादिषु पदसंज्ञेति अङ्गस्य सतः कार्यविधानमनुपपन्नं स्यात् । गुरुलघुसंज्ञे वर्णमात्रस्य विधीयेते नदीघिसंज्ञे तु तदन्तस्येति ताभ्यां समाविशतः, तद्यथा वात्सीबन्धुरिति 'नदी बन्धुनी' ति पूर्वपदान्तोदात्तत्वं वात्सीबन्धो इति गुरोरनृत इति प्लुतश्च भवति । विश्च ना च विनरौ 'द्वन्द्वे घी' ति पूर्वनिपातः, विनोर्भावो वैनम् 'इगन्ताच्च लघुपूर्वात्' इत्यण्, विनराज्ञाचष्टे इति विनयति प्रविनय्य गतः 'ल्यपि लघुपूर्वादि' त्ययादेशो भवति। भाष्ये त्विष्टविषये समावेशो न्यायान्तरेण साधितः प्राक्कडारात् परं कार्यमिति, तत्रायमर्थः । प्राक्कडारात् संज्ञाख्यं कार्यं परं भवतीति संज्ञाप्रकरणात् संज्ञैवात्र कार्यमित्युच्यते, परा संज्ञेत्येव तु नोक्तं विप्रतिषेधे चेति वक्ष्यति तत्र परं कार्यमित्यनुवृत्तिर्यथा

स्यादिति तत्र यस्याः संज्ञायाः परस्याः पूर्वया ऽनवकाशया बाधः प्राप्तः सा परा भवतीति विधिरूपेणास्य प्रवृत्तिः। नन्वनवकाशयापि पूर्वया नैव परस्या बाधः प्राप्नोति विरोधाभावात् फलैक्याभावाच्च संज्ञानामन्यत्र समावेशस्य दृष्टत्वात्। सत्यम्। एतदेव ज्ञापयति भवत्यत्र प्रकरणे संज्ञानां बाध्यबाधकभाव इति तेन परयानवकाशया पूर्वा बाध्यते द्वयोश्च सावकाशयोर्विप्रतिषेधे परमिति परैव भवतीति। नियमफलस्यापि सिद्धिरस्ति न्यासेऽङ्गसंज्ञा परा कार्या पूर्वे न भपदसंज्ञे, एवं सर्वत्र यत्र समावेश इष्टोऽस्मिन्पक्षे 'ऋतोरण्' 'छन्दसि घस्' ऋत्विय इति अत्र 'सिति चे' ति पदसंज्ञाविषये परं कार्यमिति वचनाद् भसंज्ञापि स्यात् ततश्च 'ओर्गुणः' प्राप्नोति सित्करणं पदत्वे सत्यवग्रहार्थं स्यात् 'शेषो बहुव्रीहि' रित्यत्र च शेषग्रहणं कर्त्तव्यम् अन्यथा 'अन्यपदार्थे च संज्ञाया' मिति अव्ययीभावविषये परं कार्यमिति वचनाद् बहुव्रीहिसंज्ञापि स्याद् एकसंज्ञाधिकारे त्वव्ययीभावसंज्ञैव बाधिकेति शेषग्रहणमनर्थकं तदेवं शेषग्रहणमेव प्रमाणं न्यासान्तरमपि सूत्रकारस्यैवाभिमतमिति॥

"विप्रतिषेधे परं कार्यम्"॥ 'विप्रतिषेध इति'। षिधु शास्त्रे, षिधु गत्यामिति भौवादिकयोरन्यतरस्य रूपं तस्य हि सेधसिचसञ्जस्वञ्जामिति षत्वमिति उपसर्गवशाच्च विरोधार्थत्वं धातूनां ह्युपसर्गवशाद न्यश्चार्थ उपजायते, तद्यथा प्रहार उपहारो ऽनुहारः संहार इति, षिधू संराद्धाविल्यस्य तु दैवादिकस्य षत्वं नास्ति सेधविचेति शपा निर्देशात्, 'आदेशप्रत्यययोरि' ति विहितस्य तु 'सात्पदाद्यो' रिति निषेधः। ननु गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनादयं सकारः पदादिः, षत्वविषये परिभाषेयं न भवति यदि स्याद् गोष्ठो भूमिष्ठ इत्यादौ सकारस्यापदादित्वा 'दादेशप्रत्यययो' रित्येव षत्वसिद्धेरम्बादौ गत्रादिग्रहणमनर्थकं स्यात्। परशब्दोयं त्रिलिङ्गः परो देशः परा सेना परं कार्यमिति, अतोयमव्युत्पन्नः पचाद्यजन्तो वा न तु ऋद्दोरबित्यबन्तः, तथा हि सति त्रिलिङ्गता न स्यात्॥

कृत्ल्युट् नपुंसके भावे स्त्रियां क्तिवादयो यतः।

अतो घञाद्याः पुंस्येव यथा पाकस्त्वयो लवः ॥

वासरूपविधिर्नास्ति कृल्ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वचनात्, स्त्रियामपि नास्ति अस्त्रियामितिप्रतिषेधात्, अतो भावघञादयः पुंस्येव कर्तृवर्ज्जिते तु कारके पुंनपुंसकयोर्न कथं चित् स्त्रियाम्। 'परं कार्यमिति'। परं यत्कार्यमित्यादि तद्भवतीत्यर्थः, अथ वा यत्परं तत्कार्यं भवति कर्तव्यं भवतीत्यर्थः। अन्ये त्वाहुः। न क्रियापदत्वेन कार्यशब्दस्यान्वयो नापि परं कार्यं भवति न तु शास्त्रमित्येवं शास्त्रादिव्यावृत्तये कार्यशब्दः किं तर्हि यत्कार्यं कृत्यर्हं परं तद्भवतीति वचनव्यक्तिः, अर्हे कृत्यप्रत्ययः किं सिद्धं भवति तुल्यबलविरोधइति सिद्धं भवति, नह्यपवादादीनां सन्निधावुत्सर्गादीनां कृत्यर्हत्वं तैर्बाधितत्वादिति। 'विरोधो विप्रतिषेध इति'। तद्भावित्वेनैव लोके प्रसिद्धत्वाद् विप्रतिषिद्धमित्युक्ते विरुद्धमिति गम्यते, तस्य विषयं दर्शयति। 'यत्रेत्यादि'। यत्र विषये वृत्तेभ्य इत्यादौ। 'अन्यार्थौ'। जातिपदार्थपक्षे ऽन्यत्र वृत्ताभ्यां वृक्षेष्वित्यादौ चरितार्थावित्यर्थः। व्यक्तिपक्षे तु तद्विषययोर्विध्योरन्यत्र चरितार्थत्वासम्भवाद् अन्योर्थः प्रयोजनमनयोस्तावन्यार्थौ द्वौ प्रसङ्गौ द्वे कार्ये दीर्घत्वेत्वादिके युगपत्प्राप्नुतः, स विप्रतिषेधः विप्रतिषेधस्य विषय इत्यर्थः, तुल्यबलयोर्विरोधो यस्मिन् स तथोक्तः। 'परं कार्यं भवतीति'। यत्कार्यं कृत्यर्हं परं तद्भवतीत्यर्थः। तुल्यबलविरोधइत्यस्य व्यावर्त्यं दर्शयति। 'उत्सर्गापवादेत्यादि'। तत्र श्याद्व्यधेत्याकारान्तलक्षणो णप्रत्यय उत्सर्गस्तं परमप्यनुपसर्गे सावकाशं बाधित्वा ऽनवकाशत्वा 'दातश्चोपसर्गे' इति क एव भवति सुग्लः सुम्लः। रधेर्णिचि 'रधिजभोरची' ति नुम् कृताकृतप्रसङ्गित्वान्नित्यः, 'अत उपधाया' इति वृद्धिरनित्या नुमि कृते ऽकारस्यानुपधात्वादप्राप्तेः, तत्र पूर्वापि नुमेव भवति रन्धयतीति, अशिश्रियद् अदुद्रुवद् इत्यात्रान्तर्भूतवरूपत्वाद् इयङुवङावन्तरङ्गौ बहिरङ्गं लघूपधगुणं परमपि बाधेते, अपवादादीनां तु परस्परसंप्रधारणायां नित्यादप्यन्तरङ्गं तस्मादपवादः। उक्तं च

परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव।

नित्यादन्तरङ्गोपगमेऽन्तरङ्गं तस्माद्विधिः प्रातिपदो बलीयान् ॥

इति। द्वयोरेकत्रोपनिपात उपपत्तिः, परस्य नित्यस्य चेति, अत्र उपसमस्तमप्युपपत्तावित्येतदनुषज्यते, प्रतिपदं भवः प्रातिपदो ऽपवादः, अप्रवृत्तावित्याद्याकृतौ पदार्थे द्वयोरप्यन्यत्र कृतार्थत्वाद्विप्रतिषेधे सति परस्परप्रतिबन्धादप्रवृत्तिरेव प्राप्नोति, तद्यथा यो हि द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नाना नादिक्षु च कार्ये भवतस्तदा यद्यसावविरोधार्थो भवति उभयोर्न करोति तत्र विध्यर्थमिदं परं भवतीति, तस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तदपि भवत्येव। यथा भिन्धकीति, भिन्द्धि इति स्थिते परत्वाद्धिभावे पुनः प्रसङ्गविज्ञानादकच् भवति। व्यक्तौ तु पदार्थे सर्वेष्वप्युद्देशेन शास्त्रस्य प्रवृत्तेस्तद्विषयोपनिपातिनोऽन्यत्र चरितार्थत्वाभावात्पर्यायेण प्रवृत्तौ प्राप्तायां नियमार्थमिदं विप्रतिषेधे परमेव भवति न पूर्वमिति। एतत्सूत्रारम्भाच्च पूर्वस्य लक्षणस्य तत्रानारम्भोऽनुमीयते, तदुच्यते 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति तद्यथा जुहुतात् त्वमिति परत्वात्तहादेशे कृते स्थानिवद्भावेन प्राप्तं धित्वं न भवति, तस्यानुरोधेन व्यक्त्याकृतिपदार्थाश्रयणादनयोः परिभाषयोर्विषयविभागो ऽवसेयः ॥

"यू स्त्र्याख्यौ नदी" ॥ अत्र ह्रस्वयोरिदुतोर्ग्रहणे यद्यपि सवर्णग्रहणाद्दीर्घयोरपि संज्ञा लभ्यते ह्रस्वयोरपि तु स्यात् ततश्च हे शकटे हे धेनो अत्रापि प्राप्नोति इह च शकटिबन्धु 'नद्री बन्धुनी'ति पूर्वपदान्तोदात्तत्वं प्रसज्यते, इह च बहुशकटिः बहुधेनुरिति, 'नद्यृतश्चे'ति नित्यः कप्स्यात्। नैष दोषो, 'ङिति ह्रस्वश्चे'त्येतन्नियमार्थं भविष्यति ङित्येव ह्रस्वौ नदीसंज्ञौ भवतो नान्यत्रेति कैमर्थ्यान्नियमो भवति विधेयं नास्तीति कृत्वा, इह वास्ति विधेयं किं नित्या नदीसंज्ञा प्राप्नोति सा विभाषा विधेया ऽतो ह्रस्वयोरपि स्यादेवेति दोषं दृष्ट्वा दीर्घयोर्ग्रहणमिति दर्शयति। 'ई च ऊ च यू इति'। समासविधौ सुबधिकाराच्चैतद् द्वन्द्वस्य विग्रहवाक्यं किं तर्हि अर्थप्रदर्शनम्। अत्र चानुकार्यानुकरणयोरभेदविव-

तया विभक्तिर्न कृता क्व चित्तु विभक्त्यन्तमेव पठ्यते । ननु दीर्घयोर्ग्रहणे यू इति निर्देशो नोपपद्यते 'दीर्घाज्जसि चे' ति पूर्वसवर्णप्रतिषेधाद् अत आह । 'अविभक्तिकोयं निर्देश इति' । सुपां सुलुगिति लुप्तत्वाद् 'वा छन्दसी' ति पूर्वसवर्णेनापहृतत्वाद्वा नास्मिन् विभक्तिः श्रूयत इत्यविभक्तिकः । अन्ये तु नैवायं द्वन्द्वः किं तु पृथक् पदे इत्युक्तमित्याहुः । अविभक्तिकत्वं चानुकार्यानुकरणयोरभेदविवक्षया, 'स्त्रियमाचक्षाते स्त्र्याख्याविति' । ननु स्त्र्याख्या इति प्राप्नोति अनुपसर्गे को विधीयते, यस्त्वातश्चोपसर्ग इति कः, अयमकर्म्मोपपदे चरितार्थः कर्म्मणि त्वणा बाध्यते यथा वक्ष्यति अकारादनुपपदात् कर्म्मोपपदे विप्रतिषेधेनेति तत्राह । 'मूलविभुजादिषु दर्शनादिति' । एवं च कृत्वा इदमपि सिद्धं भवति ॥

यस्मिन् दशसहस्राणि पुत्रे जाते गवान्ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोयमुञ्छेन जीवति ॥

इति । इह ईदूतोरेवेयं संज्ञा विधीयेत तदन्तस्य वा, आद्ये पक्षे हृतस्त्रियां न स्याद् आध्यै ब्राह्मण्यै हे लक्ष्मि हे यवागिति, समुदायो ह्यत्र स्त्र्याख्यो न त्वीदून्मात्रं, इयुवङोरेव तु स्यात्, स्त्रियां विधानादन्वयव्यतिरेकाभ्यां च स्त्र्याख्यत्वादिति द्वितीयं पक्षमाश्रित्याह । 'ईकारान्तइत्यादि' । वर्णग्रहणे सर्वत्र तदन्तविधिरिति तदन्तविधिलाभः, सुप्तिङन्तमित्यत्र सुप्तिङोः प्रत्ययत्वादन्यत्रापि प्रत्ययग्रहणेषु तदन्तविधिर्निवारितः, कथं पुनर्ज्ञायते वर्णयोरेवेदं ग्रहणं न प्रत्यययोरिति, इयङुवङ्स्थानप्रतिषेधात् । यदि तदन्तस्य संज्ञा कथं वक्ष्यति शीनद्योः परतः नद्यन्तादङ्गादुत्तरस्येति, समुदायस्य नदीत्वात्तदवयवभूतावीदूतावपि तथोक्तौ । अन्ये त्वाहुः । वर्णयोरेव संज्ञा समुदायधर्म्मस्य स्त्रीत्वस्यावयवआरोपात् हृतस्त्रियामपि भवति, अत्र च लिङ्गमियङुवङ्स्थानप्रतिषेध इति, तेषां गुरुनदीसंज्ञयोः समावेशो न स्याद् एकविषयत्वात् । 'यू इति किमिति' । 'ङेराम्नद्याम्नीभ्य' इत्यत्र पृथगाब्ग्रहणाद् आपो न भविष्यतीति मन्यते । 'मात्रे दुहित्रे इति' । 'नद्यृतश्चे' ति ऋकारग्रहणमस्य यं स्याद् बहुपितृक इत्यत्रेत्यज्ञापकम् ऋकारान्तानां संज्ञाभावस्य । 'ग्रामणीः खलपूरिति' । रूपोदाहरणमेतत्सम्बु-

द्युक्तं वा द्रष्टव्यम्। अथाख्यग्रहणं किमर्थं यावता यू स्त्रियामित्येतावता स्त्र्यर्थवृत्तित्वं लभ्यते तत्राह। 'आख्याग्रहणमिति'। आङ्पूर्वस्य ख्या इत्यस्य धातोर्ग्रहणमित्यर्थः। क्व चित्त्वाख्यग्रहणं किमिति प्रश्नः। 'शब्दार्थस्त्रीत्वइति'। आख्याग्रहणसमर्थ्यात्पदान्तरमनपेक्ष्य यो स्वयमेव स्त्रियमाचष्टे इत्याश्रीयते इष्वशनिप्रभृतीनां तूभयलिङ्गानां शब्दार्थएव स्त्रीत्वमिति ङिति ह्रस्वश्चेति नदीसंज्ञा भवत्येव, एवं पटुप्रभृतीनां गुणशब्दानामपि शब्दार्थ एव स्त्रीत्वं तथा च पटुरानीयतामित्युक्ते स्त्रियमप्यानीय कृतीभवति, अन्ये त्वाहुः। आख्याग्रहणसामर्थ्याच्चियम आश्रीयते स्त्रियमेव याचष्टे न तु लिङ्गान्तरयुक्तम् इति, ग्रामणीखलपूशब्दयोस्तु क्रियाशब्दत्वेन [1] त्रिलिङ्गत्वाच भवति [2] इष्विशनिप्रभृतीनां तु स्त्रीविषयत्वाभावेपि 'ङिति ह्रस्वश्चे' त्यत्र केवलस्य स्त्रीशब्दस्यैवानुवृत्तिर्नाख्याग्रहणस्येति भवतीति तेषामाङ्पूर्वस्य ध्यायतेः क्विपि संप्रसारणे आध्यै ब्राह्मण्यै इत्यत्रापि न स्यात् तस्मात्पूर्व एव प्रकार आश्रयणीयः। कथं तर्हि प्रत्युदाहरणं ग्रामण्ये स्त्रियै इति खलप्वे स्त्रियाइति। उच्यते। क्रियाशब्दत्वेप्येतयोः पुंसि मुख्या वृत्तिः पुंसामेव ह्ययमुचितो धर्म्मो यदुत ग्रामनयनं नाम, एवं खलपवनमपि, आध्यानं तु स्त्रीपुंससाधारणमिति विशेषः, 'प्रथमलिङ्ग ग्रहणं च प्रयोजनं क्विब्लुप्समासाः,' यः शब्दः प्रथमस्त्रीत्वयुक्तद्रव्यमभिधाय पश्चाद्येन केन चित्प्रकारान्तरेण लिङ्गान्तरसंयुक्तं द्रव्यान्तरमाह तस्य तदानीमस्त्र्याख्यत्वादप्राप्ता संज्ञा विधीयते। क्विप्। कुमारीमिच्छति कुमारीयति कुमारीयतेः क्विप् कुमारी ब्राह्मणः तस्मै कुमार्यै ब्राह्मणाय, 'लुप्। लुम्मनुष्ये' इति लुप् खरकुट्यै ब्राह्मणाय यद्यप्यत्र युक्तवद्भावात् स्त्रीत्वमप्यस्ति तथापि स्वाश्रयस्य पुंस्त्वस्यानिवृत्तेर्नोऽयं स्त्रियामेव वर्त्तत इत्याख्याग्रहणादप्राप्तिः, समासः, अ‍तितन्व्यै ब्राह्मणाय, । अवयवस्त्रीविषयत्वात् सिद्धं, समासे तावदवयवस्तन्वीशब्दः स्त्रियामेव वर्त्ततइति तदानीमेव संज्ञा ततश्च वर्णसंज्ञापत्ते समुदायस्य नद्यन्तत्वात् कार्यसिद्धिः, तदन्तपक्षे त्व

१ नानालिङ्गत्वादिति पा॰ २।

२ पटुप्रभृतीनामिति पा॰ २।

ङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वचनाद् अतितन्त्रीबन्धुरित्यत्रापि 'नदी बन्धुनी' ति स्वरः सिद्धः नद्या पूर्वपदस्य विशेषणात्, क्विब्लुपोरपि पूर्वं स्त्रियामेव वर्त्तित्वात् पश्चादपि तदपरित्यागेनार्थान्तरे वृत्तिः, तत्रार्थान्तरसंसर्गात्प्रागेवान्तरङ्गत्वात्प्रवृत्ता संज्ञा सत्यपि पश्चाल्लिङ्गान्तरयोगे तस्य च बहिरङ्गत्वान्न निवर्तिष्यते । यद्येवमियङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गोऽवयवयोरियङुवङ्स्थानत्वाद् यथा ह्यवयवस्य स्त्रीविषयत्वात्समुदायस्य संज्ञा भवति तथावयवस्येयुवस्थानत्वात् समुदायस्य यण्स्थानस्यापि प्रतिषेधप्रसङ्गो यथा धियौ आध्याविति, सिद्धं त्वङ्गरूपग्रहणाद्, यस्याङ्गस्येयुवौ तत्प्रतिषेधादङ्गस्येयङुवङ्विधानसामर्थ्यादङ्गस्याक्षेपस्तेन यस्याङ्गस्येयङुवङौ निर्वर्त्तेते तस्य नदीसंज्ञा निषेधः, आध्यै इत्यत्र त्ववयवस्याङ्गत्वं नास्ति अङ्गस्यैरनेकाच इति यण्विधानाद् इयङुवङ्स्थानता नास्तीति निषेधाभावः, एतदर्थमेव तत्र स्थानग्रहणम् इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्याद् यदा त्वपवादेन बाधस्तदा मा भूदिति, एवं ङिति ह्रस्वश्चेत्यत्राप्यङ्गस्याक्षेपात् सोपि विधिरङ्गस्यैव स्त्रीत्वे भवति नावयवस्य शकट्यै अतिशकटये ब्राह्मणाय श्रियै अतिश्रिये ब्राह्मणाय ॥

"नेयङुवङ्स्थानावस्त्री" ॥ इयङुवङोः स्थानमनयोरिति वैयधिकरण्येपि गमकत्वाद्बहुव्रीहिः । अन्ये त्वधिकरणे ल्युटं विधाय कर्त्तरि षष्ठ्याः समासं कुर्व्वन्ति । अथ कथं विमानना सुभ्रु कुतः पितुर्गृहे इति । प्रमाद एवायम् । अन्ये त्वाहुः । अनित्योयं प्रतिषेधः सञ्ज्ञद्वृत्त्वात् । तथा च परिभाषा सञ्ज्ञद्वृत्तर्मनित्यं द्विर्वेद्वञ्च सुवद्वमिति । अत्र च ज्ञापकं तदो दावचनमित्याहुः ॥

"वामि" ॥ संहितासाम्येपि षष्ठीबहुवचनस्य ग्रहणं न तु द्वितीयैकवचनस्य नदीकार्य्याभावात्, नापि सप्तम्येकवचनस्य तस्य नदीसञ्ज्ञोत्तरकालं 'ङेराम्नद्याम्नीभ्य' इति विधानात् । न चामीति विषयसप्तमी युज्यते । तस्मिन्निति निर्द्दिष्टे इति वचनात्, तदाह । 'आमि परतो वा

नदीसंज्ञो न भवत इति'। 'श्रीणामिति'। नदीसञ्ज्ञापक्षे 'ह्रस्वनद्यापो नुट्'॥

"ङिति ह्रस्वश्च"॥ यद्यत्र ह्रस्वविशेषणार्थे यू इति नानुवर्त्त्येत तदेहापि स्याद् मात्रे दुहित्रे इति, तस्मात्तदिहानुवर्त्तते। नन्वेवमपि विशेषणं न प्रकल्पते यू ह्रस्वाविति, यदि यू न ह्रस्वौ अथ ह्रस्वौ न यू, यू ह्रस्वौ चेति विप्रतिषिद्धम्, आहायं यू ह्रस्वाविति, तत एवं विज्ञास्यामो य्वोः ह्रस्वाविति, कौ च य्वोः ह्रस्वौ सवर्णौ तदाह। 'ह्रस्वश्च य्वोः सम्बन्धी यः स्त्र्याख्याऽइति'। अत्रापि समुदायधर्मस्यावयवआरोपाद् ह्रस्वयोः स्त्र्याख्यत्वं, तदन्तविशेषणं वा, 'इयङुवङ्स्थानौ च यूइति'। नन्वेकं यूग्रहणमनुवर्त्तते तच्च ह्रस्वविशेषणएवोपक्षीणं तत्कथं पुनर्यू इति लभ्यते, उच्यते, चकारोत्र क्रियते स संज्ञिनः समुच्चयार्थे, इयङुवङ्स्थानाविति प्रकृतं य्वोरेव च तत्स्थानत्वमित्यर्थाद् यू इति लभ्यते। स्वरितत्वादनुवृत्तं तु यू इत्येद् ह्रस्वविशेषणमिति न कश्चिद्दोषः॥

"शेषो घ्यसखि"॥ आ धृषाद्वेत्यस्मिन्नधिकारे शिष असर्वोपयोगे, विपूर्वोतिशयइति पठ्यते, तत्र णिच्पक्षे कर्म्मण्येरच्, अन्यथा घञ्। 'ह्रस्व इति वर्त्ततइति'। अन्यथा ग्रामण्यादेरपि स्याद् अस्त्र्याख्यत्वेन शेषत्वाद्, यस्य नदीसंज्ञा न विहिता तस्य शेषत्वे मात्रे[1] इत्यत्रापि स्यादिति मत्वा पृच्छति। 'कश्चेति'। इतरस्तु ह्रस्वविशेषणार्थे यू इत्यस्यानुवृत्तिमाश्रित्याह। 'ह्रस्वमिति'। ह्रस्वान्तमित्यर्थः। यदाह। 'इवर्णोवर्णान्तमिति'। क्वचित्तु ह्रस्वेवर्णोवर्णान्तमिति पाठः, ह्रस्वात्मको य इवर्ण उवर्णश्च तदन्तमित्यर्थः। ह्रस्वेन शेषस्य विशेषणत्वात् तदन्तविधिः, एवं चासखीति सखिशब्दस्य प्रतिषेधो न तत्सम्बन्धिन इकारस्य, किं सिद्धं भवति इह शोभनस्सखा अस्य सुसखिः सुसखेरागच्छतीति घिसंज्ञा सिद्धा भवति, नह्ययं समुदायः सखिशब्दः, तदन्तविधिश्च ग्रहणवता प्रातिपदिकेन प्रतिषिद्धः, ह्रस्वमात्रस्य तु संज्ञाविधौ सखिशब्दसम्बन्धिनः प्रतिषेधा-

(१) दुहित्रइत्यधिकं ग पुस्तके।

दिहापि न स्यात्, यदि तदन्ते निषेधो न भवति 'यस्येति चे' त्यत्र इव- र्णस्य ईति यदुदाहरणं सखिशब्दात् 'सख्यशिश्वीति भाषायामि' ति ङीषि सखि ई इति स्थिते इकारस्य लोपः, असति तु लोपे सवर्णदीर्घ- स्य पूर्वं प्रत्यन्तवद्भावात् सखीमतिक्रान्तोऽतिसखिः अतिसखेरागच्छती- त्यत्रासखीति घिसंज्ञाप्रतिषेधः स्यादिति तन्नोपपद्यते, सत्यप्यन्तवद्भावेन सखिग्रहणेन ग्रहणे समुदायस्य सखिशब्दादन्यत्वात्, यदा खलु पुंल्लिङ्गेऽप्यति- सखिरिति भवति तदा कः प्रसङ्गो यदन्तवद्भावेन स्यात्, एवं तर्हि तत्र सूत्रे इकारलोपस्य तद्धितएवोदाहरणं न त्वीति परतः, यत्तु तत्रोदाहरि- ष्यते सोऽनास्थावादो द्रष्टव्यः । शेषग्रहणं चिन्त्यप्रयोजनम् । एकसंज्ञाधि- कारादेव हि स्त्र्याख्यस्य ङिति नदीसंज्ञापक्षे घि संज्ञा न भविष्यति ॥

"पतिः समासएव" ॥ 'सिद्धायामिति' । प्राप्तायामित्यर्थो न पुन- र्निष्पन्नायां, नहि निष्पन्नायां नियमेन निवृत्तिः शक्या वक्तुं, 'पतिशब्दः समासएव घिसंज्ञो भवतीति' । किं पुनरिदं समासावयवस्य पतिशब्दस्य संज्ञा विधीयते आहोस्वित्तदन्तसमासस्य, यदि समासस्य पतिश्च गृहं च पतिगृहे अत्र 'द्वन्द्वे घी' ति पूर्वनिपातो न प्राप्नोति, अथ पतिशब्दस्य, प्रजापतिनेत्यादिकस्य घिसंज्ञाकार्यं न प्राप्नोति । अथ वा पतिः समास- एवेति नियमेन किं व्यावर्त्यते, असमस्तः पतिशब्दः पतिशब्दस्य व्यावर्त्य- माना केन तदन्तस्य व्यावर्त्यते पतिशब्दसम्बन्धी य ईकारस्तदाश्रया सा घिसञ्ज्ञा भवति, यदि समासएवेत्यर्थो विवक्षितः, तेन समासे पतिशब्द- स्यानन्त्यस्यापि भवति पतिश्च गृहश्च पतिगृहे 'द्वन्द्वे घी' ति पूर्वनिपातः, पतिशब्दान्तस्य समासस्यापि भवति प्रजापतिनेति, अत एव वृत्तिकृता पतिशब्दानुरूपसूत्रार्थो दर्शितः, उदाहरणन्तु तदन्तानुरूपन्दर्शितम् । अथ कथं

नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इति । छन्दोवदृषयः कुर्वन्ति । अथ पूर्वत्रैवासखिपती इति क- स्मान्नोक्तम् उत्तरत्र पत्युरेव विकल्पो यथा स्यात् । किञ्च असखिपती

इत्युच्यमाने पतिशब्दस्य समासेपि न स्यात् पतिगृहे इति, तथा च सखि-शब्दस्य समासावयवस्यापि घिसञ्ज्ञाया अभावात् सखिगृहे गृहसखायाविति चानियमः पूर्वनिपातस्य ॥

"षष्ठीयुक्तश्छन्दसि वा" ॥ 'षष्ठ्यन्तेन शब्देनेति[1]' । षष्ठ्या विभक्त्या युक्त इति तु न भवति तथा हि षष्ठ्यामित्येव ब्रूयाद् युक्तग्रहणमनर्थकं स्यात् । 'षष्ठीग्रहणं किमिति' । अत्र केचिद् योगस्यावर्ज्जनीयत्वाद्युक्त इत्येव विशिष्टो योगः प्रत्येष्यतइति मन्यते, वचनमन्तरेण विशेषो दुर्ज्ञान इत्युक्तम् । अयमत्र योगविभागः कर्त्तव्यः, षष्ठीयुक्तः छन्दसि, षष्ठीयुक्तः पतिशब्दः छन्दसि घिसञ्ज्ञो भवति, ततो वा, छन्दसीत्येव यच्च यावच्च शास्त्रे कार्यं तत्सर्वं छन्दसि विकल्पेन भवति, सर्वं विधयश्छन्दसि विकल्प्यन्तइत्यर्थः । उभयत्र विभाषा चेयं, बहुलं छन्दसीत्यादिकस्त्वस्या एव प्रपञ्चः ॥

"ह्रस्वं लघु" ॥ इह सर्पिष्ट्वमित्यत्र 'ह्रस्वात्तादौ तद्धित' इति षत्वार्थं ह्रस्वसंज्ञया गुरुसंज्ञायाः समावेश इष्यते, अततक्षदित्यत्र तु सन्वद्भावनिवृत्त्यर्थं लघुसंज्ञाया गुरुसंज्ञया बाध इष्यते ऽतो ह्रस्वप्रदेशेषु संयोगपरस्यापि मात्रिकस्य ग्रहणं यथा स्यात् लघुप्रदेशेषु माभूदिति यथाप्रदेशे संज्ञाद्वयं कर्त्तव्यम् ॥

"यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" ॥ 'कर्त्तेति' । लुट् । 'करिष्यतीति' । लृट् । 'अकरिष्यदिति' । 'लृङ्, स्यतासी लृलुटोः स्य' इतीट् । 'यस्मादिति संज्ञिनिर्देशार्थमिति' । ननु तदादीत्यनेन संज्ञी निर्दिश्यते न यस्मादित्यनेन तत्राह । 'तदादीति' 'संबन्धाद्धिति' । सति हि यस्मादित्यस्मिन् तदादीत्यनेन संज्ञा निर्देष्टुं शक्यते नान्यथा सति हि परामर्शनीये तदित्यनेन परामर्शो भवति, अन्यथा तदादीत्यसंबद्धमेव स्यात् । 'नेविंश' इत्युपसर्गाद्विधिरस्तीति' । यद्यपि निरत्र धातुविशेषणं नेः परो यो विशिरिति धातोस्तङ्विधानाद् नियमविधिरपि धातोरिव नोपसर्गात्तथाप्युपसर्गस्यापि तत्रान्वयोऽस्तीति मत्वा एवमुक्तम् । 'विधिग्रहणं किमिति' । यस्मात्प्रत्ययइत्युक्ते साका-

(१) शब्देनेति काशिकामुद्रितपुस्तके नास्ति ।

हुत्वाद् यस्माद्विधीयतइत्यध्याहरिष्यतइति प्रश्नः, परशब्दस्याप्यध्याहारः स्यादित्युत्तरम् । 'स्त्री इयतीति' । इदं परिमाणमस्याः 'किमिदम्भ्यां वो घः' इयादेशः 'इदंकिमोरीश्की' 'यस्येति चे' ति लोपः, 'उगितश्चे' ति ङीप्, स्त्रीशब्दात् सोर्हल्ङ्याद्लिोपः, अत्र इयच्छब्दे परतो ऽङ्गसंज्ञा स्याद् भसंज्ञा चेति तन्निमित्तो यस्येति लोपः प्रसज्येत, इशादेशस्य यस्येति लोपस्तस्याभीयस्याप्यसिद्धत्वं न भवति, प्राग्भादसिद्धत्वमिति केषां चिदभ्युपगमात्, स्थानिवद्भावोपि नास्ति पदान्तरनिरपेक्षे ह्रीयतीशब्दे व्युत्पाद्यमाने स्त्रीशब्दो ऽनादिष्टादचः पूर्वः । ननु क्रियमाणे विधिग्रहणे स्यादेव संज्ञा, अस्त्येव ह्यत्र स्त्रीशब्दाद् विभक्तेः प्रत्ययस्य विधिरियत्प्रत्ययश्च परः । नैष दोषः । सति विधिग्रहणे प्रत्यासत्तेर्यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव प्रत्यये परतस्तदाद्यङ्गमित्यर्थो भवति, इह च स्त्रीशब्दाद्विहितो लुप्तः, श्रूयमाणश्च न ततो विहित,स्तदादिग्रहणमनर्थकं यत्तदोर्नित्यसम्बन्धादेव यस्मात्प्रत्ययो विधीयते तदङ्गमित्यर्थलाभाद् अत आह । 'तदादिवचनमिति' । स्यादयो विकरणाः, आदिशब्देन शबादेर्ग्रहणम्, असति तदादिग्रहणे यच्छब्दवत्तच्छब्दस्याध्याहाराद् यस्मात्प्रत्ययविधिस्तस्यैव संज्ञा स्याद् न तु तत आरभ्य आ तस्मात्प्रत्ययाद्यः संघातः तस्य, ततश्च करिष्यावः पचावः दीव्यावः तुदाव इत्यादा 'वतो दीर्घो यञी' ति दीर्घो न स्यात् स्याद्यन्तस्य समुदायस्यानङ्गत्वात्, ततश्च पापाव इत्यादावेव स्यात्, पय गतौ यङ्लुगन्तस्य 'लोपो व्योर्वली' ति लोपे रूपम् । 'कुण्डानीति' । यदा नुम् परादिस्तदा 'सुपि चे' ति दीर्घः सिध्यति, दधीनीत्यादावनकारान्तत्वाच्च सिध्यति पूर्वान्तपक्षे सामानीत्यादिवत्सिध्यति, यदा त्वभक्तपक्षः तदैतत्प्रयोजनं तदादिग्रहणस्य, पूर्वान्तपक्षस्तु तत्र स्थित इत्यप्रयोजनमेतत् । ननु च 'प्रातिपदिकान्तनुम्विभक्तिषु चे' ति नुम्ग्रहणं कुर्वतः सूत्रकारस्याभक्तो नुमित्यभिप्रायो लक्ष्यते ऽन्यथा माषवापाणीत्यत्र प्रातिपदिकान्तत्वाद्विभक्तिनकारत्वाद्वा णत्वसिद्धेरनर्थकं तत्स्यात् । नैतदस्ति, उच्यते, तत्र हि समासप्रातिपदिकान्तो न गृह्यते किं तर्हि पूर्वपदादित्यनुवृत्तेस्तदाक्षिप्तस्योत्तरपदप्रातिपदिकस्यान्तो गृह्यते समुदायभ-

क्तश्च नुम् उत्तरपदप्रातिपदिकान्तो न भवति ततश्च यथा गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं न भवति तथा नुमोऽपि न स्यात् । न तर्हीदानीमिदं भवति गर्गभगिणीति, भवति यदैतद्वाक्यं भवति गर्गाणां भगो गर्गभगः सोऽस्या अस्तीति तदा ह्यनुत्तरपदस्थत्वात् पूर्व्वपदात्सञ्ज्ञायामेवेति नियमाभावः, तद्यथा मातृभोगाय हितो मातृभोगीण इति, एवमपि माषान् वप्तुं शीलमस्याः माषवापिणी अत्र न प्राप्नोति ङीबत्रोत्तरपदस्यान्तो न तु नकारः, नकार एवात्रान्तः कथं गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः, अतः स्याद्यर्थं क्रियमाणं तदादिग्रहणं नुम्यपीष्टं साधयतीति मत्वा नुम्ग्रहणं कृतं, यदि तदादीत्युच्यते कर्त्तेत्यादौ न प्राप्नोति नह्यत्र तदादि किञ्चिदस्ति किं तर्हि तदेव, व्यपदेशिवद्भावाद्भविष्यति, वाक्यभेदाद्वा, यस्मात्प्रत्ययविधिस्तदङ्गं, तदादि च, इह प्रकृत्यादि प्रत्ययेऽङ्गमिति इयता सिद्धे गुरुनिर्द्देश एव लिङ्गं वाक्यभेदस्य, अथ कथं भिनत्ति संचस्करतुरित्यत्र सनुम्कस्य ससुट्कस्य च समुदायस्याङ्गसञ्ज्ञा, कथं च न स्याद् इह तस्य वा ग्रहणं भवति तदादेर्वा न चेदं तथापि तदादि । इदमपि तदादि कथं नैवं विज्ञायते स आदिरस्य तत्तदादीति कथं तर्हि तस्यादिस्तदादिस्तदादिरादिरस्येति तदापि उष्ट्रमुखवदेकस्यादिशब्दस्य लोपः, एवं हि विज्ञायमाने भिनत्तीत्यत्र यस्मात्प्रत्ययविधिर्भिदेस्तस्य आदिर्भकारः स आदिः सश्नन्तस्य समुदायस्येति सिध्यति, एवं संचस्करतुरित्यत्रापि तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति चात्रोभयत्र सञ्ज्ञासिद्धिः । अथात्र श्नमः पूर्वस्य भिशब्दस्याङ्गसञ्ज्ञा कस्मान्न भवति, भवतु को दोषः, गुणस्तावत् 'सार्वधातुकमपिदि' ति ङित्त्वादेव न भविष्यति, इह अनक्ति भनक्ति 'अतो दीर्घो यञी' ति दीर्घः प्राप्नोति, तिङीति तत्र वर्त्तते । अथ वा यस्मात्प्रत्ययविधिरिति वचनादस्मिन् प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं तत्र तदेवाङ्गं, श्नमि च विधीयमाने ये पञ्चम्या निर्दिष्टा रुधिरादयो न ते तत्र परतो येऽत्र श्नमि परतोऽतिप्रभृतयो न ते पञ्चम्या निर्दिष्टा इति सञ्ज्ञाभावः । 'स्त्र्यर्थमिति' । चतुर्थी तदर्थे इति समासः, चास्ति ह्यत्र चतुर्थ्येकवचनस्य, विधिरित्यसति पुनः प्रत्ययग्रहणे ऽङ्गशब्दस्य सम्बन्धि-

शब्दत्वाभावात् वस्तुतोऽङ्गमात्राश्रय इयङ् स्यात् सति तु सप्तमी-निर्दिष्टप्रत्ययग्रहणेऽङ्गशब्दः सम्बन्धिशब्दो भवति ततश्चाङ्गस्येयङ् भवति, अबीत्युक्ते यदपेतं यदङ्गं तत्र तस्मात्तादाविति वित्तानादर्यशब्दे परत इयङुवङौ न भविष्यतः । किं पुनरङ्गसंज्ञायाः प्रयोजनमङ्गस्येत्यधिकारः, नैतदस्ति, यदेतदङ्गस्येत्येतत् प्रत्ययइति वक्ष्यामीति, एवमपि प्राकरोत् प्रेहिष्ट सोपसर्गस्याडाटौ प्राप्नुतः, नैष दोषः, प्रत्ययग्रहणे यस्मात्स विहि-तस्तदादेर्ग्रहणं भवतीति. क्व पुनरेषा परिभाषा, नन्वेषाप्यत्रैव योगविभा-गेन सिद्धा यस्मात्प्रत्ययविधिस्तदादि प्रत्ययइत्येतावानेको योगः प्रत्यये गृह्यमाणे यस्मात् तस्य विधिस्तदादि गृह्यतइत्यर्थस्तेन ङिनत्यादि-रित्यादौ यत्र प्रत्ययः सप्तम्या निर्दिश्यते तत्र तदादेर्ग्रहणं तेन देव-दत्तो गार्ग्य इति संघातस्य ञित्स्वरो न भवति 'सुप आत्मनः क्यजि'-त्यत्र तु सुपा कर्म्मणो विशेषणात्तदन्तविधौ सिद्धे महान्तं पुत्रमित्या-दावतिप्रसङ्गे तदादिनियमेन व्युदासः, यदि तदादिनियमः क्रियते स्त्री-प्रत्ययेपि स्यात् ततः ष्यङन्तस्य पूर्वपदस्योच्यमानं संप्रसारणं परमकारीषग-न्धीपुत्र इत्यत्र न स्याद् यत्पूर्वपदं न तत्ष्यङन्तं यत् ष्यङन्तञ्च तत्पूर्वपदं, नैष दोषः । 'नेयङुवङ्स्थानावस्त्री' त्यतोऽस्त्रीत्यनुवर्त्तते तच्च स्वरूपप-दार्थकत्वेन प्रकृतमपीहार्थपदार्थकं संपद्यते, तदयमर्थो भवति प्रत्ययग्रहणे तदादि गृह्यते स्त्री चेन्नाभिधीयते । स्त्रीप्रत्यये तदादिनियमो नास्तीत्यर्थः । यद्येवमतिकारीषगन्ध्यापुत्रः, अत्रापि प्राप्नोति, प्रधानं या स्त्री तस्यामेव तदादिनियमप्रतिषेधोऽप्रधानस्त्रियां तु तदादिनियमो भवत्येव तेन यावानंशः स्त्रियं प्राधान्येन प्रतिपादयति तावतः स्त्रीप्रत्ययान्तस्य ग्रहणं भवति तद्ग्रहणे तु गतिकारकपूर्वस्यापि ग्रहणं भवतीति 'गतिरनन्तर' इत्यनन्तरग्रहणं ज्ञापयिष्यते ॥

"सुप्तिङन्तम्पदम्" ॥ 'सुप्तिङिति प्रत्याहारग्रहणमिति' । सुबिति सप्तमीबहुवचनस्य ग्रहणं न भवति यदि स्यात् ङिसंबुध्योः पद-त्वाभावादेव नलोपस्याप्रसङ्गात् 'न ङिसंबुध्यो' रिति प्रतिषेधोऽनर्थकः स्यादिति भावः । सप्तमीबहुवचनस्य च पकारेण प्रत्याहारो न कपः पका-

रेण 'तस्यानन्यार्थत्वात् । न च स्वरार्थः पकारः, यदा ह्यत्र कपः पकारेण प्रत्याहारस्तदा स्वरविधावपि तथैवेति सुप्त्वादेव स्वरसिद्धेः पित्त्वमनर्थकमेव स्यात्, यदि च सुब्ग्रहणेषु कपः पकारेण प्रत्याहारोऽभिमतः स्यात् सुप्यसर्वनामस्थानइत्येव ब्रूयात् स्वादिष्विति गुरुनिर्देशोऽनर्थकः स्यात् । 'ब्राह्मणा इति' । पदत्वाद्रुत्वविसर्जनीयौ । ननु यस्मात्प्रत्ययविधिस्तदादीत्यनुवृत्तस्य सुप्तिङ्भ्यां विशेषणादेव तदन्तस्य ग्रहणं सिद्धं नार्थोऽन्तग्रहणेन तत्राह । 'पदसंज्ञायामिति' । इहान्तग्रहणे सुप्तिङामेव संज्ञा स्यात् ततश्चाग्निष्वित्यादौ 'सात्पदाद्यो' रिति षत्वनिषेधः स्यादित्याशङ्क्य क्रियमाणमन्तग्रहणमुक्तस्यार्थस्य ज्ञापकं संपद्यते । 'गौरीब्राह्मणितरेति' । तरबन्तस्य घसंज्ञायां सत्यां तत्रोत्तरपदे परतो गौरीशब्दस्य पुंवद्भावं बाधित्वा परत्वाद् ह्रस्वत्वं स्यात् तरपि तु परतो ब्राह्मणीशब्दस्य न स्यात् ततश्च गौरिब्राह्मणीतरेति स्याद् गौरब्राह्मणितरेति चेष्यते, वृत्तौ तु समासप्रदर्शनपरं वाक्यमुपात्तम्, न त्वेतत्कार्योदाहरणं गौरब्राह्मणितरेति समासे रूपम् ॥

"नः क्ये" ॥ 'क्य इति क्यच्क्यष्क्यङामिति' । सञ्ज्ञायां समजेत्यस्य तु क्यपो ग्रहणं न भवति प्रयोजनाभावात्, न तावन्नन्येत्यत्र नलोपः प्रयोजनं सत्यपि पदत्वेऽप्रातिपदिकत्वात् सुबन्तमित्यनुवृत्तेर्वा क्यपि विध्यर्थमेनच भवति । ननु क्यजादयः सर्वे सुबन्ताद्विधीयन्तइति प्रत्ययलक्षणेन सिद्धं पदत्वं नार्थ एतेन तत्राह । 'सिद्धे सतीति' 'नान्तमेवेति' । क्यएव नान्तमित्येवं तु विपरीतनियमो न भवति 'न ङिसम्बुद्ध्यो'-रिति निषेधात् । 'वाच्यतीति' । अत्र पदत्वाभावात्कुत्वजश्त्वे न भवतः । ये तु गोसमानाक्षरनान्तादेव क्यज्भवति नान्येभ्य इत्याहुस्तेषां क्यङ्क्यषोरेव नियमस्य व्यावर्त्यं प्रदर्शनीयं तपस्यतीत्यादौ ॥

"सिति च" ॥ 'भवदीय इति' । पदत्वाज्जश्त्वं, 'ऊर्णायुरिति' पदसञ्ज्ञाया निरस्तत्वाद् यस्येति लोपाभावः, एवमृत्विय इत्योर्गुणो न

(१) सुपः पकारस्येति । पा० २ ।

भवति, चकारो ऽनुक्तसमुच्चयार्थस्तेन भुवद्धारयतोर्मतोश्छन्दसि तसौ मत्वर्थ इति भसञ्ज्ञां बाधित्वा पदसञ्ज्ञा भवति तेन भुवद्वान्: धारयद्वान्: ॥

"स्वादिष्वसर्वनामस्थाने" ॥ 'स्वादिष्विति' 'सुशब्दादेकवचनादिति'। सप्तमीबहुवचनादारभ्य ग्रहणं न भवति असर्वनामस्थानइति निषेधात्, यदि हि राजश्चित इत्यादौ सर्वनामस्थाने सुबन्तम् इति प्राप्तायाः सञ्ज्ञायाः निषेधोऽभीष्टः स्यात् तत्रैवासर्वनामस्थानइति ब्रूयात्। अथ राजवानित्यादावन्तर्वर्तिनिषेध इति चेद् न, लुमता लुप्ते प्रत्ययलक्षणाभावात्, 'तसौ मत्वर्थे' इति पदसञ्ज्ञाबाधनाय भसञ्ज्ञाविधानाच्च। 'आ कप इति'। यदि पुनः सप्तमीबहुवचनपर्यन्ता एकविंशतिः प्रत्यया गृह्येरन् तदा सुब्ग्रहणमेव कुर्याद् अनुवर्त्तयेद्वा ऽसर्वनामस्थानइत्यनेन सम्बन्धात्सप्तम्या विपरिणामात् सिद्धं. किमर्थं पुनरा कपः प्रत्यया गृह्यन्ते यावता सुबन्तात्तद्धितोत्पत्तिः समर्थाधिकारात् स्वार्थिका अपि सुबन्तादेव घकालतनेष्विति लिङ्गात् ततश्च राजत्वं राजतेत्यादावन्तर्वर्तिन्या विभक्त्या सुबन्तं पदमित्येव सिद्धम्। सत्यम्। भसञ्ज्ञार्थन्त्वा कपः प्रत्यया गृहीताः। 'राजत्वमित्यादि'। सुबन्तत्वेपि परत्वादनेन पदत्वं युक्तमित्येषामुपन्यासः। 'राजानौ राजान इति'। अत्रापदत्वान्नलोपाभावः, राज्ञेत्यत्र तु प्रत्ययलक्षणेन निषेधो न भवति 'न ङिसम्बुद्ध्यो' रिति लिङ्गा,देतल्लिङ्गमुपपद्यते हे चर्म्मन्निति नपुंसके लुमता लुप्ते सर्वनामस्थाने निषेधाभावादस्यैव पदत्वमिति तत्रार्थवात् प्रतिषेधः। एवं तर्हि नायं प्रसज्यप्रतिषेधः सर्वनामस्थाने नेति किं तर्हि पर्युदासोयं यदन्यत्सर्वनामस्थानादिति सर्वनामस्थाने न विधिर्न प्रतिषेधः, यदि केन चित्प्राप्नोति भवत्येव, पूर्वेण प्राप्नोति, अथ वा ऽनन्तरा या प्राप्तिः सा प्रतिषिध्यते कुतः पुनरेतद् अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा। अथ वा सर्वनामस्थानइत्यत्र यचीत्यपकृष्य सम्बध्यते तेन यजादौ पदसञ्ज्ञा निषिध्यते न हलादाविति राजेत्यादौ स्वादौ स्वादिष्विति वा सुबन्तमिति वा भवत्येव। अथ कस्माद्धलादिष्विति नोच्यते एवं ह्यसर्वनामस्थानइति न वक्तव्यं भवति उत्तरार्थं सुप्यपि नपुंसके भसञ्ज्ञा यथा स्यात् साम्नी इत्यत्र मा भूद् भसञ्ज्ञा 'विभाषा

ङिश्यो' रिति वचनसामर्थ्याद्देवाभस्याप्यल्लोपो भविष्यति, तत्रायमप्यर्थो यस्येत्यादौ श्यां प्रतिषेध इति न वक्तव्यं भवति अभत्वादेव सिद्धमिह तर्हि सुपदी ब्राह्मणकुले इति पद्भावो न स्यादभत्वात् इह च सामानि पश्येति भत्वादल्लोपः स्यादिति यथा न्यासमेवास्तु ॥

"यचि भम्" ॥ 'यकारादावित्यादि'। यस्मिन्विधिस्तदादावल्ग्रहणइति तदादिविधिः, गार्ग्य इत्यादौ भत्वाद्यस्येति लोपः। 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानमिति'। द्वे अप्येते उपसंख्याने छन्दोविषये इत्याहुः। 'नभ इवेति'। तृतीयासमर्थाद्वतेर्विधानात् तुल्यार्थोपदर्शनमेतत्, नभसा तुल्यं वर्त्तत इति विग्रहः, पदनिबन्धनकार्यनिवृत्त्यर्थमेव चैषां भसञ्ज्ञा विधीयते न तु भत्वनिमित्तं कार्यं यथा स्यादिति असम्भवात्। 'नभस्वदङ्गिरस्वदिति'। अत्रापदत्वाद्रुत्वाभावो मनुष्वदित्यत्र पदत्वे रुत्वं स्याद् न तु षत्वम्, अपदान्तस्येति वचनात्। 'वृषण्वसुः वृषणश्व इति'। पदत्वे सति पदान्तस्येति प्रतिषेधाण्णत्वं न स्यात् नलोपश्च स्याद्, भत्वेऽप्यल्लोपो न भवति अनङ्गत्वात् ॥

"तसौ मत्वर्थे" ॥ मत्वर्थीयेनाविष्टायाः प्रकृतेस्तकारसकाराभ्यां विशेषणात्तदन्तविधिरित्याह। 'तकारसकारान्तमिति'। 'मत्वर्थे प्रत्यय इति'। अधिकरणे सप्तम्यौ मतोरर्थो मत्वर्थस्तत्र यः प्रत्ययो वर्त्तते तस्मिन्नित्यर्थः। अथ वा समानाधिकरणे मतुशब्देन साहचर्यात्तदर्थो लक्ष्यते मतुरर्थो यस्य तस्मिन्नित्यर्थः। 'उदश्वित्वानिति'। भत्वात् पदत्वाभावे जश्त्वं न भवति 'झय' इति वत्वम्। उदकेन श्वयति वर्द्धते उदश्वित् क्विपि 'उदश्वितोऽन्यतरस्या' मिति निपातनात् संप्रसारणाभावः, संज्ञायामुद्भावः। 'पयस्वीति'। 'अस्मायामेधास्रजो विनिः' भत्वाद्रुत्वाभावः। अर्थग्रहणं किमर्थं न मतौ इत्युच्यते स्वादिष्विति वर्त्तते अधिकरणे सप्तम्यौ मतौ ये स्वादयः कथं पुनः शब्दे नाम शब्दो वर्त्तते ऽसम्भवादर्थे वृत्तिर्विज्ञास्यते, यद्येवं लभ्येत कृतं स्यात् तत्तु न लभ्यं नहि सामानाधिकरण्ये सम्भवति वैयधिकरण्यं शक्यं विज्ञातुं ततश्च मतावेव स्यात् पयस्वान् यशस्वानिति, इह तु न स्यात् पयस्वी यशस्वीति अतोऽर्थग्रहणं कर्त्तव्यं, यद्य-

र्थग्रहणं क्रियते मतुपि न प्राप्नोति तस्यार्थविशेषणत्वात्। सत्यम्। अर्थवि-शेषणं मतुप्, विशेष्याकारोऽपि तत्रास्ति अस्यास्त्यस्मिन्निति च मतुपोऽर्थः स च विन्यादीनामिव मतुपोऽप्यविशिष्टः यथा देवदत्तशालायामासीना ब्राह्मणा आनीयन्तामित्युक्ते विशेषणभूतोऽपि देवदत्तः सति ब्राह्मण्ये आनीयते यत्र उपलक्ष्याकारस्यासम्भवः तत्रैवोपलक्षणस्य कार्यायोगः, तद्यथा चित्रगुरानीयतामिति नहि चित्रगवीनां [1]चित्रा गावः सन्ति॥

"अयस्मयादीनि च्छन्दसि"॥ यदि सञ्ज्ञा विधीयेत आनन्तर्या-द्भसञ्ज्ञाविधानद्वारेणैव निपातनं स्यात् पदसञ्ज्ञा न स्याद्भपदसञ्ज्ञयोः समावेशो न स्यात् तस्मात्साधुत्वमेव युक्तं विधातुमिति मत्वाह। 'अ-यस्मयादीनीत्यादि'। साधुत्वे प्रकारविशेषं दर्शयति। 'भपदसंज्ञाधि-कारइत्यादि'। [2]द्वारमुपायः। 'अयस्मयमिति'। अयसो विकारः, 'द्व्यचश्छन्दसी'ति मयट्॥

"बहुषु बहुवचनम्"॥ 'बहुवचनं विहितमिति'। ततश्च तस्य विधेयविभक्तिनिर्दिष्टस्यापि प्राप्तत्वादनुवाद्यत्वं न तु विधेयत्वमिति भावः। बहुत्वसंख्यानुभूनविभक्तिनिर्दिष्टाप्यप्राप्तत्वाद्विधीयतइत्याह। 'तस्यानेनेति'। इदं चापरमनेन ग्रन्थेन दर्शितं, स्वादिविधिवाक्येन हि भिन्नमेतद् वाक्यं तत्रापि विध्यर्थं न तु नियमार्थमिति, यदाह बहुवचनं वि-हितमिति, बहुत्वसंख्यावाच्यत्वेन विधीयतइति च, यदि पुनरेकवाक्यतया विशिष्टविधिः स्याद् इतरेतराश्रयं प्राप्नोति विहितानां जसादीनां बहु-वचनसञ्ज्ञा सञ्ज्ञया च विधानमिति, किं चाव्ययेभ्यो निःसंख्येभ्यः स्याद-यो न स्युरतो भिन्नवाक्यत्वमेव युक्तं तत्रापि विध्यर्थत्वमेव। इह के चिन्म-न्यन्ते। स्वार्थद्रव्यलिङ्गसंख्याकर्माद्यात्मकः पञ्चकः प्रातिपदिकार्थ इति। आदितस्त्रिक इत्यन्ये। तत्र शब्दप्रवृत्तिनिमित्तं स्वार्थः स चानेकप्रकारः स्वरूपं जातिर्गुणः क्रिया द्रव्यं सम्बन्धश्चेति डित्थो गौः शुक्लः पाचकः यष्टिः पुरुषः दण्डीति, जात्यादिशब्देष्वपि जात्यादिमात्रनिष्ठेषु स्वरूप-मेव प्रवृत्तिनिमित्तम्। अभिधानाभिधेययोरभेदाध्यासात् शब्दरूपानुरक्ता

१ अत्र पाठ्य न्याय्यम्।

२ मुद्रितकाशिकापुस्तके तेन मुखेनेति पाठः। तेन द्वारेणेति पाठानुसारेण त्वयं ग्रन्थः।

ऽर्थोऽभिधीयते यस्य गौरिति नाम अयं गौरिति च प्रतीतिर्भेदो भिद्यते, अत्र हेतुर्वैयधिकरण्यं सामानाधिकरण्यं च तत्र जात्यादिवत् स्वरूपमपि शब्दत एव प्रतिपन्नमप्यर्थस्य विशेषणं मन्यन्ते । उक्तं च

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥
इति । तेन स्वरूपमपि स्वार्थो युज्यते ।
स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदिष्यते ॥

पर्यवसानभूमिरित्यर्थः, तच्चानेकप्रकारं जातिर्गुणः क्रिया द्रव्यं स्वरूपमिति गौः शुक्लः पाको डित्थः 'तूष्णीमि भूव' इति । लिङ्गं स्त्रीत्वादि । संख्या एकत्वादि, कर्म्मादयो वक्ष्यमाणाः कारकविशेषाः, तदिह द्वितीयं दर्शनं वृत्तिकारेणाश्रितम्, अन्वयव्यतिरेकाभ्यां हि शब्दार्थनिश्चयो यस्य शब्दस्यान्वये योऽर्थः प्रतीयते व्यतिरेके च व्यतिरिच्यते स तस्यार्थः । वृक्षः वृक्षौ वृक्षा इत्यादौ च तत्तद्वचनान्वये सासा संख्या प्रतीयते व्यतिरेके च व्यतिरिच्यते सत्यपि प्रकृत्यन्वये, तेन मन्यामहे वचनार्थः संख्येति । तथा वृक्षं वृक्षेण वृक्षायेत्यादौ तत्तद्विकान्वये सस कर्म्मादिः प्रतीयते व्यतिरेके च व्यतिरिच्यते तेन मन्यामहे त्रिकार्थः कर्म्मादिरिति, यद्यपि पयो दधि मध्वित्यादावन्तरेण वचनमन्तरेण च त्रिकं ससोऽर्थः प्रतीयते नैतावता विभक्त्यर्थत्वं हीयते, नहि गर्गा इत्यत्रान्तरेणापि यञमपत्यार्थः प्रतीयतइति गार्ग्य इत्यत्रापि प्रकृतेरेवापत्यमर्थ इति युक्तं वक्तुं, पचति पचतः पचन्तीत्यादौ वचनान्वये संख्यान्वयाद्व्यतिरेके च व्यतिरेकाद् वचनार्थ एव संख्या न धात्वर्थः, अबिभर्भवानित्यादौ यद्यप्यन्तरेणापि तिङं कर्त्ता संख्या च प्रतीयते तथापि नैतावता सर्वत्र प्रकृत्यर्थत्वं युक्तं, नहि भिद्धिदित्यादौ अन्तरेणापि प्रत्ययं कर्त्ता प्रतीयतइति भेत्तेत्यादावपि कर्त्ता प्रकृत्यर्थो भवति, तदेवं त्रिक एव प्रातिपदिकार्थः । धातोश्च क्रियैव वाच्येत्यसत्यस्मिवनिर्द्दिष्टार्थत्वात्स्वार्थे त्रिकएव जसादिबहुवचनं स्याद् न बहुत्वइति बहुत्वसंख्यावाच्यत्वेन विधीयते, सूत्रेष्वन्तरेणापि भावप्रत्ययं भावप्रधानो निर्द्देशः, बहुत्वइत्यर्थः । आश्रयगतस्य बहुत्वस्य गुणे आरोपाद् बहुष्विति बहु-

वचनम् । आरोपस्य प्रयोजनं नानाऽधारस्य संख्यारूपस्य बहुत्वस्य ग्रहणं यथा स्यात् तेनैकाश्रयं वैपुल्यं बहुवचनस्य वाच्यं न भवति बहुरोदन इति । केचित् मन्यन्ते संख्याकर्मादयश्च परस्परमनन्विताः प्रकृत्यर्थेन चान्विता विभक्तिभिरभिधीयन्ते वृक्षान्पश्य, कोऽर्थः बहवो वृक्षाः कर्म्मेति न तु कर्मीभूता वृक्षा बहव इति नापि बहवः कर्म्मेति, एवमेकवचनेपि, 'पशुना यजेतेति' पशुरेकः पशुः करणमित्यर्थो न तु करणीभूतः पशुरेक इति नाप्येकः पशुः करणमिति करणत्वैकत्वयोर्युगपदभिधानादिति तान्निराकरोति । 'कर्म्मादयोऽप्यपर इत्यादि' । 'तद्गीये बहुत्व इति' । कर्मादिगतमेव बहुत्वं बहुवचनस्य वाच्यं न तु केवलप्रातिपदिकार्थगतमित्यर्थः । प्रकृत्यर्थगतमेव बहुत्वं वाच्यं वृक्षशब्दस्यावयवी वाच्यो न त्ववयवा इति द्रव्यपदार्थपक्षे तावद् वृक्षं पश्येति मूलस्कन्धफलपलाशादीनां बहुत्वेपि तेषामनभिधेयत्वाद्बहुवचनाभावः । आकृतिपक्षेपि प्रत्यासत्तेस्तदाधारगतं बहुत्वमाश्रीयते न त्ववयवगतं, भिन्नवाक्यतया विधिरित्युक्तं तत्प्रयोजनमाह । 'यत्र वेत्यादि' । भाष्ये तु पञ्चकपक्षाङ्गीकारेण नियमपक्षः 'स्यापितस्तत्र ह्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थ इति स्वार्थेपि स्युरिति स्वार्थेऽपि जसादिबहुवचनं बहुत्वेपि सिद्धं तत्रापि स्वार्थत्वात्तत्राप्यर्थनियमाद् बहुषु बहुवचनमेव, द्व्येकयोर्द्विवचनैकवचने एवेति । एवं कर्म्मणि द्वितीयेत्यादावपि कर्म्मणि द्वितीयैवेत्येवमादिकोऽर्थनियमो वेदितव्यः । एवं हि प्रत्ययानामनियतत्वादव्ययेभ्यो निःसंख्येभ्यो निष्कारकेभ्यश्च स्वादयः सिध्यन्ति, अथ वा प्रत्ययनियमो बहुष्वेव बहुवचनं द्व्येकयोरेव द्विवचनैकवचने, तुल्यजातीयस्य च नियमेन व्यावृत्तिः, बहुष्वेव बहुवचनं न द्व्येकयोः, एकस्मिन्नेवैकवचनं न संख्यान्तरे, द्वयोरेव द्विवचनं न संख्यान्तर इति, 'कर्मणि द्वितीये' त्यादावप्येवं कर्म्मण्येव द्वितीया न कारकान्तर इति, एवमपि ह्यव्ययेभ्यः स्वादयः सिध्यन्ति ॥

"द्व्येकयोर्द्विवचनैकवचने" ॥ द्विशब्देन साहचर्यादेकशब्दः संख्यावाची । अयमपि भावप्रधानो निर्देशः, अत एव द्व्येकयोरिति

१ दर्शित इति पा० २ ।

द्विवचनं तदाह । 'द्वित्वैकत्वयोरिति' । '¹एतदपीत्यादि' । अनेनास्यापि विध्यर्थत्वं दर्शयति । कथं तर्हि सामान्यविहितयोरिति यावता नियमार्थत्वे एतद् घटते । उच्यते । साधारणपर्यायः सामान्यशब्दः सख्यनिःसंख्यसाधारण्येन विहितयोरित्यर्थः । 'अर्थाभिधानमिति' । अर्थो वाच्योऽभिधीयते कथ्यते येन तदर्थाभिधानं द्व्येकयोरित्यत्र 'संख्याया अल्पीयस्या' इत्येकशब्दस्य पूर्वनिपातो ऽस्मादेव ²निपातनाच्च भवति । संख्येयवचनेष्वेवार्थेद्वाःकमल्पीयस्त्वमित्यन्ये ॥

"कारके" ॥ अधिकारोनेकप्रकारः । संज्ञा विशेषणं स्थानी प्रकृतिर्निमित्तमादेश इति, 'प्रत्ययः' 'शेषे' पूर्वपरयोः 'ङ्याप् प्रातिपदिकात्' 'धातोः' रार्द्धधातुके मूर्द्धन्य इति, तदिह विधेयानिर्देशात् स्वरितत्वाच्चाधिकारत्वे स्थिते प्रकारमाह । 'कारकइति विशेषणं' 'मधिक्रियत इति' । न तावत्सञ्ज्ञात्वेनाधिकारः सञ्ज्ञाया भाव्यमानत्वात्सप्तम्यनुपपत्तेः । अथ सञ्ज्ञानुरूपः प्रथमानिर्देश एव कस्माच्च कृतः, युक्तं चैतत् कारकसंशब्दनेषु वक्ष्यमाणानामपादानादीनामेव षण्णां ग्रहणस्येष्टत्वाद् अन्यथा नटस्य शृणोतीति कारकशेषस्यापि प्रसङ्गात् । उच्यते । सञ्ज्ञापक्षे ऽपाये यद् ध्रुवं तत् कारकसञ्ज्ञं भवति अपादानसञ्ज्ञं चेत्ययमर्थो भवति, एवमन्यत्रापि, ततश्च कारकापादानसञ्ज्ञयोर्युगपद्विधानात् परस्परं निमित्तनिमित्तिभावाभावादकारकस्यापि व्यापारशून्यस्यापादानसञ्ज्ञा प्राप्नोति, विशेषणाधिकारे तु कारकेषु मध्ये यदपाये ध्रुवं कारकमित्यर्थो लभ्यते निर्द्धारणस्य सजातीयविषयत्वादिति व्यापारशून्यस्य सा न प्राप्नोति, अतो विशेषणानुरूप एव निर्देशः कृतो न तु सञ्ज्ञानुरूपः, कारकसञ्ज्ञा त्वन्वर्थत्वाद् व्यापारशून्यस्य न भवति, किं च कारकसंज्ञाया अपादानादिसञ्ज्ञाभिः समावेशो न प्राप्नोति ततश्च स्तम्बेरम इत्यत्र सप्तम्यां श्रूयमाणायां गतिकारकोपपदादिति स्वरो न स्यात्, कारकइति निर्धारणे सप्तमी सामान्यापेक्षं चैकवचनं कारकशब्दोऽयमस्ति ण्वुलन्तः, करोतीति कारकमिति, अस्त्यव्युत्पन्नः सञ्ज्ञाशब्दो निमित्तपर्यायः, तत्र पूर्वस्य ग्रहणे ऽपादानादिषु कारकशब्दो न प्रवर्त्तेत यथा कर्तृशब्द,स्ते-

१ एतदपीत्यादिनाऽस्यापीति पा० २ ।
२ वचनादिति पा० २ ।

षामस्वतन्त्रत्वात्, स्वातन्त्र्ये वा पक्षे कर्तृसंज्ञा प्रसज्येत, नैष दोषः। सर्वमेव खलु कारकं यथायथमवान्तरव्यापारं निर्वर्तयत् प्रधानक्रियायामुपयुज्यते सा च सकलकारकजन्या फलभूता विक्लित्त्यादिरूपा क्रिया प्रधानक्रिया, यद्वा सामान्यभूता क्रिया प्रधानक्रिया फलजनना नाम सर्वाणि हि कारकाणि फलजननाय प्रवर्तन्तेऽतो यद्यत्फलजननारूपं तत्सर्वेष्वेव कारकेष्वविशिष्टं, किं चित्खलु कारकं केन चिदेव रूपेण फलं जनयतीति फलजनना सर्वेषामभिन्नरूपा ऽवान्तरभेदविवक्षायां तु करणादिरूपेण्भेदः। न च वैशेषिकाणामिवास्माकमेका क्रिया नानेकत्र समवेता धात्वर्थो हि क्रिया न परिस्पन्द एव धातुना च सकलकारकानुयायिओदनादिफलावच्छेदेन एकीकृतो व्यापारो ऽभिधीयते तस्यामेकस्यां प्रधानक्रियायामुपयोगो यथायथमवान्तरव्यापारमुखेन, तद्यथा ऽपादानस्यावधिभावोपगमनं व्यापारः, सम्प्रदानस्य तु प्रेरणानुमत्यऽनिराकरणादिः, करणस्य काष्ठादेर्ज्वलनादिः, अधिकरणस्य सम्भवनधारणादिः, कर्म्मणो निर्वृत्त्यादिः, कर्तुः प्रसिद्ध एव, प्रयोजकस्य प्रेषणादिः, न चैवं सति करणादीनामपि कर्तृसंज्ञाप्रसङ्गः परतन्त्रत्वात् प्रधानेन हि कर्त्रा समवाये करणादीनि परतन्त्राणि व्यवाये स्वतन्त्राणि, तद्यथा ऽमात्यानां राज्ञा सह समवाये पारतन्त्र्यं व्यवाये स्वातन्त्र्यं, यद्येवं कारकव्यपदेशोपि करणाद्यवस्थायां न स्यात् कथं कारकमिति अधिकारसामर्थ्यात् कारकशब्दोपनीतस्वातन्त्र्यमवस्थान्तरगतं विज्ञास्यते ऽवस्थान्तरे यत् स्वतन्त्रन्तत्साधकतमं करणमिति कर्तुरेव त्वेकस्य सांप्रतिकं स्वातन्त्र्यं तच्च कर्तृसंज्ञाङ्गतया चोदितम्। यदि तर्हि व्युत्पत्तिपक्षे ऽव्यवस्थान्तरगतमेव स्वातन्त्र्यमेवं तर्हि करणाद्यवस्थायां निमित्तभाव एवाभ्युपगतो भवति, यद्येवं किं दोषप्रतिविधानव्यसनेन निमित्तपर्यायस्यैव ग्रहणमस्त्विति मन्यमान आह। 'कारकशब्दश्चेति'। 'कस्य हेतुरिति'। द्रव्यगुणविषयोपि हेतुः कारकं प्राप्तमित्यभिप्रायः, कारकशब्दोयं क्रियाहेतावेव प्रसिद्ध इत्याह। 'क्रियाया इति'। अनाश्रितव्यापारं निमित्तं हेतुः, आश्रितव्यापारं कारकम्, उक्तं च

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् ।

इति ।

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ॥

इति च । कथं तर्हि पूर्वमुक्तमनर्थान्तरमिति, नहि सामान्यविशेषवचनानामनर्थान्तरवाचित्वं, सत्यम् । सामान्यशब्दयोरपि अर्थप्रकरणादिना विशेषवृत्तिमभिप्रेत्य तु तथोक्तम् । 'वृक्षस्य पर्णं पततीति' । पर्णविशेषणत्वेनात्र वृक्षो विवक्षितो न त्वपायस्य निमित्तत्वेनेत्यपादानसंज्ञा न भवति, न चापायस्याविवक्षितत्वात् सति ह्यवधौ गतिरपायो भवति नान्यथा, न चात्र वृक्षो ऽवधित्वेन विवक्षितः । तथाहि । वृक्षमजहत्यपि पर्णे वृक्षस्य पर्णं पततीति भवति प्रयोगो यदा वृक्षः छिन्नः पततीति, सत्यम् । अत एवास्मिन्ननुक्तः सचाह । 'माणवकस्य पितरमिति' । अत्र पितुः सम्बन्धित्वेन माणवको विवक्षितो न तु प्रश्नक्रियां प्रति निमित्तत्वेनेति कर्मसंज्ञा न भवति । असति तु कारकाधिकारे तस्यापि स्यात् शेषलक्षणा तु षष्ठी अकथिते दुह्यादिपरिगणनाद्राज्ञः पुरुष इत्यादौ सावकाशा, यदि तर्हि विशेषणमिदं ध्रुवादीनां न संज्ञा, 'कारकाद्दत्तश्रुतयोरेवाशिषी'-त्यादौ यत्र कारकशब्दः संशब्द्यते तत्रापादानादीनां वक्ष्यमाणानां षण्णामेव ग्रहणमिष्यते तन्न सिद्ध्यति संज्ञापक्षे तु न दोषः, संज्ञा ह्यावर्तमाना संज्ञिनं प्रत्याययति । स्यादेतत् । प्रदेशेष्वपि क्रियानिमित्तपर्यायस्य कारकशब्दस्योपादानं तच्च निमित्तमपादानाद्येवेति, तदसत् । नटस्य शृणोतीत्यादौ कारकशेषस्य सम्भवादित्यत आह । 'कारकसंशब्दनेषु चेति' । कारकग्रहणं प्रदेशेषु स्वर्यते स्वरितेनाधिकारावगतिर्भवतीति भावः ॥

"ध्रुवमपाये ऽपादानम्" ॥ 'ध्रुवमिति' । ध्रु गतिस्थैर्ययोरित्यस्मात्कुटादेः पचाद्यचि रूपं, ये तु ध्रुव गतिस्थैर्ययोरिति पठन्ति तेषामिगुपधलक्षणः कः प्रत्ययः । अपायो विश्लेषो विभागस्तद्धेतुभूतश्च गति-

१ अदेरर्थित्यपि पचाद्यच्रूपमित्यधिकम् २ । ३ । पुस्तकयोः ।

विशेषो ऽवधिसापेक्षस्तत्र विभागस्य द्विष्ठत्वात् न केवलमपयन्नेव तेन युक्तः किं तर्हि यतो ऽपैति सोपि युक्त एवेत्याह । 'ध्रुवं यदपाययुक्त-मिति'[1] । कथं पुनः सप्तमीनिर्द्देशेप्यपाययुक्तमिति प्रतिपत्तुमर्हीत्यत्राह । 'अपाये साध्यइति' । साध्यत्वेन विषयत्वात् सामर्थ्यलभ्यो योग इति भावः । ध्रुवमित्येकरूपमुच्यते, ध्रुवस्य शीलं ध्रुवमस्य रूपमिति, इह तदापायेन विशेष्यते ऽपाये यद् ध्रुवमिति न तु सार्वत्रिकं, तच्चापा-ये ध्रुवमुच्यते, यदपायेनानाविश्यते उपयुज्यते चापाये तच्चार्थादवधिभूत-मित्याह । 'यदवधिभूतमिति' । एवं च सार्थाद् हीनो रथात्पतितः धावतः पतित इत्यादौ सत्यपि क्रियान्तरावेशाच्चलत्वे तत्तद्धावनादिक्रिया-नावेशात्तन्निमित्तमपायं प्रत्यौदासीन्यादस्त्येव ध्रुवत्वमिति भवत्येव संज्ञा । उक्तं च ।

अपाये यदुदासीनं चलं वा यदि वा चलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥

इति । पततः पतित इत्यत्रापि परगतपातापेक्षया ध्रौव्यमेव । तथाहि ।

पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ ।
तस्य त्वश्वस्य पतने कुड्यादिर्ध्रुव उच्यते[2] ॥
इह तु परस्परस्मान्मेषावपसर्प्यत इति
मेषान्तरक्रियापेक्षमवधित्वं पृथक्पृथग् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथक् ॥
गतिर्विना त्ववधिना नापाय इति कथ्यते ॥

'जुगुप्सेति' । प्रश्लेषपूर्वको विश्लेषो ऽपायः स चात्र नास्ति बुद्धिपरिकल्पितस्तु गौणः, न च मुख्ये संभवति गौणस्य ग्रहणं युक्तम् । अत एव भीत्रार्थानामित्यादेरारम्भ इति [3]वाक्यकारस्याभिप्रायः । अत्र

१ अपाययुक्तइति पा० २ ।
२ इष्यते इति पा० २ ।
३ वार्त्तिककारस्येति पा० २ ।

च कारकशेषत्वात् षष्ठी प्राप्नोति नटस्य शृणोतीति यथा, प्रत्याख्यानं तु साधकतममिति तमब्ग्रहणं लिङ्गं, कारकप्रकरणे यथासम्भवमेव साधकत्वमिति, तदिहाधर्माज्जुगुप्सतइत्यादौ जुगुप्सादिपूर्विकायां निवृत्तौ जुगुप्सादीनां वृत्तिरिति स्थिते य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति दुःखहेतुरधर्मो नैनं करिष्यामीति स बुद्ध्या तं प्राप्नोति प्राप्य च ततो निवर्त्तते। धर्मात्प्रमाद्यति धर्मान्मुह्यतीति, य एष नास्तिकः पुरुषः स पश्यति नानेन धर्म्मेण किं चित्साध्यते नैनं करिष्यामीति स बुद्ध्या तं प्राप्नोति प्राप्य च ततो निवर्त्तते तत्र ध्रुवमपायइत्येव सिद्धमिति। तच्चैतत्

निर्द्दिष्टविषयं किं चिदुपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते॥

यत्र धातुनापायलक्षणः संज्ञाविषयो निर्द्दिश्यते, यथा ग्रामादागच्छतीति तन्निर्दिष्टविषयं, यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह यथा बलाहकाद् विद्योतते विद्युद् इति अत्र हि निःसरणाङ्गविद्योतने विद्युतिर्वर्त्तते, बलाहकान्निःसृत्य विद्योततइत्येव, कुसूलात्पचतीत्यत्रादानाङ्गे पाके पचिर्वर्त्तते कुसूलादादाय पचतीति, तदुपात्तविषय,मपेक्षितक्रियं तु यत्र क्रिया न श्रूयते प्रमाणान्तरेण तु प्रतीयते यथाऽऽगच्छन्तं पुरुषं प्रत्यक्षेण पश्यन्नाह कुतो भवानिति सोपि तदेव प्रत्यक्षसिद्धमागमनमुपजीवन्नाह पाटलिपुत्रादिति। ध्रुवग्रहणं किम्। ग्रामादागच्छति शकटेन। अत्र शकटस्य माभूत्। अथ क्रियमाणेपि ध्रुवग्रहणइह कस्मान्न भवति धनुषा विध्यतीति, अत्र हि शराणामपायं प्रति अवधिभावेनैव धनुषः साधकतमत्वम्। सत्य,मुभयप्रसङ्गे परत्वात्करणसंज्ञा भविष्यति। नन्वेवमक्रियमाणेपि शकटस्य नैव भविष्यति, एवं संज्ञान्तरविषये सर्वत्र, वृक्षस्य पत्त्रं[1] पततीत्यत्र त्वपायस्याविवक्षितत्वादकारकत्वाच्च न भविष्यति सञ्ज्ञिनिर्द्देशार्थं तु नहि कारकइति सप्तम्यन्तेन शक्यः संज्ञी निर्देष्टुं, सिद्धं तु निर्द्धार्यमाणस्य संज्ञित्वादपायविषयेषु कारकेषु मध्ये यत्कारकं संज्ञान्तरस्याविषयस्तदपादानमिति तदेवं ध्रुवग्रहणं चिन्त्यप्रयोजनम्॥

१ पर्णमिति पा॰ २।

"भीत्रार्थानां भयहेतुः" ॥ भयं भीः, त्राणं त्राः, सम्पदादित्वाद्भावे क्विप्, भीत्रा अर्थौ येषां ते भीत्रार्थाः, षष्ठीप्रयोगापेक्षया कारकापेक्षया चेत्याह । 'बिभेत्यर्थानामित्यादि' । अत्र बिभेतित्रायतिशब्दौ तदर्थयोर्वर्तेते तदर्थो ऽर्थो येषामित्यर्थः । त्राणं बाधकेभ्यो रक्षणं, बाधकाश्च भयहेतव इति त्रार्थानामपि भयहेतुः कारकं भवत्येव । 'चोरेभ्य इति' । चोरयतेः पचाद्यचि चोरः, क्व चित्चौरेभ्य इति पाठः, तत्र स्वार्थिकः प्रज्ञाद्यण्, छत्रादिषु वा चुराशब्दः पठ्यते स चाऽप्रत्ययादित्यस्य 'ण्यासश्रन्थो युजि' ति युचि बाधके प्राप्ते तस्मादेव निपातनादकारप्रत्यये णिलुकि च व्युत्पाद्यते, ततश्चुरा ऽस्येयं शीलमस्येति णे कृते स एवार्थो भवति । 'बिभेतीति' । ञिभी भये जुहोत्यादिः, 'उद्विजत इति' । ओविजी भयचलनयोः तौदादिकानुदात्तेत् । 'त्रायत इति' । अत्र तस्येभ्यो [1]वृकादिभ्यो भयं त्रायत् । ननु च ध्रुवमित्यनुवर्तिष्यते न चात्रायमवधित्वेन विवक्षितम्परत्वाच्चाधिकरणसञ्ज्ञेव भविष्यति, सत्यं, पूर्वस्यैवायं प्रपञ्चः, कथं, भयादिपूर्विकायां निवृत्तौ भ्यादयो वर्तन्ते बिभेतीति कोर्थः, भीत्या निवर्तत इत्यर्थः, त्रायत इति कोर्थः, चोरकृतादुपघातेस्त्राणेन निवर्तयतीत्यर्थः । कथं तर्हि चोरमध्यवर्तिनि चोरेभ्यो बिभेतीति प्रयोगो नह्यत्र निवृत्तिरस्ति, अत्रापि भीत्या निवर्तितुमिच्छतीत्यर्थो द्रष्टव्यः । तदेवं बुद्धिपरिकल्पितो ऽपायोस्तीत्युपात्तविषयमिदमपादानमिति, कृत्स्न एव प्रयोगप्रपञ्चे किमवयवपर्यनुयोगेन ॥

"पराजेरसोढः" ॥ अत्र धातुपाठगतस्य जीत्येतावन्मात्रस्यानुकरणं ततः परापूर्वो जिः पराजिरित्युत्तरपदलोपी समासो द्रष्टव्यः । ननु प्रकृतिवदनुकरणं भवतीत्यधातुरिति प्रातिपदिकसञ्ज्ञायाः प्रतिषेधादसुबन्तत्वात्समासो न प्राप्नोति, नाप्रतिषेधात्, नायं प्रसज्यप्रतिषेधः धातोर्नेति किं तर्हि पर्युदासो ऽयं यदन्यद् धातोरिति धातोर्न विधिर्न प्रतिषेधः । [2]एवमपीयङादेशः प्राप्नोति परत्वाद् घेर्ङितीति गुणो भविष्यतीति समुदायस्य

१ वृकादिभ्य इति पा० ३ ।
२ एवमपीति ३ पुस्तके नास्ति ।

वा समुदायोनुकरणं कृत्स्नस्य समुदायस्य प्रयोगस्यास्य, यद्येवमध्ययनात्पराजयते ऽत्र न प्राप्नोति नह्यत्र पराजीति रूपमस्ति किं तर्हि स्याद् यत्र पराजीतिरूपमस्ति अध्ययनात्पराजित इति उदाहरणे पराजिर्न्यूनीभावे वर्त्तते ऽध्येतुं कुर्वति ग्लायतीत्यर्थः । अकर्म्मकस्यायमर्थोऽत्र पञ्चम्यां प्राप्त्यां वचनं प्रत्युदाहरणे त्वभिभवे वर्त्तते । विपराभ्यां जेरित्यत्रार्थद्वयेपि वर्त्तमानस्य ग्रहणम् । अयमपि प्रपञ्चो न्यूनीभावपूर्विकायां निवृत्तौ वृत्तेः सिद्धम् । अध्ययनात्पराजयते [1]कोर्थः न्यूनीभावेन ग्लान्या ततो निवर्त्तत इत्यर्थः । तेन प्रत्युदाहरणे परत्वात्कर्म्मसंज्ञा भविष्यतीति न चोदनीयम् ॥

"वारणार्थानामीप्सितः" ॥ [2]ईप्सितशब्दोयमस्त्यभिप्रेतपर्यायस्तस्य ग्रहणे यवानामात्मीयत्वे गवां च परकीयत्वएव स्याद् न विपर्यये न ह्यस्यैतदभिप्रेतं यदुतात्मीया गावः परकीयास्त्ववान्मा घसन्निति, मा भूवन्यवा वारयितुमीप्सिता वार्यमाणानां तु गवामीप्सीताः, न चात्र विशेषः श्रुतः कर्तुरीप्सित इति, इह तर्हि न स्याद् अन्धेमाणवकं वारयति कूपादन्धमिति नह्यग्निकूपौ वारयितुर्वार्यमाणस्य वाभिप्रेतौ । क्रियाशब्दस्य तु ग्रहणे वार्यमाणस्यान्धादेर्गमनादिक्रियया कूपादेराप्यमानत्वात् सिध्यति, अन्धस्यापश्यन्नपि गन्तव्यं जिगमिषति, अन्यथा न किं चित्तस्य प्रवृत्तिः स्यात् 'यवेभ्यो गां वारयतीति' । वृञ् आवरणे चुरादिः । अथात्र गवामपादानसंज्ञा कस्मान्न भवति ईप्सिततमोपीप्सितो भवत्येव यथा शुक्लतमोपि शुक्लः परत्वात्कर्म्मसंज्ञा भविष्यति कर्म्मसंज्ञाया अवकाशः वारणार्थेभ्योन्यत्र ऽपादानसंज्ञायास्तु प्रकर्षरहितमीप्सितम् ईप्सिततमस्य तूभयप्रसङ्गे परत्वात्कर्म्मसंज्ञा । अयमपि प्रपञ्चः, अस्ति ह्यत्रापि बुद्धिव्यवस्थितोऽपायः कथं पश्यत्ययं यदि गावः क्षेत्रे गच्छेयुर्ध्रुवं सस्यविनाशः सस्यविनाशे ऽधर्म्मश्च राजभयं च स बुध्या संप्राप्य निवर्तयतीत्यतो न चोदनीयं प्रत्युदाहरणे क्षेत्रस्याधिकरणसंज्ञा भविष्यतीति ॥

---

१ इतिकोऽर्थ इति पा॰ २ ।

२ ईप्सितशब्दोऽयमस्त्यभिप्रेतपर्यायः, अस्ति च क्रियाशब्द आप्तुमिष्ट ईप्सित इति, तत्र पूर्वस्य ग्रहणे इति पा॰ २ ।

"अन्तर्द्धौ येनादर्शनमिच्छति" ॥ अन्तर्धाविति नेयं निमित्तात्कर्म्मयोगइति सप्तमी, यथा हि वेतनेन धान्यं लुनातीत्यत्र वेतनस्य धान्येन योगोस्ति तथेहाप्यदर्शनमिच्छतीतीच्छाकर्मणाऽदर्शनेनान्तर्द्धेर्योगो नास्ति। अथादर्शनस्य यत्कर्म आत्माख्यमात्मनोऽदर्शनमिच्छतीति तेनान्तर्द्धेर्योगोस्ति यस्यैवादर्शनं तस्यैवान्तर्द्धानमित्युच्येत, एवमपि निमित्तात्कर्मयोगइति किं निमित्तं गृह्यते, कारणं प्रयोजनं वा. कारणं चेज्ज्ञाप्येन बहुः, अत्रापि प्राप्नोति य एव बहुते तत्रैव ज्ञाप्य[1]मिति तस्मात् प्रयोजनस्य तत्र ग्रहणं, यथा चर्मणि द्वीपिनं हन्तीति चर्म द्वीपिहननस्य प्रयोजनम्, इह त्वन्तर्द्धानमदर्शनस्य कारणम्, अन्तर्हितः खल्वसौ न दृश्यते। तस्माद्विषयसप्तम्येषा सत्सप्तमी वा । येनेति कर्त्तरि तृतीया। ननु च दर्शनेन योगा 'त्कर्तृकर्मणोः कृती' ति षष्ठ्या भाव्यम्। उभयप्राप्तौ कर्मण्येवेति नियमात् तृतीया भविष्यति, कर्म त्वत्रादर्शनस्यात्मा, नन्वात्मने इति न श्रूयते, मा श्रावि येनादर्शनमिच्छतीत्युक्ते कस्येत्यपेक्षायामात्मन इति गम्यते। 'अन्तर्द्धिनिमित्तमिति'। अन्तर्धिना कारणेनेत्यर्थः, निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति प्रथमा । अथ वा बहुव्रीहिरदर्शनस्य समानाधिकरणं विशेषणं, सूत्रेऽनुपात्तोपि तच्छब्दो यत्तदोर्नित्यसम्बन्धाल्लभ्यतएवेत्याह । 'तत्कारकमिति' । 'अन्तर्द्धत्तइति' । तिरोभवतीत्यर्थः । 'निलीयतइति' । लीङ् श्लेषणे दैवादिकः । 'चौरात्र दिदृक्षतइति' । आत्मानं ते मा द्राक्षुरित्येवमर्थम् । ननु परत्वात्कर्म्मसंज्ञा भविष्यति, सत्यम्, अयमपि प्रपञ्चः, कथं, पश्यत्येवं यद्युपाध्यायः पश्येद् ध्रुवं मे प्रेषणमुपालम्भो वा भवेदिति स बुद्ध्या संप्राप्य निवर्तते । येनेत्यस्मिन्नसत्यदर्शनमिच्छतः शिष्यस्यैव स्यात्, ध्रुवमित्यनुवर्तिष्यते, एवं तर्हि सूत्रस्यावाचकत्वं मा भूत्, असति हि तस्मिन्नन्तर्द्धौ ध्रुवमपादानसंज्ञ भवति तच्चेद् ध्रुवमदर्शनमिच्छतीत्यर्थः स्यात्, न च ध्रुवमिच्छति यच्चेच्छति न तद् ध्रुवमित्यवाचकं स्यात् ॥

१ भवतीत्यधिकं ग पुस्तके ।

"आख्यातोपयोगे" ॥ 'नियमपूर्वकं विद्यायहणमिति'। तत्रैवोपयोगशब्दस्य रूढत्वात्। यथा तेषां मन्त्राणामुपयोगे द्वादशाहमधः शय्येति नियमो भिक्षाचरणादिः। 'नटस्य शृणोतीति' किं पुनर्नटः कारकमुताहो न, यदि कारकं कर्म्म संज्ञा प्राप्नोति 'अकथितं चे' ति, अथाकारकमुपयोगग्रहणमनर्थकं स्यात्। अस्तु कारकं नह्युपाध्यायाञ्चटस्य व्यापारे कश्चिदन्यो विशेषो ऽन्यद्वतो नियमात्। दुह्यादिपरिगणनात्तु कर्मसञ्ज्ञा न भवति, क्वचित्तु नटस्य गाथां शृणोति ग्रन्थिकस्य कथां शृणोतीति पाठः, तत्रापि नटादिनिमित्तं गाथादेः श्रवणं करोतीत्यर्थो न तु गाथादिविशेषणं नटादिः, अकारकत्वप्रसङ्गात्। ग्रन्थिकः कथाया वाचयिता। अयमपि प्रपञ्चः, कथमुपाध्यायाद्विस्सरन्तं शब्दं गृह्णातीति स्फुट एवात्रापायः, इदं तर्हि प्रयोजनमुपयोगइति वक्ष्यामि नटस्य मा भूदिति। ननु नटस्य सत्यप्यवधित्वे शेषरूपेण विवक्षणात् षष्ठी भविष्यति यथा न माषाणामश्नीयादिति, वस्तुतः कर्म्मत्वं माषाणां, सत्यं, स एव विवक्षानियमः सूत्रकारेण प्रदर्श्यते उपयोगे ऽवधित्वं विवक्षितम[१]न्यत्र शेषत्वमिति ॥

"जनिकर्तुः प्रकृतिः" ॥ जनेः कर्ता जनिकर्त्तेति कर्म्मणि षष्ठ्याः समासः, अयमेव च निर्देशो ज्ञापयति 'कर्तरि चे' ति प्रतिषेधोनित्य इति, कः पुनरसावित्यत आह। 'जन्यर्थस्येति'। एतदुक्तं भवति। जनिशब्दोयमिञ्जादिभ्य इति जनेर्भावइञमुत्पाद्य व्युत्पादितः, 'जनिवध्योश्चे' ति वृद्धि[२]प्रतिषेधः। जन्यार्थवाची, न 'इक्श्तिपौ धातुनिर्देश' इति इक्प्रत्ययान्तः। गमहनेत्युपधाया लोपप्रसङ्गात्। नाप्यागन्तुकेनेकारेण धातोर्निर्देशः, शब्दात्मकस्य धातोः कर्त्रा सम्बन्धायोगात्। अथाप्यर्थद्वारको योगः स्याद् एवमपि धातुनिर्देशे तस्यैव प्रयोगे स्याद् न पर्यायस्य, अङ्गादङ्गात्सम्भवो ऽस्तीति। अर्थग्रहणे त्वत्रापि भवतीति। प्रकृतिरित्यस्य विवरणं 'कारणमिति'। उपादानकारणमित्यर्थः। अन्ये तु ध्रुवग्रहणानुवृत्तेरेव प्रकृतिपरिग्रहे सिद्धे प्रकृतिग्रहणं कारणमात्रपरिग्रहार्थं

१ न तु इति पा-२।
२ अभाव इति पा० ३।

वर्णयन्ति, अत एव वृत्तावुक्तं कारणमिति न पुनरुपादानकारणमिति, तेन च पुत्रात्प्रमोदो जायतइत्यादावपि भवतीति । किं पुनः सत् जायते उतासत्, न तावत्सत् । जन्म वैयर्थ्यात् । यदि जन्मनः प्रागेव सत् किं जन्मना, अथैवमपि जन्म जायस्व जायस्वेत्येव घटो जायते । नाप्यसत्, असतः कर्तृत्वायोगात्, शशविषाणादेरपि जन्मप्रसङ्गाच्च,उक्तमत्र ॥

पूर्वावस्थामविजहत्संस्पृशन् धर्म्ममुत्तरम् ।
संमूर्छित इवार्थात्मा जायमानोभिधीयते ॥

इति, एतच्चान्महतइत्यत्रोपपादयिष्यामः । किञ्चास्माकमनेन दुस्तर्केण, अस्ति तावच्छृङ्गाच्छरो जायतइति प्रयोगः स उपपादनीय इत्येतावत् । अयमपि प्रपञ्चः । लोके हि यद्यस्माज्जायते तत्ततो निर्गच्छतीत्युच्यते, लोकप्रसिद्ध्यनुसारेण शब्दप्रयोगः, अर्थतत्त्वं तु तथा भवत्वन्यथा वा ॥

"भुवः प्रभवः" ॥ भवनं भूः । सम्पदादित्वात्क्विप् । अत्रापि प्रशब्दो द्रष्टव्यः, नहि केवलस्य भवत्यर्थस्य प्रभवनेन योगः किं तर्हि सोपसर्गस्य भुवः, 'कर्तेति' । भवत्यर्थस्य कर्तेत्यर्थः । भुवो वा धातोः, कथं पुनर्धातोर्नाम कर्ता स्याद् धातुर्वै शब्दः शब्दे ऽसम्भवेऽर्थे कार्यं विज्ञास्यते, तसु उपक्षये भावे क्तः, वि गतौ तस्ता वितस्तेति, अशोध्येत्यर्थः । 'प्रथमत उपलभ्यतइति' । उपलभतिः कर्म्मव्यापारे प्रभवतिः प्रवर्ततइत्यर्थः । प्रकाशतइतियावत् । एतेन जन्यर्थाभावात्पूर्वेणासिद्धं दर्शयति । अनेकार्थत्वाद्धातूनामस्मिन्नर्थे वृत्तिः, अयमपि प्रपञ्चः । कथं, भवनपूर्व्वके निःसरणे प्रभवतिर्वर्त्तते ॥

"कर्म्मणायमभिप्रेति स सम्प्रदानम्" ॥ 'कर्म्मणा करणभूतेनेति' । कथं पुनरेकमेव वस्तु युगपत्कर्म्म च करणं च भवति क्रियाभेदाद्दानक्रियायां कर्म्माभिप्रायेण क्रियायां करणं, दीयमानया हि गवा शिष्य उपाध्यायमभिप्रेति संबध्नाति ईप्सति वा, अभिप्रपूर्वो हीण् ईप्सतिना समानार्थः । अभिप्रेतमित्युक्ते ईप्सितमिति गम्यते, उक्तं च

१ प्रशब्दविशिष्टस्येति पा· २ ।

अनिराकरणात्कर्त्तुस्त्यागाङ्गं कर्म्मणेप्सितम् ।
प्रेरणानुमितिभ्यां वा लभते सम्प्रदानताम् ॥

इति । त्यागो दानं त्यागस्याङ्गं शेषभूतं कर्म्मणा गवादिनेप्सितमाप्तुमिष्टं संप्रदानतां लभते, अनिराकरणाद्वा, एवमस्त्विति अनुमानाद्वा, देवेभ्यः सुमनसो ददाति याचकाय भिक्षां ददाति उपाध्यायाय गां ददाति न तु निराकुर्वन् संप्रदानं भवतीति श्लोकार्थः । अत्र केचिदाहुः । 'कुगतिप्रादय' इत्यत्र वार्तिकम् 'उदात्तवता तिङा गतेः समासवचनमिति' यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । योयः शम्बरमन्वविन्दत् । यस्मावचते किं विजवन्ते । यो वै प्रववपतामध्येनं प्रतिपद्यते इत्याद्युदाहरणानि, अत्र सर्वत्र 'यद्वृत्तान्नित्य' मिति निपातप्रतिषेधात् तिङन्तमुदात्तवत्, ततश्चायमभिप्रेतीत्यत्रापि समासे सति प्रातिपदिकत्वात् विभक्त्युत्पत्तिः स्यादिति, नेति वयं तस्य छन्दोविषयत्वात्, यदि कर्म्मणा यमभिप्रैति स संप्रदानम् अजां नयति ग्राममिति अजेनयति क्रिया कर्म्मभिसंबध्यमानस्य ग्रामस्य संप्रदानतां प्राप्नोति, न प्राप्नोति, किं कारणं कर्मणेति करणे तृतीयेत्युक्तं, न च यथा शिष्यस्योपाध्यायसम्बन्धे गोः करणमेवमजा ग्रामसम्बन्धे, ईप्सतिना समानार्थे तु सुतरामप्राप्तिः । तथाहि । यमभिप्रैतीत्युक्ते यमिति निर्दिष्टस्य शेषित्वं कर्मणेति निर्दिष्टस्य गवादेः करणस्य शेषत्वं च प्रतीयते । यथा कर्त्रभिप्राये क्रियाफले इति कर्तुः शेषित्वं क्रियाफलस्य शेषत्वं, न चात्र शेषशेषिभावः प्रतीयते । किं च नीवह्योर्हरतेश्चापीति द्विकर्म्मकेषु नयतिः परिगण्यते ऽतोपि ग्रामस्य न भविष्यति । अथ किमर्थं महती संज्ञा क्रियतइत्याह । 'अन्वर्थसंज्ञाविज्ञानादिति' । सम्यक् प्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थत्वात्सञ्ज्ञाया ददातिकर्म्मणा यमभिप्रैति स संप्रदान[1]मित्यर्थः । एवमपि रजकस्य वस्त्रं ददाति घ्नतः पृष्ठं ददातीत्यत्र कस्मान्न भवति अदानत्वात्, किं पुनर्दानं, दानं किं चिदुद्दिश्यापुनर्ग्रहणाय स्वद्रव्यत्यागः, यथा वृक्षाय जलं

१ संप्रदानमिति विज्ञायते इति ३ पुस्तके पाठः ।

ददाति, देवेभ्यः सुमनसः, याचकाय भिक्षा, मुपाध्यायाय गां, खण्डिकोपाध्यायस्तस्मै चपेटिकां ददाति, न शूद्राय मतिं दद्यादिति, करतलप्रहारश्चपेटिका, रजके तु पुनर्ग्रहणाद्दानाभावः, उपमानात्तु ददातिप्रयोगः, तत्र कारकशेषत्वाच्चटस्य शृणोतीतिवत् षष्ठी। कर्म्मणेति किम्। यावता उपाध्यायाय गां ददातीत्यत्र गोरुपाध्यायस्य चाभिप्रेयमाणत्वं यतो गोर्दानक्रियया करणभूतयाभिप्रेयते गवा तूपाध्यायः, तत्र परत्वाद्गोः कर्म्मसंज्ञेति पारिशेष्याद् उपाध्यायस्यैव संप्रदानसंज्ञा भविष्यति। नैतदस्ति। सत्यप्युभयोरभिप्रेयमाणत्वे ऽन्तरङ्गत्वात्कर्म्मण एव गवादेः स्यात्, कर्मसंज्ञा तु ददातिकर्म्मणोन्यत्र सावकाशा, कारकप्रकरणे च प्रकर्षो नाश्रीयते न त्वन्तरङ्गबहिरङ्गभावोपि, यंसग्रहणे ऽक्रियमाणे ऽभिप्रेतुरेव संप्रदानसञ्ज्ञा स्याच्छ्रुतपदार्थसम्बन्धे सति तेनैव निराकाङ्क्षत्वादध्याहारानुपपत्तेः। सत्यपि वाध्याहारे यः स इत्येवाध्याहारात् तत उपाध्यायाय शिष्येण गौर्दीयतइत्यत्रार्थे शिष्यायोपाध्यायस्य गौर्दीयतइति स्यात्, कर्म्मसंज्ञायां हि कर्तृग्रहणं स्वतन्त्रोपलक्षणार्थमिति तेन शिष्यस्य कर्तृत्वाभावेपि गोः कर्मसञ्ज्ञा युज्यतएव, तथा च सार्थाद्धीयतइति कर्म्मणि लकारोत्पत्तिः। अभिप्रग्रहणं किम्। यावता कर्म्मणायमेति गच्छति प्राप्नोति संबध्नातीत्यर्थः। अभिप्रेतीत्युक्ते स एव, अभिप्रग्रहणे ऽक्रियमाणे कालविवक्षा स्यात् ततश्च यमेव संप्रत्येति तत्रैव स्यात् यमगात् यं चेष्यति तत्र न स्यात्, अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति, अभिराभिमुख्ये वर्तते प्रशब्दश्चादिकर्म्मणि ततश्चोपसर्गद्वयोपादानसामर्थ्यात्कालान्तरावच्छिन्ना क्रिया नाश्रीयते। ननु यथा 'तेन दीव्यती'त्यादौ सङ्ख्याकालयोरविवक्षा तथेहापि संख्यावत्कालस्याप्यविवक्षा सिद्धा, सत्यम्। अयमेव न्यायसिद्धोर्थ उपसर्गद्वयोपादानेन प्रदर्श्यते यदा त्वभिप्रेतीत्यस्य ईप्सतीत्यर्थस्तदाभिग्रहणं कर्तव्यमेव। क्रियाग्रहणमपि कर्तव्यमिति वार्तिकम् एतद्व्याचष्टे। 'क्रिययेत्यादि'। ननु क्रियामपि लोके कर्मेत्युपचरन्ति किं कर्म करिष्यसि कां क्रियामिति तत्र कर्मणायमभिप्रेतीत्येव सिद्धमेवमपि कर्त्तव्यं 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य-

संप्रत्ययो भवति' संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म, तथाहि। य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुध्या तावत्कं चिदर्थं संपश्यति-इदमीदृशमिति तद् दृष्टं प्रार्थयते अपि ममेदं स्यादिति, ततस्तदुपायभूतां क्रियां पश्यति अस्या एतत्फलमिति, ततः प्रार्थ्यते कथमियं निष्पन्नतामिति ततस्तत्साधनानि समवधार्य कर्तुमध्यवस्यति, प्रतीयमानक्रियापेक्षोऽपि कारकभावो भवत्येव यथा प्रविश पिण्डीमित्यत्र भक्षयेति गम्यते, सूत्रकारश्च सूत्रयति 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति, एवमपि क्रियाग्रहणं कर्त्तव्यं, ददातिकर्मत्वात्। 'निगर्ह-तइति'। नास्तिक्याचिन्दतीत्यर्थः। गर्ह गल्ह कुत्सायामनुदात्तेत्। 'युद्धा-येति'। युद्धविषयं संनाहपूर्वकं निश्चयं करोतीत्यर्थः। नह्यतिः स्वरितेत्। 'पत्ये शेतइति'। पतिमुपसृत्य शेतइत्यर्थः। यदि तर्हि क्रिययाभिप्रेयमाण-स्यापि भवति कटङ्करोतीत्यादावपि प्राप्नोति, वचनाद्धि कर्मसंप्रदानस-ञ्ज्ञयोः पर्यायः स्यात्, नैतत्सार्वत्रिकं किं तर्हि प्रयोगदर्शनवशेन नियतवि-षयम्। 'कर्मणः करणसञ्ज्ञेत्यादि'। एतच्छन्दोविषयं 'सर्वे विधयश्छन्दसि विकल्प्यन्त' इति यथाप्राप्तमपि प्रयोगो भवति। भाष्ये तु ददाति कर्मणे-ति नाश्रितं प्रयोगाश्च बहवः, अर्यम्णे चरुं निर्वपेत्, देवेभ्यो ब्रह्मौदनमप-चत्, देवेभ्यो हव्यं वहन्तः छन्दांसि वै देवेभ्यो हव्यमूर्धा। यदङ्गमाशु-वेत्वम्। शं नः करत्यर्वते इत्यादय,स्तन्मते क्रियाग्रहणं न कर्तव्यं, कथं यत्र संप्रदानत्वमिष्यते तत्र संदर्शनादीनां क्रियायाश्च भेदो विवक्ष्यते ततश्च नैराप्यमाना क्रियापि कृत्रिमं कर्मेति सिद्धं तयाभिप्रेयमाणस्य संप्रदानत्वं यत्र तु नेष्यते तत्र भेदो[1]न विवक्ष्यते ततश्चोदनाद्येकफलावच्छेदेनैकी-कृतया क्रियया ऽऽप्यमानस्य कर्मत्वमेव भविष्यति। कटङ्करोति, ओदनं पचतीति, गत्यर्थेषु तूभयं विवक्ष्यते भेदोऽभेदश्च तत्र भेदविवक्षायां ग्रामं गच्छतीति प्रयोग इति गत्यर्थकर्मणीत्येतदपि न वक्तव्यं भवति॥

"रुच्यर्थानां प्रीयमाणः"॥ 'रुचिना समानार्था इति'। वस्तु दत्तमेतत्, विग्रहस्तु रुचिरर्थो येषामिति ते च रुचिना धातुना समा-

१ तत्राभेदो विवक्षतइति पा० २

नार्था भवन्ति। 'प्रीयमाण इति'। प्रीञ् तर्पणे इत्यस्मात् क्रैयादिकात् सकर्म्मकात्कर्म्मणि लः। दैवादिकस्तु ङिदकर्मकः, तर्पमाण इत्यर्थः। 'अन्यकर्तृक इति'। योऽभिलाषस्याश्रयः प्रीयमाणस्ततोऽन्यकर्तृक इत्यर्थः। कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्त्ता भवति यावता यद्दाश्रयव्यापारं धातुः प्राधान्येनाचष्टे स कर्त्ता, नेदं कर्तृलक्षणं किं तु स्वातन्त्र्यमेव, तच्च क्वचिद्दाश्रयं क्वचिद्वैषयिकं तदत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयन्मोदकस्तत्र कर्तेति गीयते। न चैवं लषेरपि प्रसङ्गः, देवदत्तो मोदकमभिलष्यतीति, अभिधानशक्तिवैचित्र्यादाश्रयकर्तृकोऽभिलाषो लषेर्वाच्यो रुचेस्तु विषयकर्तृकः, दृष्टश्चायमभिधानप्रकारनियमोऽन्यत्रापि, तद्यथा घटः पश्यतीति दृशेराश्रयकर्तृकं ज्ञानं वाच्यं घटः प्रकाशत इत्यत्र प्रकाशे विषयकर्तृकं, विषय एव हि स्पष्टालोकमध्यवर्तित्वादिना सौकर्येण देवदत्ताश्रये ज्ञाने कर्तेति व्यपदिश्यते न तु ज्ञानेन कश्चिदतिशयो विषयो जन्यते, कोऽयं प्रकाशो नाम यं प्राकट्यमाचक्षते भाट्टास्तत्र कारकशेषत्वेन षष्ठीप्रसङ्गे वचनम्। अन्ये तु प्रीयमाणं देवदत्तं मोदकः प्रीणयतीति कर्म्मसंज्ञां प्राप्तां मन्यन्ते, अपरे त्वेवमाहुः। देवदत्तो रोचयति मोदकमिति हेतुत्वे प्राप्ते वचनमिति, देवदत्तं हि प्राप्य रोचते मोदको न सर्वान्, नानेच्छा हि प्राणिन इति, एवमुत्तरेष्वपि योगेषु द्रष्टव्यम्। उक्तं च

हेतुत्वे कर्म्मसञ्ज्ञायां शेषत्वे चापि कारकम्।
रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते॥

इति। 'पक्षीति'। हेतुकर्म्मसञ्ज्ञावदधिकरणसञ्ज्ञा बाध्येतेति भावः। किं च प्रीयमाणग्रहणाद्दैवादिभ्यो रोचत इति दीप्तिवाचिनामग्रहणम्॥

"श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः"॥ 'ज्ञीप्स्यमान इति'। मारणतोषणनिशामनेषु ज्ञा इति घटादिषु पठ्यते तस्मान्निशामनेऽर्थे हेतुमण्णिचि स 'न्याप्ज्ञप्धामीत्' 'अत्र लोपोऽभ्यासस्य' 'कर्म्मणि लटः शानजादेशः, निशामनं चेह ज्ञानमात्रमुच्यते न चक्षुर्विज्ञानमेव, यदाह,

'बोधयितुमभिप्रेत इति'। कथं तर्हि प्रयुज्यते तच्छ्रापयत्याचार्यः, विज्ञापना भर्तृषु सिद्धिमेतीति, तस्माच्छिशानेष्विति पाठः। शो तनूकरणे ल्युडन्तः, सञ्ज्ञपितः पशुरित्युदाहरणम्। ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाण इति प्रयोगो ज्ञपमिच्चेति चुरादिणिजन्तस्य। अन्ये तु 'मितां ह्रस्व' इत्यत्र 'वा चित्तविराग' इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्चानिष्टे विषये ह्रस्वाभावमाहुः। 'देवदत्तं प्रति श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थ इति'। श्लाघा स्तुतिः, प्रत्यक्षेण देवदत्तं स्तौतीति यावत्। एवं हि तां देवदत्तः शक्यते ज्ञापयितुम्। अन्ये त्वाहुः। देवदत्तायात्मानं परं च श्लाघ्यं कथयतीत्यर्थ इति। तथा च भट्टिकाव्यम्।

श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः।

इति। आत्मानं श्लाघ्यं परस्त्रीभ्यः कथयन्नित्यर्थः। 'एवं देवदत्ताय निह्नुतइति'। ह्नुङ् अपनयने देवदत्तं प्रति निह्नुवानस्तां निह्नुतिं तमेव ज्ञापयितुमिच्छतीत्यर्थः। इत्येव एवंशब्दस्यार्थः। निह्नुतिरपलापः, संनिहितमेव देवदत्तं धनिकादेरपलपतीत्यर्थः। अन्ये तु ह्नोतव्यं किञ्चिद्देवदत्तं ज्ञापयतीत्यर्थ इत्याहुः। 'देवदत्ताय तिष्ठतइति'। ईदृशो ऽहमिति देवदत्तस्य स्थानेन प्रकाशयतीत्यर्थः। 'देवदत्ताय शपतइति'। शपथेन किञ्चित्प्रकाशयतीत्यर्थः। 'देवदत्तः श्लाघतइति'। ज्ञीप्स्यमानवचनात् कर्म्मसञ्ज्ञैव बाध्यते न कर्तृसञ्ज्ञेत्यर्थः। एवं गार्गिकया श्लाघते सभायामिति करणाधिकरणसञ्ज्ञे न बाध्येते। क्वचित्तु देवदत्तं श्लाघतइति पाठः। तत्रायं भावः। यस्माख्यायते स ज्ञीप्स्यमान इत्याख्यायमाना द्वितीयैव न्याय्येति। ये त्वाख्यायमानं ज्ञीप्स्यमानं वदन्ति तेषां यस्मायाख्यायते ततः षष्ठी भवति देवदत्ताय श्लाघते यज्ञदत्तो विष्णुमित्रस्येति॥

"धारेरुत्तमर्णः"॥ 'उत्तममृणं यस्येति'। उत्तममुत्कृष्टतमम् उत्कृष्टार्थवृत्तेरुच्छब्दात्तमपि द्रव्यप्रकर्षत्वादामभावः, ऋतेः क्तः, ऋणम् 'ऋणमाधमर्ण्ये' इत्यत्र कालान्तरे देयद्रव्यविनिमयोपलक्षणार्थमाधमर्ण्य-

१ देवदत्ताय श्लाघते पर्थोति मुद्रितपुस्तकपाठस्तु हरदत्तदृग्गोचरः।

ग्रहणमित्युत्तमर्णेऽपि नत्वं भवति । अत्र बहुव्रीहौ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनमिति सुखादेराकृतिगणत्वादस्मादेव वा निपातनादृणशब्दस्य परनिपातः । 'शतन्धारयतीति' । धृङ् अवस्थाने, ध्रियमाणं स्वरूपेणावतिष्ठमानं स्वभावादप्रच्यवमानं शतं प्रयुङ्क्त इति णिच् । 'ग्रामइति' । नन्वत्र परत्वादधिकरणसञ्ज्ञैव भविष्यति, उत्तमर्णेऽपि तर्हि हेतुसञ्ज्ञा स्यात् ॥

"स्पृहेरीप्सितः" ॥ 'चुरादावदन्तः पठ्यतइति' । तेन स्पृहयतीत्यत्रातो लोपस्य स्थानिवद्भावाल्लघूपधगुणो नेति भावः । 'ईप्सित इति' । मतिबुद्धीत्यादिना वर्त्तमाने क्तः । ईप्सितमात्रइयं सञ्ज्ञा प्रकर्षविवक्षायां तु परत्वात् कर्मसञ्ज्ञैव भवति पुष्पाणि स्पृहयतीति । यदा त्वीप्सितमीप्सिततमं वा शेषत्वेन विवक्ष्यते तदा षष्ठी भवति ॥

"क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" ॥ 'गुणेष्विति' । शौचाचारादिषु । 'दोषाविष्करणमिति' । दम्भादिदोषाख्यान इत्यर्थः । तत्र क्रुधद्रुहावकर्म्मकाविति कारकशेषत्वाच्चटस्य शृणोतीतिवत् षष्ठ्यां प्राप्तायां वचनमितरयोस्तु सकर्म्मकत्वाद् द्वितीया प्राप्नोति, अत्र च चित्तदोषरूपत्वं यद्यपि क्रोधादीनामविशिष्टं तथाप्यन्येषामेवंजातीयकानां द्रोहादीनामग्रहणार्थमवान्तरभेदविवक्षया पृथगिमे निर्दिष्टाः, न तु चित्तदोषार्थानामिति तेनास्माद् द्वेष्टीत्यत्र न भवति, अनभिनन्दनं ह्यस्यार्थः । तथा चाचेतनेष्वपि प्रयुज्यते औषधं द्वेष्टीति । कथं पुनरेकेन क्रुधिना सर्वे क्रुधादयः शक्या विशेषयितुमत आह । 'क्रोधस्तावदिति' । भार्यामीर्ष्यतीत्यत्र केवलं परैर्दृश्यमानां भार्यां न क्षमते न तु तां प्रति कोपः ॥

"क्रुधद्रुहोरुपसृष्टयोः कर्म" ॥ 'उपसर्गेण सम्बद्धयोरिति' । 'उपसर्गाः क्रियायोगे' उपसृजन्तीत्युपसर्गाः पचाद्यचि न्यङ्क्वादित्वात् कुत्वम् । तेनोपसृष्टयोरित्यस्योपसर्गेण सम्बद्धयोरित्ययमर्थो भवति । स्वनिकायप्रसिद्धिर्वा ॥

"राधीक्ष्योर्यस्य विप्रश्नः" ॥ यस्येति कर्म्मणि षष्ठी, यद्विधं पृच्छ्यतइत्यर्थः । '[1]यत्सम्बन्धीत्यादि' । यत्सम्बन्धिनः शुभाशुभस्य विप्रश्न इति । 'देवदत्ताय राध्यतीति' । 'राधोऽकर्म्मकाद्वृद्धावेवे' ति दिवादौ, तत्र वृद्धावित्युपलक्षणमकर्म्मकादिति वचनाद् वृद्ध्यावकर्म्मकत्वाव्यभिचारात्, एवकारस्तु भिन्नक्रमः राधोऽकर्म्मकादेव श्यन् भवति यथा वृद्धाविति, तेन सत्यप्येवकारे पर्यालोचनस्य वृत्तिरविरुद्धा। तत्र धात्वर्थेनोपसंग्रहाज्जीवत्यादिवद् राधोऽकर्म्मत्वमविरुद्धम् । निमित्तं वेद नैमित्तिकः, उल्कादिषु वसन्तादिषु वा निमित्तशब्दो द्रष्टव्यः । यस्यग्रहणमनर्थकं यं प्रतीत्येव तत्र यं प्रति विप्रश्न इत्यन्वये किं नाम विवक्षितं न सिध्यति ॥

"प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" द्विवचननिर्देशात् प्रत्येकमुपसर्गसम्बन्ध इत्याह । 'आङ्पूर्वस्य प्रतिपूर्वस्य चेति' । कः पुनरत्र पूर्वो व्यापार इत्यत्राह । 'प्रत्याङ्पूर्वश्चेत्यादि' । 'परेण प्रयुक्तस्येति' । इदं मे देहीत्येवं प्रार्थितस्येत्यर्थः । 'पूर्वस्याः क्रियाया इति' । सूत्रे तु व्यापाररूपविवक्षया पूर्वस्येति निर्देशः, तत्र हेतुसञ्ज्ञायां प्राप्तायां देवदत्तेन प्रतिशृणोतीति प्रयोगनिवृत्तये वचनमित्याहुः । विवक्षान्तरे च देवदत्तो गां प्रतिश्रावयतीति भवत्येव ॥

"अनुप्रतिगृणश्च" ॥ पूर्वेण साहचर्यादत्रापि प्रत्येकमुपसर्गसम्बन्ध इत्याह । 'अनुपूर्वस्य प्रतिपूर्वस्य चेति' । कः पुनरत्र पूर्वो व्यापार इत्यत्राह । 'होता प्रथममित्यादि' । 'अन्य इति' । अध्वर्युः । कथं पुनर्ज्ञायते ऽनुप्रतिपूर्वो गृणातिः शंसितुः प्रोत्साहने वर्त्ततइत्याह । 'अनुगरः प्रतिगर इत्यादि' । अनुगीर्यते प्रोत्साह्यते येन शब्देन सोऽनुगरः, एवं प्रतिगरः, ओथामो दैवेत्येवमादिकः शब्दः, तेन हि प्रतिगीर्यते ॥

"साधकतमं करणम्" ॥ षिधू संराद्धावित्यस्य हेतुमण्ण्यन्तस्य 'सिद्ध्यतेरपारलौकिके' इत्यात्वे राध साध संसिद्धावित्यस्य वा ण्यन्तस्य साधकशब्दः क्रियात्मकश्चार्थः, प्रयोज्यः कर्ता, सिध्यतः साध्यतो वा

[1] यस्येत्यादि पा० २ ।

क्रियात्मनोऽर्थस्य प्रयोजकतमं साधकतमम् । ननु सामग्र्यधीना क्रियासिद्धिर्नो खलु कर्त्रादीनामन्यतमापायेऽपि क्रियानिष्पद्यते तत्किमपेक्षः कारकाणां मध्ये एकस्यातिशययोगः स्यात् । उच्यते । दात्रादेः छेद्यद्रव्यानुप्रवेशो व्यापारः, काष्ठादेः पाके प्रज्वलनजनितोष्णस्पर्शानुप्रवेशः, तदनन्तरमेव क्रियासिद्धिः, नैवं कारकान्तरेष्वनुप्रवेशस्तद्व्यापारानन्तरं वा क्रियानिष्पत्तिः समस्ति, अतः ।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥

विवक्ष्यतइत्यनेनेतद् दर्शयति देशकालावस्थादिवशेन यस्य क्रियां प्रत्युपयोगातिशयेन व्यापारः प्रत्यासीदन् विवक्ष्यते तदा तस्य करणत्वं भवतीति, यथा स्थाल्यधिकरणत्वेन प्रसिद्धा तस्या अपि तनुतरकपालतया प्रकर्षविवक्षायां करणत्वं भवति[1] स्थाल्या पच्यतइति । उक्तं च

वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यतइत्येषा विवक्षा दृश्यते यतः ॥

इति । न चैवं कर्तुरपि करणत्वविवक्षा प्रसङ्गः । भिन्नजातीयत्वात् । सकलसाधनविनियोगकारी खल्वसौ, न च शतधनो निष्कधनेन सह स्पर्द्धते । कथं तर्ह्यश्वेन दीपिकया रथेन सञ्चरतइति बहूनां करणत्वं यावता तेष्वपि यदासन्नोपकारकं तदेव करणं युक्तम् । उच्यते । कारकान्तरापेक्षः करणस्यातिशयो न स्वकक्षायां तेन सर्वेषां क्रियानिष्पत्तौ संनिपत्योपकारकत्वात् सिद्धं करणत्वम् । 'तमब्ग्रहणं किमिति' । कारकाधिकारात् सिद्धे साधकत्वे पुनःसाधकश्रुतिः प्रकर्षार्था भविष्यतीति प्रश्नः । 'गङ्गायां घोष इति' । असति तमब्ग्रहणे आधारो नाम यत्राधारात्मा व्याप्तो भवत्याधेयेन, तेनेहैव स्यात् तिलेषु तैलं पयसि[2] सर्पिरिति, गङ्गायां घोष इत्यत्र न स्यात्, तमब्ग्रहणं तु व्याप-

१ स्थाल्या ओदनं पच्यत इति पा० २ ।
२ दध्नीति पा० २ ।

यति इह प्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयते, तेनेहापि भवति, यदा च देशधर्मो घोषं प्रत्याधारभावः सोऽतस्मुपचर्यते तदेदं तमब्ग्रहणस्य प्रयोजनं, यदा तु गङ्गाशब्दस्तीरे वर्त्तते तदा न प्रयोजनम्, आधेयेन व्याप्तिसम्भवान्मुख्य एवाधारभाव इति ॥

"दिवः कर्म च" ॥ ननु चाक्षान् दीव्यतीत्यत्र पातयतीत्यर्थस्तत्र कर्मत्वं सिद्धम्, अक्षैर्दीव्यतीति, क्रीडतीत्यर्थः, तत्र करणत्वं सिद्धं किमर्थमिदमित्याशङ्क्याह । 'पूर्वेण करणसंज्ञायामिति' । अक्षैः क्रीडतीत्यस्यामेव विवक्षायामक्षान् दीव्यतीतीष्यते, अत्र च करणसंज्ञैव प्राप्नोति, अक्षान्पातयतीत्यत्र चार्थे ऽक्षैर्दीव्यतीति नेष्यते, अतः साधकतमस्यैव करणसंज्ञायां प्राप्तायामयमारम्भ इत्यर्थः । अथ किमर्थश्चकारः, करणसंज्ञापि यथा स्यात्, नैतदस्ति प्रयोजनम् । वक्ष्यमाणमन्यतरस्यांग्रहणमिहैव करिष्यामि तत्राह । 'चकारात्करणसंज्ञा चेति' । युगपत्संज्ञाद्वयं यथा स्यादिति भावः । अन्यतरस्यांग्रहणे तु पर्यायः स्यात्, यदा कर्म न तदा करणं यदा करणं न तदा कर्म, चकारात्तु युगपदेव संज्ञाद्वयं भवतीत्यर्थः । यौगपद्यप्रयोजनं मनसा दीव्यतीति कर्मत्वादण् प्रत्ययः करणत्वाच्च तृतीया 'मनसः संज्ञाया' मित्यलुक् मनसादेवः, इह चाक्षैर्देवयते देवदत्तो यज्ञदत्तेनेति, अक्षैरिति तृतीयाप्रयोगेपि धातोः सकर्मकत्वाद् गतिबुद्धीत्यादिना ऽण्यन्तावस्थायां कर्तुर्यज्ञदत्तस्य कर्मसंज्ञा न भवति, अणावकर्मकादिति परस्मैपदं च, यदि तर्हि समावेशोऽक्षान् दीव्यतीति परत्वात्तृतीया प्राप्नोति पर्याये तु नायं दोषः, कर्मसंज्ञापक्षे करणसंज्ञाया अभावात् । समावेशे तु करणसंज्ञाया अवकाशो विदेवना अक्षाः, 'करणाधिकरणयोश्चे' ति ल्युट्, कर्मसंज्ञाया अवकाशो दीव्यन्ते भवताक्षाः, 'भावकर्मणो' रिति यगात्मनेपदे, अक्षानित्यत्र तूभयसंज्ञाकार्यप्रसङ्गे परत्वात्तृतीया स्यात् । नैष दोषः । कार्यकालं हि संज्ञापरिभाषं ततश्च कर्मणि द्वितीयेत्यत्र पदस्योपस्थानं तदनवकाशमिति द्वितीया भविष्यति, अयं तर्हि समावेशे दोषो दीव्यन्ते ऽक्षा इति कर्मण्यभिहितेपि करणस्यानभिहितत्वात्तृतीया स्यात्, तथा देवना अक्षा इति ल्युटा करणस्या-

भिधानेपि कर्म्मणोनभिधानेन द्वितीया स्यात्। नैष दोषः। एकैव कारकशक्तिः संज्ञाद्वययोगिनी, ततश्चैकस्मिन् कारकेऽभिहिते कारकान्तरमप्यभिहितमेव भवति शक्तेरेकत्वात्॥

"परिक्रयणे संप्रदानमन्यतरस्याम्"॥ परिक्रयणशब्दे धातुगतमेव रेफमाश्रित्य रषाभ्यामित्येव णत्वं प्रथमोपनिपतितत्वाद् यथोपसर्गाभावे क्रयणमिति न तूपसर्गस्थमाश्रित्य 'कृत्यच' इत्यनेन तस्य पश्चादुपनिपतितत्वेन बहिरङ्गत्वात्। 'वेतनादिनेति'। वेतनं भृतिः, नियतकालत्वमेव स्पष्टयति। 'नात्यन्तिकः क्रय एवेति'। परिशब्दः सामीप्यं द्योतयति। क्रयो नामात्यन्तिकं स्वीकरणं नियतकालं तु तस्य समीपमेवेति परिशब्दस्यार्थः॥

"आधारोऽधिकरणम्"॥ आध्रियन्ते ऽस्मिन् क्रिया इत्याधार इति अध्यायन्यायोद्यावेत्यादिना ऽधिकरणे घञ्, क्रियापेतत्वात् कारकभावस्य क्रियाग्रहणं, यदि क्रियाधारस्याधिकरणसंज्ञा कर्तृकर्म्मणोरेव स्यात् कर्तृस्था हि क्रिया भवति कर्म्मस्था वा, कर्तृसंज्ञायाः कोवकाशो ये कर्म्मस्थक्रियाः पचत्योदनं देवदत्त इति, नन्वत्राप्यधिश्रयणादेराधारः कर्तेति स्यादेव प्रसङ्गः, अयं तर्ह्यवकाशो देवदत्ताय रोचते मोदक इत्युक्तम् अत्र देवदत्तस्यस्याभिलाषस्य मोदकः कर्तेति, अथाप्यनवकाशा कर्तृसंज्ञा एवमपि पर्यायः स्यात्, अथ कर्मसंज्ञायाः को ऽवकाशो ये कर्तृस्थक्रियाः, आदित्यं पश्यतीति, अतः कर्तृकर्म्मणोरेवाधिकरणसंज्ञा प्रसक्त इत्यत आह। 'कर्तृकर्म्मणोरित्यादि'। कथं पुनः साक्षात्क्रियाधारे सम्भवति क्रियाधारभूतकर्तृकर्म्मव्यवधानेन क्रियाधारस्य गौणस्य ग्रहणं शक्यं विज्ञातुं, करणसंज्ञायां तमब्ग्रहणेन ज्ञापितमेतद् यथाकथञ्चित्क्रियाधारस्यापि करणसंज्ञा भवतीति, मुख्यस्यापि तु कस्मान्न स्याद् इत्येतावदपि न, परत्वात् कर्तृकर्म्मसंज्ञाभ्यां बाधितत्वादिति गतमेतत्। 'आस्तइति'। कर्तृस्थायाः क्रियाया उदाहरणं, पचतीति कर्म्मस्थायाः, त्रिविधं च तदधिकरणम्। औपश्लेषिकं वैषयिकमभिव्यापकं चेति, कटे आस्ते, गुरौ आवसति, तिलेषु तैलमिति॥

"अभिनिविशश्च" ॥ नेरल्पाच्तरस्यापूर्वनिपाताद् अभिनीति समुदायानुकरणमित्याह । 'अभिनिपूर्वस्येति' । अन्यथा ऽभिपूर्वस्य निपूर्वस्य चेति ब्रूयात् ॥

"उपान्वध्याङ्वसः" ॥ 'वसेरश्यर्थस्येति' । अर्थशब्दो निवृत्तिवचनः, व्यधिकरणे षष्ठी, अश्यर्थस्य यो वाचकस्तस्येत्यर्थः । भोजननिवृत्तिवाचिन इति यावत्, यद्वा शीङोर्थः श्यर्थः न श्यर्थस्तस्य, अस्थानार्थस्येत्यर्थः । स्थानेपि हि शीङ् वर्त्तते जलाशयमिति, तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति भवति । अस्थानार्थत्वे तु ग्रामउपवसतीति, स तर्हि प्रतिषेधो वक्तव्यः, न वक्तव्यः, कथं, नात्रोपपूर्वस्य वसेः ग्रामो ऽधिकरणं किं तर्ह्यनुपसर्गस्य, ग्रामे वसन् त्रिरात्रमुपवसति । एतदुक्तं भवति । विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिविशिष्टकालं प्रतिपादयितुमिदं प्रयुज्यते ग्रामउपवसतीति, तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः, उपवसनं तु स्वरूपेणैव कालमपेक्षतइति कालेनैवान्तरङ्गः सम्बन्धो ग्रामादिना तु बहिरङ्ग इत्यप्रयुक्तमपि त्रिरात्रादिकं कर्म भवति ॥

"कर्त्तुरीप्सिततमं कर्म" ॥ 'कर्तुः क्रिययेत्यादि' । कर्तुर्यदाप्तुमिष्टतममित्यन्वयः, कर्तुरिति चेप्सितापेक्षया 'क्तस्य च वर्तमान' इति कर्त्तरि षष्ठी । 'ईप्सित इति' । मतिबुद्धीत्यादिना वर्त्तमाने क्तः । 'क्रिययेति' । करणे तृतीया, कर्त्ता हि नाम यः क्रियामनुतिष्ठति तेन कर्तुर्यदिष्टतममित्युक्ते तत्क्रियावेशादसौ कर्त्ता भवति तया करणभूतयेति गम्यते, कर्त्रा यदाप्तुमिष्यते आत्मीयया क्रिययेत्यर्थः । ईप्सितशब्दोयमस्त्यभिप्रेते रूढः, ईप्सितोभिप्रेत इति, अस्ति क्रियाशब्दः, आप्लृ व्याप्तौ सन्, 'आप्ज्ञप्यधामीत' आप्तुमिष्टमीप्सितमिति तत्र क्रियाशब्दस्येह ग्रहणमिति दर्शितमाप्तुमिष्टतममिति, 'कर्म्मण इति' । अश्वस्य, स हि भक्षणक्रियया माषानाप्तुमिच्छति, यद्येवं यथाश्वस्य वस्तुतो भक्षणे कर्तृत्वे सत्यपि संप्रति बन्धनं प्रति कर्म्मत्वेन विवक्षितत्वादकर्तृत्वाद् माषाणां कर्म्मसंज्ञा न भवति तथा सार्येऽह्रीयतइत्यत्रापि ह्रीयमानं सार्थं जहातीति

वस्तुवृत्तेन त्यागेन कर्तुरपि सार्थस्य संवत्यपादानरूपेण विवक्षितत्वाद् अकर्तृत्वात्कर्मणि यगात्मनेपदे न स्याताम् । अत्राहुः । कर्म्मकर्त्तर्येवात्र यगात्मनेपदे, कथं, जहातिरयं गमनायां वर्तते देवदत्तं सार्थो जहाति अपगमयतीत्यर्थः, एवं च सार्थस्यापगमना यदुत क्षुदुपघातादिना देवदत्तस्यापगमे तत्समर्थाचरणं, यदा तु क्षुधादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वं तदायं प्रयोगः, ततश्च हीयतइति सार्थः स्वयमेवापगच्छतीति, पुनः कुतो हीयते इत्यपेक्षायां सार्थेन सम्बन्ध इति । 'तमब्ग्रहणं किमिति'। 'ईप्सिततमस्यापीप्सितत्वसम्भवाद् उदाहरणसिद्धिं मन्यते । 'पयसौदनं भुङ्क्तइति'। करणसंज्ञा तु दात्रेण लुनातीत्यादौ सावकाशा, नहि दात्रं लवनेनेप्सितं, तथा युक्तमित्यनेनापि न भवति, द्वेष्योदासीनप्राप्ययोस्तत्र ग्रहणात्, सत्यप्यत्र पयसो भुजिक्रियायां प्रकृष्टोपकारकत्वईप्सायाः प्रकर्षाभावः, यत्र तर्हि पय एवेप्सिततमं तत्र प्राप्नोति, तद्यथा, कश्चित् कं चिदाह सिद्धं भुज्यतामिति, स आह, प्रभूतं भुक्तमस्माभिरिति, इतर आह पयो भविष्यतीति, अपरस्त्वरमाण आह, पयसा खलु भुञ्जीयेति, अत्र प्राप्ताप्राप्तविवेकेन पयस एवेप्सिततमत्वं न त्वोदनस्य, अत्राप्योदनमेवेप्सिततमं पयसस्तु संस्कारकत्वात् करणत्वं न त्वस्य केवले गुणे आदरः, किं तर्हि तत्संस्कृते ओदने, नह्यसौ केवलस्य पयसः पानेन संतुष्यतीति यदि तमब्ग्रहणं क्रियते, पयसौदनं भुङ्क्तइत्यत्रैव स्यात् पचत्योदनमित्यादौ न स्यात्, नहीप्सिततमं युक्तम्, असति प्रतियोगिनि वस्तु यत्तुल्यजातीयं तदेव प्रतियोगितां भजते कारकं चात्र न किञ्चिदिष्टमीप्सितं पयसस्त्वीप्स्यमानत्वाद् युज्यते प्रतियोगिता, नैष दोषः । अत्रापि क्रियापेक्षः प्रकर्षः, आदौ हि कर्त्ता फलार्थं क्रियामभीप्सति अतः फलार्थमिष्यमाणत्वाद् ईप्सिता क्रिया फलं तु स्वरूपेणेष्यमाणमीप्सिततमं क्रियाया अपि कर्म्मत्वं संदर्शनादिविशेषात्तरास्पर्धया, यत्र तर्हि फलाभावस्तत्र न स्यात्, क्व च फलाभावः विकार्यं, काष्ठानि भस्मीकरोतीति नहि काष्ठानि फलरूपाणि, मा भूवन् तानि स्वरूपेण फलानि भस्मात्मना तु फलानि, प्राप्ये तर्हि न स्यात् । आदित्यं पश्यति हिमवन्तं शृणोतीति, नह्यत्र क्रियया

कश्चिदतिशयो जन्यते, यत्राप्यतिशयो जन्यते प्राकट्यं नाम, यो हि यं पश्यति शृणोति वा तस्यासौ प्रकटो भवति, प्रतिपत्त्रव्यतिरिक्तपुरुषापेक्षया तु विशेषो नास्तीत्युच्यते । यद्वा तमग्रहणेन यत्रापकृष्टेच्छा तदेव व्यावर्त्यते तेन पश्यत्यादावादित्यादीनामपि प्रतियोगिनोऽसत्त्वेनापकर्षाभावाद् भविष्यति, अत्र च लिङ्गं 'ललाटकुक्कुट्यौ पश्यती' ति । 'कर्म्मेत्यनुवर्त्तमान इति' । अधिशीङ्स्थासामित्यतः । 'आधारनिवृत्त्यर्थमिति' । प्राच्यं कर्म्मग्रहणमाधारेण संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः । आधारानुवृत्तौ को दोषस्तत्राह । 'आधारस्यैव हि स्यादिति' । क्वेत्याह । 'गेहमित्यादि' । यत्र तु न स्यात्तदाह । 'ओदनं पचतीत्यादि' । एतच्चेप्सिततमं कर्म्म त्रिविधं निर्वर्त्यं विकार्यं प्राप्यमिति, तथा युक्तमपि द्विविधं द्वेष्यमितरच्च, अकथितं चेत्यपरं संज्ञान्तरप्रसङ्गे चान्यद्विवः कर्म चेत्यादिः, तदेवं सप्तविधं कर्म्म । उक्तं च

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधामतम् ।
तच्चेप्सिततमं कर्म्म चतुर्धाऽन्यत्तु कल्पितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्त्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥

इति । तथा

यदसत् जायते सद्वा जन्मना यत् प्रकाश्यते ।
तन्निर्वर्त्यं विकार्यं तु कर्म्म द्वेधा व्यवस्थितम् ॥
प्रकृत्युच्छेदसम्भूतं किं चित्काष्ठादि भस्मवत् ।
किं चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥

इति । तत्र निर्वर्त्यं घटं करोतीति, असत्यभिप्रायेण जन्मसामान्याभिप्रायेण प्रकाशनम् । ननु च यदि घटो न कर्त्तव्योऽथ कर्तव्यो न घट इत्यनुपपन्नं घटं करोतीति, नैष दोषः । तथाविधं वस्तु करोति यस्य निष्पन्नस्य घट इति संज्ञेति, अयमत्रार्थः, एवमोदनं पचतीत्यादावपि

विकार्यं काष्ठानि भस्म करोति सुवर्णं कुण्डलं करोतीति, प्राप्यमा-दित्यं पश्यतीति नह्यत्र प्रत्यक्षेणानुमानेन वा क्रियाजन्यः कश्चिदतिशयो गम्यते, यथा निर्वर्त्यविकार्ययो रज्जुं सृजति काष्ठं दहति देवदत्तं रोपय-तीति, कारकत्वं तु प्राप्यस्याभासोपगमादिभिः, आदित्यो ह्याभासमुपग-च्छति यतो दृश्यते ऽभिव्यक्तिमुपयाति यतो व्यक्तमुपलभ्यते सहते च दर्शनं यतः शक्यते द्रष्टुन्तदेवमाभासोपगमोव्यक्तिः सोढत्वमिति कर्म्मणो विशेषाः प्राप्यमाणस्य क्रियासिद्धौ विवक्षिताः ॥

"तथा युक्तं चानीप्सितम्" ॥ तथेति पृथक् पदं नोपसमस्तं लक्षणाभावात् । चकारो ऽवधारणे ऽनेकार्थत्वान्निपातानां, तथेत्यस्य चानन्तरे द्रष्टव्य इत्याह । 'तेनैवेति' । 'ईप्सितादन्यत्सर्वमनीप्सित-मिति'। यथा ऽधर्म्मानृतादिभिस्तत्पदार्थप्रतिपक्षभूतं यद्वस्तु तत्प्रति-षेधद्वारेणाभिधीयते तथेहानीप्सितशब्देनेप्सितप्रतिपक्षभूतं न द्वेष्यमे-वाभिधीयते किं तर्हि ग्रामलोष्टइत्यादिवदीप्सितव्यतिरिक्तं सर्वमिति सर्वशब्दस्यार्थः । 'विषं भक्षयतीति' । न कस्यापि विषमीप्सित-तममिति भावः । ननु य एव मनुष्यो व्याध्यादिना सर्वतः पीडितो मरणमेव ज्यायो मन्यते तस्य विषमपीप्सिततममेव, यदिष्टं गुडादि-भ्रान्त्या विषे प्रवर्तते तस्यापि तदीप्सिततममेव, यदिष्टं गुडादि तद्बु-द्धिरेव तत्र प्रवर्तते ऽतोऽत्र पूर्वेणैव सिद्धमित्युदाहरणान्तरोपन्यासः । 'ग्रामं गच्छन्निति' । नात्र वृक्षमूलानीप्सिततमानि पूर्वमनभिसंहितत्वान्नान्तरी-यकं हि तदुपसर्प्यणं, न चात्रापि यावद्ग्रामं गच्छन्निति न प्रयुज्यते तावन्नान्तरीयकता न प्रतीयतइति पूर्वेणैव सिद्धम्, यथा नदी कूलं कषतीत्यत्राचेतनत्वादीप्साभावः पदान्तरसम्बन्धात्प्रतीयमानो बहिरङ्ग-त्वात्कर्मसंज्ञां न प्रतिबध्नाति, भवत्वयं प्रतिपत्तारं प्रति उपपादन-प्रकारः, यस्तु प्रयुङ्क्ते स पूर्वमेवेप्साप्रकर्षाभावं जानन् तत्कथं प्रयुक्तमिति पूर्वेणासिद्धिरेव, एवं च नदीकूलमित्यत्रापि अनेनैव कर्म्मसंज्ञा, तथा यत्र क्रियायामेव तात्पर्यं न फले नान्तरीयका तु फलसिद्धिस्तत्राप्यनेनैव भव-ति, अथ क्रियाफलयोगि कर्मेति कस्माद् नोक्तं यदीप्सिततमं यद्द्वेष्य-

मितरच्च तत्र सर्वत्रानुगतमेतद्, यदुत क्रियाफलयोगित्वं कर्त्तुरपि तर्हि कर्म्मत्वं स्यात् क्रियाफलस्य संयोगस्य तत्रापि भावात्। अथ परसमवेतक्रियाफलयोगीति लक्षणम् एवमप्यात्मा ज्ञातव्य इत्यत्र न स्यात्, संविदश्च स्वयं प्रकाशाभिमतायाः कर्म्मत्वं स्यात्, घटमहं जानामीत्यत्र हि त्रितयमेव भासते घटो ज्ञानमात्मा चेति, तत्र ज्ञानं क्रिया तत्फलं शब्दप्रयोगादिरूपो व्यवहारस्तेन युज्यमानस्य घटस्य यथा कर्म्मत्वं तथा ज्ञानस्यापि स्यात्, ज्ञानं हि क्रिया भवति व्यवहाररूपस्य फलस्याश्रयभूतं तस्यैव ज्ञानस्य यत् स्वरूपं तदपेक्षया यः पर आत्मा तत्र च समवेतीत्यलमियता, चौरानित्यत्रापि मर्त्तुकामो वा मित्रादिरूपेण विपर्यस्यमानो वा चौरानुपसर्पतीति पूर्वेणैव सिद्धम् ॥

"अकथितं च" ॥ अकथितशब्दोऽयमस्त्यप्रधाने रूढः, तद्यथा ऽकथितोऽहमस्मिन् ग्रामे, ऽप्रधानभूत इति गम्यते, अस्ति च क्रियाशब्दो ऽकीर्तितपर्यायः, कथ वाक्यप्रबन्धे, चुरादावदन्तः पठ्यते, तत्र पूर्वस्य ग्रहणे पाणिना कांसपात्र्यां दोग्धि पय इत्यत्र पाणिकांसपात्र्योरपि स्यात्, करणाधिकरणसंज्ञयोस्तु परत्यादिरवकाशो, नहि तत्रास्य प्रसङ्गः दुहियाचीति परिगणनात्, अतो द्वितीयस्य ग्रहणं तदाह। 'केनाकथित,मपादानादिभिर्विशेषकथाभिरिति'। किमत्र प्रमाणं तदाह। केनेति करणनिर्देशः, रूढिशब्देषु हि व्युत्पत्त्यर्थमेव क्रियोपादीयते न तत्र करणादि सम्बध्यते नहि गच्छतीति गौरित्यत्र केनेति प्रश्नो रथेनेति प्रतिवचनं वा भवति, इह कारकइत्यनुवर्तनात् सत्येव कारकत्वे कथितस्य संज्ञया भाव्यमिति सामर्थ्याद्विशेषकथाभिरित्युक्तम्। 'परिगणनं कर्त्तव्यमिति'। नटस्य शृणोतीत्यादौ धात्वन्तरप्रयोगे मा भूत्। प्रच्छिभिरीत्यत्र 'छे चे'ति तुक् प्राप्तो ऽनित्यत्वादागमशासनस्य स न कृतः, 'सनाद्यन्ता धातवः' 'इको यणची' तिवत्। 'उपयुज्यतइत्युपयोग इति'। असंज्ञायामपि कर्म्मणि घञ्। 'तस्य निमित्तं गवादीति'। अनेन गां दोग्धि पय इत्यादौ पयःप्रभृतेरुपयुज्यमानत्वादीप्सिततमत्वं गवादेस्तु तदर्थत्वादुपादानस्यानीप्सिततमत्वं च दर्शयति; तथायुक्तत्वाभावाच्च गवादेस्तथायुक्तमित्यनेनापि

न सिध्यन्ति । एतदेव दर्शयति । 'तस्यैवमित्यादि' । उपयुज्यमानस्य पयःप्रभृतेर्यन्निमित्तं गवादि तस्येत्यर्थः । पाण्यादिकमप्युपयोगनिमित्तमिति तेनापि विनोपयोगस्य पयसोऽसम्भवात् । 'तदर्थमाहेति' । तस्य करणादेः कर्म्मसंज्ञानिवृत्त्यर्थमित्यर्थः, प्रयोजनवचनएव चार्थशब्दो निवर्त्तमानतया तु प्रयोजनत्वं लुङ्मुखस्वरोपचाराः प्रयोजनमितिवत् । 'अपूर्वविधाविति' । यत्रान्यो विधिर्नास्ति तत्रेत्यर्थः । पूर्वग्रहणमन्यमात्रोपलक्षणं, तेन वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोरपि विषये कर्म्मसंज्ञा न भवति, सूत्रेण कथितमिति कथननिवृत्तिपरायां चोदनायां भूतकालो न विवक्ष्यते यथा 'पराजेरसोढ' इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति अध्ययनात् पराजेष्यत इति, तद्वदत्रापि साधनमिति, साधनं हि प्रधानभूतां क्रियामपेक्ष्य गुणो भवति । 'प्रधानकर्म्म धर्मादीति' । तस्य तु प्राधान्यन्तदर्थत्वात् प्रवृत्तेः । 'सम्बध्यत इति' । सवत इत्यस्यार्थकथनमेतत्, षच समवाये स्वरितेत् । केचित्तु परस्मैपदिभिः सह धातुमेनं पठन्ति षच समवाये रप लप व्यक्तायां वाचीति, तत्राहुः । षच सेचन इत्यस्यानुदात्तेतोऽनेकार्थत्वात्समवाये प्रवृत्तिरिति, सम्बध्नातेश्च कर्म्मव्यापारे सचिर्वर्त्तत इति कर्तृपदस्य कर्मपदेनार्थकथनं नानुपपन्नं, यथा राध्यत्योदन इत्यस्य पच्यत इति । 'उक्तमिति' । आचरितमित्यस्य विवरणम् । 'सूत्रकारेणेति' । कविशब्दो मेधाविमात्रवचनोऽपि प्रकरणात् सूत्रकारे प्रयुक्त इति दर्शयति । 'गां दोग्धि पय इति' । ननु चात्रायमर्थो गौः पयस्त्यजति, दोग्धा गवा पयस्त्याजयतीति तत्र प्रयोजकव्यापारेणाप्यमानत्वात् सिद्धा गोः कर्म्मसंज्ञा, न च वाच्यं प्रयोजकव्यापारेणाप्यमानस्य यदि भवति गत्यर्थादिष्वेवेत्युत्तरसूत्रे नियमादत्र न प्राप्नोति यथा पचन्तं देवदत्तं प्रयुङ्क्ते पाचयति देवदत्तेनेत्यत्रेति, ण्यन्तेष्वेव स नियमोऽयं तु प्रकृत्यन्तः । नैतदस्ति । यथा ण्यन्तेषु धातुषु क्रियाविशिष्टस्य प्रयुक्तिः प्रतीयते गमयतीति, नैवमत्र निष्क्रियस्यापि गवादेर्दोहननयनादिषु विनियोगात् । तथा ह्यदुहानापि गौर्दुह्यते अगच्छन्तो भारादयः शिरसा नीयन्ते तस्माद्दोग्धेर्ण्यर्थकस्या एव क्रियायाः श्रवणाद् गोपयसोर्भेदेन कर्म्मत्वं न भवति, णिचि तु सति

'पूर्वेणेति'। आत्मनेपदसंज्ञया परस्मैपदसंज्ञाया बाधो यथा स्यादित्येवमर्थमस्मिन् प्रकरणे ऽनयोर्विधानमिति भावः। महासंज्ञाकरणं पूर्वाचार्यानुरोधेन॥

"तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः"॥ त्रीणित्रीणीति वीप्सायां द्विर्वचनं, तत्र च समुदायस्यावयवयोश्च पृथक्पदत्वमिष्यते, आ पचसिपचसि देवदत्तेत्येकान्तता यथा स्यात् कुण्डंकुण्डं वाग्वाग् अपचन्नपचन्नित्यादौ पूर्वपदेष्वनुस्वारादि पदकार्यं यथा स्यादिति, तेन पदच्छेदकाले त्रीणित्रीणीत्येकं पदं द्वे वा। इह तिङां षट् त्रिकाः संज्ञास्तु तिस्र इति वैषम्यात् संख्यातानुदेशो न प्राप्नोति। अत्र यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाविधाने प्रयोजनं नास्ति नैतावता यथाभिमतविषयलाभस्तत्राह। 'तिङोऽष्टादश प्रत्यया इति'। एवं मन्यते संज्ञा अपि षडेव, कथमेकशेषनिर्देशोऽयं तत्र यदि प्रथमश्च प्रथमश्च प्रथमौ मध्यमश्च मध्यमश्च मध्यमौ उत्तमश्च उत्तमश्चोत्तमौ प्रथममध्यमोत्तमा इति कृतैकशेषाणां द्वन्द्वः क्रियेत ततो नाभिमतसंख्यातानुदेशः स्यात् तस्मात्कृतद्वन्द्वानामेकशेषः प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति। न चैवमपि न विज्ञायते किमादित आरभ्य त्रीणि वचनानि गृह्यन्ते आहो स्विदिच्छातस्त्रिकपरिग्रह इति, नहि त्रिकपरिग्रहेऽपि यथासंख्यशास्त्रं क्रमते किं तर्हि विहितेषु संज्ञानां क्रमेण संबन्धं विधत्ते, एवं तर्हि लोकत एतत्सिद्धं तद्यथा विंहव्यस्य द्वाभ्यांद्वाभ्यामग्नि रूपस्थेय इति न चोच्यते आनुपूर्व्येणेति, अथ च विंहव्याख्यस्य सूक्तस्यादित आरभ्य आनुपूर्व्येण द्वाभ्यांद्वाभ्यामृग्भ्यामग्निरुपस्थीयते न याभ्यां काभ्यां चित् तत्र तिङोऽष्टादश प्रत्यया इत्यनेनादित आरभ्य त्रिकाणामानुपूर्व्येण ग्रहणं लोकात इति दर्शयितुं तिङ्ग्रहणेन संनिवेशोऽस्तीति दर्शितं, न च परस्मैपदसंज्ञक इत्यादिना तु कृतद्वन्द्वानामेकशेषो न कृतैकशेषाणां द्वन्द्व इति दर्शितं, यदि वा परस्मैपदग्रहणमात्मनेपदग्रहणं चानुवर्तते तिङ्ग्रहणं तु शतृक्वसोर्निवृत्त्यर्थं तदनुवृत्तौ च द्वौ राशी भवतः, तयोश्च व्यापारभेदेन सूत्रमेतत्प्रवर्तते, तत्र चैकैकं त्रयस्त्रिका इति यथा संख्यसिद्धिः, तत्र न चेत्या-

दिना राशिद्वयं दर्शितम्, तत्रेत्यादिना तु व्यापारभेदः, अत्रापि महासंज्ञाकरणं पूर्ववत् ॥

"तान्येकवचनद्विवचनबहुवचनान्येकशः" ॥ 'एकश इति'। 'संख्यैकवचनाच्च वीप्सायां' मिति प्रथमान्ताच्छस्। प्रकृतत्वादेव त्रीणीत्यस्य संबन्धे सिद्धे तानिवचनं पुरुषवचनसंज्ञयोः समावेशार्थमन्यथा ह्येकसंज्ञाधिकारे वचनप्रामाण्यात्पर्यायः स्यात् ततश्चा 'डुत्तमस्य पिच्च' 'नित्यं ङित' इति कार्यं वचनसंज्ञापक्षे उत्तमसंज्ञाया अभावान्न स्यात् तानीत्यस्मिंस्तु सति तान्येतानि प्रथमादिसंज्ञाविशिष्टानि त्रीणित्रीणीत्येवं परामर्शाल्लब्धप्रथमादिसंज्ञानामेकवचनादिसंज्ञाविधानाद् भवति समावेशः। ननु त्रिकाणां पुरुषसंज्ञा एकैकस्य वचनसंज्ञेति विषयभेदान्नायमेकसंज्ञाधिकारविषयः, तत्र, यथा वृद्धिसंज्ञा प्रत्येकमादैचां भवति तथा पुरुषसंज्ञापि त्रीणित्रीणीति वचनात् त्रिषु प्रवर्तमानापि तिबादिषु प्रत्येकमेव प्रवर्त्तते न समुदाये तस्य प्रयोगे ऽभावात् प्रत्येकमेव तेषां धातोरुत्पत्तेः, त्रिग्रहणं तु मर्यादार्थमादित आरभ्य त्रयाणां प्रथमसंज्ञा भवतीति न पुनः समुदाये संज्ञाप्रवृत्त्यर्थं तानि तिङस्त्रीणित्रीणि पदानि भूत्वेति तिबादिसूत्रे समाहारद्वन्द्वे ऽष्टादशावयवपदानि तिङ्शब्दस्य त्रीणित्रीणीति समानाधिकरणस्यापि पुल्लिङ्गतापि सूत्रवद्भवति ॥

"सुपः" ॥ सुबिति प्रत्याहारग्रहणं प्रथमैकवचनादारभ्य सुपः पकारात्, कपस्तु पकारेण न भवति प्राग्दिशीयानां विभक्तिसंज्ञाविधानात्, अन्यथा विभक्तिसंज्ञायामपि इदमेव सुब्ग्रहणमनुवर्त्तेतेति सुप्त्वादेव सिद्धे ऽनर्थकं तत्स्यात्। 'तिङां त्रिकेष्विति'। किमर्थं पुनरिदमुक्तम् इह कश्चिन्मन्यते सूत्रे चकारस्याकरणात्संज्ञामात्रमिह सम्बन्ध्यते नान्यत्किञ्चिदिति तत्र दृष्टान्तप्रदर्शनेन त्रीणित्रीण्येकश इत्यनयोरनुवृत्तिन्दर्शयति, यथा तिङां वचनसंज्ञा विहिता तथैव सुपामपीत्यर्थः। तथा च स्वयं चशब्दं पठित्वा व्याचष्टे। 'सुपश्चेत्यादि' ॥

"विभक्तिश्च" ॥ चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः तिङां

व्यवहितानामपि स्वरितत्वादनुवृत्तिः, तिङां विभक्तित्वे प्रयोजनम् याता-मादौ 'न विभक्तौ तुस्माः' इति निषेधः, सुपां तु त्यदाद्यत्वादिकमपि ॥

"युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" ॥ लस्य तिबा-दय इत्यनेनैकवाक्यतामापन्नेनानेन तिबादीनां विशिष्टविधानमुत विहि-तानां तिबादीनां भिन्नेनानेन वाक्येन नियम इति संशये नियम इत्याह । 'लस्येत्यधिकृत्येति' । विशिष्टविधाने त्वितरेतराश्रयं स्यात् सतां तिबा-दीनां प्रथमादिसंज्ञा संज्ञायां च तिबादयो भाव्यन्तइति, स पुनर्नियम उपप-दनियमो वा स्याद् युष्मदि मध्यम एव अस्मद्युत्तम एव शेषे प्रथम एवेति, पु-रुषनियमो वा युष्मद्येव मध्यमोऽस्मद्येवोत्तमः शेष एव प्रथम इति, तत्राद्ये पक्षे कुर्वंस्त्वं कुर्वाणस्त्वमिति युष्मदि शतृशानचौ च न स्यातां तृजाद-यश्च न स्युः कर्ता त्वं कारकस्त्वमिति । नैष दोषः । एतावान् विषयो युष्मदस्मदुपपदं शेषश्च सर्वश्चासौ पुरुषेषु नियतः, उच्यन्ते च तृजा-दयस्ते वचनाद्भविष्यन्ति, तुल्यजातीयस्य च नियमेन व्यावृत्तिः, युष्मदि मध्यम एव न प्रथमोत्तमौ अस्मद्युत्तम एव न प्रथममध्यमौ शेषे प्रथम एव न मध्यमोत्तमाविति, एवं तर्हि तिबादिसूत्रे विधीयमानत्वात् प्राधान्यात्तेषामेव नियमो युक्तः शेषग्रहणाच्चोपपदनियमे हि युष्मदस्म-दौ नियते पुरुषा अनियताः शेषश्चानियतः तत्र प्रथम इत्येतावदप्युच्य-मानं नियमार्थं विज्ञायते तत्र च नियमान्तरस्यासंभवात् प्रथम एवेति नियमः, यत्र च प्रथमाप्रथमप्रसङ्गस्तत्रैवंविधो नियमः कर्त्तव्यः शेष एव च तथा प्रसङ्ग इति तत्रैव नियमो भविष्यति किं शेषग्रहणेन, पुरुषनि-यमे तु मध्यमोत्तमौ नियतौ युष्मदस्मदौ वा नियते प्रथमश्च तत्र युष्म-दस्मदोरपि प्रथमप्रसङ्गे शेष एव प्रथम इत्येवं प्रथमनियमः कर्त्तव्यः, न चान्तरेण शेषग्रहणमेवंनियमः शक्यते कर्त्तुमिति कर्त्तव्यमेव शेषग्रह-णम्, अतः शेषग्रहणं सूत्रकारस्यापि पुरुषनियम एवाभिप्रेत इति तमेवाश्र-यति । 'तेषामयं पुरुषनियमः क्रियतइति' । तेषामित्युद्भूतावयवभेद-स्तिबादिसमुदाय उच्यते, पुरुषापेक्षया ऽवयवषष्ठी तेषां तिबादीनामवयवो यो मध्यमपुरुषस्तस्योपपदनियमः क्रियतइत्यर्थः, सापेक्षस्यापि पुरुषश-

र्थस्य गमकत्वात् समासः, अथवा तेषामिति कर्म्मणि षष्ठी पुरुषद्वारको नियमः पुरुषनियमः, पुरुषद्वारेण ते नियम्यन्तइत्यर्थः । उपोच्चरितं पदमुपपदम्, शाकपार्थिवादित्वादुत्तरपदलोपी समासः, उपशब्दः सामीप्ये ततश्च व्यवहिते न भवितव्यमिति शङ्कामपनयति । 'व्यवहिते चेति' । समीपइत्येव सिद्धे उपपदग्रहणादापेक्षिकस्यापि सामीप्यस्य ग्रहणं व्यवहितमपि च व्यवहिततरापेक्षया संनिकृष्टमिति भावः । उपपदग्रहणं तु पूर्वभूतेपि युष्मदि यथा स्याद्, अन्यथा 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परभूते एव स्यात् । ननु यथा स्थानिन्यपीति वचनात् सर्वथा ऽप्रयुज्यमानेपि भवति तथा पूर्वप्रयोगे ऽपि परभूतस्याप्रयोगात् स्थानिनीति भविष्यति । नैतदस्ति । सप्तमीनिर्द्देशात् प्रयोगपक्षे परभूत एव स्यात् । 'समानाभिधेय इति' । अधिकरणशब्दोभिधेयवचन इति दर्शयति । पुनः समानाभिधेये लकारेण नियम्यमानेन वा पुरुषेण, त्रिविधं चाभिधेयं लकाराणां भावः कर्म कर्ता च, तत्र द्रव्यवाचिनोर्युष्मदस्मदोर्भाववाचिना लान्तेन सामानाधिकरण्यासंभवात् कर्तृकर्म्मणोरेव ग्रहणमित्याह । 'तुल्यकारक इति' । तुल्यमेकं कारकं यस्य तत्तयोक्तं, स्थानिन्यपीति स्थानशब्दः प्रसङ्गवाची स्थानमस्यास्तीति स्थानी तत्र च प्रयुज्यमानस्याप्रयुज्यमानस्य च प्रसङ्गोस्ति उच्यते चेदं स्थानमस्यास्तीति, तत्र सामर्थ्यादवधारणं विज्ञायते प्रसङ्ग एव यस्य न तु प्रयोग इति । यद्वा स्थनिकार्यप्रसिद्धिरेषा यस्य स्थाने आदेशो विधीयते स स्थानीति इह त्वप्रयुज्यमानता सादृश्यात् युष्मदि प्रयुज्यते, सर्वथा स्थानिन्यपीत्यस्याप्रयुज्यमानेपीत्यर्थः, अपिशब्दात्प्रयुज्यमानेपि तदाह । 'स्थानिन्यपीत्यादिना' । स्थानिन्यपीति कोर्थः प्रयुज्यमानेप्यप्रयुज्यमानेपीत्यर्थः । उपपदग्रहणप्राप्तस्य चार्थस्यापिशब्दोनुवादः । समानाधिकरण इति किं, त्वया गम्यतइत्यत्र मा भूत् । क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते, इह च अतित्वं पचति अत्यहं पचतीत्यत्रातिक्रान्तप्रधाने समासे युष्मदस्मदोरसामानाधिकरण्यात् प्रथम एव भवति, इह त्वीषदसमाप्तस्त्वं त्वत्कल्पः पचसि मत्कल्पः पचामीति कालान्तरदृष्टगुणरहितो युष्मदस्मदर्थ एव त्वत्कल्पमत्कल्पशब्दाभ्यामुच्यतइति मध्यमोत्तमौ

भवतः, तत्सदृशपदार्थान्तराभिधाने तु प्रथमः, तथा त्वत्तरः पचसि मत्तरः पचामि परमत्वं पचसि परमाहं पचामीति, कालान्तरादृष्टगुणातिशयविशिष्टो युष्मदस्मदर्थ एवोच्यते इति भवत्येव। एवं च युष्मदर्थे मध्यमः, अस्मदर्थेउत्तम इतीयता सिद्धं युष्मदस्मदर्थे चेल्लकार उत्पद्यस्तर्ह्येव मध्यमोत्तमावित्यर्थः, तथा तु न कृतमित्येव, इह चात्वं त्वं संपद्यतइति त्वद्भवतीति भवति प्रकृतेरेव विकाररूपेण सम्पत्तौ कर्तृत्वा,देतच्चान्महत इत्यत्रोपपादयिष्यामः, तथा च मन्त्रे, 'यदग्ने स्यामहं त्वं त्वं वास्या अह'-मिति, अहं त्वं स्यां त्वं वाहं स्या इति प्रकृत्याश्रयः पुरुषो दृश्यते, इह भवान्पचत्विति युष्मदर्थप्रतीतेः स्थानिन्यपीति मध्यमः प्राप्नोति, न वा-युष्मदर्थत्वात्, अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिङ्गवान् न च सम्बोधनैकविषयः यथैव हि माणवकाधीष्वेत्यभिमुखीभावो गम्यते एवं त्वमधीष्वेत्यपि, तथा च युष्मदः सर्वत्रैव संबोधने प्रथमा आमन्त्रितासुदात्तत्वं च भवति पदात्परत्वे च निघात इति केचिदाहुः। उक्तं च

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते।
तथा सम्बोधने सर्वा प्रथमां युष्मदो विदुः॥
युष्मदर्थस्य सिद्धत्वाच्चियताबाद्युदात्तता।
युष्मदः प्रथमान्तस्य परश्चैच पदादसौ॥

इति। सत्यं, सम्बोधनैकविषयो युष्मच्छब्दः प्रथमा तु शुद्धैव, अभिमुखीभावस्यापि प्रातिपदिकार्थ एवान्तर्भावात्, यत्र त्वनन्तर्भावः तत्र तदभिद्योतनाय सम्बोधने चेति प्रथमा विधीयते स्वरोप्यन्यथा युवं हि स्थः स्वर्पती, यूयं यात स्वस्तिभिः, हये देवा, यूयमिदापयस्थेति पादादावप्यन्तोदात्तत्वं पदात्परत्वेप्यनिघातः। तदेवं भवच्छब्दस्यासम्बोधनविषयत्वाल्लिङ्गवत्त्वाच्चायुष्मदर्थत्वाद् मध्यमो न भवतीति स्थितम्॥

"प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च"॥ 'प्रहासे गम्यमान-इति'। यत्र भूतार्थाभावादुक्त्यनैव केवलं तत्र वक्तुरभिप्रायाविष्करणे प्रहासो

गम्यते, मन्यतिशब्दस्यैकदेशानुकरणं मन्येति, मन्य उपपदं यस्य स तथोक्तः, लस्य धातोर्विधानात्तदादेशत्वाच्च मध्यमस्य धातुरन्यपदार्थ इत्याह । 'मन्योपपदे धाताविति' । प्रकृतिभूते सतीत्यर्थः । 'स चैकवदिति' । अर्थद्वारकश्चोत्तमस्यैकवद्भावः, एकस्य वाचको भवतीत्यर्थः, द्वयोर्बहुषु मन्तृषु एकवचनमेव भवतीति यावत्, यत्र हि द्वौ मन्तारौ बहवो वा तत्रैकवद्भावो विधेयोऽन्यत्र तु मन्तुरेकत्वादेव सिद्धम् । एकवच्चेति चशब्दोऽन्वाचये तेनैकवद्भावाभावेपि एकस्मिन्नपि मन्तरि प्रधानशिष्टौ मध्यमोत्तमौ भवतः । अन्वाचयमेव दर्शयितुमयत्नसाध्यमेकं मन्तारमुदाहरति । 'एहि मन्ये ओदनं भोक्ष्यसइति' । सत्यप्योदने भोक्तुमागतं श्यालादिकं प्रति एतत्प्रयुज्यतइति परिहासावगतिः, द्विबह्वोस्तूदाहरणे एतं मन्ये ओदनं भोक्ष्येथे नहि भोक्ष्येथे भुक्तः सोऽतिथिभिः, एहि मन्ये रथेन यास्यथ यातस्तेन पिता इति । 'मध्यमोत्तमयोः प्राप्तयोरिति' । युष्मदस्मदर्थस्य गम्यमानत्वात् प्रत्युदाहरणवत् प्रकृतमुपपदग्रहणं युष्मदा सम्बद्धं तच्च तथैवेहाप्यनुवर्त्यमिह मा भूत् एतु भवान्मन्यते ओदनं भोक्ष्ये भुक्तः सोऽतिथिभिरिति तदशक्यं मन्यतिना सम्बद्धुमिति पुनरिहोपपदग्रहणम्, अन्यथा मन्यतौ परत एव स्यात् श्यनानिर्देशान्मन ज्ञानइत्यस्य ग्रहणं न तु मनु अवबोधनइत्यस्य, एहि मनुषे रथेन यास्यामीति एवं तस्य भवति । प्रत्युदाहरणे अतिथिं प्रति तथाभूतार्थवचनम् ॥

"अस्मद्युत्तमः" ॥ यत्र युष्मदस्मदी द्वे अप्युपपदे भवतस्तत्र यदि कर्तृशक्ती स्वाधारनियते विवक्ष्येते तदा लकारोपि भेदेनोत्पद्यते त्वं चाहं च पचसि पचामि चेति, सहविवक्षायां तु द्वयोरपि शक्त्योरेको लकार उत्पद्यते तत्र युष्मदि मध्यमोऽस्मद्युत्तमो विप्रतिषेधेन, त्वं चाहं च पचावः, अहं च त्वं च वृत्रहन् संयुज्याविति । यदापि त्यदादीनां यद्यत्परमित्यस्मदः शेषस्तदापि स्थानिन्यपीति मध्यमप्राप्तौ परत्वादुत्तम एव भवति आवां पचावः ॥

"शेषे प्रथमः" ॥ उपपदइति निवृत्तं शेष इति विषयसप्तमी न पुनः परत इति तदाह । 'शेष इति' । 'मध्यमोत्तमविषयादन्य उच्यतइति' ।

अन्यो विषय इत्यर्थः। यत्र युष्मदस्मदी समानाधिकरणे न स्तस्तत्र शेष इत्यनेन युष्मदस्मदोरभावः शेषो न पुनरन्यसद्भाव इति दर्शयति किं सिद्धं भवति त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः, त्वं चाहं च देवदत्तश्च पचाम इति। अत्र यद्यपि युष्मदस्मदोरन्यस्य च यः समुदायः स युष्मदस्मद्भ्यामन्यस्तथापि युष्मदस्मदी तावत्स्त इति तत्सद्भावनिमित्तौ मध्यमोत्तमौ भवतः। न तु तदभावनिमित्तः प्रथमः, अन्यसद्भावे तु निमित्ते स्यादेव प्रथमः। यदाह तत्र युष्मदन्येषु प्रथमप्रतिषेधः शेषत्वादिति ॥

"परः सन्निकर्षः संहिता" ॥ 'परशब्दो ऽतिशये वर्त्तत इति'। यथा परं सुखं परं दुःखमिति, दिगादिषु वर्त्तमानस्य ग्रहणं न भवति सन्निकर्षस्य दिग्देशकालायोगात् अर्थान्तरापेतमन्यत्वम् अव्यभिचारिसन्निकर्षः प्रत्यासत्तिरिति न तु संश्लेषस्तस्य वर्णेष्वसंभवात् सहि संयोगश्चेद् द्रव्यधर्म्मत्वान्न शब्दस्य गुणस्य संभवति, समवायश्चेन्न वर्णे वर्णः समवैति शब्दस्याकाशसमवायित्वात्, येषां तु शब्दो द्रव्यं तेषां न क्वापि शब्दः समवैति अतिशयोपि संयोगसमवाययोः कीदृश इति न विद्मः, प्रत्यासत्तेस्त्वपेताभेदात् सम्भवति प्रकर्षाप्रकर्षयोगः, तस्मात्प्रत्यासत्तिरेव संनिकर्षः। ननु च क्रमेणोच्चार्यमाणेषु वर्णेषु पूर्वस्य वर्णस्य ये निष्पादकाः स्थानादयस्तेषां व्यापारोपरतौ वर्णान्तरस्य ये निष्पादकास्तेषां व्यापारारम्भः, तत्रावश्यं मध्ये कियत्यपि कालकला भवति सूक्ष्मत्वात्तु नोपलभ्यते पद्मपत्रशतव्यक्तिभेदवत्तत्कथं परः सन्निकर्ष इत्यत्राह। 'अर्धमात्राकालव्यवधानइति'। सत्यम्, एतावद्व्यवधानमवर्जनीयत्वात्सह्यते ऽधिकेन तु कालेन व्यवधानं परग्रहणेन व्यावर्त्यतइत्यर्थः। यद्येवं द्रुतायामेव वृत्तौ स्यान्न मध्यमायां विलम्बितायां वा नहि तथा तयोः सन्निकर्षो यथा द्रुतायां तुल्यः सन्निकर्षः सर्वासु वृत्तिषु नैरन्तर्येणोच्चारणाद्वर्णोपलम्भकभेदात्तु वृत्तिविशेषः, द्रुतायां स्वल्प उपलब्धिकालो मध्यमायामधिकः विलम्बितायामधिकतरः, द्विविधा हि ध्वनयः प्राकृता वैकृताश्च, प्राकृता वर्णानामुत्पादका, वैकृते तु पुनःपुनरुपलम्भः, मध्यवर्ती तु कालः सर्वासु

वृत्तिषु तावानेव। यद्वा यस्यां वृत्तौ यावता कालेन व्यवायोऽवश्यम्भावी ततोऽधिकेन व्यवायः परग्रहणेन व्यावर्त्यते, पदस्य पदान्तरेण यदानन्तर्यं तत्रैव लोके संहिताशब्दः प्रसिद्धः, तथा च संहितामधीते न पदानि पदान्यधीते न संहितामिति वक्तारो भवन्ति, ततश्च कुमार्यावित्यादौ पदावयवे संहिताकार्यं न स्यादिति सूत्रारम्भः॥

"विरामोऽवसानम्"॥ 'विरतिर्विराम इति'। विराम इति भावे घञ्, विरामो वर्णोच्चारणाभावः। अर्थान्तरमाह। 'विरम्यतेऽनेनेति वा विराम इति'। 'कृत्यल्युटो बहुल' मित्यसंज्ञायामपि 'हलश्चे' ति करणे घञ्, पूर्वत्राभावः संज्ञी उत्तरत्रान्त्यो वर्णः, तेन हि विरम्यते, तत्राद्ये पक्षे खरवसानयोरिति परसप्तमी, कथं पुनरवसानेन, पौर्वापर्यमभावो हि सः, खरा वा कथं, नहि यदा खरस्ति तदा रेफो यदा रेफस्तदा खर् वर्णानां क्रमभावित्वाद् उच्चरितप्रध्वंसित्वाच्च। अथ तत्र बुद्धिपरिकल्पितं पौर्वापर्यं तदभावेऽपि समानमेवं वावसाने इत्यत्रापि। द्वितीये तु पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते खरि परतो रेफस्य विसर्जनीयो भवति अवसाने च रेफे स्थानिनि विसर्जनीय इति स्थान्यादेशस्य विषयता विवक्ष्यते एवं 'वाऽवसान' इत्यत्रापि। 'दधि मध्विति'। 'अणो प्रगृह्यस्यानुनासिकः' अत्र वावसानइति वर्त्तते। ननु च लोकएवावसानशब्दो विरामे प्रसिद्धः, यद्यप्यवपूर्वः स्यतिरवगतौ वर्त्तते केनैतदवसीयतइति, पराभवेऽपि अवसितो देवदत्त इति, अवसानशब्दस्तु विरामएव प्रसिद्धः न च रेफस्यावगतिपराभवयोः करणत्वं सम्भवतीति नार्थः संज्ञाकरणेन तदाह। 'संहितावसानयोर्लोकविदितत्वात् सिद्धमिति' संहिताशब्दोऽपि सन्निकर्षमात्रे प्रसिद्धो न पदयोरेव सन्निकर्ष इति वार्तिककारो मन्यते॥

हरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमाध्यायस्य चतुर्थः पादः॥ संपूर्णश्च प्रथमोध्यायः॥

——०——

# अथ द्वितीयाध्यायः ॥

"समर्थः पदविधिः" ॥ 'परिभाषेयमिति'। नाधिकारः पदविधिग्रहणात्, अन्यथा वक्ष्यमाणानां पराङ्गवद्भावादीनां पदविधित्वाव्यभिचारादनर्थकं तत्स्यात्। परितः सर्वतः पूर्वत्र परत्र व्यवहिते चानन्तरे च भाष्यते कार्यमनयेति करणे 'गुरोश्च हल' इत्यकारप्रत्ययः, भावसाधन एव वाऽभेदोपचारात्सूत्रे प्रयुज्यते, इदंशब्दस्य सूत्रे प्रयुक्तस्यापि विधेयपरिभाषाशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता। 'स सर्व इति'। ननु यः कश्चित्पदविधिरिति सामान्यनिर्देशेनैव तद्धर्मभूता व्याप्तिरुक्ता किं सर्वग्रहणेन, नैतदस्ति। यः कश्चिद्ब्राह्मण आनीयतामित्युक्ते क्षत्रियादिनिवृत्तिः प्रतीयते न व्याप्तिः, प्रथमपठितमपि समर्थशब्दमुल्लङ्घ्योद्देश्यसमर्पकत्वबलादार्थेन क्रमेण प्रथमे भाविनं पदविधिशब्दं व्याख्यास्यन्विधिशब्दः कर्मसाधन इति दर्शयति। 'विधीयतइति विधिरिति'। कार्यमित्यर्थः। 'पदानामिति'। शेषलक्षणा षष्ठी। पदानां सतां यत्कार्यं विधीयतइत्यर्थः। यदि तु भावसाधनो विधिशब्द आश्रीयेत विधानं विधिरिति ततः पदेषु कृद्योगलक्षणा कर्मणि षष्ठी पदानामसतां निष्पादनं पदविधिरिति तत्र समासतद्धितसुब्धातुवृत्तयो न संगृहीताः स्युस्तत्र हि पदानां सतां समासादिकार्यं विधीयते न पुनः पदत्वं, ननु च कर्मसाधनपक्षेपि विभक्तिविधानमसंगृहीतं स्यात् पदान्येव हि तत्र विधीयन्ते न तु पदानां सतां किं चिद् उच्यते, कर्मणि द्वितीयेत्यादिना तु नियमः क्रियते न पदविधिः। अथाप्येकवाक्यतया स्वादिसूत्रेण विभक्तीनां विधानम् एवमपि कारकविभक्तिषु तावत्क्रियाकारकयोरविनाभूतः सम्बन्धः, उपपदविभक्तीनां 'त्वन्तरान्तरेणयुक्त' इत्यादीनामुपसर्गविभक्तीनां च नेर्विश इत्यादीनामेकवाक्यतायां भिन्नवाक्यतायां च पदविधित्वमस्त्येव उपपदानामुपसर्गाणां च पदत्वात्, समासादिरित्यादिशब्देन तद्धितवृत्त्यादीनां ग्रहणं तद्धिता अपि सुबन्तादुत्पद्यन्ते। 'समर्थानां प्रथमाद्वे'त्यस्य तु समर्थग्रहणस्य प्रयोजनं तत्रैव वक्ष्यामः, एव 'भिसुसोः सामर्थ्ये' इत्यादीनामपि समर्थः शक्त इति तत्रैव समर्थशब्दस्य रूढत्वात् स्वकार्यनिष्पादनक्षमो हि लोके समर्थ इत्युच्यते, अर्थप्रतिपादनं च शब्दानां स्वकार्यव्युत्पाद्यत्वेन चाधिकृता लौकिका वैदिकाश्च यस्य कस्य चित्प्रतिपादने समर्था, उच्यते चेदं समर्थ इति तत्र सामर्थ्याद्विशेषोऽवगम्यते

स तु विशेषः प्रत्यासत्तेरेवंरूप इत्याह। 'विग्रहवाक्यार्थाभिधानइति'। विशेषेण गृह्यते ज्ञायतेनेन समासार्थ इति विग्रहः, तादृशं च तद्वाक्यं चेति विशेषणसमासः। यद्वा विशेषेण ग्रहणं विग्रहः, तदर्थं वाक्यं विग्रहवाक्यम्, अश्वघासादिवत्षष्ठीसमासः। अथ वा ऽभेदोपचाराद्विग्रहार्थंवाक्यं विग्रह इति विशेषणसमासः, तद्यथा राजपुरुष इत्ययं समासः, तदर्थं विग्रहवाक्यं राज्ञः पुरुष इति, अस्य योर्थस्तदभिधाने राजपुरुषशब्दः समर्थः, अतोपि तत्प्रतीतिः, स पुना राजविशिष्टः पुरुषः। 'समर्थो वेदितव्य इति'। साधुत्वेनेति शेषः, यः पदविधिः स विग्रहवाक्यार्थाभिधाने समर्थः सन्साधुर्भवतीत्यस्मिन्पक्षे सूत्रार्थो न.र्थान्तरं साधीयः पश्यामः, तत्तु सामर्थ्यं प्रयोगतो ऽनुसर्त्तव्यं न पुनरयं वृत्तिरस्य वाक्यस्यार्थाभिधानसमर्था नान्यस्येत्येतत्सूत्राक्षरैर्लभ्यते। अत एवास्मिन्व्याख्यानेऽपरितुष्टः सन्व्याख्यःनान्तरमाह। 'अथ वेति'। अत्र पक्षे उपचरितवृत्तिः समर्थशब्दस्तदाह। 'समर्थपदाश्रयत्वादिति'। समर्थानि पदान्याश्रयो यस्य स तथोक्तः, अन्वर्थश्च समर्थशब्दो न रूढ इत्याह। 'समर्थानां पदानां संबद्धार्थानां संसृष्टार्थानामिति'। यः पदानां विधिः स समर्थानां वेदितव्यः, समर्थानामिति, कोर्थः, संबद्धार्थानां संसृष्टार्थानां वेत्यर्थः, तत्र वाक्ये संबद्धार्थता व्यपेक्षा हि तत्र सामर्थ्यम् अन्योन्यापेक्षा व्यपेक्षा आकाङ्क्षासंनिधियोग्यत्वेषु सत्सु यः परस्परसम्बन्धः सा व्यपेक्षा, वाक्ये हि राज्ञ इति पदमनियतसंबन्ध्यपेक्षयोद्भूतसंबन्धं विशेषणभूतमर्थमाचष्टे स्वसंनिहितं योग्यं च पुरुषमपेक्षते, ममायमिति पुरुष इत्यनेनापि पुरुषः स्वनिष्ठोभिधीयमानः स्वसंनिहितं राजत्वमवच्छेदकत्वेनापेक्षतेऽहमस्येति, अतो विशेषणविशेष्यभावेन संबन्धो ऽनियतसंबन्धिविषयत्वाच्चापेक्षया यो यः संनिहितो योग्यश्च तेन सम्बध्यते राज्ञः पुरुषश्चाश्वश्च राज्ञो देवदत्तस्य च पुरुष इति नार्थान्तरस्य, वृत्तौ तु संसृष्टार्थता एकार्थीभावो हि तत्र सामर्थ्यं वृत्तौ हि राजपदं राजानमभिधाय न तावति पर्यवस्यति पुरुषमप्याचष्टे यथा गङ्गायां घोष इति गङ्गापदं तीरं, यदि तु तावत्येव पर्यवस्येत्ततो यथा वाक्ये राज्ञः पुरुषोश्वश्चेति द्वाभ्यां सम्बन्धो भवति

तथा राजपुरुषोऽश्वश्चेत्यत्रापि स्यात् स्वविशेषणसम्बन्धोपि स्याद् ऋद्धस्य राजपुरुष इति, यथा ऋद्धस्य राज्ञः पुरुष इति तथा पुरुषपदमपि राजविशिष्टमेव पुरुषमाचष्टे न पुरुषमात्रं यदि तथा स्यात्ततो यथा वाक्ये राज्ञः पुरुषो देवदत्तस्य चेति द्वाभ्यां सम्बन्धो भवति तथा राजपुरुषो देवदत्तस्य चेत्यपि स्यात्, अतो यस्य विशेषस्य भावादयं विशेषः स एकार्थीभावः, भाष्योक्ताश्चापरे विशेषाः सुबलोपो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः स्वरभेदश्च संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं च योगश्चेति, तथा सुपि अलोपश्च भवति वाक्ये राज्ञः पुरुषो नीलमुत्पलमिति, समासे तु द्वयोरेकस्मिन्विशिष्टेर्थे वृत्तेः पृथगर्थाभावात्स्वभावत एव विभक्तिर्निवर्त्तते सैव च स्वाभाविकी निवृत्तिः शास्त्रेणान्वाख्यायते 'सुपो धातुप्रातिपदिकयो' रिति प्रत्ययलक्षणेन नलोपादिपदकार्यं यथा स्यादिति पृथगर्थाभावे तु पृथग्विभक्तिर्न भवति यथा वर्णेषु व्यवधानं च पृथगर्थत्वएव दृष्टं राज्ञ ऋद्धस्य पुरुष इति, असत्यदृष्टं, यथा राजपुरुषपदे न मध्ये पदान्तरं प्रक्षिप्यते प्रयोगनियमश्च पृथगर्थत्वे ऽदृष्टः राज्ञः पुरुषः पुरुषो राज्ञ इति, असति तु तत्र न दृष्टो यथा पुरुषपदे वर्णेषु स्वरभेदोपि पृथगर्थत्वएव दृष्टो राज्ञः पुरुष इति द्वावपि नित्स्वरेणाद्युदात्तौ अभेदेन दृष्टो यथा पुरुष इति वृत्तौ चैकस्वर्यं दृश्यते। किं च संख्याविशेषोवगम्यते पृथगर्थेषु राज्ञः राज्ञोः राज्ञां पुरुष इति, वृत्तौ त्वभेदैकत्वसंख्या गम्यते तदेत 'दलुगुत्तरपद' इत्यत्रोपपादयिष्यामः। व्यक्तं चाभिधानं पृथगर्थेषु तिष्ठति ब्राह्मणस्य कम्बल इति, वृत्तौ त्वव्यक्तमभिधानं तिष्ठति ब्राह्मणकम्बल इति सन्देहो भवति संवृद्धिर्वा स्यात् षष्ठीसमासो वेति, न चात्र स्वरान्निर्णयः, वाक्येप्यामन्त्रितनिघातः कम्बलशब्दो घृतादित्वादन्तोदात्तः समासेप्यन्तोदात्तता, उपसर्जनविशेषणं च व्याख्यातं, योगश्च भवति पृथगर्थेषु राज्ञो गौश्चाश्वश्च कम्बलश्चेति, वृत्तौ त्वैकार्थ्याद्भेदनिबन्धनस्य समुच्चयस्याभावाच्चशब्दो निवर्त्तते राज्ञो गवाश्वकम्बला इति तदेतैर्विशेषैर्विज्ञायते संभिन्नोभयरूपः पांसूदकवदविभागापन्नो वृत्तावर्थ इति तेन राज्ञः पुरुषमानय राजपुरु-

यमानयेति च यद्यप्येक एवानीयत इति कार्ययोगिनोऽभेदस्तथाप्यभिधानप्रकारो भिद्यते यथा ब्राह्मणाः शतं भोज्यन्तां ब्राह्मणानां शतं भोज्यतामिति तदेवं वृत्तिवाक्ययोरर्थो भिद्यतइति स्थितम्, एवं च तत्र तत्र वावचनं चिन्त्यप्रयोजनं भिन्नार्थया वृत्त्या वाक्यस्य बाधाऽप्रसङ्गात्। अन्ये तु जहत्स्वार्था वृत्तिरिति वदन्तो वर्त्तिपदानामानर्थक्यमेवाहुः, तत्तु न रोचयामहे। किं राजपुरुष इत्यत्र राजार्थो न गम्यते ओमिति चेत्पुरुषमात्रानयनं प्राप्नोति अथ गम्यते किं निबन्धना तस्यावगतिः, न तावत्समासस्य तत्र शक्तिः कल्प्या राजशब्दनिबन्धनायामपि तस्यामनर्थाभावात्। न च वाक्ये राजपदं व्युत्पन्नं पुनः समासे व्युत्पत्तिमपेक्षते तावत्येव च प्रतिपद्यते राजार्थः, अतो न जहत्स्वार्था वृत्तिः, अर्थाभिधानप्रकारभेद इत्येतदेव सांप्रतं, तत्र सम्बद्धार्थानां संसृष्टार्थानामिति सामर्थ्यद्वयमपि स्थितं परिभाषाप्रवृत्तौ हेतुर्नान्यतरत् यतो माभूद्व्यपेक्षामात्राश्रयेण सापेक्षस्यापि वृत्तिः, यद्येवं पराङ्गवद्भावे विभक्तिविधाने च सा न प्रवर्त्तेत तत्रैकार्थीभावस्यासम्भवात् माप्रवर्त्तिष्ट पराङ्गवद्भावे तन्निमित्तग्रहणं नोदयिष्यति विभक्तिविधानेपि क्रियाकारकयोर्व्यपेक्षाऽविनाभाविनी क्व चिद्युक्तग्रहणं क्व चिद्योगग्रहणं क्व चित्तृतीयया योगस्याक्षेप इति न क्वापि दोषः, अत एवानन्तरमपि पराङ्गवद्भावमुल्लङ्घ्य समासमुदाहरति। 'वक्ष्यतीति'। 'समर्थग्रहणं किमिति'। सूत्रं किमर्थमित्यर्थः। नहि केवलेन पदविधिग्रहणेन किञ्चित्क्रियते। 'पश्येत्यादि'। ननु च श्रितादिभिर्द्वितीयां विशेषयिष्यामः श्रितादियोगे या द्वितीयेति, एवमपि सापेक्षस्य प्रसङ्गो महत्कष्टं श्रित इति, भवति ह्यत्र श्रितादिनिमित्ता द्वितीया समर्थग्रहणे तु सति न भवति, यद्यप्यत्र वाक्यावस्थायां व्यपेक्षालक्षणसामर्थ्यमस्ति वृत्त्यवस्थायान्तु नैकार्थीभावः संभवतीत्यवोचाम, कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य वृत्तिः। नात्र गुरुणा देवदत्तस्य सम्बन्धः किं तर्हि समुदायेन गुरुद्वारकश्च कुलेन सम्बन्ध इत्यर्थाद्गुरुणापि योगो भवति। उक्तं च।

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्तेपि युज्यन्ते तद्वता सह ॥

इति, अथ वा परिपूर्णार्थस्यान्येन सहैकार्थीभावः स्वार्थपरिपूर्त्तिश्च सम्बन्धिशब्दस्य प्रतियोगिनेति भवति तदपेक्षस्यापि वृत्तिः । उक्तं च

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वैः प्रयुज्यते ।
स्वार्थवत्सा व्यपेक्षास्य वृत्तावपि न हीयते ॥

इति, किं त्वं करिष्यसीत्यादि अत्र शक्यं वक्तुं, 'तत्कृतार्थेनेति'। तच्छब्दः प्रकृतपरामर्शाय तृतीयान्तं समस्यते तदर्थेन यः कृतो गुणस्तद्वचनेनेति, अत्र च यस्य समासः शङ्क्यते शङ्कुलयेति न तदर्थेन कृतं खण्डनं यदर्थेन च कृतं खण्डनमुपलेनेति न तस्य समासः शङ्क्यतइति न भविष्यतीति तस्मान्महत्या शङ्कुलया खण्ड इति सापेक्षमुदाहर्त्तव्यं, 'गच्छ त्वं यूपायेति'। गत्यर्थकर्मणीति चतुर्थी। यद्वा क्रियार्थोपपदस्य च कर्मणीति यूपमाहर्त्तुं गच्छेति अत्राप्येतदर्थत्वादेव दारुणो न भविष्यतीति सापेक्षं प्रत्युदाहर्त्तव्यं महते यूपाय दार्वेति। 'यणादेशो नित्यश्च तुग्भवतीति'। द्वावप्येतौ वर्णविधी, नित्यस्तुक् च 'दीर्घा' दित्ययमेव यस्तु 'पदान्ताद्वे' ति विकल्पितस्तुक् स पदविधित्वादत्र न भवति। अन्ये तु यणादेशोऽनित्यश्च तुग्भवतीत्यकारप्रश्लेषं वर्णयन्तः'पदान्ताद्वे'ति विकल्पितस्तुग्भवतीति व्याचक्षते। नन्वसौ पदविधिर्नेति, आह, तत्रान्तग्रहणं न कर्त्तव्यं प्रकृतेन दीर्घेण पदस्य विशेषणादेव दीर्घान्तस्य पदस्येति सिद्धम् एवं सिद्धेन्तग्रहणस्यैतत्प्रयोजनं पदान्तस्य दीर्घस्य वर्णस्य विधिस्तुक् यथा स्याद्दीर्घान्तस्य पदस्य मा भूदिति ॥

"सुबामन्त्रिते पराङ्गवत्स्वरे" ॥ 'परस्याङ्गवदिति'। तस्यैव पदस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति तद्ग्रहणेन गृह्यतइत्यर्थः । 'तादात्म्यातिदेशोयमिति'। अङ्गशब्दस्यावयववचनत्वात् तस्यामन्त्रितस्यात्मा तदात्मा तस्य भावस्तादात्म्यं तत्स्वभावत्वमित्यर्थः, एतदेव स्पष्टयति। 'सुब-

न्तमिति'। अनुप्रविशति अन्तर्भवति सुबन्तामन्त्रितसमुदाय एकस्मिन्नामन्त्रिते संपन्ने यः स्वरः शक्यते कर्तुं स कर्तव्य इत्यर्थः, कः पुनरसौ आद्युदात्तत्वं समुदायस्य च पदात्परत्वे निघातः। 'कुण्डेनाटन्निति'। नन्वत्र सति तावत्पराङ्गवद्भावे समुदायस्याद्युदात्तत्वं शेषनिघातश्च असत्यपि कुण्डशब्दो 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्तः पदात्परमामन्त्रितं निहन्यते यदा तदाटन्नित्येतत्पादादौ वर्त्तते तदा नास्ति निघात इति द्वयोराद्युदात्तत्वं स्यात्। किं च पुंल्लिङ्गोपि कुण्डशब्दोऽस्ति

पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः।

इति, कुण्डीति च जानपदादिसूत्रेण ङीषि भवति। 'परशुना वृश्चन्निति'। परौ शॄडपरयोः खनिशॄभ्यां डिच्चेति कुप्रत्ययान्तत्वादन्तोदात्तः परशुशब्दः, मद्रशब्दो मदेश्चेति रक्प्रत्ययान्तः, कश्मीरशब्दो घृतादित्वादन्तोदात्तः, 'सुबन्तस्य पराङ्गवद्भावे तन्निमित्तग्रहणं' तस्यामन्त्रितवाच्यस्यार्थस्य यन्निमित्तं तदभिधाय्येव सुबन्तं पराङ्गवदित्यर्थः, उदाहरणेषु तृतीयान्तस्य तावन्निमित्तत्वमस्त्येव षष्ठ्यन्तस्याप्यस्ति, भृत्यनिमित्ता हि राजता देशनिमित्ता वा, एवं गोषु स्वामिन्नित्यत्रापि भवति, तन्निमित्तत्वाभावे तु न भवति मरुत्वां इन्द्र वृषभो रणाय, मरुद्भिरिन्द्र सख्यं ते अस्तु, मायाभिरिन्द्रमायिनम्, एतेनाग्ने ब्रह्मणा वावृधस्व, तत्रेणाग्ने स्वायुस्सम्भरस्व, मित्रेणाग्ने मित्रधेये यतस्व, 'सुबिति किमिति'। तन्निमित्तग्रहणादेव तिङन्तस्य सिद्धो निरास इति प्रश्नः। 'पीड्ये पीड्यमानेति'। नहि सूत्रकारो वार्त्तिककारवचनेनातिव्याप्तिनिवारणं मन्यतइति भावः। पीड अवगाहने चुरादिणिच् उभयत्र कर्मणि लट्, एकत्रोत्तमैकवचनमिट्, अपरत्र शानच्, यकि णिलोपः, तास्यनुदात्तेदिति इटोनुदात्तत्वं, यकः प्रत्ययस्वरः, 'एकादेश उदात्तेनोदात्त' इत्येकार उदात्तः, पीड्यमानेत्यत्रामन्त्रितनिघातः, ननु च समर्थग्रहणानुवृत्त्यैवात्र न भविष्यति, अस्त्यत्रापि सामर्थ्यं, कथं, सम्बोधनपदं क्रियाया एव विशेषकं तथा च व्रजानि देवदत्तेत्यत्रामन्त्रितनिघातो भवति। उक्तं च।

सम्बोधनपदं यद्यत्तत्क्रियाया विशेषकम्।
व्रजानि देवदत्तेति निघातोत्र तथा सति॥

इति। अथ वा हेतुहेतुमद्भावलक्षणोत्र सम्बन्धः, हे पीड्यमान त्वत्पीडयाहमपि पीड्य इति। 'गेहे गार्ग्य इति'। गेहशब्द उञ्छादित्वादन्तोदात्तः, एकस्यामासनादिकायां क्रियायां द्वयोरपि कारकत्वात्तद्द्वारेणास्ति सामर्थ्यम्। 'परग्रहणं किमिति'। सन्निधानादामन्त्रितस्यैव भविष्यतीति प्रश्नः,'पूर्वस्य मा भूदिति'। निमित्तभावएवामन्त्रितस्योपक्षीणतया पूर्वस्यापि स्यादिति भावः, एवं च पूर्वस्यामन्त्रितत्वमतन्त्रं गार्ग्यः कुण्डेनाटन्नित्यादावपि भवति संनिधानादामन्त्रितत्वमपि तन्त्रमिति चेत् यद्येवं परमेव संनिहितमिति न पूर्वं प्रत्यङ्गत्वप्रसङ्गः देवदत्तः कुण्डेनाटन्नित्यत्र पूर्वं प्रत्यङ्गत्वे सति समुदायस्याद्युदात्तत्वं शेषनिघातः, अटन्नित्यामन्त्रितनिघात इति स्वरः,परग्रहणे तु सति देवदत्तशब्दस्यामन्त्रिताद्युदात्तत्वं तथा कुण्डेनाटन्नित्यस्यापि निघातस्तु न भवति 'आमन्त्रितं पूर्वमविद्यमानवदि' ति देवदत्तशब्दस्याविद्यमानत्वात्। छन्दसि तु परमपि पूर्वस्याङ्गवदिष्यते। आ ते पितर्मरुतां सुम्नमेतु, पितरित्यनेन सह मरुतामित्यस्यापि निघातः। 'यथा मृत्पिण्डीभूत इति'। यथा लभेतेत्यन्वयः। अमृत्पिण्डो मृत्पिण्डः संपन्नो मृत्पिण्डीभूतः, तत्र सुबन्तस्य मृत्पिण्डात्मना परिणामासम्भवादेकीभावप्रतिपादनपरमेतत्, मृत्पिण्ड इवैकतामापन्न इत्यर्थः। यद्वा पिण्डीशब्दोप्यस्ति प्रविश पिण्डीमिति तस्यायं प्रयोगः, भूतशब्द उपमार्थः पितृभूत इति यथा, किमर्थं पुनरेवंभूतस्य स्वरप्राप्तये यत्न इत्यत आह। 'उभयोरपीति'। असत्यङ्गग्रहणे कार्यव्यपदेशशास्त्राणामन्यतमातिदेशः स्याद् यथा परस्य कार्यमामन्त्रितस्य स्वरः आमन्त्रितव्यपदेशः स्वरशास्त्रं वा तथा सुबन्तस्यापि तद्भवतीति, एवं चोभयोराद्युदात्तत्वं स्यात्। ननु च पदात्परस्य निघातादुभयोरनुदात्तत्वं माभूदिति वाच्यं, सत्यम्। आमन्त्रितस्यापादादित्वे सति, पादादित्वे तदुक्तम्।'स्वरग्रहणं किमिति'। परत्र परशब्दप्रयोगादेव

वत्यर्थो लभ्यत इति प्रश्नः। 'स्वाश्रयमपि यथा स्यादिति'। नानेन काचित्कत्वमस्योच्यते, एवं हि विषयविभागो न ज्ञायते क्वाङ्गवद्भवति क्व नेति, नापि कादाचित्कत्वं कदा चिदङ्गवत्कदा चिन्नेति, एवं हि सर्वत्र विकल्पः स्यात् तस्मादयमत्रार्थः असति वद्ग्रहणे आम् कुण्डेनाटचिति स्थिते अटचित्यस्य निघाते प्राप्ते कुण्डेनेत्यस्यानुप्रवेशात्कुण्डेनाटचित्येकमामन्त्रितं संपद्यं न च तदेकान्तरमिति प्रतिषेधाभावान्निघात एव स्यात्, वत्करणे तु सति अटचित्यस्य तावदेकान्तरत्वान्निघातप्रतिषेधे आद्युदात्तत्वं प्राप्ते तस्यां दशायां कुण्डेनेत्यस्यानुप्रवेशात्समुदायस्याद्युदात्तत्वं भवति, तदेवं समुदायस्यानेकान्तरत्वेऽपि अटचित्यस्य यदेकान्तरत्वं वत्करणेन लब्धं तेनैव समुदायस्य निघातनिवृत्तिराद्युदात्तत्वं च भवति। 'कूपे सिञ्चिति'। अत्र पराङ्गवद्भावे सति ऐकपद्यात्पत्वप्रसङ्गः स्वाश्रयं पदादित्वं भविष्यति सर्वातिदेशेषु ह्यविरुद्धं स्वाश्रयं भवति, किं च नात्रातिदेशिकं सकारस्य किञ्चिल्लाक्षणीयं कार्यमस्ति अतोऽपि स्वाश्रयं भवत्येव, यथा नमते दण्डः स्वयमेवेत्यत्र यक्प्रतिषेधे शप्, इदं तर्हि चर्म नमत् अत्र पराङ्गवद्भावे सति समानपदस्थत्वात् णत्वं स्यात् सत्यपि समानपदत्वे। 'पूर्वपदात्संज्ञायामग' इति नियमादसंज्ञायां न भविष्यति, नायं नियमस्य विषयः पूर्वपदशब्दो हि समासावयवे रूढः, तेन समासएव नियमः, अथ तु पूर्वं पदं पूर्वपदं पूर्वपदादित्यविशेषेण नियमो व्याख्यायेत ततः स्वरग्रहणं शक्यमकर्त्तुम् अक्रियमाणे च तस्मिन्समानाधिकरणस्योपसंख्यानमित्येतदपि शक्यमकर्त्तुं, कथं परस्याङ्गवद्भावे कृते चिणो लुङ्न्यायेन विषयभेदाल्लक्षणस्यावृत्तौ पूर्वस्यापि पराङ्गवद्भावो भविष्यति, सति तु स्वरग्रहणे स्वरादन्यत्र पराङ्गवद्भावे पराङ्गवद्भावो न सिद्ध्यतीति कर्त्तव्यं, नन्वसति स्वरग्रहणे परशुना वृश्चचित्यत्र वृश्चचिति प्रातिपदिकं, न च प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधः, 'न ङिसंबुद्ध्यो' रिति निषेधाल्लिङ्गात्, तत्र पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् 'सुपो धातुप्रातिपदिकयो' रिति सुब्लुक् प्रसज्येत स्वरग्रहणे तु सति सुब्लुकि कर्त्तव्ये पराङ्गवद्भावाभावः।

नैतदस्ति। पराङ्गवदित्यामन्त्रितं संनिधानात्परशब्देन गृह्यते तस्य रूपस्य सुबन्तैकान्तत्वात्सुबन्तकार्यमेव पराङ्गवद्भावो न प्रातिपदिककार्यं। 'उच्चैरधीयानेति'। उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ पठितौ अधिकरणशक्तिप्राधान्याच्च तस्मिन्निमित्तं च॥

"प्राक्कडारात्समासः"॥ 'यथा सादृश्यदिति'। अनन्तरसूत्रातिक्रमे न किञ्चित्कारणं, ननु प्रत्यय इत्यादिवत्समास इत्येव स्वरितत्वादधिकारोस्तु किं प्राग्वचनेन तत्राह। 'प्राग्वचनमिति'। प्राक्कडारादित्यवधिनिर्देश इत्यर्थः। 'संज्ञासमावेशार्थमिति'। अन्यथैकसंज्ञाधिकारात्पर्यायः स्यात्, अवधिनिर्देशे तु सति तत्सामर्थ्यात्प्राग्ग्रहणमावर्त्तते तेन प्राक् समासंज्ञा भवन्ति समासाः सन्तोऽव्ययीभावादिसंज्ञा इति समावेशसिद्धिः, अथ वा कडारादिति पञ्चम्यैव प्रागिति दिक्शब्दोऽध्याहरिष्यते, न च परागित्यस्याध्याहारप्रसङ्गः, तदध्याहारे हि दिक्समासे बहुव्रीहौ तृतीयासमासे द्वन्द्वे च समास इत्याद्यनुपपन्नं स्यात् कडारात्प्राङ्निर्दिष्टानां समाससंज्ञाया अभावात्, तस्मात्प्रागित्येवाध्याहरिष्यते नार्थः प्राग्वचनेन तत्राह। 'प्राग्वचनमिति'॥

"सह सुपा"॥ सहवचनं किमर्थं यावता तृतीयैव सहार्थमाख्यास्यति यथा वृद्धो यूनेति, सहभूतयोः समाससंज्ञा यथा स्याद् एकैकस्य मा भूद्, अन्यथा पुत्रेण सहागतः पितेत्यत्र यथा द्वयोरप्यागमनेन सम्बन्ध एवं समाससंज्ञापि प्रत्येकमेव स्यात्, सहग्रहणे तु सहभूतयोरेका संज्ञा भवति। किं च स्याद् यद्येकैकस्य संज्ञा स्यात्, इह ऋक्पाद इति समासान्तः प्रसज्येत द्वौ च स्वरौ स्यातां 'कृत्तद्धितसमासाश्चे' त्यत्र तु समासश्च समासश्चेत्येकशेषो व्याख्यास्यते तेन समाससमूहस्य संज्ञाविधिर्नियमार्थ इति वाक्यस्य न भविष्यति, अन्यथा त्वेकैकस्य समासस्य प्रत्ययान्तत्वाद्विध्यर्थं समासग्रहणं स्यात्, 'समासाच्च तद्विषया' दित्यत्रापि प्रातिपदिकादित्यनुवर्त्तते समूहस्य च प्रातिपदिकत्वं न त्वेकैकस्य समासस्येति

समासादित्येकत्वाविवक्षया समूहादेव सिद्धः प्रत्ययः, तदेवं समुदायस्य यथा स्यादेकैकस्य मा भूदिति सहग्रहणं, नैतदस्ति प्रयोजनं, समास इति महती संज्ञा क्रियते ऽन्वर्थसंज्ञा यथा विज्ञायेत यस्मिन्समुदाये पदद्वयं परस्परं समस्यते स समासः, हलश्चेत्यधिकरणे घञ्, तस्मादनर्थकं सहग्रहणं तत्राह। 'सहग्रहणं योगविभागार्थमिति'। सहेत्येको योगः, सुबित्येव, सुप् सह समस्यते केन पदविधित्वात्समर्थेन। 'अनुव्यचलदिति'। तत्र सुब्त्येकत्वस्य विवक्षितत्वाद्वेः पूर्वं समासः पश्चादनोः, तत्र नित्यसमासत्वाद्वेः शाकलाभावः, समासान्तोदात्तत्वं तु न भवति 'तिङ्ङतिङ' इति निघातात्, अनो 'गतिर्गतौ'विति निघातः, वेर्यणादेश उदात्तस्वरितयोरित्यटः स्वरितत्वम्। अन्ये तु सति शिष्टं समासान्तोदात्तत्वं भवतीत्याहुः। विभक्तिस्तु सत्यपि समासत्वेन प्रातिपदिकत्वे न भवति तिङन्तत्वस्योक्तत्वात्, यद्वा वचनग्रहणमुक्तेष्वप्येकत्वादिषु यथा स्यादिति प्रथमैकवचनं हल्ङ्यादिलोपः, एवं चैकपद्यादामनुव्यचलद्वेवदत्तेत्या 'म एकान्तरमामन्त्रितमनन्तिक' इति निघातप्रतिषेधो भवति। योगविभागश्चेष्टसिद्ध्यर्थ इत्यतिप्रसङ्गो नोद्भावनीयः॥

"अव्ययीभावः"॥ इह लघ्वर्थं सञ्ज्ञाकरणमित्येकाक्षरा सञ्ज्ञा कार्या किमर्थं महती क्रियतइत्याह। 'अन्वर्थसञ्ज्ञा चेयमिति'। अनव्ययमव्ययं भवतीत्यव्ययीभावः, भवतेर्णे उपसंख्यानमिति णप्रत्ययः, अन्वर्थत्वे किं सिध्यतीत्यत आह। 'तेनेति'। पूर्वपदग्रहणमव्ययस्योपलक्षणार्थं सूपप्रति शाकप्रतीत्यादावुत्तरपदार्थप्राधान्याच्च स्यात्तस्मादव्ययीभावेऽव्ययार्थः प्रधानमिति सूच्यते, एवं ह्यव्ययानव्ययसमुदायो ऽव्ययधर्मलाभादव्ययं भवतीति, किं सिद्धं भवति, समृद्धा मद्राः सुमद्रा इत्यादावुत्तरपदार्थप्राधान्येऽव्ययीभावस्यातिप्रसङ्गः परिहृतो भवति, पारेगङ्गं द्विमुनि उन्मत्तगङ्गमित्यादौ च वचनादव्ययीभावः, एवं चानव्ययमव्ययं भवतीत्यन्वर्थतयैवाव्ययकार्यस्यापि लाभादव्ययीभावश्चेत्येतदपि न वक्तव्यं, लुङ्मुखस्वरोपचाराः प्रयोजनमिति परिगणनं वक्ष्यामीत्येवमर्थं तदिति चेच, अत्रैव परिगणव्यान्वर्थत्वेन वा विशिष्टकार्यविषयमव्ययत्वमनुमीयताम्॥

"अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु" ॥ श्रुतत्वादव्ययस्यैव विभक्त्यादयो विशेषणानि न समासस्येत्याह । 'विभक्त्यादिष्विति' । 'समस्यतइति' । यद्यपि समास इति सञ्ज्ञामात्रं विधीयते तथाप्ययमबुधबोधनाय भिन्नयोः शब्दयोः संश्लेषः प्रक्रियायां क्रियतइति समस्यतइत्युक्तम् । 'वचनग्रहणं प्रत्येकमभिसम्बध्यतइति' । तच्च कर्मसाधनं विभक्त्यादिभिः समानाधिकरणं, विभक्त्यादिषु वाच्येषु यदव्ययं वर्त्तते विभक्त्यादीनर्थान्यदव्ययं वक्ति द्योतयतीत्यर्थः, विभक्तिशब्देन कारकशक्तिरभिधीयते विभज्यते ऽनया प्रातिपदिकार्थ इति कृत्वा । 'स्त्रीष्वधिकृत्येति' । स्त्रीषु कथा प्रवर्त्यतइत्यन्वयः । अधिकृत्येति, प्रस्तुत्येत्यर्थः । संनिधानाच्च स्त्रिय एव प्रस्तुत्येति गम्यते स्त्रीविषया कथा प्रवर्त्यतइत्यर्थः । प्रायेण तु प्रवर्त्ततइति पाठः । तत्र भिन्नकर्तृकत्वात्क्त्वाप्रत्ययस्यानुपपत्तिः, पुरुषाः प्रस्तुवन्ति कथा प्रवर्त्ततइति । अत्राहुः । अधिकृत्य या कथा सा स्त्रीषु प्रवर्त्ततइत्यर्थः, तत्र प्रस्तावने कथने च कर्त्तुरेकत्वात्सिद्धः क्त्वाप्रत्यय इति । अन्ये त्वाहुः । कृ यस्य कथा कर्त्तव्यकथेत्यर्थः, सा स्त्रीषु अधिप्रवर्त्तते स्त्रीष्वधीति च प्रक्रियावाक्यं न त्वेतत्प्रयोगार्हं समासस्य नित्यत्वात् । 'अधिस्त्रीति' । 'अव्ययीभावश्चे'ति नपुंसकत्वाद्ध्रस्वो नपुंसकइति ह्रस्वः । 'सप्तम्यर्थेऽव्ययमिति' । विभक्तिवचनतां दर्शयति । 'उपकुम्भमिति' । कुम्भस्योपेति प्रक्रियावाक्यं षष्ठ्यन्तेन समासः । 'दुःशकं दुर्यवनमिति' । मनुष्यजातिवचनौ शकयवनशब्दौ, किमर्थं पुनर्व्यृद्धिग्रहणमर्थाभावइत्येव सिद्धं, न सिद्ध्यति, येन समस्यते तदर्थस्याभावोऽर्थाभावः, न चात्र शकानामभावः किं तर्हि तदीयाया ऋद्धेः, अर्थाभाव इत्यर्थग्रहणं यत्र धर्मिस्वरूपस्यैवाभावस्तत्र यथा स्यात् धर्ममात्रप्रतिषेधे मा भूत्, तद्यथा ब्राह्मणेन ब्राह्मण्यामुत्पादितत्वेन कस्य चिद्ब्राह्मणत्वं प्रसज्य प्रतिषेधति नायं ब्राह्मणो यस्तिष्ठन्मूत्रयति, इतरेतराभावे च मा भूत् गौरश्वो न भवतीति अत्रापि वस्त्वन्तरं प्रतिषिध्यते न धर्मिस्वरूपम्, अतिशीतमित्यर्थाभावः कालानवच्छिन्नोऽभाव आश्रीयते इह

तु संप्रत्यभाव इत्यत्ययस्य भेदेनोपादानम् । 'अतितैसृकमिति' । तिसृका नाम ग्रामः तिसृभावे संज्ञायां कन्युपसङ्ख्यानं, तत्र भवं तैसृकमाच्छादनं तच्च कालविशेषउपभोग्यम्, उष्णे शीते वा ऽतिशब्दो नेदानीमित्यस्यार्थे वर्त्तते, उपभोगक्रिया च वृत्तौ स्वभावादेवान्तर्भवति यथा दध्युपसिक्त ओदनो दध्योदन इति तद्द्वारेण पूर्वोत्तरपदयोः सामर्थ्यं नेदानीमुपभोगार्हं तैसृकमाच्छादनमित्यर्थः । आच्छादनापेतस्यापि तैसृकशब्दस्य गमकत्वात्समासः, नात्र तैसृकस्य कालानवच्छिन्नोभावो नापि संप्रति तस्याभावः किं तर्हि तदुपभोगस्येत्यर्थाभावादत्ययाच्चासंप्रति भिद्यते । 'तत्पाणिनीति' । तच्छब्दो निपातोऽप्यस्ति । 'प्रत्यर्थमिति' । अर्थमर्थं प्रतीति वाक्यमप्यत्र भवति भाष्यप्रयोगात्, यदि वा नात्राव्ययं वीप्सावृत्ति किं तर्हि कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति वीप्सा तु द्विर्वचनद्योत्या, अनुपूर्वस्य भाव आनुपूर्व्यं ब्राह्मणादित्वात्ष्यञ्, ष्यञः षित्करणात्स्त्रियामपि भवति तस्य प्रयोगः, एवं ज्येष्ठानुपूर्व्येति । 'सचक्रमिति' । सहशब्दस्य समासः, 'अव्ययीभावे चाकाल' इति सभावः, एवमुत्तरेष्वप्युदाहरणेषु । 'गुणभूतेपीत्यादि' । यदि सादृश्यइति नोच्येत पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात्प्रधानं तदेव स्यात् सादृश्यं किख्येति, गुणभूते न स्यात् । 'सदृशः किख्येति' सादृश्यवतः प्राधान्यदर्शनेन सादृश्यस्य गुणभावं दर्शयति । 'सकिखीति'। पूर्ववद्ध्रस्वः, अपचितपरिमाणः शृगालः किखी,अप्रसिद्धोदाहरणं चिरन्तनप्रयोगात् । सम्पत्तिशब्दस्य समृद्धौ रूढत्वात्पुनरुपादानं व्यर्थमित्याशङ्क्याह । 'सम्पत्तिरनुरूप आत्मभाव इति'। 'सब्रह्म बाभ्रवाणामिति' । तेषामनुरूपो ब्रह्मभाव इत्यर्थः। 'सतृणमिति'। न चात्र तृणभक्षणं वास्तवमित्याह । 'न किंचिदिति' । तृणभक्षणमधिकोऽर्थस्तद्वचनेन किंचिदभ्यवहार्यं न परित्यजतीत्ययमर्थः प्रतिपाद्यते तृणानि भक्षयन्कथमन्यत्परित्यजेदिति। 'परिग्रहापेक्षयेति' । इदानीमेतावान्प्रदेशोऽध्येतव्य इति यावतः प्रदेशस्य परिग्रहस्तदपेक्षया समाप्तिरन्तः स चासकलेप्यध्ययने भवतीति भावः । 'साग्नीति'। अग्न्यादयः शब्दास्तदर्थे ग्रन्था वर्त्तन्ते तदानीं परिगृहीतस्य

प्रदेशस्याम्न्यादिरक्तो न तु ततः परेणाध्ययनं नास्ति ततश्च न साक-ल्यमित्याह । 'इयमिति' ॥

"यथाऽसादृश्ये" ॥ सादृश्ये समासस्य पूर्वेणैव सिद्धत्वादसंदेहार्थं सादृश्ये यथेत्यवचनाच्च नञोऽत्र प्रश्लेषः 'असादृश्यइति किमिति'। सूत्रं किमर्थमित्यर्थः । 'यथा देवदत्त इति'। देवदत्तस्य यज्ञदत्तं प्रत्युपमानत्वं यथाशब्दो द्योतयति, तत्रोपमानस्योपमेयापेक्षत्वेऽपि यथादेवदत्तश-ब्दयोः सामर्थ्यात्परस्परेण समासप्रसङ्ग इति भावः । अथ पूर्वेणात्र सादृश्यइति वा यथार्थे इति वा कस्मान्न भवतीत्याह । 'पूर्वेणैवेति' ॥

"यावदवधारणे" ॥ 'यावन्त्यमत्राणीति'। यावदित्यव्ययं चास्ति तद्धितान्तं च विद्यते ऽतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः ॥

"सुप् प्रतिना मात्रार्थे" ॥ 'अस्त्यत्र किंचित्सूप इति'। किंचिदि-त्यव्ययं सूप इति पुल्लिङ्गेन समानाधिकरणम्। 'सुबिति वर्त्तमानइति'। सुबामन्त्रितइत्यतः । 'अव्ययनिवृत्त्यर्थमिति'। पूर्वं हि सुब्ग्रहणमव्य-यग्रहणेन सम्बद्धुं तथा च पूर्वसूत्रेऽव्ययस्यैव ग्रहणादनव्ययेन सह विग्रहः कृतः स्वरादीनां च दोषामन्यमहर्दिवामन्या रात्रिरिति वृत्तिविषये सत्त्व-प्रधानतादर्शनान्मात्रावतिवृत्तिरविरुद्धेत्यव्ययस्यैव समासः स्यात् ॥

"अक्षशलाकासङ्ख्याः परिणा" ॥ 'अक्षशलाकासङ्ख्याशब्दा इति'। अक्षशलाकाशब्दौ सङ्ख्यावाचिनश्च शब्दा इत्यर्थः। क्वचित्त्वक्षशब्दः शला-काशब्दः सङ्ख्याशब्दाश्चेति पाठः । 'कितवव्यवहारइति'। कितवा द्यू-तकारास्तेषां व्यवहारे ऽक्षशलाकानां पातनं तत्रैवायं समास इष्यते, एत-च्चाभिधानस्वाभाव्याल्लभ्यते। 'सर्वेउत्ताना इति'। शलाकानामपि प्रकृत-त्वात्सर्वे च सर्वाश्च सर्वे, उत्तानाश्च उत्तानाश्च उत्तानाः, अवाञ्चश्चावा-च्यश्चावाञ्चः, 'पुमान्स्त्रिये'ति पुंसः शेषः,। 'तस्यैवास्येति'। पातयितु-रित्यर्थः। विपातः, पराजयः। अन्यथापाते सति, जये यादृशः पातः सर्वे उत्तानाः पतन्त्यवाञ्चो वेति ततोऽन्यादृशेषु केषु चिदुत्तानेषु केषु चिदवाञ्चु पतत्स्वित्यर्थः। 'अक्षेणेति'। वृत्तापेक्षया कर्त्तरि तृतीया। 'परमेणेति'। अतिशयेनातः परमित्यर्थः। 'पञ्चपरीति'। न भवतीति यावत्, अस्योप-

पादनं श्लोकेन क्रियते । 'पञ्चसु त्वेकरूपेष्विति' । अत्रापि पुंसः शेषः । एकरूपास्विति प्रायेणापाठः । तत्र शलाकानामेव ग्रहणम् । 'जय एव भविष्यतीति'। ल्टोऽर्थो मुख्यः, यतः पञ्चस्वेकरूपेषु जय एव भवति तेन परमेण चतुःपरीत्यन्वयः । 'अक्षादयस्तृतीयान्ता इति' । अन्यथा वृत्तावयं समास इष्यते तत्र चाक्षादीनां कर्तृत्वात्तृतीयैव युक्तेति भावः । 'पूर्वोक्तस्येति' । पूर्ववृत्तस्येत्यर्थः । अनेकार्थत्वाद्धातूनां वर्चिरिह वर्त्तने वर्त्तते तदेव यथा न तदिति तच्छब्देन परामृश्यते, पूर्वजये वृत्तस्याक्षादेर्यथा तद्वृत्तमभूत् यदि संप्रति तथा न भवति एवं समासो भवतीत्यर्थः । पूर्वोक्तस्येति सामान्यापेक्षमेकवचनं जयकाले ऽक्षादीनां यदेकरूपं वर्त्तनं तद्विपरीतवर्त्तने परिणा द्योत्ये समास इति यावत् । 'एकत्वे ऽक्षशलाकयोरिति' । अक्षशलाकाशब्दयोरेकवचनान्तयोः समास इत्यर्थः । इदमप्यभिधानस्वाभाव्यादेव लभ्यते, अन्यथा राजपुरुष इत्यादाविवाभेदैकत्वमवगम्येत न तु शुद्धमेकत्वं, प्रायेण तु कितवव्यवहारे च एकत्वेऽक्षशलाकयोरिति श्लोकरूपेण पठ्यते तत्रार्थान्तरं मुख्यं संहिताकार्यप्रसङ्गश्च । कितवव्यवहार इति किम् । अक्षेणेदं न तथा वृत्तं यथा पूर्वशकटे । एकत्वइति किम् । अक्षाभ्यामक्षैर्वा इदं न तथा वृत्तम् । अक्षादय इति किम् । प्रसङ्गेनेदं न तथा वृत्तं यथा पूर्वजये, परिणेति वचनात्सुबन्तमात्रेण न भवति ॥

"अपपरिबहिरञ्चवः पञ्चम्या" ॥ ननु बहिःशब्देन योगे न केन चित्पञ्चमी विधीयते तत्कथं तस्य पञ्चम्यन्तेन समासः, बहिर्गतो ग्रामादित्यत्र त्वसामर्थ्यान्नैव समासेन भवितव्यमत आह । 'बहिःशब्देनेति' । न च वचनसामर्थ्याद्बहिःशब्दस्यापञ्चम्यन्तेन समासो भवत्विति वाच्यम् । पञ्चमीग्रहणाद्, इह ह्यपपरिशब्दौ परस्परसाहचर्याद्वर्जनार्थौ गृह्येते तौ च कर्मप्रवचनीयौ तद्योगे च पञ्चम्येव विहिता अञ्चतिरप्यपपरिसाहचर्यादव्ययमेव गृह्यते तद्योगेप्यञ्चूत्तरपदलक्षणा पञ्चम्येवास्ति तदेतत्पञ्चमीग्रहणं ज्ञापयति षष्ठीविषये बहिर्योगे पञ्चमी भवतीति ॥

"आङ्मर्यादाभिविध्योः" ॥ मर्यादाभिविध्योरिति शक्यमकर्त्तुं,

कथं, पञ्चम्येति वर्त्तते आङा च कर्मप्रवचनीयेनैव योगे पञ्चमी विहिता एतयोश्चैवार्थयोराङः कर्मप्रवचनीयसंज्ञा 'आङ्मर्यादावचन' इति, तत्र हि वचनग्रहणं मर्यादोक्तिमात्रे यथा स्याद् इत्यभिविधावपि भवति तत्रैव वाभिविधिग्रहणमेवास्तु ॥

"लक्षणेनाभिप्रती आभिमुख्ये" ॥ 'अभ्यग्नि प्रत्यग्नीति' । अग्निं प्रतीति विग्रहः, 'अभिरभागे' लक्षणेत्थम्भूतेति चाभिप्रत्योः कर्मप्रवचनीयत्वाद् द्वितीया, तत्राग्निर्लक्षणं तेन हि शलभानां पातो लक्ष्यते, अभिप्रती च लक्ष्यलक्षणभावं द्योतयित्वाभिमुख्यमपि द्योतयतः । 'स्रुघ्नं प्रतिगत इति' । स्रुघ्नादागतस्तमेव प्रतिगतः प्रतिनिवृत्त इत्यर्थः । अत्र प्रतिगमनं प्रति कर्मत्वेन विवक्षितत्वात्स्रुघ्नो लक्षणं न भवति । 'येनाग्निस्तेन गत इति' । येन देशेनाग्निर्गतस्तेनेति प्रतीतिर्भवति, गमनस्याग्निर्लक्षणमाभिमुख्यं चास्ति येन तेन शब्देन सह समासः स्यात् । 'अभ्यङ्काः प्रत्यङ्का इति' । अभिनवोऽङ्क आसां प्रतिनवोऽङ्क आसामिति बहुव्रीहिः, अङ्कोऽत्र भवति गवां लक्षणमाभिमुख्यं तु नास्ति, ननु च सति सम्भवेऽव्ययार्थे प्रधानेऽव्ययीभाव इत्युक्तं कथमत्र प्रसङ्गः, एवं तर्ह्येतज्ज्ञापयति भवत्यत्र प्रकरणे बहुव्रीहिविषयेऽव्ययीभाव इति तेन 'संख्या वंश्येन' द्विमुनि व्याकरणमित्येतत्सिद्धं भवति ॥

"अनुर्यत्समया" ॥ यत्समयेति षष्ठी समासोयं, कथं पुनः समयाशब्देन योगे षष्ठी, यावताभितः परितः समयेति द्वितायया भवितव्यम्, नैष दोषः । समयाशब्दस्य मुख्योऽर्थः सामीप्यम्, तद्योगे द्वितीया, इह तु समयाशब्दवाचिन्यनुशब्दे समयाशब्दो वर्त्तते तदाह 'अनुर्यत्समया' । 'समयावाचीति', यस्य समयेति कोर्थः । समयावाचीत्यर्थं तदिह मुख्येनार्थेनायोगाद् द्वितीया न भवति, षष्ठ्येव तु भवति तस्याश्च समासः, न च पूरणगुणेति प्रतिषेधः, अनव्ययत्वात्, सामीप्ये हि वर्त्तमानः समयाशब्दोऽसत्त्ववाचित्वादव्ययम् इह त्वनुशब्दे वर्त्तते तत्र यथा 'ऽभिरभाग' इत्यादावनुकरणस्याव्ययसंज्ञा न भवति तथास्यापि, एवं

च यत्समयेत्यविभक्तिकः सौत्रो निर्देशः, वृत्तावपि यत्समयेति सूत्रानुकरणेन विभक्त्यभावः। 'तेनेति'। तद्वाचिना शब्देनेत्यर्थः। 'अनुवनमिति'। वनस्यान्विति सामीप्यसम्बन्धे षष्ठीसमासः, अस्यार्थमाह। 'वनं समयेति'॥

"यस्य चायामः"॥ 'लक्षणेनेति वर्त्ततइति'। अन्यथा आयामो गङ्गाया इत्यस्यार्थेनुगङ्गमिति स्यात् अत्राप्यायामवाचित्वादनुरेवायामशब्देनोच्यते इत्याह। 'अनुर्यस्यायामवाचीति'। 'अनुगङ्गं वाराणसीति'। बहुत्वेन गङ्गाशब्देन समासः। 'गङ्गाया अन्विति'। आयामो लक्षणत्वं चानुना द्योत्यते लक्षणस्य लक्ष्यापेक्षत्वाल्लक्ष्यं समासार्थ इत्यर्थादुपमानोपमेयभावे समास इति वाराणस्या सामानाधिकरण्यं गङ्गाया इवायामो यस्याः, गङ्गेवायता वाराणसीत्यर्थः। तद्वदत्यन्तायतेत्यर्थ इति केचित्। तथा चानुगङ्गमेतत्सूत्रमित्येकशेषसूत्रे भागवृत्तिकारः प्रयुङ्क्ते। नेति वयम्। किं प्रागायता वाराणसी उतोदगायतेति संदेहे इदमुच्यते अनुगङ्गं वाराणसीति, यथोदगायता गङ्गा तथोदगायता वाराणसीत्यर्थः। गङ्गायामानुसारेण वाराणस्यायाम इत्यर्थः। 'यमुनायामेन मथुरायामो लक्ष्यतइति'। न यमुना स्वरूपेण लक्षणं किं तर्ह्यायामेन मथुरापि न स्वरूपेण लक्ष्यं किं तर्ह्यायामेन तत्र प्राप्ताप्राप्तविवेकेनेदमुच्यते यमुनायामेन मथुरायामो लक्ष्यतइति॥

"तिष्ठद्गुप्रभृतीनि च"॥ 'समुदाया एव निपात्यन्तइति'। गणे तथा पाठ एव तेषां निपातनं, तेन शतृशानजाद्यपि भवति 'सुपो धातुप्रातिपदिकयो' रिति च प्रक्रियाकार्यं न कर्त्तव्यमिति भावः। 'अव्ययीभावसंज्ञानि भवन्तीति'। समाससंज्ञापि विधेया ऽन्तोदात्तत्वं च। 'प्रातिपदिकसंज्ञा च यथा स्यादिति'। 'तिष्ठद्गु कालविशेष इति'। कालविशेष इत्येतदुत्तरैरपि सम्बध्यते, अत एवान्ते वक्ष्यति एते कालशब्दा इति, एतावान्कालविशेष इत्यस्याधिकार इत्यर्थः। 'विभक्त्यन्तरेण न सम्बध्यन्तइति'। अव्यतिरिक्तएव प्रातिपदिकार्थे प्रयोग एषां कर्त्तव्यो

नान्यत्रेत्यर्थः । 'अन्यपदार्थे च वर्त्तन्तइति'। तिष्ठद्गु वहद्गु आयतीगवमित्येतैरव्ययस्य सम्बन्धः, अन्यथा कालशब्दत्वायोगात् । 'चकारोवधारणार्थ इति'। अनेकार्थत्वान्निपातानाम् । 'अपरः समासो न भवतीति'। वृत्त्यन्तरं न भवतीत्यर्थः । आतिष्ठद्गु जपन्सन्ध्यामिति तु पञ्चम्या अव्ययादिति लुङ्न समासः । 'तिष्ठद्गु वहद्ग्विति'। लटः शत्रादेशो निपातनात् गोस्त्रियोरिति ह्रस्वः, आयतीगवमित्यत्र तु पुंवद्भावाभावः शत्रादेशः समासान्तश्च, खलेयवं खलेबुसमिति सप्तम्या अलुक् लूयमानयवादिषु शानजादेशः । 'समभूमि समपदातीति'। समं भूमेरिति पूर्वपदार्थप्राधान्येव्ययीभावः । क्वचित्समंभूमि समंपदातीति पाठः, तत्र पूर्वपदस्य मुमागमः । अन्ये तु संभूमि सम्पदातीति पठन्ति तत्र समस्यान्तलोपः संशब्दस्य वा समासः। सुषमादौ शोभनत्वं समस्य विषतत्वं दुष्टत्वं निर्गतत्वमपगतत्वं समस्येति विग्रहः, आयतीसमा आयतीसमं, शत्रादेशः पूर्ववत् पुंवद्भावश्च, समा संवत्सरः, एवं पापसमं पुण्यसममिति, प्राह्णादिषु चतुर्षु प्रगतत्वमह्न इत्यादिविग्रहः, सन्नतं प्रतिगतस्य सम्प्रति विपरीतमसम्प्रति। 'इच् कर्मव्यतिहार इति'। अयमेव द्विदण्ड्यादिष्वपि विधीयतइति तत्राप्यव्ययीभावः । 'दण्डादण्डीति'। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं 'तत्र तेनेदमिति सरूप' इति बहुव्रीहिः । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । इच् अव्ययीभावत्वेनाव्ययत्वात्सुपो लुक् ॥

"पारेमध्ये षष्ठ्या वा"॥ 'वावचनादिति'। ननु महाविभाषयैवापवादेव्ययीभावे विकल्पिते पक्षे षष्ठीसमासोपि भविष्यति सोपि विकल्पित इति वाक्यमपि भविष्यति । उच्यते, इह वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा वाक्यस्य बाधिका प्राप्नोतीति विकल्पेन वाक्यमेव पक्षेभ्यनुज्ञायते तत्रापवादविकल्पो वाक्यस्यैव प्रापक इत्युत्सर्गस्य नित्यो बाधकः स्याद् वावचनात्सोपि पक्षेभ्यनुज्ञायतइति त्रैरूप्यसिद्धिः, एतदेव वावचनं ज्ञापकं यत्रोत्सर्गापवादौ महाविभाषया विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न भवतीति, तेन पूर्वं कायस्येत्यत्रैकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति, दक्षस्यापत्यं दाक्षिरित्यत्र इञा मुक्तेऽण्न भवति,

एकारान्तत्वनिपातनं यत्र सप्तम्यर्थो न सम्भवति पारेगङ्गादानयेति तदर्थं, सम्भवे तु 'तत्पुरुषे कृति बहुल' मिति बहुलवचनादलुका सिद्धम् ॥

"सङ्ख्या वंश्येन" ॥ 'एकलक्षणा इति'। एकस्वभावः सन्तानः सम्बन्धः, सन्तानिनामेकलक्षणत्वात्सन्तानस्यैकलक्षणत्वम्। 'द्वौ मुनी इति'। पाणिनिकात्यायनौ। 'त्रिमुनीति'। तौ च भाष्यकारश्च, जन्मना त्वेकलक्षणस्योदाहरणम्। 'एकविंशति भारद्वाजमिति'। यदा तु विद्यया सहेति लक्षणेनाभिप्रेतौ इत्यत्र प्रकारान्तरेणाप्ययमर्थः साधितः॥

"नदीभिश्च" ॥ 'नदीवचनैः शब्दैरिति'। नदीभिरिति बहुवचननिर्देशात्स्वरूपस्य संज्ञा नद्याश्चाग्रहणमिति भावः। 'समाहारे चायमिष्यतइति'। अन्यथा पुरस्तादपवादन्यायेन पूर्वकालैकेत्यस्यायं बाधकः स्यात् समाहारे तु परत्वाद् द्विगुरेव स्यात् ततश्चैकनदीत्यत्राव्ययीभावे सति तन्निबन्धनो 'नदीपौर्णमास्याग्रहायणीभ्य' इति टच् प्राप्नोति नपुंसकत्वं च, नह्यत्र विशेषवाचिनामेव ग्रहणमिति प्रमाणमस्ति, यस्तु गोदावर्याश्च नद्याश्चेत्यच् समासान्तः स पञ्चनदमित्यादावव्ययीभावएव भवति, एकनदीत्यत्र तत्पुरुषे न भवति समाहारविवक्षायां च एकापूपीवदेकनदमित्यपि भवति, तथान्यपदार्थेप्यव्ययीभावः स्याद् द्वारावतीको देश इति, न चात्र परत्वाद्बहुव्रीहिः, अशेषत्वात्, नह्यसति समाहारग्रहणेयं शेषो भवति तस्मात्सुष्ठूक्तं समाहारे चायमिष्यत इति, एतच्चाभिधानस्वाभाव्याल्लभ्यते ॥

"तत्पुरुषः" ॥ 'उत्तरपदार्थप्रधान इति'। पूर्वकायोर्द्धपिप्पलीत्यादौ त्वधिकारवशात्तत्पुरुष इति संज्ञा ॥

"द्विगुश्च" ॥ 'समासान्ता इति'। यद्यपि 'राजाहःसखिभ्यष्टच्' 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादे' रिति टजचौ तत्पुरुषनिबन्धनौ तथापि प्रकृतिभेदाद्भेदविवक्षायां बहुवचनम्। 'पञ्चराजमिति'। उत्तरपदस्यानकारान्तत्वात्स्त्रीत्वाभावः। समासार्थोत्तरपदस्यान्ताः समासान्ता इति तु पक्षे पात्रादित्वात्, क्वचित्पञ्चराजीति स्त्रीलिङ्गस्य पाठः स भाष्यविरो-

धादपपाठः । 'द्व्यह इति' । 'अह्नष्टखोरेवे' ति टिलोपः, 'रात्राह्नाहाः पुंसि'। 'पञ्चगवमिति'। 'गोरतद्धितलुकी' ति टच्, पूर्ववत्स्त्रीत्वाभावः॥

"द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" ॥ श्रितादिषु गत्यर्थत्वात्कर्त्तरि क्तः, पतिरपि सकर्मकः, नेच्छिस्नायन्तो नरकं पतामेति यथा, अत्यासो व्यतिक्रमो गतिविशेष एव प्राप्तिरप्यत्र गतिरेव न फलमेवमापत्तिरपि, इह श्रितपतितगतैरयं समासो न विधेयः, कथं, यः कष्टं श्रितः कष्टं तेन श्रितं भवति तत्र बहुव्रीहिणा सिद्धं नार्थभेदो न रूपभेदो न स्वरभेदः, तत्पुरुषेप्यहीने द्वितीयेति श्रितपतितगतेभ्यः पूर्वपदप्रकृतिस्वर एव भवति, अतीतादिभिस्तु स्वरसिद्धये विधेयः। तथाहि। तेस्तत्पुरुषे थाथादिस्वरेण भाव्यं नाहीनस्वरेण अतीतात्यस्तयोरहीनइति निषेधात्, प्राप्तापन्नयोस्त्वहीने द्वितीयानुपसर्गे इति वचनात्, बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यं तस्माच्छ्रितादिभिरयं न समासो विधेयः, तत्रायमप्यर्थो ऽहीने द्वितीयेत्येतदपि न वक्तव्यं भवति, जातिस्वरप्रसङ्गस्तु, यदा जातिकालसुखादिभ्यः परे श्रितादयो भवन्ति तदा पूर्वपदप्रकृतिस्वरं बाधित्वा 'जातिकालसुखादिभ्योनाच्छादनादि' त्यन्तोदात्तत्वप्रसङ्गः । ननु च तत्पुरुषारम्भेपि बहुव्रीह्यर्थविवक्षायां न दण्डवारितो बहुव्रीहिरिति जातिस्वरः स्यादेव, एवमप्यस्ति भेदस्तत्पुरुषेऽहीने द्वितीयेति पूर्वपदप्रकृतिस्वरो बहुव्रीहौ जातिकालेत्यन्तोदात्तत्वमिति द्वौ स्वरौ भवतो ऽनारम्भे तु जातिस्वर एव स्यादिति, एवं तर्हि यदेतद्वा जातइति तद्वा जातश्रितपतितगतेष्विति वक्तव्यम्, एवमप्यहीने द्वितीयेत्येतदपि न वक्तव्यमित्यस्यैव लाघवम्, एतावांस्तु विशेषः, तत्पुरुषारम्भे तत्र पूर्वपदप्रकृतिस्वरत्वं बहुव्रीहौ तु जातिस्वर इति द्वयोः समासयोर्द्वैस्वर्यं, अनारम्भे तु बहुव्रीहावेव द्वैस्वर्यमिति । अत्रोच्यते। जातिकालसुखादिव्यतिरिक्तैः सह बहुव्रीहौ श्रितादीनां निष्ठेति पूर्वनिपातप्रसङ्गाद्रूपभेदः, तथा सर्वत्र कबपि प्राप्नोति। नन्वसौ 'शेषाद्विभाषे' ति विकल्पितः स च तत्पुरुषारम्भेपि भवत्येव बहुव्रीहेरप्यभ्युपगमात्, एवमपि बहुव्रीहावपि द्वैस्वर्याभ्युपगमात्पूर्वपदप्रकृतिस्वरपक्षेपि बहुव्रीहित्वानपायात्पत्ते कपः

प्रसङ्गः, तत्पुरुषारम्भे तु तत्रैवाहीने द्वितीयेति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ तु जातिस्वर एव नित्यमित्यन्तोदात्तादेव कष्ट पूर्वपदप्रकृतिस्वरादित्यस्येव विशेषः, तथा ऽर्थभेदोपि गत्यर्थाकर्मकेति कर्त्तरि क्तो धात्वर्थस्य सर्वात्मनाऽनिष्ठितत्वेपि भवति आरूढो वृक्षं देवदत्त इति, वृक्षस्य एवोच्यते, कर्मणि तु भवन्सर्वात्मना निष्ठितत्वे भवति आरूढो वृक्षो देवदत्तेनेति, तथेहापि कष्टं श्रित इति कष्टमनुभवन्नेवमुच्यते कष्टं श्रितमनेनेत्यनुभूतकष्टः श्रितशब्दविवक्षितस्यार्थस्य साक्षादवगतिर्भवति तत्पुरुषे, बहुव्रीहौ त्वर्थात्,तद्यथा राज्ञः सखेत्युक्ते नूनं राजाप्यस्य सखेति स एव सूक्ष्मदृशामेव विषयः। 'गमिगाम्यादीनामिति'। उणादीनामन्येषां च संग्रहार्थमुभयोरुपादानम्। 'ग्रामं गमीति'। गमेरिनिरित्यौणादिक इनिप्रत्ययः 'भविष्यति गम्यादय' इति भविष्यति काले। 'ग्रामं गामीति'। आवश्यके णिनिः। गत्यर्थकर्मणीत्यत्र द्वितीयाग्रहणमपवादविषयेपि विधानार्थमिति कृत्ययोगे द्वितीयैव भवति। 'ओदनं बुभुक्षुरिति'। भुजेः सन्, 'सनाशंसभिक्ष उः'। न लोकाव्ययेति षष्ठीनिषेधः॥

"स्वयं क्तेन"॥ 'स्वयं धौताविति'। धावु गतिशुद्ध्योः, 'उदितो वे'ति क्त्वायां विकल्पितेट्त्वाद् 'यस्य विभाषे'तीट्प्रतिषेधः, 'छ्वोः शूडनुनासिके च'त्यूठ्, 'एत्येधत्यूठ्स्वि'ति वृद्धिः। 'स्वयंविलीनमिति'। लीङ् श्लेषणे, स्वादय ओदितः, 'ओदितश्चे'ति निष्ठानत्वं, क्तग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद्विलीनशब्दः क्तान्तः। 'ऐकपद्यमैकस्वर्यं समासादिति'। समसनं समासः, संज्ञा वा, ततो हेतोरित्यर्थः॥

"खट्वा क्षेपे"॥ 'खट्वारोहणं चेत्यादि'। विनिन्दितो मार्गो विमार्गः। भूमिशयनार्हो ब्रह्मचारी वेदाध्ययनकाले तेनाधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वा रोढव्या यस्त्वन्यथा खट्वारोहणं तद्विमार्गप्रस्थानं तच्चोदाहरणमन्यस्याप्येवंविधस्योपलक्षणं, तेन खट्वामारोहतु मा वा ऽक्षद्विमार्गप्रस्थितः खट्वारूढ इत्युच्यतइत्यर्थः

"सामि"॥ 'तस्यासत्त्ववाचित्वादिति'। द्रव्याधारा हि कर्मशक्तिरतो द्रव्यवाचिन एव द्वितीया भवति नाद्रव्यवाचिन इत्यर्थः॥

"कालाः" ॥ इह काला अत्यन्तसंयोगइत्येको योगः कर्त्तव्यः, तत्र क्तेनेत्यस्य निवृत्तत्वात्सर्वत्र समासः सिद्ध्यति किमर्थं योगविभागेन क्तान्तेन समासो विधीयतइत्यत आह। 'अनत्यन्तसंयोगार्थं वचनमिति'। अनत्यन्तसंयोगमेव दर्शयति। 'षण्मुहूर्त्ता इति'। 'चराचरा इति'। चरेः पचाद्यचि 'चरिचलिपतिवदीनामुपसंख्यानमाक् चाभ्यासस्येति' द्विर्वचनमागागमश्चाभ्यासस्येति, चरन्तोनवस्थिता इत्यर्थः। 'कदा चिदहरिति'। उत्तरायणे। 'कदा चिद्रात्रिमिति'। दक्षिणायने। ततस्तैश्च षड्भिर्मुहूर्त्तैरह्नो रात्रेश्च नास्त्यत्यन्तसंयोगः। 'मासप्रमित इति'। माङ आदिकर्मणि कर्त्तरि क्तः, मासं परिच्छेत्तुमारब्धवानित्यर्थः। 'प्रतिपच्चन्द्रमा इति'। न च तेन मासस्यात्यन्तसंयोग इति भावः ॥

"तृतीया तत्कृतार्थेन गुणवचनेन" ॥ तृतीयायाश्छान्दसे लुकि गुणवचनेनेत्यनेन सामानाधिकरण्यम्, अर्थेनेति पृथक् पदम्, अत एव 'गुणवचनेनार्थशब्देन चेति'। 'कीदृशेन गुणवचनेन तत्कृतेनेति'। तदिति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्शः, स च शब्दः, न च शब्देन गुणवचनस्य करणं सम्भवतीत्यतः सामर्थ्यात्तदर्थकृतेनेतिविज्ञायतइत्याह। 'तृतीयान्तार्थकृतेनेति'। 'यावदिति'। यावच्छब्दो निपातस्तात्पर्यपर्यायतां दर्शयति, अर्थद्वारकं चेदं गुणवचनस्य विशेषणम्, अर्थ एव हि तृतीयार्थेन क्रियते न गुणवचनः शब्दः। वचनग्रहणं किम्। यावतार्थेन समासासम्भवाद्गुणवचनेनैव भविष्यति एवं यथा विज्ञायेत, गुणमुक्तवान् गुणवचनः, 'कृत्यल्युटो बहुल'मिति भूते कर्त्तरि ल्युट्, गुणमुक्तवता संप्रति गुणोपसर्जनद्रव्यवचनेनेत्यर्थः, तेन घृतेन पाटवमिति गुणमात्रनिष्ठे न भवति। गुणश्चात्र सत्त्वे निविशतेऽपैतीति लक्षितो गृह्यते न तु यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इतितच्छब्दप्रवृत्तिनिमित्तं, तृतीयान्तार्थकृते सर्वत्रैव तस्य भावात्। 'शङ्कुलाखण्डः, किरिकाण इति'। खडि भेदने, कण निमीलन, इत्याभ्यां घञि ख्युत्पादितावेतौ क्रियारूपापन्ने गुणे वर्त्तित्वान्मतुब्लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्त्तते इति गुणवचनौ भवतः। 'धान्येनार्थ इति'। अर्थ्यतइत्यर्थः प्रयोजन,-

मर्थेनं वार्थः प्रार्थनाभिलाषः, सर्वत्र करणे तृतीयायाः समासः । 'अक्ष्णा काण इति' । नात्राक्ष्णा कृतं काणत्वं किं तर्ह्यन्येनैव केनापि किर्यादिना, अक्ष्णा तु केवलं काणो लक्ष्यतइति तत्कृतत्वाभावः, किं च दध्ना पटुरित्यत्र मा भूदित्येवमर्थमपि तत्कृतग्रहणं कर्त्तव्यम् । ननु यदि दधि कृतं पाटवं विवक्षितं दध्ना कृतः पटुरिति ततो भवितव्यमेव समासेन, अथ भोजनाद्यपेक्षो दध्नः करणभावः दध्ना भुङ्क्ते पटुरिति ततो ऽसामर्थ्यादेव न भविष्यति, इहापि तर्हि न स्यात् कुङ्कुमेन लोहितं कोपेन लोहितं मुखमिति, अत्रापि हि करोति क्रियया करणस्य सम्बन्धः कुङ्कुमेन कृतं लोहितमिति, क्व तर्हि स्यात् शङ्कुलया खण्ड इत्यादावेव तु स्यात्, यत्र पूर्वोत्तरपदयोः क्रियाकारकलक्षणः सम्बन्धस्तस्माद्यत्रो-त्तरपदे क्रिया न गम्यते तत्रापि तत्कृतत्वे सति यथा स्याद्भोजनादिद्वा-रके सामर्थ्ये मा भूदिति तत्कृतग्रहणम् । 'गुणवचनेनेति किमिति' । जाति-वचनेषु जातेर्नित्यत्वात्तत्कृतस्यासम्भवः, क्रियावचने त्विष्यतएव, 'कर्तृ-करणे कृता बहुलमि'ति द्रव्यवाचिष्वपि तत्कृतस्यासम्भव एव, नह्याका-शस्य तत्त्वं केन चित् क्रियते ऽतो गुणवचनेनैव भविष्यतीति प्रश्नः । 'गोभिर्वपावानिति' । गोसम्बन्धिदध्याद्युपयोगादेव तस्य वपावत्त्वं पीव-रत्वमित्यस्ति तत्कृतत्वं न त्वसौ गुणवचनः ॥

"पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः" ॥ पूर्वसूत्रेर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमर्थनिर्देशार्थं, तच्चानन्तरेणोनशब्देनैव सम्बध्यते न पूर्वादिभिः, समसदृशशब्दयोः पृथगुपादानात् । 'एतदेवे-त्यादि' । समसदृशशब्दाभ्यामन्यत्रेदं तद्योगे तुल्यार्थैरिति तृतीयास्ति, इह तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते ततस्तस्याः समासे मातुः सदृशो मातृसदृश इति सिद्धं, किमर्थमिह सदृशग्रहणं, तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो यथा स्यात्, सिद्धोत्र प्रकृतिस्वरः, 'सदृशप्रतिरूपयोः सादृश्य' इति, तच्च तत्र सदृशग्रहणमवश्यं कर्त्तव्यं यदा षष्ठीसमासस्तदा-न्तोदात्तत्वं माभूदिति, ननु चेदानीमनभिधानात्षष्ठीसमासो न भविष्यति,

नैवं शक्यम्, अलुक्समासे हि दोषः स्यात्, 'षष्ठ्या आक्रोशे' दास्याःसदृशो वृषल्याः सदृश इति, तस्मात्तत्कर्त्तव्यम्, इदं तु न कर्त्तव्यम्, इदमपि कर्त्तव्यं, हेतुतृतीयार्थं विद्यया हेतुना सदृशो विद्यासदृश इति, नह्यत्र तुल्यार्थैरिति षष्ठी भवति प्रतियोगिन्येव हि सा विधीयते, एवमपि न कर्त्तव्यं तत्कृतत्वात्पूर्वेणैव सिद्धं यो हि विद्यया सदृशः विद्याकृतं हि तत्सादृश्यं तत्र पूर्वेणैव सिद्धं, 'मिश्रग्रहणे सोपसर्गस्यापि ग्रहणं' गुडसंमिश्रा धाना इत्येवमर्थं, ज्ञापकात्सिद्धं, यदयं 'मिश्रं चानुपसर्गमसन्धा' वित्यनुपसर्गग्रहणं करोति तज्ज्ञापयति मिश्रग्रहणे सोपसर्गस्यापि ग्रहणमिति । 'पूर्वादिष्विति' । अवरशब्दोऽपि सूत्रे पठितव्य इत्यर्थः ॥

"कर्तृकरणे कृता बहुलम्" ॥ कर्तृकरणे इति प्रथमाद्विवचनं वृत्तौ वस्तुव्याख्यानं कृतं कर्त्तरि करणे च या तृतीयेति, तथा चोत्तरत्र वक्ष्यति कर्तृकरणे कृत्यैः सहाधिकार्थवचने समस्येते इति, 'सर्वोपाधिव्यभिचारार्थमिति' । अव्याप्त्यतिव्याप्तिपरिहारार्थमित्यर्थः । 'पादहारक इति' । ह्रियत इति हारक इति 'कृत्यल्युटो बहुलमि' ति कर्मणि ण्वुल्, पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः । 'गले चोपक इति' । चुप मन्दायां गतौ, हेतुमण्णिजन्तात्कर्मणि ण्वुल्, अमूर्द्धमस्तकादित्यलुक्, कृद्ग्रहणमनर्थकमन्यस्याभावात्, इह कर्तृकरणे क्रियाया एव भवतः, क्रिया च धातुवाच्या धातोश्च द्वये प्रत्ययाः कृतस्तिङश्च तत्र सुपेत्यधिकारात्तिङन्ते न प्रसङ्गः, तद्धितनिवृत्त्यर्थं तु, इह काष्ठैः पचतितरां काष्ठैः पचतिरूपं काष्ठैः पचतिदेश्यं हस्तेन कृतपूर्वी दध्ना भुक्तपूर्वी घृतेनेष्टीति ॥

"कृत्यैरधिकार्थवचने" ॥ 'स्तुतिनिन्दाप्रयुक्तमिति' । स्तुत्या निन्दया च प्रवर्त्तितं स्तोतुं निन्दितुं च कृतमित्यर्थः । 'अध्यारोपितार्थवचनमिति' । असदेवारोपितोऽध्यारोपितः । 'काकपेयेति' । एवं नाम पूर्णतोया नदी यत्तटस्थैः काकैरपि शक्या पातुमिति स्तुतिः । एवं नामाल्पतोया यत्काकैरपि शक्या पातुमिति निन्दा, उभयत्र शक्यार्थे कृत्यः । 'श्वलेह्य इति' । एवं नामासन्नतोयः कूपस्तटस्थैरपि श्वभिः शक्यो लेढुमिति स्तुतिः, एवं नामाशुचिः कूपो यज्जलं श्वान एव लेढुम-

हन्तीति निन्दा, अर्हार्थे कृत्यः। 'वाष्पच्छेद्यानीति'। एवं नाम कोमलानि तृणानि यद्वाष्पेणापि छेत्तुं शक्यानीति स्तुतिः, एवं नाम कुथितानि तृणानि यद्वाष्पेणापि छेत्तुं शक्यानीति निन्दा। 'कण्टकसंचेय इति'। एवं नाम क्लिन्न ओदनो यत्कण्टकैः शक्यः संचेतुमिति स्तुतिः, एवं नामाल्प ओदनो यत्कण्टकैः संचीयतइति निन्दा। 'पूर्वेस्यैवायं प्रपञ्च इति'। यद्यपि स्तुतिनिन्दापरत्वात्क्रियोपादानस्य कर्तृकरणयोर्गौणत्वं तथापि बहुलवचनात्पूर्वेणैव सिद्धं, तथा च काकपीता नदीत्यत्राहृत्यैरप्यधिकार्थवचनैः समासो दृश्यते ऽतः प्रपञ्च एवायं नाप्राप्तविधिर्नापि नियम इत्यर्थः॥

"अन्नेन व्यञ्जनम्"॥ 'दध्योदन इति"। ननु च नेह क्रिया श्रूयते न चान्तरेण क्रियां द्रव्याणां परस्परेण सम्बन्ध इत्यसामर्थ्यादत्र समासो न प्राप्नोति, अथासत्यपि सामर्थ्ये वचनात्समासः, इहापि तर्हि स्यात् किं दध्योदनो भुज्यतामिति, तत्राह। 'वृत्तौ क्रियाया अन्तर्भावादिति'। स्वभावादेव वृत्तावन्तर्भूता क्रियेति तद्द्वारकस्य संबन्धस्य सद्भावात्सामर्थ्यमित्यर्थः॥

"भक्ष्येण मिश्रीकरणम्"॥ 'खरविशदमिति'। खरं कठिनं, विशदं विभक्तावयवं, खरं च तद्विशदं च खरविशदं, हनुचलनेनादनीयमित्यर्थः, एवं भूतं यदभ्यवहार्यं तद्भक्ष्यमित्युच्यते, तत्रैव यदन्नस्य परञ्जनस्य च भक्षयते रूढत्वात्। भक्षयतिस्त्वन्यत्रापि भवति अब्भक्षो वायुभक्ष इति, गौणो ऽत्र भक्षयतिरित्यन्ये॥

"चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः"॥ 'अर्थैः परामृश्यतइति'। यद्यपि चतुर्थीति चतुर्थ्यन्तः शब्दः सन्निहितस्तथापि शब्दं प्रति तादर्थ्यासम्भावात्तदर्थ एव परामृश्यतइत्यर्थः। 'इत्येतैः शब्दैः सहेति'। तत्र तदर्थेन सुबन्तेनेत्यर्थद्वारकं विशेषणं स्वरूपेण सुबन्तस्य तादर्थ्यासम्भवात्, द्वितीयस्त्वर्थशब्दः पृथगेव निमित्तम्। 'प्रकृतिविकारभावे समासइष्यतइति'। ज्ञापकात्। यदयं बलिरक्षितग्रहणं करोति तज्ज्ञापयति विकृतिश्चतुर्थ्यन्ता प्रकृत्या समस्यतइति, अन्यथा कुबेरबलिः गोरक्षितमित्य-

त्रापि तादर्थ्यसम्भवादनर्थकं तत्स्यात्, हितसुखग्रहणं तु हितयोगे चतुर्थी वक्तव्या, चतुर्थी चाशिषीत्यतादर्थ्येपि चतुर्थीसम्भवाच्च ज्ञापकं, यदि विकृतिः प्रकृत्या समस्यते ऽश्वेभ्यो घासो ऽश्वेभ्यः सुरा ऽश्वसुरं विभाषासेनेति नपुंसकत्वं, हस्तिभ्यो विधा हस्तिविधा, विधा अन्नविशेषः, अत्र न प्राप्नोति, अश्वघासादयः षष्ठीसमासा भविष्यन्ति। ननु स्वरे विशेषो भवति चतुर्थीसमासे हि सति चतुर्थीतदर्थेइति पूर्वपदप्रकृतिस्वरेण भाव्यं षष्ठीसमासे तु समासान्तोदात्तत्वेन, नैषोस्ति विशेषः। चतुर्थीसमासेपि नैव पूर्वपदप्रकृतिस्वरेण भाव्यं ज्ञापकात्, यदयं 'क्ते चे' ति चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवतीत्याह तज्ज्ञापयति प्रकृतिविकारभावाभावएव स्वरो न भवतीति, अन्यथा गोरक्षितमित्यत्रापि चतुर्थी तदर्थेइत्येवसिद्धेरनर्थकं तत्स्यात्। नैतदस्ति ज्ञापकं, हितार्थमेतत्स्यात्, गोहितमित्यत्र हि तादर्थ्यं नास्ति, एवमपि हिते चेति वक्तव्ये क्ते चेति सामन्यवचनं ज्ञापकमेव, सर्वथा कुबेरबलिरित्यादौ माभूदित्येवमर्थं प्रकृतिविकारभावे स्वर एषितव्यः। अथ रन्धनाय स्थालीत्यत्र षष्ठीसमासः कस्मान्न भवति। कश्चिदाह। भवत्येव तद्यथा गोग्रासः, लीलाम्बुजं, क्रीडासरः, वासभवनं, नाट्यशालेति। अपर आह। रन्धनस्थाल्यादयो ऽनभिधानात् षष्ठीसमासा न भवन्तीति। उभावपि प्रतिब्रूमः। येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु येषु तु नेष्यते तेषु तु चतुर्थीसमास एवानभिधानाद्येष्यतां माकारि ज्ञापनार्थं बलिरक्षितग्रहणं, स्वरस्तु चतुर्थीसमासेपि पूर्वोक्तेन प्रकारेण प्रकृतिविकारभावएव व्यवस्थास्यते, किं चैवं सति सूत्रमेवैतदनर्थकं, यूपदार्वादावपि षष्ठीसमास एवास्तु, चतुर्थी तदर्थेइत्येतत्तु षष्ठी तदर्थेइति क्रियतां ज्ञापकाच्च स्वरस्य व्यवस्था क्रियतां, नन्वयं भेदो भवति, षष्ठीसमासे संबन्धमात्रं गम्यते चतुर्थीसमासे तु तादर्थ्यं संबन्धविशेषः, नैषोस्ति विशेषः। आरभ्यमाणेपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासस्तत्रार्थप्रकरणादिना विशेषोवसेयः, यद्येवं केवलेपि षष्ठीसमासे तथा विशेषो ऽवगंस्यते, किं च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यविसायः सर्वत्रैव तथास्तु नार्थोनेन।

उच्यते । हितशब्देन तावत्षष्ठीसमासो न भवति तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः, ततश्च क्ते चेत्यत्रापि चतुर्थीग्रहणं कर्त्तव्यं गोहितमित्याद्यर्थम्, एवं च गोरक्षितमित्यत्र न स्यात् चतुर्थ्या असम्भवात् षष्ठी तदर्थइत्यस्य चाप्रसङ्गः प्रकृतिविकाराभावादिति रक्षितेनापि चतुर्थीसमास एव विधेयः, अर्थशब्देनापि योगे तादर्थ्यसंबन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या सम्भवितव्यमिति तेनापि चतुर्थीसमास एव कर्त्तव्यः, बलिसुखग्रहणमपि कर्त्तव्यं, तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथास्यादित्येवमर्थं, तस्मादारब्धव्यमेव सूत्रं, प्रकृतिविकारभावएव समास इत्यस्य तु प्रयोजनं चिन्त्यम् । 'अर्थेन नित्यसमासवचनमिति' । अन्यथा महाविभाषाधिकाराद्ब्राह्मणायार्थइति वाक्यमपि स्यात्। 'सर्वलिङ्गता चेति'। परलिङ्गताया अपवादः, अभिधेयवशेन च सर्वलिङ्गता न सर्वत्रेति दर्शयति । 'ब्राह्मणार्थं पय इत्यादि' । सर्थविति चेदित्संज्ञाभाव इयङुवङ्प्रसङ्गश्च । स्यादेत् । तदर्थं विकृतेः प्रकृतावित्यत्र तदर्थसर्थविति सूत्रं कर्त्तव्यं, चतुर्थीति वर्त्तते चतुर्थीसमर्थात्तदर्थेभिधेये सर्थप्रत्ययो भवति, सकारः पदसंज्ञार्थः राज्ञार्थः, गवार्थः पित्त्वादनुदात्तत्वम्, एवं चार्थइति पूर्वपदप्रकृतिस्वरो न विधेयः, प्रत्ययत्वाच्च न तेन विग्रहः, तद्धितत्वाच्चाभिधेयवल्लिङ्गता सिद्ध्यतीति । तन्न । सकारस्येत्संज्ञाभावप्रसङ्गात् । 'अथादिर्ञिटुडवः' 'षःप्रत्ययस्ये'ति द्विषकारकनिर्द्देशाश्रयणेनेत्संज्ञा स्यादेवमपि वुञ्छणादिषु तृणादिभ्यः से प्रसङ्गः, श्र्यर्थं भ्वर्थमित्यत्र चेयङुवङौ स्याताम् । बहुव्रीहावात्वकपोः प्रसङ्गः । स्यादेतत् । यद्ब्राह्मणार्थं पयस्तस्य ब्राह्मणोर्थः प्रयोजक इति शक्यते वक्तुमतो ब्राह्मणोर्थोस्येति विगृह्य बहुव्रीहिः करिष्यते, तेन चतुर्थ्यन्तेन विग्रहाभावः पूर्वपदप्रकृतिस्वरत्वमभिधेयवल्लिङ्गता च सिद्ध्यतीति । तन्न । महदर्थमित्यत्रात्वकपोः प्रसङ्गात् । तदर्थस्यार्थादेशउदभावप्रसङ्गः । स्यादेतत् । चतुर्थी तदर्थेत्यनेन समासं विधायार्थइत्यनेनांशेन तदर्थवाचिन उत्तरपदस्यार्थशब्द आदेशो विधीयते विभाषाधिकाराच्च यूपार्थं दारु यूपदार्वित्युभयं भविष्यति, ततो बलिरक्षितयोरपि विभाषार्थशब्द

आदेशो भवति कुबेरार्थो बलिः कुबेरबलिरित्यादि । किमर्थमिदं, न पूर्वेणैव सिद्धं, ज्ञापकार्थमेतज्ज्ञापयति प्रकृतिविकारभावादन्यत्र नित्यो-र्थादेश इति तेन रन्धनार्था स्थालीत्यादि भवति न तु रन्धनस्थालीत्यादि, अश्वघासादयस्तु पूर्ववत्, अत्र समासे कृते उत्तरपदस्य विधीयमानेना-र्थशब्देन विग्रहो न भविष्यति यस्यावस्थानेऽर्थादेशस्तल्लिङ्गता स्थानि-वद्भावेन भविष्यति, अर्थइति पूर्वपदप्रकृतिस्वरस्तु विधेय एवेति । तत्र । उदकार्थो वीवध इति वीवधशब्दस्यार्थादेशे कृते स्थानिवद्भावेन मन्थौ-दनादिसूत्रेणोद भावप्रसंगात्, अतश्चतुर्थीसमास एव विधेयः, तथा चा-र्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या, न वक्तव्या, ब्राह्मणायेति चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहो न भविष्यति 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये' ति सर्वलिङ्गता च सिद्धा

तदेतत्प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः ।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा ॥

"पञ्चमी भयेन" ॥ भयेनेति स्वरूपग्रहणादव्याप्तिरिति मत्वा-ह । 'भयभीतभीतिभीभिरिति वक्तव्यमिति' । एवं सूत्रन्यासः कर्त्तव्य इत्यर्थः । व्याख्यानात्त्वर्थग्रहणे वृकेभ्यस्त्रास इत्यादावपि प्रसङ्ग इति भावः । स तर्हि तथा न्यासः कर्त्तव्यो नेत्याह । 'पूर्वस्यैव बहुलग्रहण-स्येति' । यथा हि पादहारक इत्यादौ बहुलग्रहणात्सर्वोपाधिव्यभिचारा-र्थाद्भवति, एवमत्रापि भविष्यतीत्यर्थः । 'अधर्मजुगुप्सुरिति' । जुगुप्सा-विरामेत्यधर्मस्यापादानसंज्ञा ॥

"अपेतापोढमुक्तपतितापत्रस्तैरल्पशः" ॥ अल्पशब्दाद्बह्वल्पार्था-दिति शस्, शसि बह्वल्पार्थस्येति पुंवद्भावः, कारकत्वं तु समसनक्रियायां कर्मत्वात्, अत एव पञ्चमी समस्यतइति कर्मणि लकारः, तत्र तु बह्व-ल्पार्थान्मङ्गले वचनमिति वक्ष्यति तस्मादत एव निपातनादत्र शसिति युक्तम् । 'अल्पा पञ्चमीति' । अल्पाभ्यः प्रकृतिभ्य उत्पन्नेत्यर्थः ॥

"सप्तमी शौण्डैः" ॥ अत्र साहचर्याद्धूर्त्तादिष्वजहत्स्वार्थ एव शौण्डशब्दः प्रयुज्यते यथाच्छत्त्रिणो गच्छन्तीति, अत्र च प्रमाणं बहु-

वचननिर्द्देशः, अतोऽन्तरेणाप्यादिशब्दं तदर्थो गम्यतइत्याह । 'शौण्डादिभिरिति' । गणपाठसामर्थ्यात्तु बहुवचननिर्द्देशोऽर्थनिर्द्देशार्थो बहुवचनान्तस्य वा समासार्थ इति न भवति । ननु चाक्षशौण्ड इत्यादौ क्रियाया अश्रवणादधिकरणत्वं नोपपद्यते, न चान्यत्सप्तम्या निमित्तमस्ति, न चैतदेवं ज्ञापकं शक्यमाश्रयितुं शौण्डो देवदत्त इत्यादावपि प्रसङ्गाद्, अत आह । 'वृत्ताविति' । अन्तःशब्दोऽत्र पठ्यते तद्योगेऽवयविन आधारत्वविवक्षायां सप्तमी, यथा वृक्षे शाखेति, वनेऽन्तर्वनान्तः, अस्य विकल्पितत्वादव्ययीभावोऽपि भवति, अन्तर्वणं, प्रनिरन्तइति णत्वम् । अधिशब्दः पठ्यते, तस्याधिकरणप्राधान्ये ऽव्ययीभावः । 'अधिस्त्रीति'। आधेयप्राधान्ये त्वयं तत्पुरुषः । 'ब्राह्मणाधीनमिति' । अध्युत्तरपदात्ख इति खः । ब्राह्मणेष्वधीति वाक्यम् ॥

"सिद्धशुष्कपक्वबन्धैश्च" ॥ 'साङ्काश्यसिद्धः काम्पिल्यसिद्ध इति' । सङ्काशेन निर्वृत्तं वनं साङ्काश्यं, कम्पिलेन निर्वृत्तं काम्पिल्यं चातुरर्थिकः सङ्काशादिभ्यो ण्यः, तत्र तपसा सिद्ध इत्यर्थः ॥

"ध्वाङ्क्षेण क्षेपे" ॥ स्वं रूपं शब्दस्येति वचनात्पर्यायाणां न प्राप्नोतीत्यत आह । 'ध्वाङ्क्षेणेत्यर्थग्रहणमिति' । व्याख्यानाच्चैतदवसीयते । 'तीर्थे ध्वाङ्क्षइवेति' । उपमानोपमेयभावे सति क्षेपो गम्यते नान्यथेतीवशब्दः प्रयुक्तः, यथा तीर्थे ध्वाङ्क्षा न चिरं स्थातारो भवन्ति एवं कार्येष्वनवस्थितस्तीर्थध्वाङ्क्ष इत्यर्थस्तदाह । 'अनवस्थित इत्यर्थ इति' । वृत्तौ त्विवार्थस्यान्तर्भावादिवशब्दस्याप्रयोगः ॥

"कृत्यैर्ऋणे" ॥ 'यत्प्रत्ययान्तेनैवेष्यतइति' । अल्पश इत्यनुवृत्तेरेतल्लभ्यते, कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम् । 'ऋणग्रहणं च नियोगोपलक्षणार्थमिति' । नियोगो ऽवश्यं भावः, ऋणमवश्यदेयमिति नियोगसाहचर्यादृणं नियोगमात्रमुपलक्षयति, तेन किं सिद्धं भवतीत्याह । 'इहापीति'। 'पूर्वाह्णेगेयमिति' । 'तत्पुरुषे कृति बहुल' मित्यलुक्, यथा ऋणमवश्यं देयमेवमिदमपि पूर्वाह्णे ऽवश्यं गेयमिति नियोगो ऽस्ति ॥

"केनाहोरात्रावयवा:" ॥ 'दिवा वृत्तमिति'। ऐकपद्यमैकस्वर्यं च न भवति। ननु च दिवाशब्दोऽधिकरणशक्तिप्रधानस्तत्राभिहित: सोऽर्थान्तर्भूत: प्रातिपदिकार्थ: सम्पन्न इति प्रथमैवास्माद्भवति, अत: सप्तम्यभावादेवात्राप्रसङ्ग:। नैषोऽस्ति नियमोऽधिकरणशक्तिप्रधान इति, दिवामन्या रात्रिरित्यपि दर्शनात्, कथं रात्रिवृत्तमनुयोक्तुमुद्यतेति, 'कर्तृकरणे कृता बहुल'मिति मन्यते, एवं चाऽपञ्चजन्मकृतमित्याद्यपि भवति ॥

"तत्र" ॥ 'तत्रेत्येतत्सप्तम्यन्तमिति'। तत्र भवानित्यादौ विभक्त्यन्तरेऽपि दर्शनादधिकरणप्रतिपादने तत्रशब्दादपि सप्तम्येवापेक्ष्येति मन्यते ॥

"क्षेपे" ॥ अवतप्तेनकुलस्थितं तवैतदिति चिरन्तनप्रयोगस्तस्यार्थमाह। 'चापलमेतत्तवेत्यर्थ इति'। यथा ऽवतप्ते प्रदेशे नकुला न चिरं स्थातारो भवन्ति एवं कार्याण्यारभ्य यश्चापलेन न चिरं तिष्ठति स एव मुच्यत इत्यर्थ:। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मिति नकुलस्थितशब्देन समास:, पूर्ववदलुक् ॥

"पात्रेसंमितादयश्च" ॥ 'युक्तारोह्यादिपरिग्रहार्थमिति'। युक्तारोह्यादयश्चेत्यत्रैषामपि परिग्रहो यथा स्यादित्यर्थ:। 'पात्रएव संमिता इति'। भोजनसमयएव सङ्गता इत्यर्थ:। 'पात्रेबहुला इति'। भोजनसमयएव सङ्घीभवन्ति नान्यकार्य इत्यर्थ:। 'उदुम्बरमशकादिष्विति'। यस्तत्रैव तृप्तो नास्मात्परमस्तीति मन्यते सोयमदृष्टविस्तार: पुरुष उदुम्बरमशकादिरुच्यत इत्यर्थ:। 'प्रतिषिद्धसेवनेनेति'। शत्रुषु भार्यायां वा पुरुषायितव्यं, मातरि पुरुषायितं प्रतिषिद्धम्। 'निरीहतयेति'। पिण्डी ओदनपिण्डस्तत्रैव शूरो नान्यत्रेति निरीहता। 'परमपात्रेसंमिता इति'। एवं रूपं वृत्त्यन्तरं न भवति परमा: पात्रेसमिता इति वाक्यमेव भवतीत्यर्थ: ॥

"पूर्वकालैकसर्वजरत्पुराणनवकेवलास्समानाधिकरणेन" ॥ 'भिन्नप्रवृत्तिनिमित्तस्येत्यादि'। भिन्नग्रहणं पर्यायनिवृत्त्यर्थम्, एकग्रहणं गौरश्व

इत्यादिनिवृत्त्यर्थं, क्वं चिद्विवनिमित्तप्रयुक्तस्येति पाठः, भिन्नेन निमित्तेन प्रवृत्तिनिमित्तेन प्रवर्त्तितस्येत्यर्थः। विशेषणं विशेष्येणेति सिद्धे पूर्वकालादीनां पूर्वनिपातार्थं वचनम्, एकशब्दस्य तु 'दिक्संख्ये संज्ञाया'-मिति नियमात्प्राप्त्यर्थमेव। 'पूर्वकालइत्यर्थग्रहणमिति'। पूर्वः कालो ऽस्य पूर्वकालः पूर्वमनुष्ठितइत्यर्थः, स च चरमानुष्ठितमपेक्ष्य भवतीत्यर्थोत्तेनैव समासो विज्ञायतइत्याह। 'परकालेनेति'। 'स्नातानुलिप्त इति'। पूर्वं स्नातः पश्चादनुलिप्त इत्यर्थः। अत्र क्रियाशब्दत्वात्याचकपाठकादिवत्पूर्वनिपातः पर्यायात्स्यात्। 'एकशाटीति'। शाटशब्दाज्जातिलक्षणो ङीष्, 'एकतद्धिते चे'ति ह्रस्वः। 'सर्वमनुष्य इति'। अत्र विशेषणमित्यपि समासे न दोषः, तस्मात्क्रियावाचिनां गुणवाचिनां वा समासो दर्शनीयः, एवं जरदादिष्वपि। 'एकस्याः शाटीति'। अत्र भवितव्यमेव षष्ठीसमासेन तस्मादेकस्याः शौक्ल्यमिति प्रत्युदाहर्त्तव्यम्, अत्र हि गुणेन नेति प्रतिषेधः॥

"दिक्संख्ये संज्ञायाम्"॥ विशेषणं विशेष्येणेति सिद्धे नियमार्थमेतत् संज्ञायामेव नान्यत्रेति, पूर्वसूत्रमित्यादौ त्वदिग्वाचित्वात् समासः॥

"तद्धितार्थोत्तरपदसमाहारे च"॥ विशेषणं विशेष्येणेति सिद्धस्य पूर्वेणानियमादप्राप्तविधिरयम्, वक्ष्यमाणविषयत्वाद्वायमपि नियमः शक्यते वक्तुमयं नियमः पूर्वो विधिरिति। एकापि सप्तमी विषयभेदाद्भिद्यतइत्याह। 'तद्धितार्थे विषयभूतइत्यादिना'। तद्धितार्थे ऽभिधेयइत्येवं तु विज्ञायमाने पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्, तदर्थस्य समासेनैवोक्तत्वादिति भावः। अस्मिन्पक्षेर्थग्रहणं चिन्त्यप्रयोजनं तद्धिते विषयइत्येवास्तु, तद्धिते परत इति तु विज्ञायमाने इतरेतराश्रयं प्राप्नोति समासात्तद्धितो विधेयस्तद्धिते च समास इति, किं च तद्धितार्थेभिधेयइत्यस्मिन्पक्षे न दोषः, 'द्विगोर्लुगनपत्य' इति लुग्वचनं ज्ञापकमुत्पद्यते द्विगोस्तद्धित इति सर्वतद्धितसाधारणो द्विगुस्तत्रावश्यं विशेषाभिधानाय तद्धित उत्पद्यतइत्यपि शक्यं विज्ञातुम्। अथैवं कस्मान्न विज्ञायते तद्धितार्थे द्विगुर्भवति तद्धितो यथा स्यादिति द्विगुर्भवतीति, यथा दारार्थे घटामहे

द्वारा यथा स्युरिति घटामहइति, नैवं शक्यं विज्ञातुम्। एवं हि विज्ञायमाने तद्धितोत्पत्तये विधीयमाना समाससंज्ञा विषयान्तरे न स्यात्, एवं तस्यैव समासस्य विधीयमाना द्विगुसंज्ञापि, ततश्च पञ्चारत्निरित्यत्र इगन्ते द्विगाविति स्वरो न स्यात्, तस्य तु समाहारद्विगुरवकाशः, यथा स्वरे विधीयमानः पराङ्गवद्भावः षत्वणत्वयोर्न भवति तथात्रापि। 'पौर्वशाल इति'। पूर्वस्यां शालायां भव इति तद्धितार्थे विवक्षिते समासस्ततस्तद्धितः। 'पूर्वशालाप्रिय इति'। पूर्वा शाला प्रिया ऽस्येति त्रिपदे बहुव्रीहौ प्रियशब्दउत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति समासान्तोदात्तत्वं शालाशब्दस्य भवति, असति त्ववान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमवतिष्ठेत। 'समाहारे दिक्शब्दो न सम्भवतीति'। स हि समूहरूपत्वाद्भेदनिबन्धनः, संख्यैव च भेदमाचष्टे दिक्शब्दस्तु प्रत्यर्थेनियतः, विभक्तिरपि समासे निवर्त्तते। ननु यथा काकसमूह इत्यत्र विभक्त्यभावेपि भेदावगतिस्तथात्रापि भविष्यति, तस्मात्प्रयोगाभावादित्येवात्र हेतुर्वक्तव्यः। 'पाञ्चनापितिरिति'। पञ्चानां नापितानामपत्यमिति समासे 'ऽत इञ्'। 'पञ्चकपाल इति'। पञ्चसु कपालेषु संस्कृत इति समासे 'संस्कृतं भक्षा' इत्यणो 'द्विगोर्लुगनपत्य' इति लुक्। 'पञ्चगवधन इति'। पञ्च गावो धनमस्येति त्रिपदे बहुव्रीहौ कृते धनशब्दउत्तरपदे परतः पूर्वयोस्तत्पुरुषे 'गोरतद्धितलुकी' ति टच्। अयमुत्तरपदे तत्पुरुषो महाविभाषाधिकाराद्विकल्पेन प्राप्नोति नित्यो वक्तव्यः, अन्यथा पञ्चगोधन इत्यपि स्यात्। उक्तं च 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचन' मिति, वाक्च दृषच्च प्रिये अस्य वाग्दृषत्प्रियइति त्रिपदबहुव्रीहौ पूर्वयोर्द्वन्द्वः स च नित्य इष्यते, नित्यं समासान्तो यथा स्यादिति। 'पञ्चपूलीति'। पञ्चानां पूलानां समाहार इति विग्रहः, न तु पञ्चपूलाः समाहृता इति, भावसाधनो हि समाहारशब्दः समाहरणं समाहारः, विप्रकीर्णानामेकत्र राशीकरणं, पञ्चग्रामी पञ्चनगरी त्रिपुरीत्यत्रैकस्मिन् क्षणे क्रियायां समन्वयाद्विप्रदेशानामपि बुद्ध्या राशीकरणं भवति, अथ कर्मसाधने को दोषः, इह पञ्चकुमारीति कुमार्यर्थप्राधान्यात्समा-

समासे चाप्रथमानिर्दिष्टत्वादेकविभक्तित्वाभावाच्चोपसर्जनत्वाभावा- 'द्गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वो न स्यात्, काममत्र नपुंसकह्रस्वत्वं सिद्धम्, इह पञ्च खट्वाः समाहृताः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे ह्रस्वाभावाद् द्विगोरत इति ङीब् न स्यात्, भावसाधने तु समासार्थे समाहारे नानाविभक्तिभिर्युज्यमानेऽपि कुमारीशब्दस्य नित्यं षष्ठ्येव योग इत्येकविभक्तिकत्वात्सिद्धमुपसर्जनत्वं, तस्माद्भावसाधनः, द्विगुरेकवचनमित्येतत्तु 'स नपुंसक'मिति वक्ष्यामीत्यारभ्यते, कथं पञ्चपूलीमानयेत्युक्ते पूलानामानयनं, नान्तरेण द्रव्यानयनं भावानयनं सम्भवति, यथा नान्तरेण पात्रानयनमग्नेरानयनं सम्भवति, एवमपि समाहारग्रहणमनर्थकं भावसाधनो हि समाहारशब्दः समूहपर्यायः, समूहश्च तद्धितार्थस्तत्र तद्धितार्थेइत्येव सिद्धं, यद्येवं तद्धितोत्पत्तिः प्राप्नोति, उत्पद्यतां तद्धितः 'द्विगो'रिति लुग्भविष्यति, लुक्कृतानि प्राप्नुवन्ति. पञ्चपूली, अपरिमाणबिस्ताचितेति ङीप्प्रतिषेधः प्राप्नोति, 'पञ्चगवं गोरतद्धित लुकी'ति टच् न प्राप्नोति, नैष दोषः । अपरिमाणेऽत्यत्र न तद्धितलुकीत्यपास्य समाहारइति वक्तव्यं तन्नियमार्थम्, अविशेषेण द्विगोर्ङीब् भवति अपरिमाणान्ताद्बिस्ताचितकम्बल्यान्ताच्च समाहारएवेति, पञ्चानामश्वानां समाहारः पञ्चाश्वी, क्व मा भूत् पञ्चभिरश्वैः क्रीता पञ्चाश्वा, 'गोरतद्धितलुकी'त्यत्राप्यतद्धितलुकीत्यपास्य द्विगोः समाहारइति वक्तव्यं तन्नियमार्थं गोशब्दान्तस्य तत्पुरुषस्याविशेषेण टज् भवति द्विगोस्तु समाहारएवेति, पञ्चानां गवां समाहारः पञ्चगवं, क्व माभूत् पञ्चभिर्गोभिः क्रीतः पञ्चगुः पटः, एवमपि पञ्चकुमारीत्यत्र 'लुक् तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुक् प्राप्नोति, तस्मात्तद्धितनिवृत्त्यर्थं, समाहारग्रहणात्तु समासस्यैव समाहारो वाच्यो न तद्धितस्येति व्याख्यानात्तद्धितो नोत्पद्यतइति सिद्धमिष्टम् । इह पञ्च गावोऽस्य सन्ति पञ्चगुः पुरुष इति मत्वर्थस्य तद्धितार्थत्वादयं समासः प्राप्नोति, न बहुव्रीहिरयोपत्वात्, तस्य तु चित्रग्वादिरवकाशो यत्र दिक्संख्ये न स्तः, सति चास्मिन्समासे मतुपः श्रवणं स्यात्, अप्राग्दीव्यतीयत्वाद् द्विगोर्लुगपि नास्ति तस्मान्मत्वर्थे प्रतिषेधो वक्तव्यः ॥

"संख्यापूर्वो द्विगुः" ॥ क्वचिदनन्तरोऽपेक्ष्यते यत्रैतदुच्यते 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति, क्वचित्समुदायः यथा 'न षट्स्वस्रादिभ्य' इत्यत्र वक्ष्यते तस्माचोभावित्ति, तदिह समुदायोपेक्ष्यते ऽनन्तरो वेति संशये ऽनन्तर इत्याह । 'तद्धितार्थेत्यादि' । अयं भावः । समुदायापेक्षायां संख्यापूर्वपदसमानाधिकरणसमासमात्रपरिग्रहे द्विमुनिव्याकरणस्येत्यव्ययीभावस्यापि स्यादितीगन्ते द्विगाविति स्वरप्रसङ्गः, समानाधिकरणतत्पुरुषापेक्षायामपि एकशाटीत्यत्रापि स्यात्, संख्याशब्दोपादानविहिततत्पुरुषपरिग्रहेऽपि 'दिक्संख्ये संज्ञाया'मित्यस्यापि ग्रहणात्सप्तर्षय इत्यत्र द्विगुस्वरप्रसङ्गः, योगविभागश्चानर्थकः, दिक्संख्ये संज्ञायां तद्धितार्थोत्तरपदसमाहार इत्येकयोगः कर्त्तव्यः स्यादिति, कथमेकापूपीति, अत्र एकश्चासावपूपश्चेति पूर्वकालेति समासे कृते द्विगुत्वे सत्य'कारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत' इति 'द्विगो'रितीकारः सिद्धति नान्यथा, न चैकशाटीतिवज्जातिङीषन्तेन समासः शक्यते कर्तुं केवलस्यापूपशब्दस्य पुल्लिङ्गत्वात् । उच्यते । अत्रानन्तरसूत्रेण समाहार एव समासः । नन्वनेकविषयः समाहारो नैकस्य सम्भवति, कथम्, इहैकमप्यपूपं कश्चित्कृपणो दददनेकं मन्यते तथा दानश्रद्धातिशयादपूपमहत्त्वाद्वाऽनेकस्मिन्यः संभ्रमस्तमेकस्मिन्नपि करोति, अनेन प्रतिग्रहीता कृपणो व्याख्यातः, तत्रारोपितबहुत्वाश्रयः समाहार इति सिद्धम् ॥

"कुत्सितानि कुत्सनैः" ॥ 'कुत्सितानीति' । कुत्स अवक्षेपणे मत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्त्तमाने क्तः, बहुवचननिर्द्देशादुभयत्रार्थग्रहणं न स्वरूपग्रहणमित्याह । 'कुत्सितवाचीनीति' । वैयाकरणखसूचिरिति' । सूचयतेरिक्ष्वेतीकारः, यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयति खं निरीक्षते अहो निर्मलं गगनमिति स एवमुच्यते, अत्र व्याकरणस्य वेदाङ्गस्याध्ययनं प्रशस्तमपि प्रतिभानाभावेन निष्फलत्वात्कुत्स्यते । 'याज्ञिककितव इति' । किं तवास्तीति धनमात्रप्रश्नेन ज्ञात्यादिनिरपेक्षो द्यूते प्रवर्त्तमानः कितवः, इह तु कितव इव कितवः, यो याज्ञिको याज्यस्य धनसत्तामेवापेक्षते न यागार्हतां स याज्ञिककितव

इत्युच्यते तदाह । 'अयाज्ययाजकस्तृष्णापर इति' । 'मीमांसकदुर्दुरूट-इति' । दुल उत्क्षेपे दुःपूर्वः औणादिकः कूटप्रत्ययः । 'बहुलमन्यत्रापी' ति णिलुक्, लरयोरेकविषयत्वस्मरणादुर्दुरूट इति भवति । 'वैयाकरणश्चोर इति' । कथमेतत्प्रत्युदाहरणं, यावता चोरत्वेन गर्ह्यमाणत्वाद्भवत्येव वैयाकरणकुत्सा तत्राह । 'नह्यत्रेति' । प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तकुत्सायां समासेन भवितव्यम्, अत्र च वैयाकरणः कुत्स्यते चोरत्वेन न तु वैयाकरणत्वम् । 'कुत्सितो ब्राह्मण इति' । अत्र विशेषणं विशेष्येणेति भवितव्यमेव समासेन, यदि नेष्यते बहुलग्रहणं शरणम् ॥

"उपमानानि सामान्यवचनैः" ॥ 'उपमीयतेऽनेनेत्युपमानमिति' । उपपूर्वान्माङः करणे ल्युटि समास इति दर्शयति, भाष्ये तु मानस्य समीपमुपमानमित्यर्थकथनमात्रम्, अव्ययीभावे उपमानानीति रूपासिद्धिप्रसङ्गादिति भावः । उपपूर्वकश्च माङ् सादृश्यहेतुके परिच्छेदे रूढः, येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानं तद्यथा गौरिव गवय इति, गौः करणं, पुरुषः परिच्छेत्ता, स हि गोः सादृश्येन गवयं परिच्छिनत्ति गोसदृशो गवय इति । 'समान्यवचनैरिति' । समानशब्दः साधारणपर्यायस्ततश्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्, साधारणो धर्मः सामान्यं, तच्चोपमानस्य श्रुतत्वात्तस्य चोपमेयापेक्षत्वात्तयोरेव साधारणो धर्मो विज्ञायतइत्याह । 'उपमानोपमेययोरित्यादि' । 'तद्विशिष्टोपमेयवचनैरिति' । तेन साधारणेन धर्मेण विशिष्टं यदुपमेयं तद्वचनैः, न तु साधारणधर्ममात्रवचनैरित्यर्थः । वचनग्रहणाच्चायमर्थो लभ्यते, सामान्यमुक्तवन्तः सामान्यवचनाः, ये सामान्यमुक्त्वा तद्वति द्रव्ये पर्यवस्यन्ति ते तथोक्ताः, यथा गुणमुक्तवान् गुणवचन इति, तच्च सामान्यवदुपमानशब्दस्य संबन्धिशब्दत्वात्तदाक्षिप्तमुपमेयमेव विज्ञायतइति सुष्ठूक्तं तद्विशिष्टोपमेयवचनैरिति । 'शस्त्रीश्यामेति' । अत्र श्यामगुणविशिष्टत्वेन प्रसिद्धत्वादुपमानं शस्त्री, उपमेया देवदत्ता, तयोः साधारणो धर्मः श्यामत्वं, तदभिधाय तद्विशिष्टायां श्यामाशब्दः पर्यवस्यतीति भवति सामान्यवचनः । ननु च समानाधिकरणेनेति वर्तते, इह च शस्त्रीशब्दः

शस्त्र्यां वर्त्तते श्यामाशब्दस्तु देवदत्तायां, यदाह उपमानवाचीनि सुबन्तानि तद्विशिष्टोपमेयवचनैरिति, तथा विग्रहवाक्ये इवशब्दः प्रयुक्तः शस्त्रीव श्यामेति । सत्यम् । वचनसामर्थ्यात्तु वैयधिकरण्येपि समासः । यद्येवं मृगीव चपला मृगचपला हंसीव गद्गदा हंसगद्गदा, पुंवत्कर्मधारयेति सामानाधिकरण्यलक्षणः पुंवद्भावो न प्राप्नोति, नैष दोषः । जात्यन्तरनिवृत्तिपरायां चोदनायां स्त्रीत्वमकिञ्चित्करं तत्र कुक्कुटाण्डं मृगक्षीरमित्यादिवदिदमपि सिद्धम् । ननु चान्यदेव चापलं स्त्रिया अन्यदेव पुंसः, सत्यम् । जातिमात्रोपादानेपि प्रकरणादिवशात् स्त्रीत्वं प्रत्याययिष्यते, तच्च बहिरङ्गत्वाच्च स्त्रीप्रत्ययस्य निमित्तम्, अन्यथा पुंवद्भावेन निवृत्तौ स्त्रीप्रत्ययस्य तत्रापि कथं विशेषावगतिः, अस्त्वेवं यदि तु मृगीव चपलेति स्त्रीप्रत्ययान्तस्य समासः क्रियते तदा मृगीचपलेति प्राप्नोति, नहि तेन समासो दण्डवारितः, समानाधिकरणाधिकारश्च बाध्येत, एवं तर्हि समानाधिकरणसमास एवायं शस्त्री चासौ श्यामा चेति, कथं पुनर्देवदत्तायां शस्त्रीशब्दो, जातिवचनो ह्यसौ सादृश्यनिमित्तादभेदोपचाराद्यथा गौर्वाहीक इति, यद्येवं शस्त्रीशब्दोप्युपमेये संक्रान्त इत्युपमानवाचित्वं नोपपद्यते, सत्यम् । पूर्वावस्थाश्रयेण तूपमानत्वं द्रष्टव्यम् इवशब्दप्रयोगस्तूपमानप्रदर्शनार्थो न प्रक्रियावाक्याङ्गमिति न कश्चिद्दोषः । ननु श्यामगुणत्वेन साधर्म्येण शस्त्रीशब्दो देवदत्तायां प्रयुज्यत इति श्यामशब्दो न प्रयोगार्हः । तत्र । बहवो हि शस्त्र्यां गुणाः तीक्ष्णा सूक्ष्मा पृथुः श्यामेति, तत्रासति श्यामगुणेन शस्त्रीत्वमारोपितमिति । ननु सदपि श्यामपदं देवत्तामुपस्थाप्य चरितार्थमिति नैव शस्त्रीगुणो निर्दिश्यते, नैतदस्ति । नैवमत्र वचनं व्यज्यते या श्यामा सा शस्त्रीवेति, कथं तर्हि शस्त्रीव श्यामा देवदत्तेति, अस्यां तु वचनव्यक्ताविवशब्देन तावदुपमेयनिष्ठत्वेन प्रतीयते उपमेयनिष्ठो गुण उपमानं स्पृशत्येव, अथ वा चन्द्रमुखीत्यादावनिर्दिष्टोपि गुणः प्रियदर्शनत्वादिः प्रसिद्धिवशादुपमाननिमित्तत्वेन प्रतीयते तदोपमेयेपि तावच्छ्रुतः कथमुपमानं न स्पृक्ष्यति । 'फला इव तन्दुला इति' । दीर्घत्वादिना धर्मेण ॥

"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ॥ उपमितमित्यत्र भूतकालो न विवक्ष्यतइत्याह । 'उपमेयमुपमितमिति' । 'सामर्थ्यादिति' । उपमेयमुपमानापेक्षमित्येतत्सामर्थ्येन चेत्सामान्यवाचीति यदा प्रकरणादिवशान्नियतः साधारणगुणः प्रतीयते तदा समासः, यदा तु गुणान्तरव्यवच्छेदाय विशिष्टः साधारणगुणवचनः शब्दः प्रयुज्यते तदा न समास इत्यर्थः । 'पुरुषोयं व्याघ्र इवेति' । उपमानप्रदर्शनमेतत्, अत्र हि वैयधिकरण्यात्समासस्याप्रसङ्गः, यदा तु व्याघ्रशब्दस्ताद्धर्म्यात्पुरुषे वर्त्तते तदा सामानाधिकरण्ये सति समासः । अत एवोक्तं विशेषणं विशेष्येणेति प्राप्तइति । 'पुरुषोयं व्याघ्र इव शूर इति' । ननु सामान्यशब्दप्रयोगे सति तदपेक्षत्वादसामर्थ्यादेव न भविष्यति, एवं तर्ह्येतज्ज्ञापयति भवति प्रधानस्य सापेक्षस्य वृत्तिरिति, तेन राजपुरुषोभिरूप ऋौपगवः शोभन इत्यादि सिद्धं भवति, न्यायसिद्ध एवार्थे लिङ्गदर्शनमिदं, प्राधान्यादेवानेकोपकार्यत्वसम्भवात्पुरुषव्याघ्रोभिरूप इति भवत्येव, शौर्यं ह्यत्र समानधर्मो नाभिरूप्यम् । अत एव सामान्याप्रयोगइत्युक्तं न तु गुणाप्रयोगइति ॥

"विशेषणं विशेष्येण बहुलम्" ॥ 'भेदकमिति' । असिश्छिनत्तीतिवत् करणस्य कर्तृत्वविवक्षायां ण्वुल् । 'विशेषणमिति' । शिष्लृ शेषणे विपूर्वः, विशेष्यतेनेनेति विशेषणं करणे ल्युट्, यत्साधारणाकारेण प्रतिपन्नं बहुप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन्प्रकारे व्यवस्थापयति तत्पदं विशेषणं भेदकमिति चोच्यते, व्यवस्थाप्यमानं विशेष्यं भेद्यमिति च । ननु च विशेषणं विशेष्यमिति च सम्बन्धिशब्दावेतौ, ततश्च विशेषणमित्युक्ते गम्यतएव विशेष्येणेति, एवं विशेष्येणेत्युक्ते गम्यते विशेषणमिति, तत्किमर्थमुभयमुपादीयते, यत्र पूर्वोत्तरपदयोर्द्वयोरपि प्रत्येकं विशेषणविशेष्यभावस्तत्रैव यथा स्याद् यथा नीलोत्पलमिति, अत्र हि नीलार्थो भ्रमरादिसाधारणरूपेण प्रतिपन्न उत्पलार्थेनोत्पले व्यवस्थाप्यते, उत्पलार्थो हि रक्तादिसाधारणरूपेण प्रतिपन्नो नीलार्थेन नीले व्यवस्थाप्यतइति भवति प्रत्येकमुभयभावः, यत्र तु स नास्ति

न तत्र समासो भवति यथा प्रत्युदाहरणे तक्षकः सर्प इति। नहि तक्षकः सर्पत्वं व्यभिचरति, ननु व्यभिचरति क्रियानिमित्तकोपि तक्षकशब्दोस्ति तक्ष्णोतीति तक्षक इति, सत्यमस्ति न त्वसौ नामधेयेन गाहते तुल्यकक्षतां, द्रागेव रूढौ प्रतिभा क्रियाशब्दे विलम्बिता। इह तु शिंशपावृक्षइति शिंशपाशब्दस्य फलेपि दर्शनाद्वृक्षव्यभिचाराद्भवत्येव समासः, न चात्र वृक्षप्रतीतिपूर्विका फले प्रतीतिर्येन बहिरङ्गा स्यात्, यथैव हि पञ्चालादयः शब्दा जनपदिनां जनपदस्य च साधारणेनान्योन्ययोगमपेक्षन्ते तद्वदेतेपि, यथोवाच भगवान् 'लुब्योगाप्रख्याना' दिति। इह तर्हि कथमयज्जयाय नु मेरुमहीभृत इति, न मेरुर्महीभृत्त्वं व्यभिचरति। निरङ्कुशाः कवयः। यदि तर्हि यत्र प्रत्येकमुभयभावस्तत्र समासः, उभयोरपि विशेषणत्वमिति प्रथमानिर्द्दिष्टत्वादुपसर्जनत्वे सति पूर्वनिपातानियमः स्याद् नीलोत्पलं उत्पलनीलमिति। नैष दोषः। उपसर्जनमित्यन्वर्थसंज्ञेयमप्रधानमुपसर्जनमिति, अर्थतश्चाप्राधान्यं, तदिह द्रव्यगुणोपनिपाते द्रव्यं प्रधानमप्रधानं गुणः, द्रव्यं हि क्रियासिद्धौ साक्षादुपयुज्यते गुणस्तु द्रव्यावच्छेदद्वारेण, अतो गुणवचनस्यैव पूर्वनिपातो न द्रव्यवचनस्य। ननूत्पलशब्दोपि जातिशब्दः न द्रव्यशब्दः, यदि तु जातिविशिष्टे द्रव्ये पर्यवसानाद् द्रव्यशब्दत्वं, हन्तैवं नीलशब्दोपि गुणविशिष्टे द्रव्ये पर्यवस्यन् द्रव्यशब्दः स्यात्। अत्रोच्यते। उत्पत्तेः प्रभृत्याविनाशाज्जातिर्द्रव्यं न जहाति, शब्देन च द्रव्याव्यतिरेकेण जातिः प्रत्याय्यते शाबलेयो बाहुलेयो गौरिति, न तु भवति शाबलेयस्य गौरिति, तस्माज्जात्यात्मकमेव द्रव्यं प्रतीयतइति जातिशब्दो द्रव्यत्वेन व्यवस्थाप्यते। गुणाः पुनः सत्येव द्रव्ये कदा चिदुपयन्ति कदा चिदपयन्ति पटस्य शुक्ल इति, व्यतिरिक्ता अपि द्रव्यात्स्वशब्दैः प्रत्याय्यन्तइति न गुणात्मकं द्रव्यं भवतीति न गुणशब्दो द्रव्यशब्दत्वे व्यवस्थातुमर्हति, अत एव 'श्वेतं छागमालभेते' ति चोदनायां श्वेताभावे कृष्णश्छाग आलभ्यते न तु छागाभावे पिष्टपिण्डीमालभ्य कृती भवति, क्रियाद्रव्ययोरुपनिपातेप्येवमेव द्रष्टव्यम्। 'याचकब्राह्मण इति'। यत्र तु गुणशब्दयोः क्रियाशब्दयोः गुणक्रियाशब्दयोश्चोपनि-

पातस्तत्रानियम एव भवति खञ्जकुब्जः कुब्जखञ्जः, पाचकपाठकः पाठकपाचकः, खञ्जपाचकः पाचकखञ्जइति। 'शिंशपावृक्षइति'। द्रव्यशब्दयोरेवोपनिपातेपि वृक्षत्वस्य व्यापकत्वान्महाविषयत्वाद् दूरात्प्रथमत एवोपलम्भाच्च प्राधान्यं, शिंशपात्वस्य तु विपर्ययादप्राधान्यमिति न तत्राप्यनियमः। 'विशेषणमिति किमिति'। विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव विशेषणमिति लभ्यतइति प्रश्नः। 'तक्षकः सर्प इति'। ननु तक्षकशब्दोपि विशेषणं भवत्येव, एवं मन्यते, विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव पूर्वपदस्य विशेषणत्वे लब्धे पुनर्विशेषणग्रहणमुत्तरपदस्य विशेषणत्वप्रतिपत्त्यर्थं, विशेष्येण विशेषणं समस्यते तच्चेद्विशेष्यं विशेषणमिति, न चात्रोत्तरपदं विशेषणं तक्षकस्य सर्पत्वाव्यभिचारादिति। 'लोहितस्तक्षक इति'। नात्र तक्षको विशेष्यस्तस्य लोहितत्वाव्यभिचारात्। यद्येवं लोहितो विशेषणं न स्यात् तस्यापि विशेष्यापेतत्वात्, एवं तर्हि पाठक्रमादर्थक्रमो बलीयानिति तक्षको लोहित इति पाठो द्रष्टव्यः, अत्र हि तक्षको विशेषणं भवति, लोहितत्वस्य तक्षकत्वव्यभिचारात्, यद्येवं लोहितत्वस्य विशेष्यत्वमपि स्यात्, अस्त्येव तस्य विशेष्यत्वं पूर्वपदस्य तु विशेष्यत्वाभावात्प्रत्युदाहरणत्वम्, एवं च कृत्वा तक्षकः सर्प इत्येतदेवास्मिन्नपि प्रश्ने प्रत्युदाहरणं भवति विस्पष्टार्थे तूभयोरुपादानम्॥

"पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च" ॥ 'पूर्वेषुकामशमी, अपरेषुकामशमी' इति' ... 'पूर्वैषायं प्रपञ्च इति'। गुणक्रियाशब्देन सह समासे पूर्वादीनां पूर्वनिपातनियमार्थं तु न भवति बहुलग्रहणेनैव सिद्धत्वादिति मन्यते॥

"श्रेण्यादयः कृतादिभिः" ॥ एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः, तत्र पृथक्स्थितानां श्रेणीकरणे यथा स्यात् श्रेणिस्थानामेव तु दण्डादिरूपेण करणे मा भूदित्याह। 'श्रेण्यादिषु च्व्यर्थवचनमिति'। 'श्रेण्यादयः पठ्यन्तइति'। तेन तत्रादिशब्दो व्यवस्थावाची। 'कृतादिराकृतिगण इति'। प्रयोगदर्शनेनाकृतिग्राह्यो गण आकृतिगणः, अत्रादिशब्दः प्रकारे। 'च्व्यन्तानामित्यादि'। परत्वादिति भावः। आकृतिगणेष्युदाहरणरूपेण कतिपयान्पठति। 'कृत मतेत्यादि'॥

"क्तेन नञ्विशिष्टेनानञ्" ॥ विशिष्टशब्दोयमधिके वर्त्तते, तच्चाधिक्यं क्व चित्सावधारणं, तद्यथा, देवदत्तो यज्ञदत्तात्स्वाध्यायेन विशिष्टः, स्वाध्यायेनैव विशिष्टो ऽन्ये गुणाः समा इति गम्यते, क्व चिन्निरवधारणं, तद्यथा, देवदत्तो यज्ञदत्तात्स्वाध्यायेन विशिष्टः, स्वाध्यायेन तावद्विशिष्टो ऽन्ये गुणाः समा भूयांसो वा नैतद्विज्ञायते, वाक्यस्यैकरूपत्वे ऽर्थप्रकरणादिना विशेषनिर्णयस्तत्र निरवधारणपक्षे सिद्धं च तदभुक्तं चेत्यत्रापि स्यात्, क्तान्तयोः प्रकृतिभेदेपि नञ् तावदधिक इति विशिष्टग्रहणं चानर्थकं स्यात्, क्तेन सनञा नञित्येव वाच्यं स्यात्, अतः सावधारणपक्षमाश्रित्याह । 'नञेव विशेषो यस्येति' । प्रकृत्यादिकमित्यादिशब्देन प्रत्ययोपसर्गयोर्ग्रहणं तत्र सिद्धं च तदभुक्तं चेति प्रकृतिरतुल्या, कर्त्तव्यमकृतमिति प्रत्ययः, प्रकृतं चानपकृतं चेत्युपसर्गः, एवं च पूर्वपदमपि क्तान्तमेव लभ्यतइत्याह । 'अनञ् क्तान्तमिति' । अनञिति शक्यमकर्त्तुम्, नहि पूर्वपदे सनञि उत्तरपदे नञधिको भवति । 'कृतं च तदकृतं चेति' । अवयवधर्मेणायं समुदायस्य व्यपदेशः, एकमेव च वस्त्वेकदेशकरणात्कृतं च भवत्येकदेशाकरणादकृतं चेति नात्र कश्चिद्विरोधः, यदि तर्हि सावधारणपक्ष आश्रीयतएवं सति यस्य नुडपरोधिक इडागमो वा तेन सह समासो न स्यादित्यत आह । 'नुडिटाविति' । नुड्ग्रहणमागमोपलक्षणं, न्यायस्य तुल्यत्वात्तेनच्छिन्नाच्छिन्नमिति तुगधिकस्यापि ग्रहणम् । 'अशितानशितेनेति' । अश भोजने, 'तस्मान्नुडचि' । 'क्लिष्टाक्लिशितेनेति' । 'क्लिशः क्त्वानिष्ठयो'रिति पक्षे इट्, तत्र नुट् प्रत्ययान्तभक्तः, इट् प्रत्ययभक्तस्तुक् नञ्भक्त इति सर्वेषामुत्तरपदेन्तर्भावः, इह तु छाताच्छितमिति 'शाच्छोरन्यतरस्यामि'तीत्वे कृते तेनाधिक्यात्समासो न प्राप्नोति । अत्र के चिदाहुः । नुडिड्ग्रहणमर्थाभेदकस्य विकारमात्रस्योपलक्षणं, तेनेहापि समासो भवतीति, त्रातात्राणमित्यत्र तु निष्ठानत्वस्यासिद्धत्वाद्भेदकत्वाभावः, गौणत्वात्सामानाधिकरण्यस्य पूर्वेण न प्राप्नोतीत्यारम्भः, पूर्वनिपातनियमार्थश्च, कृताकृतमित्येव यथा स्यादकृतकृतमिति माभूत् । 'कृतापकृतमिति' । एक-

देशस्येष्टस्य करणादेकदेशस्य चानिष्टस्य करणादेकमेव वस्तु कृतं च भवत्यपकृतं च भुक्तं च तदत्यवहृतत्वात्, द्विभुक्तं वाशोभनत्वाद्भुक्तविभुक्तं, विशब्दोऽत्राशोभनत्वं द्योतयति विरूपवत्, एवं पीतविपीतं, गमनं गतं प्रत्यागमनं प्रत्यागतं तत् तुल्यभुवा प्रत्यागमनेन सह चरितं गमनं गतप्रत्यागतं, यातं च तदनुयातं च तदानीमेव पुनर्गमनात् यातानुयातम्। 'क्रयाक्रयिकेति'। 'अल्प' इति क प्रत्ययः, तदन्तश्च स्वभावात्स्त्रियां वर्त्तते, 'क्रयाक्रयिकेति'। 'अन्येषामपि दृश्यत' इति दीर्घः। महान् क्रयः क्रयशब्देनोच्यते गोबलीवर्दन्यायेन, एवं पुटापुटिका फलाफलिका मानोन्मानिकेति। 'शाकपार्थिवादीनामिति'। सिद्धयइति शेषः। पृथोरपत्यं पार्थवः, केचित्पार्थिवेति पठन्ति, पृथिव्या ईश्वर पार्थिवः, 'तस्येश्वर' इत्यञ्, तस्याभ्यवहार्येषु शाकं प्रियत्वात्प्रधानं तत्र साहचर्यादेव तद्व्यपदेशत्वलाभादुत्तरपदलोपो न वक्तव्यः, समासस्तु वक्तव्यो गौणत्वात्सामानाधिकरण्यस्य॥

"सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः"॥ 'पूज्यमानैरिति वचनादिति'। पूज्यमानस्य पूजापेक्षत्वादिति भावः। अत एव सदिति स्वरूपग्रहणं न शतृशानचोः, नहि तौ पूजामाहतुः। 'उत्कृष्टो गौरिति'। उद्धृत इत्यर्थः। महाजनो महोदधिरित्यादौ पूजाभावेपि विशेषणं विशेष्येणेति समासः, वचनं तु गुणक्रियाशब्दैरपि समासे सदादीनामेव पूर्वनिपातनियमार्थम्॥

"वृन्दारकनागकुञ्जरैः पूज्यमानम्"॥ वृन्दारकशब्दो देवजातिवचन इतरौ हस्तिजातिवचनौ, तत्रोपमानत्वे सति पूजावचनता सम्भवति तत्र व्याघ्रादेराकृतिगणत्वात्सिद्धे समासे पूजायामेव यथा स्यान्निन्दायां मा भूदित्येवमर्थं वचनम्, इह मा भून्माणवकोयं नागो यस्मान्मूर्ख इति, सामान्यप्रयोगेपि यथा स्यादित्यन्ये। 'सुषीम इति'। संज्ञेयं नागविशेषस्य, यद्येवं विशेषणं विशेष्येणेत्यधिकारादेवात्र न भविष्यति, नह्यनागः सुषीमोस्ति, सत्यं, प्रत्युदाहरणदिगियं दर्शिता माणवकोयं नाग इति प्रत्युदाहरणम्॥

"कतरकतमौ जातिपरिप्रश्ने" ॥ 'कतरकठ इति'। 'गोत्रं च चरणैः सहे' ति जातिः। 'तथा च प्रत्युदाहरणमिति'। एवं वृत्तिरुपन्यस्तमुपपन्नं भवतीति शेषः॥

"पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः" ॥ 'उभयव्यञ्जनेति'। व्यज्यतेनेन स्त्रीत्वादिकमिति व्यञ्जनं स्तनादि, उभयोः स्त्रीपुंसयोर्व्यञ्जनं यस्याः सा तथोक्ता, नपुंसकं पोटेत्यर्थः, पोटाशब्दस्तु तत्रापि स्त्रीत्वयुक्तः प्रवर्त्तते, शब्दानां चित्रशक्तित्वात् षण्डशब्दो यथा पुमान्। 'धूर्त्तग्रहणमकुत्सार्थमिति'। कुत्सायां तु 'कुत्सितानि कुत्सनै' रिति सिद्धमिति भावः। 'तत्र कठधूर्त्त इति'। यः कठः स धूर्त्त इत्यर्थो न तु कठत्वं कुत्स्यते॥

"प्रशंसावचनैश्च" ॥ 'रूढिशब्दाः प्रशंसावचना गृह्यन्तइति'। प्रशंसयेति वक्तव्ये वचनग्रहणादिह ग्रहणं रूढिशब्दानां प्रशंसामात्रवाचिनां, तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयो ये च विशेषवचनाः शुचिमृद्वादयो ये च जातिशब्दाः सन्तः परत्र प्रयोगात्प्रशंसां गमयन्ति सिंहो माणवक इति ते सर्वे व्युदस्ता भवन्ति। 'मतल्लिकादय इति'। मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनीत्यमरः। 'आविष्टलिङ्गत्वादिति' नियतलिङ्गत्वादित्यर्थः। 'स्वलिङ्गोपादाना इति'। स्वस्यैव लिङ्गस्योपादानं येषु ते तथोक्ताः, प्रशंसावचनपोटायुवतीत्येकयोगे कर्त्तव्ये योगविभागश्चिन्त्यप्रयोजनः॥

"युवा खलतिपलितवलिनजरतीभिः" ॥ संज्ञायूनो ग्रहणे गार्ग्यायणः खलतिरित्यादावेव तु स्यात्र च तस्य जरतीशब्देन सामानाधिकरण्यं न च गार्ग्यायणी युवतिरस्ति स्त्रियां युवसंज्ञाप्रतिषेधादतो युवेति स्वरूपग्रहणमित्याह। 'युवशब्द इति'। 'खलत्यादिभिः समानाधिकरणैरिति'। कथं पुनर्युवशब्दस्य जरतीशब्देन सामानाधिकरण्यं पुल्लिङ्गस्य स्त्रीलिङ्गेनेति, तत्राह। 'स्त्रीलिङ्गनिर्देश इति'। अस्यां हि परिभाषायां सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्यापि ग्रहणादुपपद्यते

युवतिजरतीशब्दयोः सामानाधिकरण्य,मसत्यां तु नोपपद्यतइत्यर्थोपत्त्या परिभाषा ज्ञायते । 'युवखलतीति' । 'कृदिकारादक्तिनः' 'सर्वतोक्तिन्नर्थादित्येक' इति ङीष्, वलिशब्दः पामादिः, । 'युवजरन्निति' । जरद्भिरित्यपि पाठः केन चिदाचार्येण बोधित इति पुल्लिङ्गेनापि समासो भवतीति भावः । 'युवतिर्जरतीति' । कथं विरुद्धवाचिनोः सामानाधिकरण्यम्, अन्योन्यधर्मोपलम्भात्तद्रूपत्वारोपाद्भविष्यति, यद्येवं विभिन्नलिङ्गयोरप्येवमेव सामानाधिकरण्यसम्भवात्कथं परिभाषाज्ञाप्यतइति चिन्त्यं, युवशब्दस्य पूर्वनिपातनियमार्थं वचनमनियमो हि गुणशब्दत्वात्स्यात् ॥

"कृत्यतुल्याख्या अजात्या" ॥ 'तुल्यपर्यायाश्चेति' । आख्याग्रहणं स्वरूपनिराकरणार्थमिति भावः । भोज्योष्णादावनियमे प्राप्ते पूर्वनिपातनियमार्थं वचनम् । 'तुल्यमहानिति' । सन्महदित्यस्याकृत्यतुल्याख्येषु सावकाशत्वात्कृत्यतुल्याख्येषु परत्वादयमेव समासो युक्त इति भावः । 'भोज्य ओदन इति' । प्रतिषेधसामर्थ्याद्विशेषणमित्यपि न भवति ॥

"वर्णो वर्णेन" ॥ विशेषणं विशेष्येणेति वर्त्तते, तत्र द्वयोः स्वरूपग्रहणेन विशेषणता भवेत् । 'वर्णश्चासौ वर्णइति' । किं व्यावृत्तं किमन्वितम् अथैकत्र विशेषाणां रूपस्यान्यत्र च ग्रहः, शुक्लश्चासौ वर्ण इति न स्याद्वर्णो विशेषणं शुक्लस्य वर्णत्वाव्यभिचारात् तस्मादुभयत्र विशेषग्रहणमित्याह । 'वर्णविशेषवाचीत्यादि' । 'कृष्णसारङ्ग इत्यादिना' । नानावर्णसमाहारः सारङ्गः, तथा शबल,स्तस्य वर्णान्तरसमाहारेपि भावात्कावर्ण्यान्वयो नियतो न स्यादिति कृष्णो विशेषणम्, एवं लोहितशब्देपि द्रष्टव्यं, ननु च कृष्णशब्दोत्रावयवे वर्त्तते न समुदाये तस्य सारङ्गत्वात् तत्कथमवयववृत्तेः कृष्णशब्दस्य समुदायवृत्तिना सारङ्गशब्देन सामानाधिकरण्यमत आह । 'अवयवद्वारेणेत्यादि' । कृष्णावयवसम्बन्धात्समुदाय एव कृष्णउच्यतइत्यर्थः । अत एवात्र गौणं सामानाधिकरण्यमिति सूत्रारम्भः । ननु तृतीया तत्कृतेनेत्येवात्र सिद्धः समासः, कथं, सारङ्गशब्दो गुणवचनः सारङ्गत्वं कृष्णावयवकृतमित्यस्त्येव सिद्धिः, तत्रायम-

र्थ्यर्थः। 'वर्णो वर्णेष्वनेत' इति पूर्वपदप्रकृतिस्वरो न वक्तव्यो भवति, तत्पुरुषे तुल्यार्थतृतीयेत्येव सिद्धत्वात्, तदवश्यं वक्तव्यमेतत्प्रतिषेधार्थमिह मा भूत् कृष्णैतो लोहितैत इति, इदं तु न वक्तव्यं इदमपि वक्तव्यमिहापि यथा स्यात् शुक्लबभ्रुः कृष्णशुक्लो हरितशुक्लः बभ्रुकपिलः, यस्य कश्चिदवयवः शुक्लः कश्चिद्बभ्रुः स समुदायो ऽवयवशब्दाभ्यां तथोच्यतइति नात्र तत्कृतत्वसंभवः, अत्र कृष्णसारङ्ग इत्यादौ यत्रैकोऽवयवशब्दो ऽपरः समुदायशब्दस्तत्रावयवस्याप्रधानत्वादुपसर्जनत्वात्पूर्वनिपातः, द्वयोस्त्ववयवशब्दयोः पर्याय इति द्रष्टव्यम्, इह यस्मिन् प्रयोगे वीरैः पुरुषैस्तद्वान् ग्रामः प्रतिपादयितुमिष्टस्तत्र प्रथममेवान्यपदार्थविवक्षा कार्या वीराः पुरुषा अस्मिन्सन्तीति वीरपुरुषको ग्राम इति, बहुव्रीहिरेव नित्यं यथा स्याद् अन्यथा पूर्वमनपेक्षिते ऽन्यपदार्थे वीराः पुरुषा वीरपुरुषा इति कर्मधारये कृते पश्चादन्यपदार्थविवक्षायां मत्वर्थीये सति वीरपुरुषवान् ग्राम इत्याद्यनिष्टमपि कदा चिदनुवर्त्येत, सर्वशब्दस्य त्वकारान्तैः कर्मधारयोपीष्यते तस्माच्च मत्वर्थविवक्षाया- 'मत इनिठनौ' विति ठनं बाधित्वा इनिरेव भवतीति वक्तव्यं, सर्वं धनं सर्वधनं तदस्यास्तीति सर्वधनी सर्वबीजी सर्वकेशी, यत्र कर्मधारयो जातिविशेषवचनस्तत्र कर्मधारयान्मत्वर्थीयो भवति कृष्णसर्पवान्वल्मीकः, लोहितशालिमान् ग्रामः गौरखरवदरण्यं, गौरमृगवदिति, नहि बहुव्रीहिणा तज्जात्या तद्वत्त्वं शक्यं प्रतिपादयितुम्॥

"कुमारः श्रमणादिभिः"॥ कुमारशब्दस्य पूर्वनिपातनियमार्थं वचनम्॥

"चतुष्पादो गर्भिण्या"॥ 'चतुष्पाज्जातिरिति'। के चिदाहुः। पोटादिसूत्राज्जातिग्रहणमनुवर्त्यमिति। अन्ये त्वाहुः। ये शब्दान्तरनिरपेक्षाश्चतुष्पाद्वानस्तएवान्तरङ्गत्वाद्गृह्यन्ते न तु कालाक्ष्यादयो यौगिकाः शब्दान्तरसंनिधानाच्चतुष्पाद्विषया इति, गर्भिणीशब्दस्य परनिपातार्थं वचनम्॥

"मयूरव्यंसकादयश्च"॥ 'मयूरव्यंसक इति'। व्यंसको धूर्त्तः, मयूरश्चासौ व्यंसकश्चेति व्यंसकशब्दस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते वचनम्,

एवं छात्रव्यंसकादीनां कम्बोजमुण्डपर्यन्तानाम्। अन्ये त्वाहुः। मयूरइव व्यंसकश्छात्रइव व्यंसकः कम्बोजइव मुण्डः, यवनइव मुण्डः, उपमानसमासोयम्, 'उपमानानि सामान्यवचनै'रित्येव सिद्धे पुनर्विधानं तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो मा भूदिति. स ह्युपमानसंशब्दनेन विहिते समासे विधीयतइति । 'पुनर्द्वायेति'। 'पुनश्चनसौ छन्दसी'ति गतिसंज्ञा । 'वार्तिककारीयेति'। गणकारेणेदं पठितम्, एहि इडेति यस्मिन्कर्मणि तदेहीडम्, एवमेहियवम्, एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा, एवमपेहिवाणिजा प्रेहिवाणिजा, एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता, इहवितर्को, लोण्मध्यमैकवचनं, प्रोह करटमिति यस्यां सा प्रोहकरटा, एवं प्रोहकर्दमादय आहरवसनान्ताः । कृती छेदने तदेव वचनं, मुचादित्वान्नुम्, कृन्त विचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा, उद्धर उत्सृजेति यस्यां सोद्धरोत्सृजा, आख्यातमाख्यातेनेति सिद्धे ऽसातत्यार्थं वचनम्, एवमुद्धमविधमा, उत्पचविपच, उत्पतनिपता, उदक् च अवाक् च उच्चावचम्, उच्चैश्च नीचैश्च उच्चनीचम्, आचितं चोपचितं च आचोपचं, निश्चितं च प्रचितं च निश्चप्रचं, सर्वएते निपात्यन्ते, न किञ्चन विद्यते यस्य सो ऽकिञ्चनः, स्नात्वाकालकादिषु समासान्तोदात्तत्वं ल्यबभावश्च निपातनात्। प्रतीयमानक्रियापेक्षं च समानकर्तृकत्वं स्नात्वाकालकः संपद्यते। 'जहि कर्मणेति'। जहीति लोण्मध्यमैकवचनं, तदेतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत्कर्ता विधीयते, जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः, अश्नीत पिबतेत्येवं यत्र सततमभिधीयते सा ऽश्नीतपिबता, एवं पचतभृज्जता, भ्रस्ज पाके। भिन्धि लवणमिति यस्यामभिधीयते सा भिन्धिलवणा, एवं पचलवणा । 'अविहितलक्षणस्तत्पुरुषइति'। यस्य तत्पुरुषस्य लक्षणं न कृतं प्राप्तप्रयोगश्च भवति स मयूरव्यंसकादेराकृतिगणत्वादत्रैव द्रष्टव्य इत्यर्थः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

"पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" ॥ 'एकदेशोऽस्यास्तीत्येकदेशीति'। एकगोपूर्वादिति ठञ् प्राप्नोति, अत एव निर्देशादिनिर्द्रष्टव्यः। एकदण्डीत्ययं त्वपशब्दः, एको दण्डो यस्येति बहुव्रीहिणैव गतत्वान्मत्वर्थ एव दुर्लभः किं पुनरिनिष्ठजा बाधितः, एकदेशशब्दस्तु कर्मधारय एवावयववचन इति न तत्र बहुव्रीहिणा गतत्वं यथा कृष्णसर्पवानिति। 'सामर्थ्यादेकदेशवचना इति'। एकदेशमपेक्ष्यैकदेशी भवति नान्यथेत्येतत्सामर्थ्यम्। 'एकाधिकरणग्रहणमेकदेशिनो विशेषणमिति'। सत्सप्तम्यन्तवैयधिकरण्येनेति भावः, तदाह। 'एकं चेदिति'। एकत्वसंख्याविशिष्टमित्यर्थः। समानाभिधेयवचन एकाधिकरणशब्दो न भवति, अवयवावयविशब्दयोः सामानाधिकरण्यानुपपत्तेः सामानाधिकरण्येनेति प्रकृतत्वाच्च। स्यादेतत्। समुदायेषु हि दृष्टाः शब्दा अवयवेष्वपि वर्त्तन्त इति न्यायेन सामानाधिकरण्ये सति पूर्वश्चासौ कायश्चेति विशेषणमित्येव सिद्धः समासो नार्थ एतेन, एवं च कृत्वा परवल्लिङ्गमित्यत्र तत्पुरुषग्रहणं न कर्त्तव्यं भवति, कथम्, उत्तरपदार्थप्रधानत्वादेव सिद्धमिति तत्राह। 'षष्ठीसमासापवादोऽयं योग इति'। सिद्धं तु कथं चित्पूर्वकाय इति कायपूर्व इत्यस्य निवृत्त्यर्थमेव तु सूत्रं कर्त्तव्यमित्यर्थः। 'पूर्वं कायस्येति'। यद्यपि दिशि दृष्टः शब्दो दिक्शब्द इत्याश्रयणात्सम्प्रत्यद्विग्वृत्तिनापि योगे पञ्चमी भवति 'तस्य परमाम्रेडित'मिति लिङ्गादवयववृत्तिभिर्योगे षष्ठी भवति। 'पूर्वं नाभेः कायस्येति'। नाभेरिति दिग्योगलक्षणा पञ्चमी, कायसम्बन्धी नाभ्यपेक्षया पूर्वो भाग इत्यर्थः, तत्र नाभिरेकदेशी न भवतीति न तेन समासो भवति, यस्त्वेकदेशो कायस्तेन समासो भवत्येव पूर्वकायो नाभेरिति, पूर्वशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वादिति केचिदाहुः। अन्ये तु यत्रार्थप्रकरणादिनावधिर्गम्यते तत्रैव समासो न शब्दोपादानइत्याहुः। 'पूर्वं छात्राणामिति'। नेयं निर्द्धारणे षष्ठी किं तर्हि समुदायश्छात्राणामित्यनेनोच्यतइति बहुवचनं यथा छात्राणां पञ्चम इति, ततश्च छात्राणामेकदेशित्वमस्त्येव किं तु बहुत्वसंख्याविशिष्टानामिति समासाभावः। 'संज्ञा-

विसायपूर्वस्येत्यादि'। नह्यन्यथा सायपूर्वत्वमह्नस्योपपद्यतइति भावः। क्वे चित्तु सर्वैकदेशवाचिना कालवाचिनः समासो भवति न त्वहन्शब्दस्यैवेति ज्ञापकशरीरं वर्णयन्ति, तेन मध्यरात्र इत्यपि सिद्धं भवति ॥

"अर्द्धं नपुंसकम्" ॥ 'आविष्टलिङ्ग इति'। नियतलिङ्ग इत्यर्थः। 'तस्येदं ग्रहणमिति'। तत्रैवार्थे नपुंसकत्वस्याव्यभिचाराद् अवयववाची ह्यभिधेयवशेन त्रिलिङ्गः, अपूपार्द्धं मया भक्षितं दन्तार्द्धमाप्यात्यतितं ग्रामार्द्धो नगरार्द्धः, सर्पिषार्द्धया व्यनक्तीति 'तस्यार्द्धाः शस्त्वार्द्धाः परिशिष्य म ये निविदं दधाती'ति। भाष्ये त्ववयववाची पुल्लिङ्ग इत्युपलक्षणं, क्व चित्तु समप्रविभागे स्त्रीलिङ्गता दृश्यते 'एकान्तृचेर्द्धा युग्मास्वि'ति, युग्मासु ऋतु अर्द्धाः शस्त्वा निविदं दध्यादित्यर्थः, तस्यार्थत्वेन निर्वाहः। अर्द्धमिति नपुंसकनिर्देशः शब्दरूपापेक्षयापि सम्भाव्येत, यथा 'स्वमज्ञातिधनाख्यायां' 'बन्धुनि बहुव्रीहा'विति तस्मान्नपुंसकमित्युक्तम्। 'अर्द्धपिप्पलीति'। पिप्पलीशब्दस्यैकविभक्ति चेत्युपसर्जनसंज्ञा न भवति एकविभक्तावषष्ठ्यन्तमिति वचनात्। 'अर्द्धं पिप्पलीनामिति'। न तर्हीदानीमिदं भवति अर्द्धानि पिप्पलीनामर्द्धपिप्पल्य इति, नैतदस्मिन्विग्रहे भवति खण्डसमुदाये भवति अर्द्धपिप्पली चार्द्धपिप्पली चार्द्धपिप्पल्य इति। 'देवदत्तशब्देन समासो न भवतीति'। देवदत्तोत्र स्वामी न त्वेकदेशी यस्त्वेकदेशी पशुस्तेन भवत्येव समासः अर्द्धपशुर्देवदत्तस्येति, देवदत्तस्वामिकं पशोरर्द्धमित्यर्थः, तत्र समुदायेन सम्बन्धाद्वास्ति सापेक्षत्वम्। अयं योगः शक्यो ऽवक्तुं, कथमर्द्धपिप्पली, सामानाधिकरण्यो भविष्यति अर्द्धं चासौ पिप्पली चेति। ननु च यद्यर्द्धं न पिप्पली अथ पिप्पली नार्द्धम् अर्द्धं पिप्पली चेति विप्रतिषिद्धं, नास्ति विप्रतिषेधः, समुदाये हि दृष्टाः शब्दा अवयवेष्वपि वर्त्तन्ते। किन्त्व समप्रविभागादन्यत्रार्द्धचन्द्रादावयमेव गतिप्रकारः समप्रविभागेपि तथास्तु, इदं तर्हि प्रयोजनं समप्रविभागे षष्ठीसमासो माभूदिति, इष्यते षष्ठीसमासोपि, तथा च भगवान्पिङ्गलनागः प्रयुङ्क्ते, स्वरार्द्धं चार्यार्द्धमिति। एवं तर्हि गौणत्वात्सामानाधिकरण्यस्य विशेषणसमासो न किल स्यादित्ययमारम्भः ॥

"द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्" ॥ 'अन्यतरस्यांग्रहणात्सोपि भवतीति'। ननु च पूरणप्रत्ययान्ता एवैते द्वितीयादयस्तत्र पूरणगुणसुहितेत्यादिना प्रतिषेधेन भवितव्यं, यदापि 'पूरणाद्भागे तीयादनि' ति स्वार्थिकोन्प्रत्ययः क्रियते तदापि पूरणगुणसुहितार्थसत्ययशब्दस्य प्रत्येकमभिसम्बन्धात्पूरणार्थग्रहणं न तु तदधिकारविहितप्रत्ययग्रहणमिति भवितव्यमेव प्रतिषेधेन तत्कथं सोपि भवतीत्याह। 'पूरणगुणेत्यादि'। वाक्यस्य महाविभाषयैव सिद्धत्वात्षष्ठीसमासप्राप्त्यर्थमेवान्यतरस्यांग्रहणमिति भावः। पूर्वं तु षष्ठीसमासापवादो योग इत्याद्यप्राप्त्यभिप्रायेणोक्तं, यद्वा सत्यस्मिन्योगे षष्ठीसमासप्रतिषेधस्यास्य च षष्ठीसमासबोधकत्वमविशिष्टमिति मत्वा तथोक्तम्। अयमपि योगः शक्यो ऽवक्तुं, कथं, समुदायावयवयोरौपचारिके सामानाधिकरण्ये सति द्वितीयभिक्षादि सिद्धं मुख्यार्थवृत्तौ षष्ठीसमासे तु भिक्षाद्वितीयमित्यादि भविष्यतीति, नैतत्सुष्ठूच्यते, अनेनैव खल्वन्यतरस्यांग्रहणेन षष्ठीसमासः प्राप्यते कथमस्मिन्योगे ऽसति भविष्यति ॥

"प्राप्तापन्ने च द्वितीयया" ॥ 'प्राप्तजीविक इति'। एकविभक्तीत्युपसर्जनत्वाद्ध्रस्वत्वम्। प्राप्ता जीविका येनेति कर्मणि क्तान्तेन बहुव्रीहावप्येतत्सिद्धं, समासान्तोदात्तत्वार्थं तु वचनम्। इह प्राप्तसुखः प्राप्तदुःख इत्यादिषु जातिकालसुखादिभ्य इति प्राप्तापन्नयोः परनिपातप्रसङ्गश्च। इह लिङ्गविशिष्टपरिभाषया प्राप्ताशब्दस्याप्ययं समासो भवति, प्राप्ता जीविकां प्राप्तजीका इति, पुंवद्भावो वक्तव्यः। भाष्ये त्वकारः पूर्वपदस्य विधीयतइत्युक्तं, चकारेण समुच्चयार्थेनाकारप्रश्लेषोनुमीयते सौत्रत्वाच्च निर्देशस्य प्रकृतिभावाभावः, प्राप्तापन्ने द्वितीयान्तेन सह समस्येते अ च अत्वं च भवति प्राप्तापन्नयोरित्यर्थः ॥

"कालाः परिमाणिना" ॥ 'सामर्थ्यात्परिमाणवचना इति'। परिमाणमपेक्ष्य परिमाणी भवति नान्यथेत्येतत्सामर्थ्यं, तत्र च यद्यपि कालः प्रस्थादिवत्सर्वतो मानं न भवति तथापि परिच्छेदहेतुत्वात्परिमाणमित्युच्यते। 'मासो जातस्येति'। कस्य पुनरयं मासः परिच्छेदको न तावज्ज्ञा-

तस्य, तस्य हि दिष्टयादि परिमाणं न तु मासः, नापि जननक्रिया, तस्या एकक्षणभावित्वान्मासेन सम्बन्धाभावात् । उच्यते । जननक्रियावधिर्मासेन परिच्छिद्यते, मासो जातस्येति, कोऽर्थः, जननक्रियाया ऊर्ध्वमस्य मासो जातः, अतीते मासेऽस्य जननमिति यावत्, अनेन प्रकारेण मासो जातस्य परिमाणं, यथा मासे देयमृणमिति ऋणदानस्यावधिर्मासेन परिच्छिद्यते । 'मासजात इति' । यथा गावोऽस्य सन्तीति गोमानिति वाक्ये षष्ठीनिर्दिष्टस्यापि तद्वतो वृत्तौ प्राधान्यं, तत्कस्य हेतोः, अभिहितः षष्ठ्यर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति, यथा चित्रा गावोऽस्य चित्रगुः पुरुष इति बहुव्रीहाविति तद्वदत्रापि वाक्ये षष्ठीनिर्दिष्टस्यापि तद्वतो जातस्य वृत्तौ प्राधान्यं द्रष्टव्यं, तथा च मासजातो दृश्यतामिति क्रियायोगो जातस्यैव भवति न पुनरर्द्धपिप्पल्यादिवत्पूर्वपदार्थस्य । 'द्व्यहजात इति' । द्वयोरह्नोः समाहारः 'राजाहःसखिभ्यष्टच्' 'न संख्यादेः समाहारे' इत्यह्नादेशस्य प्रतिषेधः । कथं तर्हि द्व्यह्नजात इति, द्वे अहनी अस्य जातस्येति त्रयाणां पदानां युगपदनेन समासे कृते जातशब्द उत्तरपदे परतः पूर्वयोर्द्विगुर्भविष्यति । ननु च 'सुप्सुपे' त्येकत्वसंख्याया विवक्षितत्वाद् द्वयोर्द्वयोः समासो न बहूनां युगपत् । उच्यते । वक्तव्यमेवैतद् उत्तरपदेन परिमाणिना द्वयोः समासवचनमिति परिमाणिवचनेनोत्तरपदेन द्विगोः सिद्धये समासो वक्तव्यः, अथ द्वयोर्युगपदिति गम्यते, तस्माद्वचनाद्बहूनामप्ययं समासो भवति । एवं द्वौ मासौ जातस्य द्विमासजातः त्रिपदे तत्पुरुषे जातशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति कालान्ते द्विगावपि पूर्वपदप्रकृतिस्वरो भवति । द्वयोर्मासयोः समाहारो द्विमासं, पात्रादिः, द्विमासं जातस्येति विगृह्य समासे क्रियमाणे सति शिष्टत्वात्समासान्तोदात्तत्वं स्यात्, इह मासौ जातस्य मासा जातस्येति द्विवचनबहुवचनान्तानामयं समासो भवति, वृत्तौ विभक्तौ निवृत्तायां द्वित्वबहुत्वावगतौ प्रमाणाभावाद् अभेदैकत्वसंख्याप्यत्र न भवति शुद्धमेव त्वेकत्वं गम्यते, यत्र द्वयो र्बहुषु वानुस्यूत एकः शब्दार्थस्तत्रैवाभेदैकत्वसंख्या मासशब्दस्त्वेकपरि-

मागमर्थमाचष्टइति द्वित्वबहुत्वावगतौ विभक्तिमपेक्षते स्वतस्त्वेकत्व-स्यैवासाधारणः ॥

"नञ्" ॥ विभक्तिप्रकारयोर्विशेषाभावाद् अकारोच्चारणं, सुपा नशब्दस्य विशेषणात्पामादिलक्षणस्य नस्यासुबन्तत्वादेवाग्रहणं सिद्धम्। इहाब्राह्मणादिशब्दैः क्षत्रियाद्यभिधानमिष्यते तत्र जातिमात्रपरे ब्राह्म-णशब्दे न विद्यते ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिरित्यन्यपदार्थ-प्रधानः समासो भवति तत्र नाप्राप्ते बहुव्रीहावारम्भादनेन तस्य बाधनादब्राह्मणको देश इत्यपि न सिद्ध्यति, नहि प्रवृत्तिनिमित्तमात्र-निष्ठेषु ब्राह्मणादिशब्देष्वयं समासो न तद्विशिष्टेष्विति नियामकमस्ति, इह चावर्षा हेमन्त इति हेमन्तस्य यद्वचने तत्समासस्य प्राप्नोति, लिङ्गे तु परवल्लिङ्गमिति वचनाद्दोषाभावः। इह च असोऽसर्वस्मै इत्युत्तरपदार्थ-स्योपसर्जनत्वात्त्यदादिकार्यं सर्वादिकार्यं च न स्यात्, यदा त्वसत्सामा-न्यवर्तमानो नञ् ब्राह्मणादिभिर्विशेष्यते ब्राह्मणत्वेनासत्क्रियान्तरेण तु सन् क्षत्रियादिकोऽब्राह्मण इति तदा पूर्वपदार्थप्रधानं तत्र नञर्थस्य प्राधान्यात्संख्यायोगः समासस्य न स्यात्, वाचनिकी तु परवल्लिङ्गता भवतु। स्यादेतत्, शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थं वाक्ये नञाचष्टे समासे तु सत्त्वरूपं, तेन सिद्धः संख्यायोगः, एवमप्यपवादेनानेनाव्ययीभावस्य बाधा-दमक्षिकमिति न सिद्ध्यति तस्य तु निर्मक्षिकमित्यादिरवकाशः, असो ऽसर्वस्मादिति च पूर्ववत्स्यादाद्यसिद्धिः, अस्तु तर्ह्यत्रोत्तरपदार्थप्र-धानः, यद्येवमब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति, यद्युत्तरपदार्थप्रधानता तत्र हेतुरिहापि तर्हि राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्रा-प्नोति, अस्त्यत्र विशेषः, राजा विशेषकः प्रयुज्यते, इहापि तर्हि नञ् विशेषकः प्रयुज्यते, कथं नञ् नाम विशेषकः स्यात्, अनियतगुणस्य गुण-विशेषप्रतिपादनाय हि विशेषणं प्रवर्त्तते न तदुपघाताय नञा च ब्राह्म-णार्थः प्रतिषिध्यमानः सर्वात्मना प्रतिषिध्यतइति कथमसतः प्राधान्यं स्यात्, तस्मादुत्तरपदार्थप्राधान्यमिच्छतास्मिन्विषये नञनर्थकोऽन्वाख्यान-सामर्थ्यात्तु साधुत्वमेवंभूतस्यार्थवदनर्थकावयवस्य समासस्येति वाच्यं,

ततश्च ब्राह्मणमात्रस्यानयनं प्राप्नोति। नैष दोषः। निवृत्तपदार्थकोऽत्र ब्राह्मणशब्दः, सा च निवृत्तिः स्वाभाविकी नञा द्योत्यते, कोऽर्थः, केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशान्मुख्यमेव ब्राह्मणमाचष्टे नञ्प्रयोगेण तु क्षत्रियादौ सादृश्यादिना निमित्तेनाध्यारोपितं ब्राह्मण्यं न तात्त्विकमिति द्योत्यते, तदेवं मुख्यो ब्राह्मणशब्दस्यार्थो निवृत्तः जातश्चामुख्यः क्षत्रियादिरिति न ब्राह्मणमात्रानयनं नापि न कस्य चिदानयनमिति सिद्धम्, उक्तं च।

'प्राक् समासात्पदार्थानां निवृत्तिर्द्योत्यते नञा।
स्वभावतो निवृत्तानां रूपभेदादलक्षिता'॥

इति। स्यादेतत्, अर्थप्रत्यायनाय शब्दः प्रयुज्यते ब्राह्मणार्थश्चेन्निवृत्तः किं मुधा ब्राह्मणपदं प्रयुज्यते, तत्र, असति ब्राह्मणपदे नेत्येतावत्युच्यमाने कस्यार्थोऽत्र निवर्तयितुमिष्ट इति न ज्ञायते ब्राह्मणपदे तु सति तदर्थस्य क्षत्रियादौ मुख्यः सत्ताविरहः प्रतीयते। अन्यद्दर्शनं, सर्वएते शब्दा गुणसमुदाये वर्तन्ते। स्मर्यन्ते च।

'तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मण्यकारणम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः'॥

इति, तथा च श्रुतिः। 'षड् व्याधयो यं पुरुषं तपन्ति जेह्मो ह्यार्द्र श्चोदरो रैतसश्च तप्तश्च धर्मः शिशिरश्च शीतः ब्राह्मणस्तं स्वरार्थं गतस्मिति'। गौरः शुच्याचारः पिङ्गलकेश इत्यादयश्च धर्मास्तदेषां समुदाये ब्राह्मणशब्दः, एवं क्षत्रियादिशब्देष्वपि द्रष्टव्यम्। एवं स्थिते समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तन्तइति न्यायाज्जातिभिन्ने गुणभिन्ने वा यदा ब्राह्मणशब्दो वर्तते तदा स्वाभाविकी जातिगुणनिवृत्तिर्नञा द्योत्यते ऽवशिष्टांशसद्भावप्रतिपादनाय ब्राह्मणशब्दप्रयोगः। यद्येवं द्वयोरपि भिन्नविषयत्वप्रसङ्गः, कथं, यस्यांशस्य सद्भावं ब्राह्मणशब्द आह न तस्याभावं नञाह यस्याभावं नञाह न तस्य सद्भावं ब्राह्मणशब्द आह। नैष दोषः। द्वावप्येतौ समुदायावलम्बिनौ

कृतवत्, तद्यथैकदेशकरणाकरणाभ्यामेकमेव वस्तु कृतं चाकृतं च भवति तथेहाप्येकदेशविभागात् समुदाय एव निवृत्त उच्यते एकदेशसद्भावाच्च स एव सन्नभिधीयत इति सर्वमनवद्यम् । इहानेको जन आगत इति द्व्यादिष्वेकत्वमारोपितं प्रतीयते मुख्यं तु प्रतिषिध्यते तच्चियादाविव ब्राह्मण्यमित्येकवचनमेव भवति द्व्यादिसंख्या प्रतीयते तदेवमुत्तरपदार्थप्रधान इति स्थितम् । अत्र च लिङ्गम् । एतत्तदोः सु लोपोऽकोरनञ्समासे हलीत्यत्रानञ्समासग्रहणम् । अन्यथैतत्तदोरर्थद्वारेण सम्बन्धिनः सोर्लोपो विधीयमानो नैषो ददात्यसो ददातीत्यत्र कथं प्राप्नुयात् । इह न ब्राह्मणस्य भाव इति भावेन नञा च युगपत्सम्बन्धे विवक्षिते त्वतलौ च प्राप्नुतः समासश्च, तत्र यदि परत्वात्त्वतलौ कृत्वा पश्चात्पुनः प्रसङ्गविज्ञानान्नञ्समासः क्रियते ततस्तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरेणाद्युदात्तं पदं स्यात् प्रत्ययस्वरो नञ्स्वरश्चेष्यतइति समासे कृते त्वतलौ कार्यौ, आह च, त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थमिति तत्र भावप्रत्ययस्तावत्प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यान्न भवति नञ्समासस्तु प्रधानस्य सापेक्षत्वाद्भवति ॥

"ईषदकृता" ॥ 'ईषद्गुणवचनेनेति वक्तव्यमिति' । अकृतेत्यपनीय सूत्रे गुणवचनग्रहणं कर्त्तव्यमित्यर्थः । अकृतेति चोच्यमानईषद्गार्ग्य इत्यादावतिव्याप्तिरीषदुन्नत इत्यादावव्याप्तिः स्यादिति भावः । 'ईषद्गार्ग्य इति' । ननु च गार्ग्यो भवति वा न वा न पुनरीषद्गार्ग्यः कश्चित्, उच्यते, गार्ग्यत्वेन सह यएकार्थसमवेताः क्रियागुणास्तदपेक्षया जातेः प्रकर्षादियोगः, गार्ग्यतरो गार्ग्यकल्प ईषद्गार्ग्यो गार्ग्यपाश इति, यथा गोतरो गोकल्पो गोपाश इति ॥

"षष्ठी" ॥ 'कृद्योगा चेत्यादि' । 'कर्तृकर्मणोः कृती'ति कृच्छब्दोपादानेन या विहिता सा कृद्योगा । 'इध्मप्रव्रश्चन इति' । ओव्रश्चूच्छेदने, करणे ल्युट् । 'पलाशशातन इति' । पलाशानि शात्यन्ते पात्यन्ते येन दण्डादिना स पलाशशातनः । 'किमर्थमिदमुच्यतइति' । सूत्रेण सिद्धिं मन्यानस्य प्रश्नः । 'प्रतिपदविधाना चेत्यादि' । यदा तस्य वक्त-

व्यस्यारम्भः तदेदमपि वक्तव्यं, तस्य त्वनारभ्यतां तत्रैव वक्ष्यामः । 'अप-कर्ष इति' । अपवाद इत्यर्थः ॥

"याजकादिभिश्च" ॥ 'प्रतिप्रसवार्थमिति' । अन्येन निवर्त्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञानं प्रतिप्रसवः । तत्स्थैश्च गुणैः षष्ठी समस्यतइति वक्तव्यमिति क्व चिद्वृत्तौ पठ्यते तस्यार्थः । तच्छब्देन सविधानाद्गुणा एव परामृश्यन्ते तस्मिंस्त्वात्मनि ये गुणाः स्थितास्तैः षष्ठी समस्यते, न च स्वात्मन्यवस्थानं कस्य चित्सम्भवति भेदनिबन्धनो ह्याधाराधेयभावो विशेषतो गुणानां द्रव्याश्रितत्वात् तस्मादभिधानव्यापारापेक्षया तत्स्थ-त्वमुच्यते, गन्धादयो हि गुणाः स्वशब्दैर्द्रव्यात्पृथक्कृता एव च प्रत्याय्यन्ते चन्दनस्य गन्ध इति न तु कदा चिद् द्रव्येणैकत्वमापन्नाः, नहि भवति चन्दनं गन्ध इति, शुक्लादयस्तु कदा चिद् द्रव्यात्पृथग्भूताः प्रत्याय्यन्ते पटस्य शुक्ल इति कदा चिद् द्रव्यस्योपरञ्जकास्तेनैकत्वमापन्नाः शुक्लः पट इति, तत्र ये गुणा द्रव्यात्पृथग्भूता एव स्वशब्देन प्रत्याय्यन्ते तत्परिग्रहाय तत्स्थै-रित्युक्तं, बलाकायाः शौक्ल्यमित्यत्र तु यद्यपि शौक्ल्यशब्देन द्रव्यात्पृथग्भू-तस्यैवाभिधानं तथापि तदेव शौक्ल्यं शुक्लः पट इत्यत्र द्रव्येणैकतामापन्नं प्रत्याय्यते, अर्थस्य तत्स्थत्वमाश्रीयतइति शब्दभेदेप्यर्थः स एवेति नास्ति शौक्ल्यस्य तत्स्थत्वमिति समासाभावः, रूपवान्पट इत्यत्र भेदाश्र-येणैव मत्वर्थीयेनाभेदोध्यवसीयते इति तत्स्थमेव रूपमिति पटरूपमिति भवत्येव समासः, अयमपि गुणेन नेति प्रतिषेधस्य पुरस्तादपकर्षः । 'चन्दन-गन्ध इति' । गन्धं विक्रीणीतइति चन्दनगन्धादौ गन्धशब्दो जाति-निमित्तको न गुणशब्दो मालतीकुसुमादिष्वदर्शनादिति तत्स्थ एव गन्धः । भाष्ये तु न तु तद्विशेषणैरिति पठितं, तेषां गुणानां यानि विशे-षणानि तैः सह समासो न भवति घृतस्य तीव्रो गन्धश्चन्दनस्य मृदुः स्पर्श इति, तीव्रमृदुशब्दाभ्यां समासो न भवति तदिदमन्यथासिद्धमिति वृत्तिकारेणोपेक्षितं, कथं, घृतस्य गन्धेन सम्बन्धो न तद्विशेषणेन तीव्रेण, यदापि प्रकरणादिवशात्तीव्रशब्द एव विशेषे गन्धे वर्त्तते तदुपजनित एव

व्यतिरेके घृतस्येति षष्ठी तथापि तीव्रं घृतमिति दर्शनात्तत्स्थत्वाभावादेव समासाप्रसङ्गः॥

“न निर्द्धारणे”॥‘जातिगुणक्रियाभिरिति’। उपलक्षणमेतत्, कतरो भवतोर्देवदत्त इति संज्ञायामपि निर्द्धारणदर्शनात्। ‘क्षत्रियो मनुष्याणां शूरतम इति’। अत्र क्षत्रियशब्देन समासप्रसङ्गः, तदपेक्षया हि मनुष्याणामिति षष्ठी न शूरतमापेक्षया, गुणशब्दत्वाच्च न तेन समासप्रसङ्गः। ‘कृष्णा गवामिति’। नात्रायमर्थः गवां मध्ये या कृष्णा सा सम्पन्नक्षीरतमेति एवं हि कृष्णाशब्दस्य गवामित्यनेन सम्बन्धः, न च तस्य समासप्रसङ्गः गुणेन नेति प्रतिषेधात्, तस्माद्गवां मध्ये या सम्पन्नक्षीरतमा सा कृष्णेत्ययमत्रार्थः। ‘धावन्नध्वगानामिति’। अत्र धावच्छब्देन समासाप्रसङ्गः सत्संज्ञकत्वात्, शीघ्रतमशब्दस्तु गुणशब्दो न वेति चिन्त्यम्।‘प्रतिपदविधाना चेति’। शेषलक्षणां मुक्त्वा सर्वान्या प्रतिपदविधाना षष्ठी। कथं गृहस्वामी क्षितिदायादः पृथिवीश्वर इति, यावता स्वामीश्वरेत्यादिना प्रतिपदमत्र षष्ठी। नानेन षष्ठी विधीयते किं तर्हि सप्तमी, सा तु षष्ठीं मा बाधिष्टेति चकारेण शेषलक्षणैवाभ्यनुज्ञायते, अत एव ‘न निर्द्धारणे’ इति सूत्रारम्भः ‘यतश्च निर्द्धारणे’ मित्यत्रापि हि चकारेण शेषलक्षणैव षष्ठी प्रतिप्रसूयते अन्यथा सापि प्रतिपदविधानैव स्यादिति किं न निर्द्धारण इत्यनेन। ‘सर्पिषो ज्ञानमिति’।‘ज्ञोऽविदर्थस्य करणे’ इति षष्ठी। अत्राहुः ‘ज्ञो ऽविदर्थस्य करणे’-इति षष्ठीप्रकरणे शेषइति वर्त्तते तत्र न माषाणामश्नीयादितिवत् ‘षष्ठी शेषे’ इत्यनेनैव सिद्धा षष्ठी प्रकरणं तु नियमार्थं षष्ठी भवत्येव श्रूयत एव न तस्याः समासो भवतीत्यर्थः, समासे ‘सुपो धातुप्रातिपदिकयोः’-रिति सुब्लुक् स्यात् तस्मात्प्रतिपदविधाना चेति न वक्तव्यम्, एवं च कृत्वा कृद्योगा चेत्यपि न वक्तव्यं ‘कर्तृकर्मणोः कृती’त्यत्र हि शेषइति निवृत्तमिति वक्ष्यते तेन कर्तृकर्मविवक्षायामप्राप्तैव षष्ठी तेन विधीयतइति कुतः समासनिवृत्तिरिति॥

“पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन”॥‘प्रत्येकमिति’। पूरणादिभिरित्यर्थः। ‘स्वरूपविधिरिति’। पूरणादीनामर्थपर्य-

न्तानां चतुर्णामित्यर्थः, अत एव गुणशब्देन नादेङां ग्रहणं किं तर्हि सत्त्वे
निविशतेऽपैतीत्यादिलक्षणलक्षितस्य गुणस्य ग्रहणं, नापि नञो गुणप्रतिषेधे
यस्य गुणस्य हि भावादिवत्प्रवृत्तिनिमित्तमात्रस्य ग्रहणं सामान्यादे-
रपि प्रसङ्गात्, नापि लोकप्रसिद्धस्य शुक्लादेरेव ग्रहणं कण्टकस्य तैक्ष्ण्य-
मित्यादेरपीष्टत्वात्, गुणशब्देन च केवलगुणवाचिनो गुणोपसर्जनद्रव्य-
वाचिनश्च व्याप्तिन्यायाश्रयेण गृह्यन्ते तत्र गुणस्य गुण्यपेतत्वात्केवल-
गुणवचनैर्गुणेन समासनिषेधः कण्टकस्य तैक्ष्ण्यमिति गुणवचनैस्तु तत्स-
म्बन्धिनो निषेधो ब्राह्मणस्य शुक्लादन्ता इति, न चात्र दन्तापेक्षया ब्राह्म-
णस्येति षष्ठी ततश्च शुक्लेनासंबन्धादप्रसङ्ग एव समासस्य, यदा तत्संयो-
त्मकरणाद्वा दन्ताद्यर्थ एव शुक्लादिशब्दस्य वृत्तिर्विज्ञाता भवति तदा
तत्सम्बन्ध एव षष्ठीत्यस्ति समासप्रसङ्गः, 'शतसहस्रान्ताच्च निष्कात्' 'क्रो-
शशतयोजनशतयोरुपसंख्यानं' खारीशतमपि न ददातीत्यादि मुनित्रयप्रयो-
गाद् गोविंशतिरित्यादौ संख्यया समासो न निषिध्यते, संज्ञाप्रमाण-
त्वादुत्तरपदार्थप्राधान्यमित्यादिप्रयोगदर्शनादनित्यो गुणेन निषेध इति
करणपाटवं बुद्धिमान्द्यं यत्नगौरवमित्यादिसिद्धिः। 'फलानां सुहित इति'।
करणस्यैव शेषत्वविवक्षया षष्ठी, शेषत्वविवक्षैव च नियता सुहितार्थ-
योगे करणस्येत्याहुः, कृद्योगलक्षणाया एव षष्ठ्या निष्ठायोगे निषेधः।
'ब्राह्मणस्य कुर्वन्निति'। नेयं घटाद्यपेक्षया षष्ठी ब्राह्मणस्य घटं कुर्वन्निति
एवं ह्यसामर्थ्यादेव समासस्याप्रसङ्गः, किं तर्हि कुर्वन्निति किङ्कर उच्यते
स हि कुर्वन् भवति ततो यथा ब्राह्मणस्य पाचक इति साक्षादेव पाचकेन
सम्बन्धो न पुनरोदनद्वारेण तद्वदिहापीति द्रष्टव्यं, चोरस्य द्विषन्निति च सत
उदाहरणम्, अत्र द्विषः शतुर्वावचनमिति पक्षे षष्ठी भवति। 'ब्राह्मणस्य
कृत्वेति'। ब्राह्मणार्थं कृत्वेत्यर्थः, सम्बन्धसामान्यरूपेण विवक्षितत्वात्
षष्ठी, पुरा सूर्यस्योदेतोरिति चोदाहरणम्, अत्र ह्यव्ययप्रतिषेधे तोसुनोरप्र-
तिषेध इति कर्त्तर्येव षष्ठ्यस्ति, एवं वृक्षस्योपरीत्यादिकमप्युदाहरणम्।
'तव्यता सानुबन्धकेनेति'। निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणमिति
भावः। 'ब्राह्मणकर्त्तव्यमिति'। कर्त्तरि षष्ठ्याः समासः कृदुत्तरपदप्रकृतिस्व-

रेणान्तस्वरितमेतत्, निरनुबन्धकेन तु समासउत्तरपदं मध्योदात्तं स्यात् सोयं स्वर थैस्तव्येन निषेधः । 'शुकस्य माराविकस्येति' । मा रावीत्याहेति माराविकः, 'तदाहेति मा शब्दादिभ्य उपसंख्यानमिति' ठक्, शब्देन क्रियायाः प्रतिषेधको माराविकः, संज्ञेषा शुकविशेषस्य, क्व चित्तु माराविदस्येति पाठः, तत्र माराविशब्दं ददातीति माराविदः, स एवार्थः । 'किं च स्यादिति' । भवितव्यमेवात्र विशेषणसमासेन तत् षष्ठी समास एवास्तु को दोष इति प्रश्नः, 'पूर्वनिपातानियमः स्यादिति' । द्वयोरपि प्रथमानिर्दिष्टत्वेनोपसर्जनत्वादिति भावः । ननु विशेषणसमासेपि द्वयोरपि यत्र विशेषणविशेष्यभावस्तत्रेत्युक्तमतस्तेनापि समासे विशेषणमिति प्रथमानिर्देशो द्वयोरपि तुल्यः, अथ तत्राप्रधानमुपसर्जनमार्थं चाप्राधान्यमिति द्रव्यगुणादिषु तेन प्रकारेण व्यवस्था षष्ठी समासेपि तथैव व्यवस्था भविष्यति तस्माद्यत्र प्रत्युदाहरणं तक्षकः सर्प इति तयोः षष्ठ्यन्तयोः समासप्रसङ्ग एव दोषः, तन्निवृत्तये च प्रतिषेध इति वाच्यं, तदिह किं च स्यादित्यादिकमेवानुपपन्नम् उदाहरणं तूपपन्नं यदि माराविकशब्दः संज्ञा, अथ सोपि योगवृत्तिः, तर्हि तदप्यनुपपन्नम्, एवं पाटलिपुत्रकेपि द्रष्टव्यम् ॥

"क्तेन च पूजायाम्" ॥ 'तस्येति' । मत्यादिसूत्रविहितस्य सर्वस्यैव क्तस्य ग्रहणं न तु पूजायामेव विहितस्येत्यर्थः । कथं तर्हि पूजाग्रहणमित्याह । 'पूजाग्रहणमिति' । विवक्षितस्य क्तस्य तटस्थमुपलक्षणं पूजाग्रहणं एहस्येव काको न तु समासनिषेधार्थमित्यर्थः, तेन मतिबुद्ध्योरपि विहितस्य ग्रहणं भवतीति भावः । 'पूजायां विहित इति' । वर्त्तमानादिति शेषः । 'राज्ञामिति' । 'क्तस्य च वर्तमान' इति षष्ठी, कथं राजसंमतः राजाभिमत इति, अस्ति हि भट्टिकाव्ये प्रयोगः, कानहं स राममहितः कृतवानिति महपूजायां रामस्य महित इत्यर्थः । कश्चिदाह । यदा वर्त्तमाने क्तस्तदा षष्ठी समासनिषेधश्च यदा भूते क्तस्तदा कर्तरि तृतीयैव भवति यथा पूजितो यः सुरैरपीति, तस्याः 'कर्तृकरणे कृता बहुल' मिति समास इति । स्यादेवं यदि भूते क्तो लभ्यो, न, नाप्राप्ते तस्मिन्नारभ्यमाणो मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तस्तस्य बाधको भवति, यथा च वडवाया वृषे

वाच्य इति अपत्ये प्राप्तो ठक् ततोपकृष्य विधीयते ऽपत्ये त्वणेव भवतीति वक्ष्यति, एवं च पूजितो यः सुरैरपीत्यचिकित्स्योपशब्दः, त्वया ज्ञातो मया ज्ञात इति तु भवत्येव तेनेत्यधिकारे उपज्ञातइति निर्देशात् । अपर आह । क्तेन च पूजायामित्यादिषु कारकषष्ठ्या एव निषेधः, तदेव तु कर्त्रादिकारकं यदा शेषरूपेण विवक्ष्यते तदा भवत्येव समास इति, तत्र स्वरे विशेषः, कारकषष्ठ्याः समासे कृत्स्वरो भवति, शेषषष्ठ्याः समासे समासान्तोदात्तत्वमिति, एवं तु य 'जनिकर्तुः प्रकृति' 'तत्प्रयोजको हेतुश्चे' त्यादावुच्यते निपातनात्समास इति तदनुपपन्नं शेषषष्ठ्या एव समासस्य सिद्धत्वात्, अथायेमी नवीना वैयाकरणा आरभन्ते तदपार्थकमापद्येत तस्मादाप्तप्रयोगस्य यथा कथं चिन्निर्वाहो न तु यथार्थव पद्मप्रयोग इति धीरा मन्यन्ते ॥

"अधिकरणवाचिना च" ॥ अधिकरणइत्येव सिद्धे वाचिग्रहणं चिन्त्यप्रयोजनं, कथं 'किंवृत्ते लिप्सायां' यद्वृत्तान्नित्यमिति, नायमधिकरणे क्तः, क्व तर्हि भावे, किमो वृत्तं यस्मिन् यदो वृत्तं यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः ॥

"कर्मणि च"॥ 'उभयप्राप्तौ कर्मणीति'। अनेकार्थत्वान्निपातानामितीत्यर्थे चशब्दोयं तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यतइत्यर्थः । यदि च या का चन कर्मणि षष्ठी गृह्येत 'कर्तरि चेति' निषेधं न कुर्याद् अनेनैव सिद्धत्वात् साधु पयसः पानमिति, कर्मणि च येन संस्पर्शादिति नित्यसमासार्थेवचनमिति वक्ष्यति, तत्र पयः पानं सुखमित्युदाहरिष्यते, इदं तु शरीरसुखस्याविवक्षायां रोगाद्यभिभूतो ऽशक्नुवन्नेव यदा साधु पिबति तदा द्रष्टव्यम् ॥

"तृजकाभ्यां कर्तरि" ॥ 'कर्तृग्रहणं षष्ठीविशेषणमिति' । अथ कस्माद्विपर्ययो नाश्रीयते इह तृजकविशेषणं कर्तृग्रहणमुत्तरत्र षष्ठीविशेषणमिति, एवं तृज्ग्रहणमुत्तरार्थमिति न वक्तव्यं भवति, उच्यते, 'नित्यं क्रीडाजीविकयो'रित्यत्र तृज्ग्रहणस्यानुवृत्तिः शङ्क्येत 'कर्तरि चे' त्यत्र संप्रत्या-

सम्भवात्, नहि तृजप्रयोगे कर्त्तरि षष्ठी सम्भवतीति। ननु च तृच् क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियतइति वक्ष्यति एवं तर्हि तथानाश्रितमित्येव। 'भवतः शायिकेति'। 'पर्यायार्हणोत्पत्तिषु ण्वुच्'। 'तृच्प्रयोगे कर्त्तरि षष्ठी नास्तीति'। तेनैव कर्तुरभिहितत्वात्। 'इक्षु भक्षिकामिति'। कर्मणि षष्ठ्याः समासः। 'मह्यमिति'। 'धारेरुत्तमर्ण' इति संप्रदाने चतुर्थी॥

"कर्त्तरि च"॥ सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवतीत्याह। 'सामर्थ्यादिति'। 'सम्बन्धिशब्दस्येति'। अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति भावः। अन्यस्त्वाह। होतृशब्दसाहचर्यादिति तत्त्व, नहि तत्र बह्वृचो होता गृह्यते स एव सम्बन्धिशब्दः, चीरहोतेत्यादौ चीरस्य होतेत्येव गम्यते॥

"नित्यं क्रीडाजीविकयोः"॥ 'नेति निवृत्तमिति'। नित्यग्रहणाद्, महाविभाषाधिकाराद्विकल्पेनैव षाष्ठिकस्य प्रतिषेधस्य सिद्धत्वान्नित्यः प्रतिषेधो भविष्यति किं नित्यग्रहणेन। 'तृच् क्रीडाजीविकयोर्नास्तीति'। वामनस्त्वके जीविकार्थइत्यत्राकइति किं रमणीयकर्त्तेति जीविकायां तृचं प्रत्युदाहरिष्यति स मन्यते मा भूत्क्रीडायां तृच् लक्षणाभावात्, जीविकायां तु ण्वुल्तृचाविति ण्वुलिव तृच् कस्मान्न स्यादिति, अन्ये तु तदनुसारेणेदमप्येवं व्याचक्षते क्रीडाजीविकयोर्नास्तीति द्वयोर्नास्ति किन्त्वन्यतरत्रैवेत्यर्थः। 'अक एवोदाह्रियते इति'। उभयत्रेत्यर्थः। उद्दालकपुष्पभञ्जिकेत्यादौ संज्ञायामिति ण्वुल्, नित्यग्रहणमुत्तरार्थं नहि वाक्येन क्रीडाजीविकयोरवगतिरस्ति, क्रियाकारकसम्बन्धमात्रावगमात्॥

"कुगतिप्रादयः"॥ 'कुशब्दोऽव्ययं गृह्यतइति'। स्वरादिष्वपठितोऽप्ययं पठितव्य इति भावः। नित्यसमासविषयस्यास्य पूर्वपदप्रकृतिस्वरार्थमव्ययत्वं, यथा वक्ष्यति अव्यये नञ्कुनिपातानामिति वक्तव्यमिति। 'न द्रव्यवचन इति'। पृथिव्यादिद्रव्ये यो वर्त्तते स न गृह्यतइत्यर्थः। 'दुर्निन्दायामिति'। प्रशस्ते दुष्टाचिन्दा भवति पापं तु वस्तुस्थित्या गर्हितमिति द्वयोरप्युपादानम्। 'प्रायिकमिति'। अन्यथैवदर्थं चेति कोः कादेशविधान-

मनुपपन्नं स्यात्। 'दुष्कृतमिति'। दुर्निन्दायामिति विषयनिर्देशो गतित्वेन प्राप्तस्यापि समासस्य नियामकः स्यादिति मन्यते, यदा तु प्रादिग्रहणप्राप्तस्यैव नियामकस्तदा गतित्वादेवात्र सिद्धः समासः, दुरत्र कृच्छ्रार्थोऽनभिधानात्कृतेः खल् न भवति, दुष्कर इत्यादावुपपदसमासः, आमन्द्रैरिन्द्र हरिभिरित्यादौ मन्द्रं प्रत्यगतित्वादनीषदर्थत्वाच्च समासाभाव इत्येकस्वर्यं न भवति। 'सुष्टुतमिति'। सुशब्दोऽतिशये न पूजायाम्, अत एवोपसर्गनिबन्धनं षत्वम्। 'अतिस्तुतमिति'। 'अतिरतिक्रमणे चे' ति कर्मप्रवचनीयत्वात्षत्वाभावः॥ 'प्रादयो गताद्यर्थे इति'। वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेऽपि प्रादिग्रहणेन समस्यन्तइति। 'पर्यध्ययन इति'। परिश्रान्तोऽध्ययनायेत्यर्थः। 'वाससी इवेति'। वसेर्णिच्चेत्यसुन्प्रत्ययान्तो वासःशब्दः, वस्त्रशब्दः ष्ट्रन्प्रत्ययान्तः, द्वावपि नित्यादुदात्तौ। 'प्रादिप्रसङ्गइति'। सूत्रे प्रादिग्रहणमगत्यर्थमिति कर्मप्रवचनीयानां प्रतिषेध उच्यते प्रत्यादिविषयश्चायं निषेधः स्वत्योस्तु समासो भवत्येव। 'वृक्षं प्रतीति'। कर्मप्रवचनीयेन योगाद् द्वितीयावत्समासस्यापि प्रसङ्गः, उदात्तवता तिङा गतेः समासवचनं, यो जात एव पर्यभूषत्, यः शम्बरमन्वविन्दत्, योऽन्तरिक्षं विममे यो वै प्रजवं यातामपथेन प्रतिपद्यते॥

"उपपदमतिङ्"॥ 'एधानाहारको व्रजतीति'। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति ण्वुल्। 'अतिङिति किमिति'। येनाभिप्रायेण पृष्टं तमाविष्करोति। 'ननु चेत'। 'एतज्ज्ञापयतीति'। स्यादेतत्। मुख्यस्य तिङन्तस्य प्रतिषेधोऽनर्थक इति यस्तेन समानार्थः सुबन्तस्तस्य प्रतिषेधो विज्ञायते, तत्र यद्यपि कालकारकसंख्योपग्रहयुक्तः पूर्वापरीभूतः क्रियारूपस्तिङन्तार्थप्रधानोऽर्थो न सुबन्तस्य सम्भवति तथापि क्रियावाचित्वमात्रेण तदर्थत्वमाश्रीयते, क्रियावाच्युपपदं न समस्यतइत्यर्थः, तेन कारको गतः कारकस्य व्रज्येति गतव्रज्याशब्दयोः कारकशब्देन समासो न भवति, अन्यथा हि क्रियार्थायामिति सप्तमीनिर्देशेनोपपदत्वादनयोरपि समासः स्यादिति। तच्च, अनुपपदत्वात्, क्रियायां क्रियार्थायामिति सप्तमीनिर्देशेन क्रियावाचिन

उपपदत्वं धातुरेवात्र क्रियावचनस्तदाश्रयश्च ण्वुल् प्रत्ययो गतशब्दस्तु क्रियोपसर्जनं कर्त्तारमाह व्रज्याशब्दोपि यस्तस्य सिद्धता नाम धर्मस्तत्र घञादयो भवन्तीति धात्वर्थस्य सिद्धतायां वर्तन्ते, अतो यत्क्रियावाचित्वादुपपदं न तत्सुबन्तं यत्सुबन्तं न तत्क्रियावाचि नाप्युपपदमिति नार्थ एवमर्थेनातिङ्ग्रहणेन। 'एतयोर्योगयोरिति'। ननु चास्मिन्नेव योगे तदनभिसम्बन्धो युक्तो यत्रातिङ्ग्रहणमस्ति न पूर्वत्र, एवं मन्यते, योगविभागेनातिङ्ग्रहणं पूर्वसूत्रेणापि सम्बन्धनीयमिति। यद्येवं कुशब्दे प्रादिषु चातिप्रसङ्गः, तत्रापि प्राक् सुबुत्पत्तेः समासः स्यात्, एवं तर्हि पूर्वसूत्रे गतिग्रहणं पृथक्कृत्य तेनैवातिङ्ग्रहणं संबन्धनीयं, गतिकारकोपपदानामस्यायमर्थः, गतीनां कारकाणामुपपदानां च कृद्भिः सह यः समासस्तेनतेन लक्षणेन स उत्तरपदात्सुबुत्पत्तेः प्रागेव कार्यः पूर्वपदन्तु सुबन्तमेव समस्यतइति, गतीनां तावत्, व्याजिघ्रतीति व्याघ्री, 'पाघ्राध्माधेट्दृश :श' इति प्राप्तस्य जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्य इति निषेधा 'दातश्चोपसर्ग' इति कः, व्याङोर्घ्रशब्देन गतिसमासः स यद्युत्तरपदे सुबन्ते जाते पश्चात्स्यात्ततः सुबुत्पत्तये संख्याकर्मादियोगो विवक्षितव्यः, तद्योगाच्च प्रागेव लिङ्गयोगः स्वार्थमभिधाय शब्द इति न्यायात्, ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् घ्रशब्दमात्रस्याजातिवाचित्वादाप् स्यात्, ततश्च व्याङोर्घ्रशब्देन समासस्ततो व्याघ्राशब्दस्य जातित्वेप्यनकारान्तत्वाज्जातिलक्षणो ङीष् न स्यात्, प्राक् सुबुत्पत्तेः समासो भवन् लिङ्गयोगमपि नापेक्षतइत्यन्तरङ्गत्वात्स एव तावद्भवति पश्चात्स्त्रीप्रत्ययो भवन्ङीषेव भवति, पूर्वपदस्य तु सुबन्तत्वात्पदकार्याणि भवन्ति, निर्गत इति रुत्वं, संय्यन्तेति परसवर्णविकल्प इत्यादीनि। कारकाणाम्, अश्वैर्लिप्ताऽश्वलिप्ती, 'कर्तृकरणे कृता बहुल'मिति समासः, यद्युत्तरपदस्य सुबन्तत्वं स्यात्पूर्ववट्टाप् स्यात्ततः 'क्रीतात्करणपूर्वात्' 'क्तादल्पाख्याया'मिति ङीष् न स्याद् अत इत्यधिकारात्, वचनसामर्थ्याद्वा पूर्वशब्दं व्यवस्थावचनमाश्रित्य वाक्यावस्थायामेव स्यात्, अत इत्यधिकारो वा व्यवच्छिद्येत, प्राक् सुबुत्पत्तेः समासे पूर्ववत्सिद्धमिष्टम्। अत्रापि पूर्वपदस्य सुबन्तत्वाच्चमे-

क्रीतीत्यादौ नलोपादिकार्याणि भवन्ति । उपपदानां कच्छेन पिबतीति 'सुपि स्थ' इत्यत्र सुपीति योगविभागात्कः, कच्छपी, व्याघ्रीतुल्यं, माषान्वपति 'सुप्यजातौ णिनिस्ताच्छील्ये' माषवापिणी, ङीपः प्राक् समासे प्रातिपदिकस्यान्तो नकार इति णत्वं भवति, सुबन्तस्य तु समासे ङीप्समासस्यान्तो न तु नकार इति न स्यात्, अत्रापि पूर्वपदस्य सुबन्तत्वाच्चर्मकारादौ नलोपादिपदकार्यं भवत्येव । अत्रोपपदग्रहणं गतिकारकव्यतिरिक्तोपपदपरिग्रहार्थं मृषावापिणी, ईषद्दर्शाया अपत्यं ऐषद्दर्शेयः, अत्र दर्शशब्देन समासे सति समुदायात्स्त्रीभ्यो ढकं बाधित्वा दर्शाशब्दात् स्त्रीप्रत्ययलक्षणो ढक् स्यात्, स्त्रीप्रत्यये तदादिनियमाभावेपि दर्शाशब्दादपि कदा चित्स्यादित्येषा दिक्, ज्ञातान्यस्याः परिभाषायाः प्रयोजनानि । कथं पुनरतिङ्ग्रहणेनायमर्थः साधयितुं शक्यः, यावता प्रथमान्तमतिङ्ग्रहणं प्रथमान्तस्यैव सुब्ग्रहणस्य निवृत्तिं सूचयेदिति पूर्वपदे पदकार्याणि न स्युः, उत्तरपदे चोक्तमिष्टं न सिध्यति तदेतत्क्रियमाणमतिङ्ग्रहणं विपर्ययमेव साधयति तदपि गत्युपपदयोरेव कारकेषु तु 'कर्तृकरणे कृता बहुल'मित्यादावस्याः कथाया अप्रसङ्ग एव, उच्यते । योगविभागेनातिङ्ग्रहणं गतिनापि संबध्यतइत्युक्तम् एवं स्थिते योगद्वयविहितसमासमतिङ्ग्रहणेन विशेषयिष्यामः, गतिः समस्यते अतिङ् समासो भवति उपपदं समस्यते अतिङ् च समासो भवतीति, तदेवं 'माङि लुङ्' माकार्षीदित्यादौ तिङन्तेन समासो मा भूदित्येवमर्थं क्रियमाणमतिङ्ग्रहणं सुपेति तृतीयान्तस्य निवृत्तिं साधयतीति गत्युपपदयोस्तावत्सिद्धमिष्टं, वृत्तावपि सुप् सुपेति न संबध्यतइति समुदायस्य निवृत्तिर्विवक्षिता न केवलस्य सुब्ग्रहणस्य प्रत्युदाहरणमपि दिङ्मात्रं प्रदर्शितं नहि तत्र तिङन्तेन समासः किं तर्हि तिङन्तस्य सुबन्तेन, 'कर्तृकरणे कृता बहुल'-मित्यत्रापि कृतेति न वक्तव्यं, कथं, कर्तृकरणयोः क्रियापेक्षत्वात्क्रियावचनेन तावत्समासः, धातुश्च क्रियावचनो, धातोश्च द्वये प्रत्ययाः कृतस्तिङश्च तत्र सुबधिकारात्तिङन्तेनाप्रसङ्गः, तदेतत् कृद्ग्रहणं कृदन्तावस्थायामेव यथा स्यादित्येवमर्थमिति के चित्, नेति वयं, काष्ठैः पचतितरां दध्ना भुक्तपूर्वीत्यादौ

तद्धितान्तेन समासो माभूदित्येवमर्थं ग्रहणं कर्त्तव्यं कष्टश्रितादिषु प्राक् सुबुत्पत्तेः समासो न साधित इति कष्टश्रितेत्यादि न सिद्ध्यति एवं तर्हि गतिकारकोपपदानामिति परिभाषा पूर्वाचार्यैः पठिता सूत्रकारेणाप्य-तिङ्ग्रहणेन तद्देश आश्रिता, तत्र सामान्यापेक्षं ज्ञापकमिति कृत्स्नमेव परिभाषार्थं ज्ञापयतीति सिद्धमिष्टम् ।

तदेतत्प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः ।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा ॥

"अमैवाव्ययेन"॥ 'स्वादुंकारमिति'। 'स्वादुमि णमुल्', स्वादुमी-त्यत एव निपातनात्पूर्वपदस्य मान्तत्वम्। स्वादुमीत्यर्थग्रहणं तेन संपन्नंका-रमित्यत्रापि भवति। ननु सिद्धे विधिरारभ्यमाणो नियमाय भवति एवकारः किमर्थः, इष्टतोवधारणार्थः, एवं यथा विज्ञायेत अमैवाव्ययेनेति, मैवं विज्ञायि अमाव्ययेनैवेति, अनव्ययस्यासम्भवादेवायं नियमो न भविष्यति, ननु चायमस्ति स्वशयं ब्राह्मणकुलमिति, 'अधिकरणे शेते' रित्यच्, 'अतो-म्' ति सोरम्भावः अनेनानव्ययेन समासो माभूदित्येवमर्थो नियमः स्यात्, न, अत्र ह्यन्तरङ्गत्वादनुत्पन्नएव सावुपपदसमासेन भाव्यं पश्चा-त्सुपेति विधानवेलायामनव्ययस्यामो ऽसम्भवान्नियमान्तरेण वचनस्य चरि-तार्थत्वाद्विपरीतनियमो न भविष्यतीत्यत आह । 'एवकारकरणमिति'। अमैव यदुपपदं तत्समस्यते तदेव समस्यतइत्यवधारणार्थो न पुनरमैव समस्यत-इति, तत्रामैव यदुपपदमित्यत्र तुल्यविधानमिति वाक्यशेषः, किं चामैव तुल्यविधानं येन वाक्येनामेव केवलो विधीयते न प्रत्ययान्तरसहितस्तेन वाक्येन यदुपपदं विधीयते तत्र सप्तमीनिर्द्देशात्तदमैव तुल्यविधानं, नियमाङ्गभूतस्त्वेवकारो नियमस्वभावादेव लभ्यते अमैव यत्तुल्यविधानं न तु प्रत्ययान्तरोत्पत्तौ निमित्तमिति तदपेक्षया ऽनुपपदत्वाद् अव्ययान्त-रेण समासो नाशङ्कनीयः। 'अग्रभोजमिति'। 'विभाषाग्रेप्रथमपूर्वेष्वि' ति क्त्वाणमुलौ, अव्ययग्रहणं किम् । असत्यव्ययग्रहणे अमैव तुल्यविधानं तदेवोपपदं समस्यतइत्युच्यमाने कुम्भकारादावपि न स्यात्, अथ पूर्व-सूत्रस्यानवकाशत्वादमैव तुल्यविधानस्योपपदस्याव्ययविषयत्वात्तद्विषय

एव नियमो विज्ञास्यतइत्युच्यते एवं त्वमेव नियमः स्याद् अमन्तेनोपपदस्य यः समासः सोमेव तुल्यविधानस्येति, तत्र को दोषः, अग्रेभोज्यमित्यत्रैव न स्यात्, अग्रे भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेव, अव्ययग्रहणे तु सति अव्ययेनोपपदस्य यः समासः सोमेव तुल्यविधानस्येति विज्ञानाच्च कश्चिद्दोषः ॥

"तृतीयाप्रभृतीन्यन्यतरस्याम्" ॥ 'तृतीयाप्रभृतीति' । 'यत्पुनरमा चान्येन तस्याप्राप्तइति' । उपपदविशेषणार्थ एवकारोत्र नानुवर्त्ततइति भावः । 'उच्चैःकारमिति' । यदा समासस्तदा कृदुत्तरपदप्रकृतिस्वरः, 'आदिर्णमुल्यन्यतरस्या' मित्याद्युदात्तत्वं, यदा तु न समासः तदोच्चैरित्यन्तोदात्तं स्वरादिषु तथा पाठात्, कारमित्याद्युदात्तम् ॥

"त्वा च" ॥ त्वेति तृतीयान्तम् आत इत्याकारलोपः, यथा 'समासे नञ्पूर्वे त्क्वो ल्यबि' ति 'त्क्वि स्कन्दिस्यन्द्यो' रिति ॥

"शेषो बहुव्रीहिः" ॥ 'उपयुक्तादन्यः शेष इति' । शिष असर्वोपयोगइत्यस्मात्कर्मणि घञ् । 'कश्च शेष इति' । ननु चोपयुक्तादन्यः शेष इत्युक्तं, सत्यं, सर्वेषामेव पदानां सामान्यविशेषरूपेणोपयोगात्सर्वेषु च पूर्वोत्तरान्यपदार्थेषु यथायोगं तत्पुरुषाव्ययीभावयोर्विधानादुपयुक्तादन्यो न सम्भवतीति पुनः प्रश्नः, उक्तं च शेषग्रहं पदतश्चेत्तत्राभावादर्थतश्चेदविशिष्टमिति । 'यत्रान्यः समासो नोक्त इति' । येषां पदानां यस्मिन्नर्थे ऽव्ययीभावादिकः समासो न विहितः स शेष इत्यर्थः । अथैवं कस्मान्न विज्ञायते सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य शङ्कुलाखण्डादिकया समासो नोक्तो यथा प्रथमायाः स शेष इति, कण्ठेकाल इत्यादावप्रथमान्तानामपि समासस्येष्टत्वात्, शेषग्रहणं प्राक्कडारात्परं कार्यमित्यस्मिन्पक्षे कर्तव्यम्, एकसंज्ञाधिकारपक्षे न कर्त्तव्यमित्याकडारसूत्रएव प्रतिपादितम् ॥

"अनेकमन्यपदार्थे" ॥ 'अनेकं सुबन्तं सह समस्यतइति' । परस्परमित्यर्थः । तदनेन सुबित्येतदत्रानुवर्त्तते न सुपेत्येतद्, उत्तरपदस्याप्यनेकमित्यनेनैव प्रतिपादितत्वादिति दर्शयति । 'सर्वेषु विभक्त्यर्थेष्विति' ।

पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयतइति विभक्त्यर्थस्य प्राधान्या
त्तस्यैवान्यपदार्थग्रहणेन ग्रहणमिति भावः । अत एव प्राप्तोदकोयं ग्राम
इति ग्रामशब्दानुप्रयोगः, अन्यथा यावानेवार्थो ग्रामपदस्य तावतोऽभि-
धाने गतार्थत्वान्न स्याद्यथा द्वन्द्वे चशब्दस्य, यदा तु समासेन विभ-
क्त्यर्थ एव सम्बन्धादिरभीप्स्यते तदा विभक्तिर्मानुप्रयोजि, द्रव्यस्यान-
भिहितत्वात्तद्वाचिनोनुप्रयोगः कस्मान्न स्यात् यदि विभक्त्यर्थोऽभिधीयते
कथं ग्रामादिभिः सामानाधिकरण्यं तल्लिङ्गसंख्यायोगे वा बहुव्री-
हिर्भवति प्राप्तोदको ग्राम उद्धृतौदना स्थालीति । उच्यते । विभक्त्य-
र्थस्य सम्बन्धादेराश्रितत्वेन गुणत्वादभेदोपचारात्सामानाधिकरण्यमा-
श्रयतश्च लिङ्गवचनानि भविष्यन्ति शुक्लादिवत्, यथा शुक्लं वस्त्रं शुक्ला
पटी शुक्लः कम्बलः शुक्लैः शुक्ला इति । नन्वेवं यथा शुक्लशब्देन कदा
चिद्गुण उच्यते कदा चिद्गुणी तथा बहुव्रीहावपि प्राप्नोति । नैषोऽस्ति नि-
यमो गुणशब्देन कदा चिद्गुणमात्रमभिधीयतइति पट्वादिष्वदर्शनात्,
नहि भवति देवदत्तस्य पटुरिति तद्वदिहापि नित्यमेव गुणिनिष्ठता
भविष्यति, एवमपि बहुव्रीहिणा यथा विभक्त्यर्थस्याभिधानात् षष्
ठ्यादयो न भवन्ति तथा लिङ्गसंख्ययोरप्यभिधानात्तयोर्वाचकाः प्रत्य-
या न प्राप्नुवन्ति, नैष दोषः । स्वार्थिकाष्टाबादयः स्त्रियां यद्वर्तते
तस्मात्स्वार्थिकाष्टाबादयो भवन्तीति तेन बहुव्रीहिणाऽभिहितेपि स्त्रीत्वे
भविष्यन्ति एवं च कृत्वा 'ऽनो बहुव्रीहे' रित्याद्युपपन्नं भवति, समा-
सेन च बाह्यक्रियापेक्षा या कर्मादिशक्तिस्तद्रहितसमासप्रातिपदिका-
र्थमात्रस्यैवैकत्वादेरुक्तत्वादिति कर्मादिगतैकत्वादिप्रतिपादनाय वच-
नानि भविष्यन्ति चित्रगुं पश्य चित्रगुणा कृतमिति, एवमपि प्रथमा न
प्राप्नोति समासेन संख्याया अभिधानात्, वचनग्रहणादेको द्वौ बहव
इतिवद्भविष्यति, अथ वा लिङ्गमात्रं संख्यामात्रं बहुव्रीहिणाभिहितं न
विशेषस्तत्रावश्यं विशेषार्थिना तद्वाची शब्दः प्रयोक्तव्यः, एवं च
कृत्वा सह प्रकृत्यर्थेन विभक्त्यर्थे बहुव्रीहिणाऽभिधीयमाने ऽपि न
कश्चिद्दोषः, कथं सामान्यमभिहितं विशेषस्यानुप्रयोगः सामान्यस्य तर्हि

न प्राप्नोति देवदत्तः कश्चिदिति, सामान्यमपि विशेषो, यथा विशेषेण विशेषान्तरं व्यावर्त्यते तद्वत्सामान्येन विशेषो व्यावर्त्यते, अन्यथा सन्देहः स्यात्सामान्यमत्र विवक्षितं विशेषो वेति। प्राप्तोदको ग्राम इत्यादीनि द्वितीयाद्यर्थेषु यथाक्रममुदाहरणानि। ऊढो रथो येन, उपहृतः पशुर्यस्मै, उद्धृत ओदनो यस्याः, चित्रा गावो यस्य, वीराः पुरुषा यस्मिन्निति विग्रहाः। 'प्रथमार्थे तु न भवन्तीति'। अनभिधानात्, एवमनन्तरादिषु न भवति चित्रा गावो यस्यानन्तरा इति। 'अनेकमिति किमिति'। सुप्सुपेत्यधिकारादेव तत्पुरुषवद्बहुव्रीहिरप्येकस्य न भविष्यतीति प्रश्नः। 'बहूनामपि यथा स्यादिति'। 'अन्यथा सुप्सुपेति संख्याया विवक्षितत्वाद्यथा तत्पुरुषो बहूनां न भवति महत्कष्टं श्रित इति तथा बहुव्रीहिरपि न स्यादितिभावः, ज्ञापकात्सिद्धं, यदयं तद्धितार्थेत्युत्तरपदे द्विगुं शास्ति तज्ज्ञापयति बहूनामपि समास इति, यद्येवं तत्पुरुषेऽपि प्रसङ्गः, अथ चित्रगुरित्यत्रोत्तरपदस्याप्युपसर्जनसंज्ञा प्रयोजनं कस्मान्न भवति सत्यनेकग्रहणे सुपेत्यस्य निवर्तितत्वादुत्तरपदमपि तेनैव प्रत्याय्यते तदपि समासशास्त्रे प्रथमानिर्दिष्टं भवति नान्यथा, एवं मन्यते चित्रगुस्तिष्ठति चित्रगुं पश्येति प्रधानस्यान्यपदार्थस्य नानाविभक्तियोगेऽपि वर्त्तिपदयोर्नित्यप्रथमान्तत्वादेकविभक्तीत्येव सिद्धमुपसर्जनत्वमिति। 'सुसूक्ष्मजटकेशेनेति'। सुष्ठु सूक्ष्मा जटाः केशा अस्येति चतुर्णां बहुव्रीहौ 'ङ्यापोः संज्ञाछन्दसोर्बहुल' मिति बहुलवचनाद्ध्रस्वत्वं, यद्वा सुष्ठु सूक्ष्मा जटा येषु ते सुसूक्ष्मजटास्तादृशाः केशा अस्येति पुनर्बहुव्रीहिः, एवं सुष्ठु गजाजिनं वास आच्छादनं यस्य तेन सुगजाजिनवाससा तृतीयान्तोदाहरणं श्लोके तथा पठितत्वात्॥

सुसूक्ष्मजटकेशेन सुग[१]जाजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिद्ध्यति॥

इति भाष्ये श्लोकः पठितः, तत्र तु श्लोकपूरणार्थं तृतीयानिर्देशः। अन्यग्रहणं बहुव्रीहितत्पुरुषयोर्विषयविभागार्थमसति तस्मिन्

१ अत्र सुनताजिनेत्युपलभ्यमानोऽपि पाठः पदमञ्जर्यसंमतः।

कण्ठेकाल इत्यादौ व्यधिकरणपदे सावकाशं बहुव्रीहिं स्वपदार्थइव नीलोत्पलं सर इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत, अन्यग्रहणे तु सति स्वपदार्थे सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधतइति न कश्चिद्दोषः, पदग्रहणं किं, पदार्थे यथा स्याद्वाक्यार्थे माभूत् कश्चित्कं चिदब्रवीं मिथ्यासुमाह नद्यां ग्राहाः सन्तीति, एतानि पदानि तस्मात्तत्र माखासीरिति वाक्यार्थं गमयन्तीति तेषां बहुव्रीहिसंज्ञा प्राप्नोति। अर्थग्रहणं किं, यावता पदे पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति, क्षत्वे पदार्थे यथा स्यात्, अन्यथा प्राधान्याद्विभक्त्यर्थएव स्याद् न प्रकृत्यर्थे द्रव्ये तत्र यदुक्तमभेदोपचाराद्धर्मिणोऽभिधाने सिद्धेपि शुक्लादिवद्धर्ममात्रस्यापि कदा चिदभिधानं प्राप्नोति तदनेनापाक्रियते पद्मादिशब्दवचित्यं धर्मिनिष्ठो बहुव्रीहिरिति प्रतिपादनेन बहुव्रीहिः समानाधिकरणानामित्यादिरभिधानसिद्धस्यार्थस्य प्रपञ्चः। 'उच्चैर्मुख इति'। उच्चैसोधिकरणप्रधानत्वाद्व्यधिकरण्याद्वचनम्। 'सप्तम्युपमानेति'। सप्तम्यन्तमुपमानवाचि च पूर्वपदं यस्य तस्य शब्दान्तरेण समासस्तत्रस्थस्योत्तरपदस्य लोप इत्यर्थः। 'कण्ठेस्थ इति'। 'सुपि स्थ' इति कः। अमूर्द्धमस्तकादित्यलुक्। कण्ठेस्थित इति पाठे तु सप्तमीति योगविभागात्समासः, समानाधिकरणत्वात्समासे सिद्धे वचनमुत्तरपदलोपार्थम्, तेन वैयधिकरण्येऽप्यत्र गमकत्वमस्तीति प्रदर्श्यते। 'उष्ट्रमुखमिवेति'। अवयवधर्मेण समुदायव्यपदेशादुष्ट्रस्योपमानतेत्युपमानपूर्वपदमुष्ट्रमुखशब्दः, अत्रोपमानोपमेययोर्वैयधिकरण्यवद्वचनमुत्तरपदलोपार्थं च। 'उष्ट्रमुख इति'। उष्ट्रो मुखमस्येति विग्रहः, न च प्राणी प्राण्यन्तरस्य मुखमुपपद्यतइति सामर्थ्यात् सादृश्यावगतिः, मुखेन च मुखस्य सादृश्यं प्रसिद्धमित्युष्ट्रमुखमिव मुखमस्येत्ययमर्थो भवति तस्मादुत्तरपदलोपो न वक्तव्यः। 'समुदायविकारषष्ठ्या इति'। समुदायावयवसंबन्धे प्रकृतिविकारसंबन्धे च या षष्ठी तदन्तात्परं यदुत्तरपदं तदन्तस्य समासस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः। 'केशचूड इति'। इदमपि केशसमाहारे केशशब्दस्य वृत्तेः सिद्धम्, एवं स्वर्णविकारे स्वर्ण-

शब्दस्य वृत्तिः स्वर्णालङ्कार इति सिद्धं, वचनं तु केशसमाहारचूडः स्वर्णविकारालङ्कार इत्युत्तरपदस्य श्रवणं मा भूदिति। 'प्रादिभ्यो धातुजस्येति'। इदं न वक्तव्यमेव प्रादयो हि ससाधनां क्रियां प्राहुर्यथा निष्कोशाम्बिर्निर्वाराणसिः प्राचार्य इति, एवं नञोऽस्त्यर्थानामित्येतदपि। 'सुबधिकार इति'। अस्तीति तिङन्तमिति मत्वा वचनं निपातत्वात्सिद्धम् उपसर्गविभक्तिप्रतिरूपका निपाताः स्वरादिषु चास्तिशब्दः पठ्यते। इह किंसब्रह्मचारीति, बहुव्रीहिरयं के सब्रह्मचारिणस्तव, किंसब्रह्मचारीत्वमिति पूर्वपदप्रकृतिस्वरो ह्यत्रेष्यते तत्र कठसब्रह्मचार्यहमिति सम्भावितम्प्रतिवचनं, यत्तु कठोऽहमिति न तत्साक्षात्प्रतिवचनं किं तर्ह्यार्थिकम् अहं तावत्कठ इत्युक्ते गम्यत एतचनु तेऽपि कठा इति, कठस्य हि कठा एव सब्रह्मचारिणो भवन्ति नान्ये समाने ब्रह्मणि व्रतचार्येव सब्रह्मचारी भवति, के सब्रह्मचारिणस्तवेति वाक्येन तु प्रश्ने कठा इति प्रतिवचनं समासेन तु प्रश्ने कठा इति प्रतिवचनं कदा चिदपि न भवति बर्तिपदार्थानामुपसर्जनत्वात् किं सब्रह्मचारीति समासेन सब्रह्मचारिणामभिधानात्। 'इह द्वौ द्रोणावर्द्धद्रोणश्चार्द्धतृतीया द्रोणा इति'। अर्द्धंस्तृतीयो येषामिति बहुव्रीहावुद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनं द्रोणशब्दश्च द्रोणयोरर्द्धद्रोणेऽपि लक्षणया वर्त्तत इति सामानाधिकरण्यं च भवति॥

"संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये"॥ 'उपदशा इति'। 'बहुव्रीहौ संख्येये डजबहुगणादि' ति डचि टिलोपः, दशानां समीपे ये भवन्ति त उच्यन्ते ते पुनर्नवैकादश वा, पूर्वपदार्थप्रधानोऽयं समासः, उपशब्दोऽयमाराच्छब्दवदनेकार्थत्वात्समीपे समीपिनि च वर्त्तते तत्र समीपिप्राधान्येयं बहुव्रीहिः सामीप्यप्राधान्येऽव्ययं विभक्तिसमीपेत्यव्ययीभावः। 'उपदशं दन्तोष्ठा इति'। अत्र धर्मधर्मिणोरभेदोपचारात्सामानाधिकरण्यम्। 'उपविंशा इति'। 'ति विंशतेर्डिती' ति लोपः, आसन्ना दशानामासन्नदशास्तेऽपि नवैकादश वा, अधिकदशास्त्वेकादश, द्वौ वा त्रयो वा द्वित्राः, वार्थेयं समासः, वार्थश्च यदि विकल्पः स्यात् ततो यदि द्वौ भवतस्तदा

बहुवचनं न स्यात् तस्मात्संशयोत्र वार्थः, स चानियतसंख्याविमर्शो, तत्र तु त्रयोपि सर्वदा परिस्फुरन्तीति तदपेक्षं बहुवचनम्, अथ वा पञ्चैवात्र सर्वदा भवन्ति कथं विमर्शज्ञानमुभयपक्षालम्बि एकं च तत्र यथा द्वौ वा त्रयो वा पुरुषा आनीयन्तामित्यत्र पुरुषशब्दे तिङन्ते च बहुवचनमेव भवति, कस्य हेतोः मिश्रितेषु तयोर्वृत्तेः, एवं द्वित्रिपदमपि मिश्रितेषु वर्ततइति सैषा पञ्चाधिष्ठाना वाक्, अतो बहुवचनमेव भवति, आनयनादिकार्ये तु द्वयोस्त्रयाणां वा यथारुचि भवति, वाक्यवदेव समासस्य चैषा हि आपद्यतस्तेषु मिश्रितेषु वृत्तिः, तेन द्वौ वा पुरुषा आनीयन्तामिति वाक्ये द्विशब्दाद् द्विवचनमेव भवति। 'त्रिचतुरा इति'। चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानमित्यच् । 'द्विदशा इति' । अत्र द्विशब्देन दशत्वावृत्तिगता द्वित्वसंख्या प्रतिपाद्यते न दशत्वसंख्या, एकत्वात्, नापि संख्यायुक्ताः, बहुत्वात्, तत्र वाक्ये सुचमन्तरेणाभ्यावृत्तेरनवगमात्सुच् भवति, ततश्चास्वपदविग्रहः क्रियते द्विर्दश द्विदशा इति, वृत्तौ तु स्वभावादेव सुचमन्तरेणाभ्यावृत्तिसंख्यां द्विशब्द एवाहेति संख्यावाचित्वात्समस्यते । नन्वत्र वार्थः सुजर्थश्चान्यपदार्थ इति पूर्वेणैव सिद्धं तच्च, सुचः स्वार्थिकत्वात्तदर्थो ऽपि पदार्थ एव । मत्वर्थे पूर्वयोगोऽमत्वर्थार्थोयमारम्भः । ननु प्राप्तोदकादि प्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु यथाभिधानं भवतीत्युक्तम् एवं तर्हि प्रथमार्थेपि यथा स्यादित्ययमारम्भः, अथ प्रथमार्थं वर्जयित्वेत्येतदनादृत्य यथाभिधानं भवतीत्युच्यते, एवं तर्हि तस्यैव प्रपञ्चः संख्यायाः समासः, अव्ययानां तु चतुर्दशादिभिः संख्येयवाचिभिः समासो विधेय एव । केचित्तु ये विंशत्यादयः संख्याने वर्त्तन्ते तैः पूर्वेणैव सिद्धम् अधिका विंशतिर्येषां तद्यथेऽधिकविंशाः, विंशतिसंख्या आसन्ना येषां ते आसन्नविंशा इति, तत्र सर्वनामसंख्ययोरिति विंशतिशब्दस्य पूर्वनिपातः प्राप्नोति, तस्माद्विंशत्याद्यर्थमप्यव्ययादीनां ग्रहणं कर्तव्यमेव ॥

"दिङ्नामान्यन्तराले" ॥ 'दक्षिणपूर्वेति' । अन्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धे वचनमिदं त्वमत्वर्थेपि यथा स्यात्प्रथमार्थेपि यथा स्याद्व्यधिकरणेपि यथा स्यात्, किं च 'विभाषा दिक्समासे बहुव्रीहौ'-

वित्यत्र दिशां प्रतिपदोक्तस्य बहुव्रीहेर्ग्रहणं यथा स्यात्, या पूर्वा सोत्तरास्योन्मुखस्य तस्मै उत्तरपूर्वाय देहीत्यत्र मा भूदित्येवमर्थम्, अतस्तदर्थोऽयमारम्भः, कवभावार्थं च 'शेषाद्विभाषे' त्यत्र शेषाधिकारविहितस्य बहुव्रीहेर्ग्रहणम् 'अनेकमन्यपदार्थे' इत्यत्रैव शेषग्रहणमनुवर्त्तते तेनात्र कप्न भवति, सर्वनाम्नो वृत्तिमात्रइति मात्रग्रहणाद्विभाषा दिक्समास इति यदा सर्वनामसंज्ञा नास्ति तदापि भवति ॥

"तत्र तेनेदमिति सरूपे" ॥ 'इतिकरण इत्यादि'। ततः समासाल्लौकिकस्य यदि विवक्षा भवति एवमयं समासो भवति नान्यार्थमित्येवमर्थं सूचयितुमितिशब्द इत्यर्थः, तेन किं सिद्धं भवतीत्याह। 'लौकिकमर्थमिति'। कः पुनरसौ लौकिकोऽर्थ इत्याह। 'ततश्चेत्यादि'। एतदेव विवृणोति। 'यत्तत्रेत्यादि'। गृह्यतेऽस्मिन्निति ग्रहणं केशादि, प्रहरणं दण्डादि, कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च। 'स चाव्ययमिति'। तिष्ठद्गुप्रभृतिषु पाठेनाव्ययत्वात्। नन्वत्र युद्धस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धं, न, वैयधिकरण्यादेकशेषप्रसङ्गाच्च। तथाहि। ग्रहणप्रहरणे च केशादीनां सहविवक्षितत्वादेकविभक्तित्वाच्चैकशेषः प्राप्तोऽनेन वचनेन बाध्यते कथं न समूहविवक्षायां बहुव्रीहिसंज्ञा समूहश्चैकशेषे नोपपद्यते, ननु चासत्यस्मिन्पूर्वयोगेनैव परत्वादेकशेषो बाधिष्यते, न शक्यते बाधितुम् अन्तरङ्ग एकशेषो बहुव्रीहिश्चान्यपदार्थापेक्षत्वाद्बहिरङ्गः ॥

"तेन सहेति तुल्ययोगे" ॥ 'तुल्ययोगइति'। 'तुल्ययोगः समानसम्बन्धः' 'सपुत्र इति'। 'वोपसर्जनस्ये'ति सभावः। नन्वत्र पिता प्रधानमन्यपदार्थोऽभिधेयः, सत्यं, व्यधिकरणयोः प्रथमार्थोऽपि यथा स्यादित्ययमारम्भः, कवभावार्थं च, उक्तश्चात्र कवभावः, । 'दशभिः पुत्रैरिति'। इत्यभूतेत्यर्थः। 'प्रायिकमिति'। ज्ञापकात्, यदयं 'विभाषा साकाङ्क्षे' 'छन्दस्यनेकमपि साकाङ्क्षं' 'पूर्वादिनिः' 'सपूर्वाच्च' 'सपूर्वायाः प्रथमाया विभाषा' 'विभाषा सपूर्वस्येति' विद्यमानार्थेऽपि समासो निर्दिशति तज्ज्ञापयति प्रायिकं विशेषणमिति ॥

"चार्थे द्वन्द्वः"॥ 'समुच्चयेत्यादि'। यदा परस्परनिरपेक्षाः पदार्था एकस्मिन्प्रतिसम्बन्धिनि समुच्चीयन्ते तदा समुच्चयः, यथा अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदीति, दुर्मदी यथा सुराया न तृप्यति तथा यमो गवादीन्नयमान इत्यर्थः। अत्र नयतिक्रियायामेकस्यां गवादीनां समुच्चयः, गम्यमानत्वाच्च चशब्दस्याप्रयोगः, एवं राज्ञो गौश्चाश्वश्चेति द्रव्ये द्रव्ययोः, रक्तः शुक्लश्चेति द्रव्ये गुणयोः, रक्तः पटः कुण्डलं चेति गुणे द्रव्ययोः समुच्चय इत्यादि द्रष्टव्यं, यदानेकस्य प्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदान्वाचयः, यथा भिक्षामट गाञ्चानयेति, अत्र च्छदर्शनाद्नानयन्नपि गामटत्येव भिक्षाम्, अनटंस्तु भिक्षां न गामानयति, अटन्नपि नान्विष्य गामानयति, इतरेतरयोगस्तु परस्परापेक्षाणामवयवभेदानुपगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सति भवति, यथा देवदत्तयज्ञदत्ताभ्यामिदं कार्यमिति, तथैकापायेऽपि तद्भवति, उद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने भवतः, तादृशानामेवावयवतिरोधानसंहतिरूपेणान्वये तत्समाहारो यथा छत्रोपानहमिति, संहतिप्रधानत्वात्त्वेकवचनम्। 'तत्रेत्यादि'। स्यादेतत्। समुच्चये परस्परानपेक्षत्वेपि गवादीनामेकक्रियाद्वारकं सामर्थ्यं दध्योदनादिवदस्त्येवेति, तच्च युक्तं, दध्योदनादावेकत्वात्क्रियायाः, इह तु कर्मभेदात्क्रिया भिद्यते, तथा च 'समुच्चयेन्यतरस्या'मित्यत्र भ्राष्ट्रमट मठमटेत्यादिकं कर्मभेदनिबन्धनं क्रियाभेदमाश्रित्योदाहरिष्यते, अन्वाचये त्वप्रधानमेव चार्थे वर्त्तते न प्रधानमित्यनेकस्य पदस्य चार्थे वृत्त्यभावादपि समासाभावः, इह पटुश्चासौ खञ्जश्चेत्येकस्मिन्धर्मिण्यनेकधर्मसमुच्चयाच्चार्थसद्भावात्समानाधिकरणयोरपि द्वन्द्वसंज्ञाप्रसङ्गः, ततश्च 'द्वन्द्वे घी'ति नियमः स्यात्, विशेषणमित्यादिना तु तत्पुरुषकरणे खञ्जपटुरित्यपि सिद्ध्यति, नैष दोषः। एकसंज्ञाधिकाराद्विशेषविहितत्वात्तत्पुरुषसंज्ञैव भविष्यति, अन्यथा नीलं च तदुत्पलं चेत्यादावपि द्वन्द्वः स्यात्, यद्वा शेषइति वर्त्तते ऽतो विशेषणमित्यत्रोपयुक्तत्वान्न

भविष्यति, सामानाधिकरण्याभावे तु द्वन्द्व एव पटुखञ्जावागताविति। 'प्लक्षन्यग्रोधाविति'। चशब्दस्याप्रयुक्तत्वेऽपि तदर्थे विधीयमानस्य द्वन्द्वस्य स्वभावादेव लिङ्गसंख्यायोगः, कथं पुनरत्र द्विवचनं, यावता शब्दपौर्वापर्यादर्थाभिधानेऽपि पौर्वापर्यमन्ततश्च प्लक्षशब्दः स्वार्थेन निवृत्तः न्यग्रोधशब्द उपस्थितः, एक एवार्थस्तस्यैकत्वादेकवचनमेव प्राप्नोति, तथा चा- 'ऽन्तो टकिता'विति क्रमेण प्रतीतिमङ्गीकृत्य यथासंख्यमित्यस्य प्रवृत्तिः, न च क्रमेण द्वयोरर्थयोः प्रतीतौ द्विवचनं भवति यथा वा वाक्ये प्लक्षश्च न्यग्रोधश्चेति, अत्र न्यग्रोधार्थप्रतीतिदशायां प्लक्षार्थस्याप्रतीतिरेव कारणम्, अस्तु तर्हि युगपदधिकरणवचने द्वन्द्वः। किमिदं युगपदधिकरणवचनमिति, अधिकरणं वर्तिपदार्थः, अधिकरणे युगपद्वचनं युगपदधिकरणवचनं, तत्र द्वन्द्वो भवति, केन पुनर्युगपद् द्वयोर्वचनम्, एकैकेन पदेन, एतदुक्तं भवति, यावतां पदानां द्वन्द्वो यदि तावतामन्योन्यार्थाभिधानं युगपद्भवत्येवं द्वन्द्वो भवतीति, अत्र हि द्विवचनबहुवचनान्यथानुपपत्तिरेव प्रमाणं, विग्रहे चापि दर्शनात्, विग्रहे खल्वपि युगपद्वचनता दृश्यते प्रमित्रयोर्वरुणयोः, द्यावाचिदस्मै पृथिवी नमेते इति, किं पुनः समासे यत्र चान्या चान्या च शक्तिः प्रादुर्भवति, कथं पुनः प्लक्षशब्देन न्यग्रोधाभिधानं तेन वा तस्य, साहचर्यादिति, यद्वा तद्वा निमित्तं भवतु, यद्यपि च लोकव्यवहारे केवलस्य प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं न दृष्टं न्यग्रोधशब्दस्य वा प्लक्षाभिधायित्वं, द्वन्द्वावयवानां त्वनेकार्थाभिधायित्वं न केवलानामित्यदोषः, नियतविषयाश्चापि शब्दार्था भवन्ति यथा भ्रातृशब्दस्यैकशेषएव स्वसरि वृत्तिः पुत्रशब्दस्य दुहितरि, एतेनैतदपि निरस्तम् एकेनोक्तत्वात्तस्यार्थस्य परस्य प्रयोगो नोपपद्यतइति, कथं द्वन्द्वावयवानामेव परस्परसंविधानादेषा शक्तिर्वह्निसंनिधाविव घृते द्रवता, नो खलु वह्निविगतो भवति, यदि तर्हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थो बहुत्वाद्बहुवचनं प्राप्नोति, नात्र चत्वारोऽर्थाः किं तर्हि याभ्यामेवात्रैकोद्व्यर्थस्ताभ्यामेवापरोऽपि। स्यादेतत्। उभयोरत्र पर्यायत्वे यथा प्लक्षन्यग्रोधौ प्ल-

त्न्यग्रोधाविति द्विर्वचने प्रतीतिरेवं प्लक्षन्यग्रोधावित्यत्रापि प्राप्नोति, तत्र, युगपदुत्पादात्, तद्यथा द्वयोरक्ष्णोर्युगपद्विस्फारितयोः पुरोवर्त्तिन्यर्थे-द्वये युगपदेका प्रतीतिर्जन्यते तथेहापि द्रष्टव्यं, ननु यदा प्लक्षशब्दो न तदा न्यग्रोधशब्दो यदा न्यग्रोधशब्दो न तदा प्लक्षशब्द इति कथमत्र युगपद्व्यापारः, स्मृतिस्थयोर्युगपद्व्यापाराददोषः, पदानि हि श्रुतमात्राणि स्वं-स्वमर्थं स्मारयन्ति पश्चादाकाङ्क्षासन्निधियोग्यत्वेषु परामृष्टेषु स्मृतिस्था-न्यभिदधति, तस्यामेव स्मृतौ युगपदारोहात्सम्भवत्येव युगपद्व्यापारः, या च सा पदार्थानां स्मृतिः सा क्रमभाविनीति तत्क्रमेणैव यथासंख्यादि-व्यवस्था युगपदभिधानेऽप्युपपद्यते, तदेवं युगपदधिकरणवचने द्वन्द्व इति स्थितम्। इहैकविंशतिर्द्वाविंशतिरिति, यद्ययं द्वन्द्वस्स्याद् एकं च विंशति-श्चेतीतरेतरयोगे द्विवचनबहुवचनप्रसङ्गः, समाहारे च 'स नपुंसक' मिति नपुंसकप्रसङ्गः, अत एव एकाधिका विंशतिरेकविंशतिरिति शाकपार्थिवादि-त्वात्समासः क्रियते, नैवं शक्यं 'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु संख्ये' ति पूर्वपदप्रकृतिस्वरो न स्यात्, तस्माद् द्वन्द्व एवायं स च समाहारे नेत-रेतरयोगे, अनभिधानात्, नपुंसकत्वन्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्ग-स्येति न भवति॥

"उपसर्जनं पूर्वम्"॥ 'अनियमो हि स्यादिति'। यद्यपि विपरीतप्रयोगो लोके न दृष्टः परदुरुपराधात्तु वाक्यवत्सम्भाव्येतेत्यर्थः इह राज्ञः पुरुषस्य पुत्रो राजपुरुषपुत्र इति षष्ठीसमासशास्त्रे द्वयोरपि प्रथमानिर्दिष्टत्वेऽप्युपसर्जनसंज्ञा ऽन्वर्थत्वादप्रधानस्यैव भवति, पुरुषश्चात्र राजापेक्षया प्रधानमिति पूर्वनिपातनियमः॥

"राजदन्तादिषु परम्"॥ 'न केवलमित्यादि'। अत्र विहि-तपूर्वनिपातस्येति पाठे विहितः पूर्वनिपातो यस्य तस्येत्यर्थः। प्रायेण तु विहितस्येति पाठः, तत्रापवाद इति शेषः, अन्यस्यापि घ्यादेर्यः पूर्व-निपातो यथालक्षणं विहितस्तस्याप्यपवाद इत्यर्थः। 'अग्रेवणमिति'। वनं पुरगेत्यादिना णत्वं, तदेव तर्हि णत्वविधानं परनिपातस्य ज्ञापकं

भविष्यति, तच्च, 'उपसर्जनं पूर्व' मिति नियमो न प्रवर्त्ततइत्येतावतोऽप्यर्थस्य ज्ञापकत्वेन तदुपपन्नं तस्मात्कथं नियमेन परनिपातः स्यात्, इह च निपातनादलुगिव णत्वमपि न भविष्यतीति तत्राग्रेग्रहणं शक्यमकर्त्तुम् । 'पूर्वकालस्येति'। पूर्वकालैकेति प्रथमानिर्द्दिशादुपसर्जनस्येत्यर्थः। उलूखलमुसलादिद्वन्द्वेषु क्वचिदल्पाच्तरत्वात्क्वचिद् घ्यन्तत्वात्क्वचिदजाद्यदन्तत्वात्पूर्वनिपातप्रसङ्गः, क्वचिदनियमः, दृषदुपलमिति प्रमादपाठः, अल्पाच्तरत्वात्। 'अक्षिभ्रुवं दारगवमिति'। अचतुरादिसूत्रेच् समासान्तो निपातितस्तेन परनिपातस्यापि सिद्धत्वादिह पाठः शक्योऽकर्त्तुम् ॥

"द्वन्द्वे घि" ॥ द्वन्द्वेनेकमिति प्रथमानिर्द्दिशात्सर्वेषामेवोपसर्जनत्वादनियमे प्राप्ते वचनम्। 'अनेकप्राप्ताविति'। आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते न प्रतिव्यक्त्यावृत्त्या, तत्रैकस्यैव पूर्वनिपातेन जातौ लक्षणं प्रवृत्तमेवेति न पुनः प्रवर्तते। नन्वाकृतिपक्षेपि पटुगुप्तौ मृदुगुप्तावित्यादिषु बहुषु व्यक्तिषु यथा युगपत्प्रवर्तते तथात्रापि प्रवर्तनाम्। एवं मन्यते, एकस्य युगपदवध्यवधिमद्भावो विरोधान्न सम्भवति, न चान्तमपेक्ष्योभयोः पूर्वत्वमन्यतरेण व्यवधानादिति, अत्र च यदा पटुमृद्वोर्द्वन्द्वं कृत्वा पश्चाच्छुक्लशब्दस्य द्वन्द्वः क्रियते तदाल्पाच्तरत्वात्तस्य पूर्वनिपाते शुक्लमृदुपटवः शुक्लपटुमृदव इति च भवति। 'विस्पष्टपटुरिति'। विस्पष्टशब्दः प्रवृत्तिनिमित्तस्य पाटवस्य विशेषणमिति विस्पष्टं पटुरिति विगृह्य 'सुप्सुपे' ति समासः ॥

"अजाद्यदन्तम्" ॥ अजादीति पृथक् पदं विशेषणसमासो वा। 'अश्वेन्द्ररथा इति'। रथशब्दस्य पश्चात्समासे रथाश्वेन्द्रा इत्यपि भवति। 'द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेनेति'। 'द्वन्द्वे घी' त्यस्यावकाशः पटुगुप्तौ, 'अजाद्यदन्त' मित्यस्यावकाश उष्ट्रखरम्, इन्द्राग्नी इत्यत्रोभयप्राप्तौ परत्वादजाद्यदन्तमित्येतद्भवति विप्रतिषेधेनेति ॥

"अल्पाच्तरम्" ॥ अत एव निपातनात्स्वार्थे तरप् कुत्वाभावश्च, यदि तु प्रकर्षे तरप् चेत्तदा धवखदिरपलाशा इत्यादौ बहुषु सवि-

हितेषु द्विवचनोपपदत्वाभावादस्याप्रवृत्तावनियमः स्यात्, द्वयोरेव तु स्यात् प्लक्षन्यग्रोधाविति। 'शङ्खदुन्दुभिवीणा इति'। तूर्याङ्गानामित्येकवद्भावो न भवति, तूर्यशिल्पोपजीविनामेव तत्र ग्रहणात्, नियतद्रव्यविवक्षायां जातिपरत्वाभावा'ज्जातिरप्राणिना'मित्येतदपि न भवति, शङ्खवीणाभ्यां दुन्दुभेर्द्वन्द्वे दुन्दुभिशङ्खवीणा इत्यपि भवति, एवं मृदङ्गश्च शङ्खपणवौ च मृदङ्गशङ्खपणवाः, धनपतिश्च रामकेशवौ च प्रासादो धनपतिरामकेशवानामित्यादि भवति, तथा होता च पोता च नेष्टा चोद्गाता चेति बहूनां युगपद् द्वन्द्वे तृतीयस्योत्तरपदमनन्तरमिति तस्यैवानङ् भवति नेतरयोः होतृपोतृनेष्टोद्गातारः, द्वयोर्द्वयोर्द्वन्द्वे त्रयाणामप्यानङ् भवति होतापोतानेष्टोद्गातार इति, एवमन्यत्रापि द्वन्द्वक्रियायामानुपूर्व्यविशेषाद्रूपविशेषो वेदितव्यः। पूर्वाभ्यामल्पाच्तरमित्येतत्पूर्वानुसारेण गम्यमानत्वाद्वृत्तौ न पठितं, 'द्वन्द्वे घी'त्यस्यावकाशः पटुगुप्तौ, 'अल्पाच्तर'मित्यस्यावकाशः प्लक्षन्यग्रोधौ, वागग्नी इत्यत्रोभयप्राप्तौ अल्पाच्तरमित्येतद्भवति। अजाद्यदन्तमित्यस्यावकाश उष्ट्रखरम्, अल्पाच्तरमित्यस्य स एव, वागिन्द्रावित्यत्रोभयप्राप्तावल्पाच्तरमित्येतद्भवति। 'ऋतुनक्षत्राणामिति'। ऋतूनामानुपूर्व्यं प्रादुर्भावकृतम्, नक्षत्राणामुदयकृतम्। 'मातापितराविति'। आचार्यः श्रेष्ठो गुरूणां, मातेत्येकइति स्मृतिः। पितुर्द्दशगुणं माता गौरवेणातिरिच्यतइति च। 'श्रद्धामेधे इति'। सत्यां श्रद्धायामर्थक्रियाकारिणी मेधेत्यभ्यर्हितत्वं श्रद्धायाः। 'दीक्षातपसी इति'। दीक्षार्थं तप इत्यभ्यर्हितत्वं दीक्षायाः, लघ्वक्षरादपि तपसो विप्रतिषेधादभ्यर्हितमित्येतदेव भवति। 'समानाक्षराणामित्यत्र नास्तीति'। तेन ऋतुनक्षत्राणामित्यत्रैव वर्णग्रहणं न कृतमिति भावः। वर्णानामुत्पत्तिकृतमानुपूर्व्यं श्रूयतएव मुखतो ब्राह्मणमसृजद्बाहुभ्यां राजन्यमूरुभ्यां वैश्यं पद्भ्यां शूद्रमिति। 'संख्याया अल्पीयस्या इति'। द्वन्द्वे चाद्वन्द्वे चेत्याहुः। अल्पीयस इति पाठे अल्पीयसोऽर्थस्य वाचिकाया इत्यर्थः। 'नवतिशतमिति'। द्वन्द्वः, द्व्येकयोरिति तु सौत्रो निर्देशः॥

"सप्तमीविशेषणे बहुव्रीहौ" ॥ 'कण्ठेकाल इति'। यदा कण्ठे किञ्चिदस्तीति निर्ज्ञाते काल इति विशेषणं प्रयुज्यते तदा सप्तमीग्रहणेन प्रयोजनम्, अन्यदा तु विशेषणत्व एव सिद्धम्। 'सम्प्रधारणायामिति'। इदमस्तु इदमेवेति निरूपणा सम्प्रधारणा। 'परत्वादिति'। शब्दपरविप्रतिषेधादित्यर्थः, एवमर्थमेव च संख्यासर्वनाम्नोरिति नोक्तम्। 'गड्वादिभ्य इति'। गड्वादयः प्रयोगतो द्रष्टव्याः ॥

"निष्ठा" ॥ 'अवमुक्तोपानत्क इति'। उरःप्रभृतित्वात्कप्। 'ननु चेत्यादि'। 'यथा चित्रगुरिति'। गुणद्रव्यशब्दयोरुपनिपाते गुणशब्दस्य विशेषणत्वं क्रियाद्रव्यशब्दयोरपि क्रियाया एव विशेषणत्वं, ततश्च पूर्वणैव सिद्धमिति भावः। 'विवक्षानिबन्धनत्वादिति'। यदा कृतं किञ्चिदनेनेति निर्ज्ञाते कट इति प्रयुज्यते तदा कटो विशेषणमिति मन्यते। 'कटे कटेन कृतमिति वा विग्रहीतव्यमिति'। एवं विग्रहे कृतस्य विशेषणत्वशङ्कैव नास्तीति भावः। क्वचित्तु वाशब्दो न पठ्यते तत्र विवक्षानिबन्धनत्वादित्युक्ते तामेव विवक्षां दर्शयतीति व्याख्येयम्। 'जातिकालसुखादिभ्यः परवचनमिति'। ज्ञापकात्सिद्धं, जातिकालसुखादिभ्यो नाच्छादनादित्याह, तज्ज्ञापयति जात्यादिभ्यः परा निष्ठा निपततीति। 'शार्ङ्गजग्धीति'। शार्ङ्गं जग्धमनयेति बहुव्रीहिः,। 'क्तादल्पाख्यायाम्' 'अस्वाङ्गपूर्वपदाद्वे'ति ङीष्। अत्राहुः। निष्ठाशब्देन या विहिता निष्ठा तस्या ग्रहणं तेन सुस्थितं चारुहसितमित्यादौ नपुंसके भावे क्त इत्यस्य परनिपात इति ॥

"कडाराः कर्मधारये" ॥ बहुवचननिर्देशादाद्यर्थोऽवगम्यत इत्याह। 'कडारादय इति'।इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

"अनभिहिते" ॥ अनभिहितशब्दोऽयमनेकार्थः, तथाहि। अभिपूर्वस्य दधातेर्हिनोतेश्चैतद्रूपं सम्भवति, अभिपूर्वश्च दधातिर्बन्धनेपि दृष्टः, अश्वाभिधानीमादत्त इति, उच्चारणेपि, अभिहितः श्लोक इति,

प्रतिपादनेऽपि अभिहितोऽर्थ इति । हिनोतिरपि गतौ वृद्धौ च वर्त्तते, इह तु वक्ष्यमाणानां कर्मादीनां बन्धनाद्यर्थचतुष्टयासम्भवात्प्रतिपादनवचनोऽभिहितशब्द इत्याह । 'अनभिहिते निर्दिष्टे ऽनुक्त इति' । क्वचित्त्व प्रतिपादनवचनः । 'उक्तार्थानामप्रयोग इति' । यथा सामान्येनानभिहित इत्येतावत्युच्यमाने कटं करोति भीष्ममुदारं दर्शनीयमित्यत्र कटशब्दाद्विशेष्यवाचिन उत्पद्यमानया द्वितीयया ऽनवयवेन कटगतस्य कर्मत्वस्याभिहितत्वाद्भीष्मादिभ्यो द्वितीया न स्यादिति मन्यमानः पृच्छति । 'केनानभिहित इति' । इतरोऽपि विदिताभिप्राय आह । 'तिङ्कृत्तद्धितसमासैरिति' । बहुषु प्रयुक्तेषु केषां चिद्गुणेन केषां चित्कार्यान्वयप्रतिपादनं परिसंख्यानं, प्रत्युदाहरणेषु सर्वत्र द्वितीया न भवति । 'कटं करोति भीष्ममित्यादि' । कटः कृतो भीष्म उदारो दर्शनीय इति, करोतेरुत्पद्यमानः क्तप्रत्ययो ऽनवयवेन सर्वकर्माभिधत्ते तद्वद् द्वितीयापीति यो मन्दधीर्मन्यते तं प्रतीदं परिगणनं, सूक्ष्मदृशस्तु प्रति न वक्तव्यमेव । तथाहि । प्रातिपदिकादुत्पद्यमाना द्वितीया यदाकारविशिष्टोऽर्थः प्रातिपदिकेनाभिधीयते तदाकारविशिष्टस्यैव कर्मभावमाचष्टे, कटशब्देन कटत्वजातिविशिष्टोऽर्थो ऽभिधीयते न भीष्माद्याकारविशिष्ट इति तत्प्रतिपादनाय यथा भीष्मादिशब्दप्रयोगो भवति तथा तदाकारविशिष्टस्य कर्मत्वाभिधानाय द्वितीया भविष्यति, क्तप्रत्ययस्तु प्रकृत्यर्थस्य न कर्मतामाचष्टे किं तु प्रकृत्यर्थं प्रति यस्य कर्मभावस्तमिति युक्तं यदनवयवेन सर्वकर्माभिधत्ते । ननु च कर्मादयो विभक्त्यर्थास्तेषां च तिङादिभिरभिहितवचनमनर्थकम् अन्यत्रापि विहितस्याभावादभिहिते, यत्राप्यनभिहिताधिकारो न क्रियते तत्रापि शब्दान्तरप्रतिपादितेऽर्थे नैव विहितं भवति तद् यथा बहुपटुरिति बहुचोक्तत्वादीषदसमाप्तेः सत्यपि सम्भवे कल्पबादयो न भवन्ति, द्विर्दश द्विदशाः समासेनोक्तत्वात्सुजर्थस्य सुज् न भवति, पटुगुप्तौ द्वन्द्वेनोक्तत्वाच्चार्थस्य चशब्दो न प्रयुज्यते, तद्वदत्रापि तिङादिभिरभिहितत्वादेव द्वितीयादयो न भविष्यन्ति । नन्वभिहितार्थस्यापि प्रयोगो दृष्टो ऽपूपौ द्वाविति, सत्यम् । अयं तु न्यायः यदुता-

भिहिते विहितं न स्यात्, नहि व्यसनितया शब्दः प्रयुज्यतेऽपि त्वर्थाभिधानाय, स चेदर्थः शब्दान्तरेणाभिहितः किमिति शब्दान्तरं प्रयुज्यते, अतिनिकोचादिभिरप्यवगतेर्थे शब्दो नैव प्रयुज्यते किं पुनः शब्देनैवाभिहिते, अपूपौ द्वावित्यादौ तु द्वावानय कौ द्वौ ताविति सामान्योपक्रमे वाक्यमिति यथा कथं चिदुपपादनीयं, तस्माचार्थे एतेनेत्याशङ्क्य संख्यापि विभक्त्यर्थ इति दर्शयन्नाह। 'बहुषु बहुवचनमित्येवमादिनेति'। अयमर्थः। त्रिकः प्रातिपदिकार्थ इत्यस्मिन्दर्शने कर्मादिवदेकत्वादिसंख्या विभक्त्यर्थः, तत्र कर्मादीनां युगपद्विभक्तिभिरभिधीयमानानां परस्परं विशेषणविशेष्यभावमनापन्नानां केवलप्रातिपदिकार्थगतानामभिधानं एत एको एतः कर्म पशुरेकः पशुः करणमिति वाभिधानं, पश्चाच्चैकक्रियान्वयबलेन परस्परसम्बन्ध इति प्राभाकरा मन्यन्ते। भाट्टास्तु परस्परासम्बद्धस्य स्वतन्त्रस्यानेकार्थस्याहाः पादा माषा इत्यादावभिधानदर्शनेप्येकशेषमन्तरेणादर्शनात्,अजेत्यादौ च कृतिकार्ययोर्युगपल्लिङ्गाभिधीयमानयोरपि विशेषणविशेष्यभावस्य प्राभाकरैरप्यभ्युपगमात्तद्वदेव विशिष्टाभिधानं मन्यन्ते। अस्माकमप्ययमेव पक्षः। तत्र कर्मादयो विशेषणमेकत्वादयो विशेष्याः कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति, विपर्ययो वा एकत्वादिविशिष्टं यत्कर्म तत्र द्वितीयेति, तत्र यद्यपि कर्मादिप्राधान्यपक्षे तिङादिभिः प्रधानभूतानां कर्मादीनामभिहितत्वाद्प्रसङ्गो द्वितीयादीनां संख्याप्राधान्यपक्षे कर्मादिष्वभिहितेष्वपि प्रधानभूतसंख्याभिधानाय द्वितीयादयः स्युरेव। प्राभाकरे तु पक्षे कर्मांशाभिधानेपि संख्यांशस्यानभिहितस्याभिधानाय द्वितीयादयः स्युरिति। 'अनभिहितकर्माश्रयेष्विति'। अनभिहितानि कर्मादीन्याश्रयो येषां तेष्वित्यर्थः। एतेन कर्मणीत्यादिसप्तमीनिर्देश एकत्वादीनामाधारतया न पुनरभिधेयतयेति दर्शितम्। 'अनभिहितइति'। यदि प्रसज्यप्रतिषेधः स्यात्ततो द्वयोः क्रिययोः कारकेन्यतरेणाभिहितेपि विभक्त्यभावप्रसङ्गः, प्रासादआस्ते इत्यत्र सदिक्रियाया आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्चान्यतरेण सदिप्रत्ययेन घञाभिहितं प्रसीदन्त्यस्मिन्प्रासाद इति तत्राभिहिते न भवतीत्युच्यमाने सप्तमी न स्यात्

"श्लिष आलिङ्गने" ॥ 'श्लिषेर्द्धातोरिति' । श्लिष आलिङ्गनइत्यस्य न तु श्लिषु श्लिषु प्रुषु प्लुषु दाहइत्यस्यालिङ्गने वृत्त्यभावाद् अनिट इति चाधिकारात्सानुबन्धकत्वाच्च, तत्र नियमार्थमेतदिति, ननु श्लिषिरयं पुषादिः, तथा च प्रत्युदाहरणे अङ् भवति ततश्च पुषादिपाठात्प्राप्तमङं बाधित्वा ऽऽलिङ्गने क्सो यथा स्यादित्येवं विधिसम्भवाविधमो नोपपद्यते, अस्तु[1] विधिः, एवमप्यालिङ्गने क्सो ऽन्यत्राङिति सिद्धमिष्टं, सत्यं, सिद्धं परस्मैपदे आत्मनेपदे त्वङभावादालिङ्गने ऽनालिङ्गने च पूर्वेण क्सः प्राप्नोति इष्यते च तत्राप्यालिङ्गने क्सोऽन्यत्र सिच्, तच्च नियमे सत्युपपद्यते स च नियमो नोपपद्यते विधेयभावात्, योगविभागात्सिद्धं, श्लिष इत्येको योगः श्लिषश्च क्सो भवति, किमर्थमिदं पुषाद्यङो बाधनार्थं, यथैव तर्ह्यङं बाधते तथा चिणमपि बाधेत समाश्लेषि कन्या देवदत्तेनेति, पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति तत्रालिङ्गने ऽनालिङ्गने च श्लिषः क्सो भवति, इदमिदानीं किमर्थं नियमार्थम्, आलिङ्गनएव नान्यत्र, योग विभागसामर्थ्याद्वा च यावती च क्सस्य प्राप्तिः सा सर्वा नियम्यते न त्वनन्तरस्य विधिर्वा भवतीति श्लिष इति या प्राप्तिरङ्बाधनार्था सैव, एवमपि नियमो नोपपद्यते, कथं, श्लिष इत्येतदङ्बाधनार्थं, न च तदत्यन्तायाङं बाधितुं प्रभवति पुषादिपाठसामर्थ्यात्, ततश्चाङ्क्सयोः सर्वत्र विकल्पे प्राप्ते द्वितीयो योग आलिङ्गने क्स एव नित्यं यथा स्यान्मा कदाचिदङ् भूदित्येवमर्थः स्या,त्किं तर्ह्युच्यते नियमो नोपपद्यतइति, ननु तत्र भवतापि मुखान्तरेण नियम एवोक्त एतावांस्तु विशेषो मया प्रत्ययनियम उक्त आलिङ्गनएव क्स इति त्वया पुनरर्थनियम आलिङ्गने क्स एवेति सर्वथा नियमान्न मुच्यामहे तत्र लक्ष्यानुरोधाद्विधेयविभक्तिनिर्द्देशेन प्रधानत्वाद्वा प्रत्ययनियम एव भविष्यति ॥

"न दृशः" ॥ 'पूर्वेणेति' । शल इगुपधादित्यनेन । 'अङ्-

१ तर्हीत्यधिकं २ पुस्तके ।

सिचो भवत इति'। परस्मैपदेष्वन्यत्र सिजेव। 'अदर्शदिति'। 'ऋदृशोऽङि गुणः'। 'अद्राक्षीदिति'। 'सृजिदृशोर्झल्यमकिति'। अथ 'क्लेः सिजि'त्यस्यानन्तरं क्सस्य बाधनार्थं सिजेव कस्मान्न विहितः, इरित्वसामर्थ्यादङपि भविष्यति, सत्यं, तत्रापि दृशश्चेति चकारः कर्तव्य इति लाघवे नास्ति विशेषः॥

"णिश्रिद्रुस्रुभ्यः कर्तरि चङ्"॥ 'चकारो विशेषणार्थ इति'। 'चङी'त्यत्र अङीत्युच्यमाने 'अस्यतिवक्तिख्यातिभ्योऽङ्' 'पुषादिद्युताद्लृदितः' 'त्विषादिभ्योऽङ्' अत्रापि प्राप्नोति, यदि पुनरयं ङो विधीयते चकारः शक्यो कर्तुं चिन्त्यं प्रयोजनमस्य। 'अशिश्रियदित्यादि'। अत्र चङि धातुरङ्गं चङन्तं तु तिपि तत्र चङाश्रयस्य गुणस्य क्ङितीति प्रतिषेधः, चङन्तस्य तु तिपमपेक्ष्य लघूपधगुणः प्राप्नोति, न च तस्यापि चङमेव ङितमपेक्ष्य प्रतिषेधः, किं कारणं क्ङितीति निमित्तसप्तमी, नैव दोषः। अन्तरङ्गावियङुवङौ अन्तर्भूतचङपेक्षत्वात्, बहिरङ्गो गुणो बहिर्भूततिबपेक्षत्वात्। 'अकारयिषातामिति'। ण्यन्तात्कर्मणि लुङ् द्विवचनमाताम्। 'कमेरुपसङ्ख्यानमिति'। ननु कमेर्णिङ् विहितः, न च प्रकृत्यन्तरं कमिः सम्भवति णिङन्तात्तु सूत्रेणैव सिद्धं तत्राह। 'आयादय आर्द्धधातुके वेति'। 'यदा णिङ् नास्तीति'। 'णिङपक्षे सन्वद्भाव इति'। सन्वत्सूत्रे चङ्परो णिरित्याश्रयणात् तत्र हि सन्वल्लघुनि चङीति वक्तव्ये परग्रहणं बहुव्रीह्यर्थं तत्र णिरन्यपदार्थो ऽन्यस्यासम्भवात्॥

"विभाषा धेट्श्व्योः"॥ 'अङोऽप्यत्र विकल्प इति'। जृस्तम्भ्वित्यादिना। 'अश्वदिति'। 'श्वयते रः'। 'अश्वयीदिति'। ह्म्यन्तेत्यादिना सिचि वृद्धेः प्रतिषेधाद्गुणः। 'अधिषातामिति'। कर्मणि द्विवचनमातां 'स्थाघ्वोरिच्चे' ति कित्त्वेत्त्वे॥

"गुपेश्छन्दसि"॥ 'यस्मादायप्रत्ययो नास्ति तत्रायं विधिरिति'। सूत्रे केवलस्योच्चारणाद्गुप गोपने गुप व्याकुलत्वइत्यनयोस्तु

१ अन्यत्रेत्यत्रात्मनेपदेष्विति पा॰ २ पुस्तके।
२ लाघवं प्रतीति पा॰ २ पुस्तके।

ग्रहणं न भवति छन्दसि दृष्टानुविधानात्, दर्शने तु तयोरपि ग्रहणम् । 'अजूगुपतमिति' । गुप् रक्षणे तस्यस्थमिपामिति थसस्तं, 'तुजादीनां दीर्घोऽभ्यासस्य' । 'अगोप्तमिति' । ऊदित्त्वादिडभावपक्षे 'झलो झली'ति सिचो लोपः । 'अगोपायिष्टमिति' । आयप्रत्ययान्तात्सिच् ॥

"नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः" ॥ 'अर्द्द गतौ याचने चेति' । अर्द्द हिंसायामित्यस्यापि ग्रहणं यदिच्छन्दसि दर्शनमस्ति । 'एतेभ्य इति' । तत्रोनयतिश्चुरादिः, ध्वनिरपि गर्वमानइति प्रागेतस्मादादन्ता इत्यधिकारे चुरादिः पठितः, घटादौ चापि पठ्यते, एलयतिश्चुरादिः, अर्द्दयतिर्हेतुमण्ण्यन्तः । 'पूर्वेणेति' । णिश्रीत्यादिना । 'ऊनयीरिति' । मध्यमपुरुषैकवचनं, पूर्ववद्वृद्धौ प्रतिषिद्धायां गुणः, 'न माङ्योग' इत्याडागमप्रतिषेधः, मा त्वायतो जरितुः काममूनयीः । इदं प्रतिसव्यस्य ऋषेर्वचनं, त्वायतस्त्वामिच्छतो जरितुस्तोतुर्मम काममभिलाषं मा ऊनयेयीः ऊनं माकार्षीरित्यर्थः । प्रायेण तु तिबन्तं पठ्यते कृताडागमं च तदन्यत्र द्रष्टव्यम् । 'औनिनरिति' । सिपि चङि अजादेर्द्वितीयस्येति नशब्दस्य द्विर्वचनं, प्रायेण तूदाहरणवदिदमपि तिबन्तं पठ्यते । 'ध्वनयीदिति' । तिप् 'न माङ्योग' इत्यडागमप्रतिषेधः । 'आर्दिददिति' । 'अजादेर्द्वितीयस्य' 'नन्द्राः संयोगादय' इति दशब्दस्य द्विर्वचनम् ॥

"अस्यतिवक्तिख्यातिभ्योऽङ्" ॥ 'ब्रूञादेशो वेति' । वाशब्दः समुच्चये, एवमुत्तरत्रापि । 'पुषादित्वादेव सिद्ध इति' । परस्मैपदेषु । 'पर्यास्यतेति' । उपसर्गादस्यत्यूह्योर्वावचनमित्यात्मनेपदेऽङि अस्यते स्थुक् । 'अवोचदिति' । 'वच उम्' । आख्यदिति' । 'आतो लोप इटि च' ॥

"लिपिसिचिह्वश्च" ॥ लिपिसिचिसहितो ह्वा इति मयूरव्यंसकादय इति समासः, समाहारद्वन्द्वे तु नपुंसकह्रस्वत्वं स्यादितरेतरयोगे बहुवचनं [1]ह्वसावातो धातोरित्याकार लोपः । 'योगविभाग उत्तरार्थे

१ ह्वसीति २ पु० पाठः ।

इति'[१]। अस्यतिवक्तिख्यातिलिपिसिचिह्व इत्येकयोगे त्वस्यादीनामप्युत्तरत्रानुवृत्तिः स्यात् ततश्च तेभ्योऽप्यात्मनेपदे विकल्पः स्यात् ॥

"आत्मनेपदेष्वन्यतरस्याम्" ॥ 'अलिप्त, असिक्तेति'। 'झलो झली' ति सलोपः, 'लिङ्सिचावात्मनेपदेष्वि' ति कित्त्वाद्गुणाभावः ॥

"पुषादिद्युताद्य्लृदितः परस्मैपदेषु" ॥ एकेनैवादिशब्देन प्रत्येकं सम्बन्धादेव सिद्धे द्वयोरुपादानं चिन्त्यप्रयोजनम्। 'दिवाद्यन्तर्गण इति'। पुष पुष्टौ शुष शोषणइत्येवमादिरागणसमाप्तेः, यत्तु मध्ये ष्णिह प्रीतौ वृदिति वृत्करणं तद्रधादिपरिसमाप्त्यर्थमेतच्चास्यतिग्रहणमात्मनेपदार्थं पुषादित्वादिति वार्त्तिककारवचनाद्विज्ञायते। 'न भ्वादिरिति'। पुष पुष्टौ शिषु श्लिषु प्रुषु प्लुषु दाहइत्येवमादिः, अस्य यदि ग्रहणं स्यात्पुषाद्यनन्तरं पाठाद् द्युतादीनां पृथग्ग्रहणं न कुर्यात्। 'क्र्याद्यन्तर्गणो वेति'। पुष पुष्टौ मुष स्तेयइत्येवमादिः, तत्र हि चत्वार एव पठ्यन्ते तत्र यदि ते जिघृक्षिताः स्युर्लृदित एव तान् कुर्यात् स्वरितेत्वादेरपि तेनैव सिद्धत्वात्। अथ पुषादयो द्युतादयश्च लृदित एव कस्मान्न पठिता अशक्यास्ते तथा पठितुम्, आदितामीदितामुदितामूदितां च तत्र भावात्, तद्यथा, पुषादिषु तावत् ञिष्विदा गात्रप्रक्षरणे, मदी हर्षे, शमु उपशमने, षिधू राद्धाविति, द्युतादिष्वपि श्वितावर्णे, ञिमिदा स्नेहने ञिष्विदा स्नेहविमोचनयोः, स्रंसु ध्वंसु भ्रंसु अवस्रंसने, स्यन्दू प्रस्रवणे कृपू सामर्थ्ये इति। 'अद्युतदश्वितदिति'। 'द्युद्भ्यो लुङी' ति पक्षे परस्मैपदम्। 'अलोटिष्टेति'। लुट लुठ प्रतिघाते ॥

"सर्त्तिशास्त्यर्तिभ्यश्च" ॥ शासेरदादित्वाच्छपो लुक्, इतरत्र निपातनात्। 'शासु अनुशिष्टाविति'। सर्त्यर्त्तिभ्यां परस्मैपदिभ्यां साहचर्यादस्यैव ग्रहणं न त्वाङः शासु इच्छायामित्यात्मनेपदिन इति दर्शयति। 'ऋ गताविति'। ऋ गतिप्रापणयोरिति भौवादिकः, ऋ सृ गताविति जौहोत्यादिकः, द्वयोरप्यत्र निर्देश इति केचित्, वयं तु जौहोत्यादिकयोरेवार्त्ति-

१ मुद्रितमूलपुस्तके तु पृथग्योग उत्तरार्थ इति पाठः।

सर्त्त्यार्थ्यऽहणं मन्यामहे । 'असरदिति' । 'ऋदृशो ऽङि गुणः' । 'अशि-षदिति' । 'शास इदङ्हलोः,' । 'शासिवसिघसीनाञ्चे'ति षत्वम् । 'पृथग्योगकरणमात्मनेपदार्थमिति' । अन्यथा पुषादिद्युदित्सर्त्तिशास्त्य-र्त्तिभ्य इत्येकमेव योगं कुर्यात्, एवं हि पृथग्विभक्तिनिर्द्देशश्चका-रश्च न कर्त्तव्यो भवति । 'समरन्तेति' । समो गम्यृच्छीत्यात्मनेपदं 'बहुलं छन्दस्यमाङ्योगेपी'त्याड्भावः, छान्दसत्वादस्य प्रयोगस्य, समन्यवो यत्समरन्त सेनाः, सङ्कल्पा अस्य समरन्त, तथा भट्टि-काव्ये समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागतइति, कश्चिदाह भाष्यविरुद्धमिदं भाष्यकारेण हि समो गमृच्छीत्यत्र मासमृपातां मासमृषतेति आत्मनेपदे सिजुदाहृत इति । अत्राहुः । शासिसा-हचर्य्यादर्त्तिसर्त्त्योरविद्यमानशपोर्ज्जौहोत्यादिकयोरिह ग्रहणं समो गमृ-च्छीत्यत्र तु भौवादिकस्याप्यर्त्तेर्ग्रहणं, तत्र भौवादिकेर्त्तौ सिच उदा-हरणमविरुद्धमिति ॥

"इरितो वा" ॥ 'अभितेति' । स्वरितेत्त्वादात्मनेपदम् ॥

"जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" ॥ 'अस्तम्भदिति' । अनिदितामित्युपधालोपः । 'अन्य[1]तरोपादानेपि रूपत्रयं सिद्ध्यतीति' । कथं, यदि तावद् ग्लुचिरुपादीयते तस्मादङ्सिचोरग्लुचत् अग्लोचीदि-त्येतद् द्वयं सिद्ध्यति ग्लुञ्चेस्तु सिचि तृतीयमग्लुञ्चीदिति, अथ ग्लुञ्चिरुपा-दीयते तस्याग्लुचत् अग्लुञ्चीदिति रूपद्वयं सिद्ध्यति ग्लुचेस्तु सिचि तृतीय-मग्लोचीदिति, किमर्थं तर्ह्युभयोरुपादानमित्यत्राह । 'अर्थभेदात्त्विति' । 'के चिदित्यादि' । इदं भाष्यविरुद्धं, भाष्यकारो हि अनेकार्थत्वाद्धातूनाम-र्थभेदो न प्रयोजक उभयोपादानस्येत्यन्यतरोपादानं प्रत्याख्यातवान् ॥

"कृमृदृरुहिभ्यश्छन्दसि" ॥ 'अमरदिति' । व्यत्ययेन परस्मै-पदम् ॥

"चिण् ते पदः" ॥ 'सामर्थ्यादिति' । धातोरात्मनेपदित्वात्पर-स्मैपदबहुवचनस्य स्थाने यस्तशब्दस्तस्यस्थमिपामितिविहितस्तस्यास्मि-

१ मुद्रितमूलपुस्तके एकतरोपादानेनेति पाठः ।

न्विषये ऽसम्भवः। 'सामर्थ्यादुदपादीति'। चिणो लुक्। 'उदपत्सतेति'। 'आत्मनेपदेष्वनत' इत्यदादेशः, इह वेति निवृत्तमुत्तरत्रान्यतरस्यांग्रहणात् ॥

"दीपजनबुधपूरितायिप्यायिभ्यो ऽन्यतरस्याम्" ॥ 'जनी प्रादुर्भावे, बुध अवगमने इति'। जन जनने बुध बोधनइत्येतयोस्तु परस्मैपदिनोरिह ग्रहणं न भवति दीप्यादिभिरात्मनेपदिभिः साहचर्यात्, तेन परस्मैपदिभ्यां कर्मव्यतिहारे आत्मनेपदैकवचनेपि तशब्दे चिण् न भवति, यदि परस्मैपदिनोरिह ग्रहणं स्यादात्मनेपदिनोर्न स्यात् सानुबन्धकत्वात् कर्त्तरि चायं विकल्पः, भावकर्मणोस्तु 'चिण् भाव कर्मणो'-रिति नित्यमेव चिण् भवति, परत्वादिह कर्त्तरीत्यनुवृत्तेर्वा ॥

"अचः कर्मकर्त्तरि" ॥ 'कर्मकर्त्तरीति'। यत्कर्म भूत्वा कर्त्ता भवति तत्रेत्यर्थः। 'प्राप्तविभाषेयमिति'। कर्मवत्कर्मणेत्यतिदेशेन नित्यं चिणः प्राप्तेः। 'अकारि कटो देवदत्तेनेति'। अत्र शुद्धे कर्मणि 'चिण् भावकर्मणो'रिति नित्यमेव चिण् भवति। नन्विह कर्त्तरीत्यनुवर्त्तिष्यते, यद्येवं शुद्धे कर्त्तरि स्यात्, कर्मणीति वाक्यभेदेन कर्त्ता विशेषयिष्यते कर्मणि कर्त्तरीति, नैतदेवं शक्यते लब्धुं, कर्मणीत्युच्यमाने कर्त्तुर्निवृत्तिरेव स्यात् चकारेऽपि क्रियमाणे कर्मणि च भवति कर्त्तरि च भवतीत्यधिकरणयोरेव समुच्चयः स्याद् न सामानाधिकरण्ये प्रमाणमस्ति ॥

"दुहश्च" ॥ अप्राप्तविभाषेयं, 'न दुहस्नुनमां यक् चिणा'विति चिणः प्रतिषेधात्। तत्र दुहिग्रहणे यक्प्रतिषेधार्थं चिण्ग्रहणं स्वाद्यर्थम्। 'अदुग्धेति'। 'क्सस्याचि' लुग्वा दुहदिहेति क्सस्य लुक् ॥

"न रुधः" ॥ 'रुधिर् आवरणइति'। अनो रुध कामइत्यस्य तु ग्रहणं न भवति कर्त्रस्थभावकत्वेन कर्मकर्त्तुरभावात् ॥

"तपोनुतापे च" ॥ 'कर्मकर्त्तरीति'। 'तपस्तपःकर्मकस्यैवेति'। 'यत्र कर्मवद्भावो विहितस्तत्र भावकर्मणोरपीति'। अपिशब्दात्कर्मवत्कर्मणेति यत्र कर्मवद्भावोतिदिष्टस्तत्रापि भवति। 'अतप्त तपस्तापस इति'। अस्यार्थं 'तपस्तपःकर्मकस्यैवे'त्यत्र वृत्तिकार एव वक्ष्यति।

'अन्ववातप्त पापेनेति'। पूर्वं यत्पापं कर्म कृतं तेन पश्चात्तप्तो ऽभ्याहत इत्यर्थः। 'शुद्धे कर्मणि लकारः,' 'पापेनेति'। कर्त्तरि तृतीया कर्माविवक्षायान्तु शोकार्थे वा तपो भावे लकारः, पापेनेति हेतौ तृतीया, यदाभ्याहननार्थस्य तपेः कर्मस्थभावस्य कर्मकर्त्ता विवक्ष्यते तदा कर्मवत्कर्मणेत्यतिदेशादात्मनेपदं तदापि हेतौ तृतीया ॥

"चिण् भावकर्मणोः" ॥ 'चिण्ग्रहणं विस्पष्टार्थमिति'। 'चिण् ते पदः' इत्यतस्तेशब्दवदनुवृत्तेः, यत्तु दीपजनेत्यादावन्यतरस्यांग्रहणं तच्च रुधदति तत्प्रतिषेधविधावेव निवृत्तमन्यथा प्रतिषेधविधानमनर्थकं स्यात्, न च प्रतिषेधस्यानुवृत्तिशङ्का, प्राप्तिपूर्वको हि प्रतिषेधः, न च भावकर्मणोः केन चिच्चिणः प्राप्तिरस्ति ॥

"सार्वधातुके यक्" ॥ इहाशिषि लिङि लिटि चान्तरेणापि विकरणं सर्वेष्वेव धातुषु तिङामेव सद्भावे भावकर्मकर्त्तारस्त्रयोपि प्रतीयन्ते, भविषीष्ट त्वया, कृषीष्ट घटः, भूयात् क्रियात् बभूवे चक्रे घटः बभूव चकारेति। अस्तिजुहोत्यादौ कर्त्ता ॥

क्व चित्तिङामभावेपि प्रतीयन्ते त्रयोप्यमी।
अशाय्यकारि गच्छेति चिणः सन्निधिमात्रतः ॥
अधोगविभरित्यादौ धातुमात्रेपि कर्तृधीः,।
तथा व्यतिसदित्यादौ धात्वभावेपि कर्तृधीः, ॥

एवं स्थिते भूयो विषयाभ्यामन्वयव्यतिरेकाभ्यां शब्दार्थावधार्यो व्यभिचारभूमिषु तु तस्मिंस्तस्मिन्विषये तस्यतस्य शब्दस्य स स महिमेति कल्पयितुमुचितं न पुनः क्व चिद्व्यभिचारदर्शनेन सर्वत्रानाश्वासः, तादृशो चान्वयव्यतिरेकौ तिङामेवेति तेषामेव भावकर्मकर्त्तारो वाच्याः, सूत्रकारोप्याह 'लः कर्मणि च भावे चाकर्मकेभ्य' इति, लादेशाश्च तिङः, ततोपि तेषामेव तेर्थो इति मन्यमान आह। 'भावकर्मवाचिनि सार्वधातुके परत इति'। उत्तरसूत्रे च कर्तृवाचिनि सार्वधातुके परत इति। 'शप्यतइति'। 'अयङ् यि क्ङिति' अथ यदा द्वौ कर्त्तारौ बहवो वा तदा

कथमास्यते भवद्भ्याम् । आस्यते भवद्भिः, द्विवचनबहुवचने कस्मान्न भवतः भावे भेदाभावाद् धात्वर्थो हि भावः ॥

कर्तृभेदेपि नावश्यं धात्वर्थो भिद्यते यतः ।
एकामेव क्रियाव्यक्तिं बहुष्वत्यादयस्त्वपि ॥
दृष्टमेते पचन्तीति कर्मभेदेपि तादृशः ।
पश्यैकस्यां क्रियाव्यक्तौ पच्यन्ते तण्डुला इति ॥
न कालभेदे शब्दैक्यमास्यासिष्यतआस्यते ।
पाकौ पाका इति त्वत्र शब्दैक्यादेकशेषता ॥

अतश्च ।

निवृत्तभेदा सर्वैव क्रिया ऽऽख्यातैरभिधीयते ।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना ॥

तदेवमाख्यातेन भावस्वरूपगतो भेदः प्रतीयतइति द्विवचनबहुवचनाभावः, यत्र तु स्वरूपगत एव भेदस्तत्र भवत्येव यथा उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्तेइति, उष्ट्राणां ह्यासिकाः स्वत एव विलक्षणा हताश्च नानाप्रकारं शेरते उत्ताना अवताना विकीर्णकेशा विस्रस्तवस्त्रा इति तत्साम्यादाख्यातवाच्यस्यापि भावस्य स्वरूपगतभेदावभासाद् बहुवचनम्, इवशब्दप्रयोगमन्तरेणापि चेवार्थावगतिर्भवति, तदयमर्थः, यादृशानि हतानामनेकप्रकाराणि शयनानि तादृशानि देवदत्तादिभिः क्रियन्तइति । केचित्त्वत्र कर्मणि लकारमिच्छन्ति उष्ट्रासिकाहतशायिकालक्षणस्य भावस्य कालभावाध्वगन्तव्या इति कर्मत्वात्, यथा गोदोहः सुप्यतइति। ‘ककारो गुणवृद्धिप्रतिषेधार्थ इति। मृज्यतइत्यत्र वृद्धिप्रतिषेधः। ‘यग्विधान इति’। ननु च कर्मवत्कर्मणा तुल्यक्रिय इत्यतिदेशादेव यक् सिद्धः किमुपसङ्ख्यानेन तत्राह। ‘विप्रतिषेधाद्धीति’। यदा कर्मवत्कर्मणेत्ययं शास्त्रातिदेशस्तदा तेनतेन शास्त्रेण कर्मकार्याणि भवन्ति तत्र कर्मणि यग्भवतीत्यस्यावकाशः शुद्धं कर्म पच्यते ओदन इति, कर्त्तरि शबित्यस्यावकाशः शुद्धःकर्त्ता भवति पचतीति, कर्मकर्त्तर्युभयप्रसङ्गे परत्वाच्छबेव स्यादित्यर्थः, तत्तर्ह्युप-

सङ्ख्यानं कर्त्तव्यं न कर्त्तव्यं 'न दुहस्नुनमां यक्चिणा' विति यक्प्रतिषेधो ज्ञापयति भवति कर्मकर्त्तरि यगिति, कार्यातिदेशे तु तस्मिंस्तेनैव सूत्रेण भवत्यगेव परो भवति ॥

"कर्त्तरि शप्" ॥ 'पकारः स्वरार्थ इति' । उपलक्षणमेतत्, ङित्त्वप्रतिषेधार्थः, 'शप्श्यनोर्नित्य' मिति विशेषणार्थश्च । 'शकारः सार्वधातुकार्थ इति' । सञ्ज्ञापरोऽत्र सार्वधातुकशब्दो न सञ्ज्ञिपरः, सार्वधातुकसञ्ज्ञार्थ इत्यर्थः । कर्तृग्रहणस्य कर्मवत्कर्मणेत्यत्रोपयोगः, इह तु सार्वधातुके शब्भवति श्यन् भवतीति सामान्यविधानेपि भावकर्मणोर्यगपवाद इति कर्त्तर्य्येव शबादयो भविष्यन्ति ॥

"दिवादिभ्यः श्यन्" ॥ 'मृग अन्वेषणइति' । चुरादावदन्तेष्वात्मनेपदी पठ्यते, तत्र मृगयतइति भवितव्यं दिवादिष्वपि पाठान्मृग्यतीति साधुः, कण्ड्वादिषु वा मृगशब्दो द्रष्टव्यः ॥

"वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः" ॥ उभयत्र विभाषेयम् । अनवस्थानार्थो भ्रमिः क्रमित्रसी च दिवादयः, त्रुटिस्तौदादिकः, इतरे भौवादिकाः । 'भ्राम्यतीति' । 'शमामष्टानां दीर्घः श्यनी' ति दीर्घः, भौवादिकस्य तु न भवति अशमादित्वात्, क्रमेः 'क्रमः परस्मैपदेष्वि' ति दीर्घः क्लमेस्तु 'ष्ठिवुक्लम्वाचमां शिती' ति त्रसेर्दैवादिपाठे चिन्त्यं प्रयोजनं, क्लमेस्तु पुषादिकार्यार्थः ॥

"यसोनुपसर्गात्" ॥ 'दैवादिक इति' । दिवादिपाठोस्य सोपसर्गार्थः । 'अनुपसर्गादिति किमिति' । सम्यसश्चेत्येतत्सम एवोपसर्गोचान्यस्मादिति नियमार्थं भविष्यतीति भावः । 'आयस्यति प्रयस्यतीति' । तुल्यजातीयानां हलन्तानामेव व्यावृत्तिः स्यादिति मन्यते ॥

"सम्यसश्च" ॥ इह सम इत्येवास्तु यस इत्यनुवर्त्तिष्यते, यमष्टम वैक्लव्यइत्यस्य ग्रहणशङ्कानिवृत्त्यर्थं तु सम्यस इत्युक्तम्, एवं तर्हि समो यसः, अनुपसर्गाच्चेत्यस्तु ॥

"स्वादिभ्यः श्नुः" 'सिनोतीति' । षिञ् बन्धने क्र्यादिपाठात्सिनातीत्यपि भवति ॥

"तनूकरणे तक्षः" ॥ 'अनेकार्थत्वादिति'। अत एव विशेषणो-पादानादनेकार्थत्वं विज्ञायते, प्रदर्शनार्थस्तु गणे धातूनामर्थनिर्देशः। 'सन्तक्षति वाग्भिरिति'। निर्भर्त्सयतीत्यर्थः ॥

"तुदादिभ्यः शः" ॥ 'तुदतीति'। तुद्-ति इति स्थिते परत्वा त्प्राप्तमपि गुणं नित्यः शो बाधते ॥

"रुधादिभ्यः श्नम्" ॥ 'श्नम्प्रत्ययो भवतीति'। यद्यपि प्रत्यय-संज्ञायां प्रकृत्युपपदोपाधिविकारागमान्वर्जयित्वेत्युक्तं तथापि विधीयमा-नत्वेन प्राधान्यात् शबादिवदर्थवत्त्वाच्छ्नमः प्रत्ययसंज्ञा भवतीति भावः, तेन शकारस्य प्रत्ययादित्वादित्संज्ञा। 'शपोऽपवाद इति'। देशभेदेनो-भयोः सत्यपि सम्भवे नाप्राप्ते तस्मिन्नारभ्यमाणत्वादेकार्थत्वाच्चापवा-दत्वं विकरणा हि सार्वधातुकस्य धातोश्चार्थाभिधाने सहायतां प्रतिप-द्यन्ते। 'शकारः श्नाल्लोप इति विशेषणार्थ इति'। अथार्द्धधातुकसंज्ञा माभूदित्येवमर्थः कस्मान्न भवति, सत्यां हि तस्यामनक्ति भनक्ति 'अतो लोपः' स्यात् रुणद्धि भिनत्ति गुणः स्यात्, हिनस्ति तृणेढि इडागमः स्यात्, 'नेड्वशिकृती'त्येतदपि नास्ति अकृत्त्वात्, सर्वमेतत् श्नमः पूर्व-भागस्यानङ्गत्वान्न भविष्यति, कथमङ्गत्वं, यस्मात्प्रत्ययविधिरिति, कोऽर्थः प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं धातोः प्रातिपदिकादिति तदादि तस्मिन्प्रत्यये परतोऽङ्गमिति यच्चात्र पञ्चम्या निर्दिष्टं रुधादिभ्यो धातुभ्य इति न तस्मात्प्रत्ययः, यस्माच्च प्रत्ययः पूर्वभागात्स न तस्मिन्विधीय-माने पञ्चम्या निर्दिष्टस्तस्मादङ्गादिति विशेषणार्थ एव शकारः, नाल्लोप इत्युच्यमाने 'यजयाचयतविच्छप्रच्छरक्षो नङ्' यज्ञानां यत्नानामत्रापि प्राप्नोति, नामीति दीर्घत्वे कृते नादितिव्यपदेशाभावान्न भविष्यति, पर-त्वाल्लोप एव प्राप्नोति, यत्तु 'अतो दीर्घो यञि' 'सुपि चे'ति दीर्घत्वं न च तदत्र प्रवर्त्तते किं कारणं सन्निपातलक्षणो विधिरनिमित्तं तद्विघा-तस्येति, इहापि तर्हि न स्याद्वृताय़ेति, 'कष्टाय क्रमण' इतिनिर्देशाद्भ-विष्यति, इहापि तर्हि यत्नानामिति तस्मादेव निर्देशात्सामान्यापेक्षया ज्ञापनाद्दीर्घो भविष्यति, एवमपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वान्न-

शब्द एवायमिति नलोपः स्यादेव तस्माद्विशेषणार्थः शकारः कर्त्तव्यः। अथ क्रियमाणेपि शकारे इह कस्मान्न भवति विश्नानां प्रश्नानामिति लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्॥

"तनादिकृञ्भ्य उः"॥'तनोतीत्यादिः'। तनु विस्तारे, षणु दाने, क्षणु हिंसायाम्। 'अन्यत्तनादि कार्यमिति'। तनादिकार्यापेक्षो नियम इत्यर्थः। व्यावर्त्त्यं दर्शयति। 'तनादिभ्यस्तथासो'रिति विभाषा सिचो लुङ् न भवतीति'। नन्वस्तु लुग्विकल्पः, तदभावे 'ह्रस्वादङ्गा-दि'ति लोपो भविष्यति, न च विकल्पेन बाधः विकल्पं प्रति नित्यस्या-सिद्धत्वात्, न च तनादिपाठसामर्थ्यादपवादो वचनप्रामाण्यादिति न्यायेनासिद्धत्वबाधाद्विकल्पेन नित्यस्य बाधः, तनादिपाठस्य विकरण-विधौ चरितार्थत्वात्, विकल्पोऽप्यतत,अतथा इत्यादौ चरितार्थः प्रत्युत क्रियमाणे कृञ्ग्रहणे तनादिषु कृञः पाठस्यानन्यार्थत्वाद्येन नाप्राप्तिन्या-येन विकल्पो नित्यविधिं बाधेत, इदं हि कृञ्ग्रहणविधौ तनादिषु पाठ-श्चरितार्थो मा विज्ञायीत्येवमर्थमेव स्यादिति कृञ्ग्रहणप्रत्याख्यानमेव न्याय्यं मन्यामहे॥

"धिन्विकृण्व्योर च" 'अतो लोपस्य स्थानिवद्भावाद्गुणो न भवतीति'। तेन प्रक्रियालाघवाय धिन्विकृण्व्योर्लोप एव नोक्त इति भावः, लोपे हि गुणस्स्यात्। न च 'न धातुलोप आर्द्धधातुके' इति निषेधः, प्रत्ययसन्नियोगशिष्टत्वेन लोपस्यानार्द्धधातुकनिमित्तत्वात्। ननु नुमनुषक्तयोर्ग्रहणं किमर्थं नुमि कृते ऽत्वं यथा स्याद्, धिविकृव्योरित्युच्य-माने ऽत्वे कृते ऽत एव परो नुम् प्रसज्येत, अत्वं ह्यन्तरङ्गं प्रत्ययसन्नियो-गेन विधानात् नुमागमस्तु बहिरङ्गः, उत्पन्ने प्रत्ययेऽङ्गस्य सतो विधानात्, ननु चास्वङ्गस्य नुम् लावस्थायामेव भविष्यति तिबादीनामन्तरङ्गत्वात्, तिबादिष्वेव तर्हि भविष्यति, न, नित्येनात्वेन बाधनात्, नुमागमस्तु शब्दान्तरप्राप्तेरनित्यः, अन्तरङ्गस्तर्हि नुमागम तद्विधौ धातुग्रहणात् तद्धि धातुसंज्ञाप्रवृत्तिकालएव नुम् यथा स्यादित्येवमर्थम्, अन्यस्योदि-तोसम्भवात्, कथमसम्भवो यदिदानीमिवोक्तन्त्रासेरिदित्करणमतुनासिक-

लोपप्रतिषेधार्थमिति, नन्वत्रापि पक्षे नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थमिति वचनादुपदेशएव नुम् भविष्यति, एवन्तर्ह्यन्तरङ्गत्वादेव प्राप्तस्य नुमोयं निर्देशः ॥

"स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च" ॥ 'उदित्त्वप्रतिज्ञानादिति'। एषां ह्युकारोनुनासिक इत्संज्ञकः प्रतिज्ञायते तस्य प्रयोजन 'मुदितो वे'ति क्त्वाप्रत्यये इड्विकल्पः, यदि चैतद्विकरणविषया एवैते स्युस्तत्वोपपद्यते, तस्मादुदित्त्वेन प्रतिज्ञानात्सर्वार्थत्वं विज्ञायते सर्वे प्रत्ययाः प्रयोजनमेषामित्यर्थः, सर्वप्रत्ययशेषत्वमिति वा ॥

"हलः श्नः शानज्झौ" ॥ 'पुषाण मुषाणेति'। लोट् सिप् तस्य हिः, 'क्र्यादिभ्यः श्ना' तस्य शानच्, चकारः स्वरार्थः, अत्र सन्निपातपरिभाषया अनित्यत्वाद 'तो हे' रिति हेर्लुक्, ननु च श्नाप्रत्ययस्य प्रकृतत्वात्तस्यैव शानजादेशो भविष्यति नार्थः श्न इति स्थानिनिर्देशेनात आह। 'श्न इति'। 'स्थानीत्यादि'। आदेश इत्येष संप्रत्ययोवगमो यथा स्यादित्येवमर्थः। असति तु तस्मिन् किं स्यादित्याह। 'प्रत्ययान्तरमिति'। अस्तु प्रत्ययान्तरं क्र्यादिभ्य इत्यनुवृत्तेस्तेभ्य एव हलन्तेभ्यो भविष्यतीति न कश्चिद्दोष इत्यत आह। 'सर्वविषयमिति'। अक्र्यादिविहितविषयमपीत्यर्थः, क्र्याद्यनुवृत्तिर्दुर्ज्ञानेति मन्यते, शानचः शित्करणञ्चिन्त्यप्रयोजनं, स्थानिवद्भावेनैव सिद्धेः। इह ञिमिदा स्नेहने दिवादिः, व्यत्ययेन छन्दसि श्ना, तस्य शानजादेशः, मिदान, मिदेर्गुण इति प्रतिषेधविषये विधीयमानो गुणो न भवति पुनः शित्करणेन 'सार्वधातुकमपिद्' त्यस्यापि पुनः प्रवृत्तेरिति के चित्, नेति वयं, यथैव व्यत्ययेन श्ना भवति एवं गुणविषये इकारो भविष्यति ॥

"छन्दसि शायजपि" ॥ 'गृभायेति'। ग्रहिज्यादिसूत्रेण संप्रसारणं, 'हृग्रहोर्भश्छन्दसी' ति हकारस्य भकारः। 'बधानेति'। बन्ध बन्धने, अनिदितामिति नलोपः ॥

"व्यत्ययो बहुलम्" ॥ 'यथायथमिति'। स्वस्मिन्स्वस्मिन्विषयइत्यर्थः। 'व्यतिगमनं व्यत्ययइति'। व्यतिपूर्वादिणो भावे

'एरच्' । अन्योन्यविषयावगाहनमित्यर्थः । क्व चिदित्यादिना व्यत्ययस्य प्रकारन्दर्शयति । 'न मरतीति' । परस्मैपदमप्यत्र व्यत्ययेन । 'नेषत्विति' । नयतेर्लोटि शप्सिपौ । 'तरुषेमेति' । तरतेर्विध्यादौ लिङ्, तथा च तरेमेति प्राप्तइति वृत्तिः, इतरथा तीर्यास्मेति प्राप्तइति वक्तव्यं स्यात्, ततश्शप् सिप् उप्रत्यय इति त्रयो विकरणाः, धातोर्गुणः । तरुषम्, ततो यासुट् 'लिङः स लोपोनन्त्यस्य' 'नित्यङ्ङितः' 'अतो येयः' यलोपः, 'आद्गुणः' तरुषेम । बहुलग्रहणमनर्थकं पूर्वसूत्रादपिशब्दस्यानुवृत्तौ छन्दसि व्यत्ययोपि भविष्यति अपिशब्दादप्राप्तस्येति सर्वमिष्टं सिद्ध्यति अत आह । 'बहुलग्रहणमिति' । सर्वस्य प्रकृतस्याप्रकृतस्य च विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थमित्यर्थः । एवमर्थं बहुलग्रहणे सति यदिष्टं सिद्ध्यति तच्छ्लोकेन दर्शयति । 'सुप्तिङुपग्रहेत्यादि' । तत्र सुपां व्यत्ययः धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । तिङाम् । चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । लादेशव्यङ्ग्यः क्रियासाधनविशेषः स्वार्थपरार्थत्वव्यक्तवाक्त्वादिको यः स मुख्य उपग्रहः, यथोक्तम् ॥

य आत्मनेपदाद्भेदः क्व चिदर्थस्य गम्यते ।
अन्यतश्चापि लादेशान्मन्यन्ते तमुपग्रहम् ॥

इति, आत्मनेपदात्तु तेरित्यर्थः । एवमन्यतश्चापि लादेशादिति, इह तु तद्व्यक्तिनिमित्तत्वात्परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्त्तते । स ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । ऊर्मिर्युध्यति, युध्यतइति प्राप्ते । लिङ्गं, मधोस्तृप्ता इवासते, मधुनइति प्राप्ते । भाषायामपि मधुशब्दं पुल्लिङ्गं प्रयुञ्जते मधूंश्च विध्यति रम्यहुरविटपिन इति । तच्चिन्त्यम् । नरः पुरुषः । अधासवीरैर्दशभिर्वियूयाः, वियूयादिति प्राप्ते, यु मिश्रणे विनरः पुरुषः । आशिषि लिङ् । कालवाची प्रत्ययः कालः, श्वोऽग्नीनाधास्यमानेन, लुटो विषये लट् । हल, त्रिष्टुभौजः शुफितमुग्रवीरं, शुभ शोभार्थे भकारस्य फकारः आश्वलायनसूत्रे तैत्तिरीये च भकार एव पठ्यते । अच् । उपगायन्ति मापत्नयो गर्भिणयः, दीर्घस्य ह्रस्वः । स्वरव्यत्ययः परादिश्छन्दसि बहुलमित्यत्र

वक्ष्यते। कर्तृशब्दः कारकमात्रस्योपलक्षणार्थः, तद्वाचिनां शब्दानां व्यत्यय इत्यर्थः। विभक्तीनां व्यत्यय इति यावत्, यङां, यङिति प्रत्याहारः यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण, तेषां व्यत्यय आण्डा शुष्मस्य भेदतीत्यादिना वृत्तावेव दर्शितः। एषां सुप्रभृतीनां व्यत्ययमिच्छति शास्त्रकृत्पाणिनिराचार्यः सोऽपि तथाविधो व्यत्ययो बाहुलकेन सिद्ध्यति, बहुलस्य भावो बाहुलकं मनोज्ञादित्वाद्वुञ्, तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तं यद्बहुर्थोदानत्वशब्दो हतो यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिद्ध्यति तस्माद्बहुलग्रहणं कृतमित्यर्थः॥

"लिङ्याशिष्यङ्"॥ 'शपोपवाद इति'। लिङाशिषीत्यार्द्धधातुकत्वात्कथमत्र शपः प्राप्तिरित्यत आह। 'छन्दस्युभयथेति'। शब्ग्रहणं चोपलक्षणं शकेः श्नोरपवादः, स्यादिष्वेवायमङ् प्रायेण दृश्यतइत्याह। 'स्थागागमीत्यादि'। 'उपस्थेयमिति'। उपपूर्वात्तिष्ठतेराशिषि लिङ्गिपोम्भावः यासुटस्सार्वधातुकत्वा 'ल्लिङस्स लोपोनन्त्यस्य' अङि 'आतो लोप इटि च' 'अतो येयः' 'आद्गुणः' एवमुपगेयमिति। 'गमेमेति'। मस्। 'वोचेमेति'। अङ्, 'वच उम्,' यासुट्, इयादेशः, वलि लोपः। 'दृशेरग्वक्तव्य इति'। अङि हि सति ऋदृशोऽङीति गुणस्स्यात्॥

"कर्मवत् कर्मणा तुल्यक्रियः"॥ कर्मणा तुल्यं वर्त्तत इति कर्मवत् तेन तुल्यमित्यादिना वतिः, न तु तत्र तस्येवेति, तुल्यक्रिय इति प्रतियोगिनि प्रथमानिर्द्देशात्, अन्यथा तुल्यक्रिये तुल्यक्रियस्येति वा निर्द्देश्यं स्यात्, तथा हि वाक्ये तावद्यतो वतिर्भवति यश्च प्रतियोगी उभाभ्यामपि ताभ्यां षष्ठीसप्तम्यौ भवतः, विप्रस्येवास्य शीलं मथुरायामिव पाटलिपुत्रे प्राकार इति, उभयोरपि सम्बन्धित्वाद् आधारत्वाच्च ततश्चोत्पन्नेऽपि वतौ प्रतियोगिनस्ते एव षष्ठीसप्तम्याववतिष्ठेते, तुल्यार्थयोगे तु या तृतीया सोपमानादेव भवति नोपमेयात्तुल्यशब्दस्योपमेयनिष्ठत्वात्तद्यथा चन्द्रेण तुल्यं मुखमिति ततश्चोत्पन्नेऽपि वतावुपमेयात्प्रथमैवावतिष्ठते, कर्मणेति पारिभाषिककर्म गृह्यते न लौकिकं क्रिया कर्म तस्य हि ग्रहणे क्रियया तुल्या क्रिया

यस्येति किमुक्तं स्यात् क्रियाया यया कया चन क्रियया तुल्यत्वाद् अत-स्साधनकर्मणोग्रहणात्तत्र साध्यसाधनयोरत्यन्तभेदान्मुख्येन कर्मणा क्रिया-याः सादृश्यासम्भवात्कर्मशब्देन तत्स्था क्रिया लक्ष्यते, भवति हि तात्स्थ्या-त्ताच्छब्द्यं यथा मञ्चाः क्रोशन्तीति तदेतदाह । 'कर्मणि क्रिया कर्मेति'।

विशेषणस्य वैयर्थ्यं न चेदानीं प्रसज्यते ।
कर्मणः क्रियया तुल्या न सर्वस्य क्रिया यतः ॥

कर्मणः क्रियया तुल्यक्रियो न साधनान्तरस्येत्येवं प्रतिपत्त्यर्थ-त्वादित्याह । 'कर्मस्थया क्रियया तुल्यक्रिय इति'। तुल्यशब्दस्य नित्यसा-पेक्षत्वात्कर्मस्थया क्रिययेत्येतदपेक्षस्यापि सूत्रवद्बहुव्रीहिर्नानुपपन्नः, तुल्य-शब्दोयमस्ति साधारणवचनः, एतौ तुल्यधनाविति सादृश्यवचनस्तु प्रसिद्ध एव तत्राद्यस्य ग्रहणे कर्मणेति यदि मुख्यवृत्तिस्तदा कर्तुः कर्मणश्च या सा-धारणी क्रिया तत्र यः कर्ता कर्मणा सह साधारणक्रियः सकर्मकेषु यः कर्ते-त्युक्तं भवति तत्र तुल्यक्रिय इत्यनर्थकं कर्मणेत्येव वाच्यं स्यात् कर्मणा सह यः कर्ता प्रतिपाद्यतइत्यर्थः । अथ गौणवृत्तिस्तदायमर्थः क्रियया हेतुना साधारणक्रियः कया क्रियया कर्मस्थया क्रिययेति, एवमपि पच-त्योदनन्देवदत्त इत्यत्रापि प्राप्नोति यासौ कर्मस्था विक्लित्तिरूपा क्रिया तया साधारणक्रियत्वात् अतोस्मिन्पक्षे ऽनिष्टप्रसङ्गः प्रसिद्धतरश्च सदृ-शपर्यायस्तुल्यशब्द इति तस्यैव ग्रहणमिति दर्शयन्नाह । 'यस्मिन्कर्म-णीत्यादि'। अत्र तद्व्याख्याशब्दो प्रयुञ्जानः सादृश्यवचनस्तुल्यशब्दो न साधारणवचन इत्याचष्टे । 'कर्तृभूतइति'। कर्तरि सम्पन्न इत्यर्थः । च्वेर्वि-कल्पितत्वादत्राभावः, अथ वा कर्तृशब्दः कर्तृत्वे वर्तते, भूतइति भू प्राप्ता-वित्यस्याधृषाद्वेति णिजभावे रूपं कर्तृत्वं प्राप्तइत्यर्थः, तत्र पचत्योदनमि-त्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदेन सादृश्याभावात्कर्मवद्भावाभावः, एव-मपि भिद्यमानः कुसूलः पात्राणि भिनत्तीत्यत्रापि प्राप्नोति यादृशी हि पात्रेषु क्रिया ऽवयवविशरणात्मिका तादृश्येव कुसूलेपि कर्तरि लक्ष्यतइति । नैष दोषः । कर्मस्थया क्रियया तुल्या क्रिया यस्य कर्तुरित्युक्ते कर्तृत्वोपयोगिनी या क्रिया यदावेशादसौ कर्ता भवति सैव क्रिया गम्यते इह तु पात्रेषु दृश्यमानं

द्विधाभवनं कुसूलेऽपि दैवगत्या दृष्टमित्येतावच्च पुनस्तत्समावेशाद-
सौ भिनत्ति स्वयमभिद्यमानोऽपि कुसूलउपरि पतन् पात्राणि भिनत्त्येव एव-
मप्यन्योन्यमाश्लिषतः अन्योन्यं स्पृशतः अन्योन्यं गृह्णीतः अत्र प्राप्नोति
अत्र हि यत्क्रियावेशात्कर्त्ता भवति सैव कर्मण्यपि दृश्यते, सत्यं, दृश्यते न
सा कर्मत्वोपयोगिनी नह्यसौ तदावेशात्कर्म भवति स्वयमनाश्लिष्यतोऽपि
परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात् तदेतदुक्तं भवति कर्मणः कर्मत्वो-
पयोगिनी या क्रिया तया तुल्या यस्य कर्तृत्वोपयोगिनी क्रिया स कर्मणा
तुल्यक्रियः कर्त्तेति, एवञ्च यस्यैव कर्मणः कर्मावस्थायां या क्रिया कर्त्रव-
स्थायामपि यदि सैव क्रिया भवति स कर्त्ता कर्मवदित्युक्तं भवति इदमप्य-
त्रैवोक्तं 'यस्मिन् कर्मणि कर्तृभूतेऽपीति' तस्मिन्नेव कर्मणि कर्त्रवस्थाम्प्राप्त
इति सूत्रार्थः, एवञ्च कर्तृकर्मावस्थाभेदादेकस्या अपि क्रियाया भेदाश्रयं
सादृश्यमुपपाद्यम्। अतिदेशो रूपनिमित्ततादात्म्यव्यपदेशशास्त्रकार्याति-
देशभेदेनानेकविधः, तत्रादितस्त्रयाणामसम्भवो व्यपदेशातिदेशस्तु संज्ञा-
पक्षान्न भिद्यते तत्र वत्करणमनर्थकमतः शास्त्रातिदेशः कार्यातिदेश इति
द्वावेव पक्षौ तत्र शास्त्रातिदेशे भावकर्मणोरित्यादिषु शास्त्रेष्वतिदिष्टेषु तेन-
तेन शास्त्रेण तत्तत्कार्यम्प्रवर्त्तते ततश्च भावकर्मणोरित्यस्यावकाशः शुद्धं
कर्म पच्यते ओदनः, शेषात्कर्त्तरि परस्मैपदमित्यस्यावकाशः शुद्धः कर्त्ता
पचति पठति, कर्मकर्त्तर्युभयप्रसङ्गे परत्वात्परस्मैपदं प्राप्नोति, नैष दोषः,
कर्त्तरि कर्मव्यतिहार इत्यतः कर्तृग्रहणमनुवर्त्तते तेन कर्त्तैव यः कर्त्ता तत्र
परस्मैपदं कर्मकर्त्तरि न भविष्यति इह तर्हि कर्मणि यक् भवतीत्यस्याव-
काशः शुद्धं कर्म पच्यते ओदनः कर्त्तरि शबित्यस्यावकाशः शुद्धः कर्त्ता
पचति पठति, कर्मकर्त्तर्युभयप्रसङ्गे परत्वाच्छप् प्राप्नोति नैष दोषः, कर्त्तरि
शबित्यत्र कर्तृग्रहणन्न कर्त्तव्यं सार्वधातुके शबिति सामान्यस्य भावकर्मणो-
र्यगपवादो भविष्यति एवं सिद्धे यत्कर्तृग्रहणं क्रियते तस्यैतत्प्रयोजनं
कर्त्तैव यः कर्त्ता तत्र शबादयो यथा स्युः कर्मोपदिष्टे माभूवन्निति, सत्य-
म्प्रतिविहितमायुष्मता वृथा पुनरयम्प्रयासः, कार्यातिदेशाश्रयेणैव सिद्धेः
तत्र स्थानेनैवात्मनेपदमनेनैव यगिति परत्वाद्यगात्मनेपदे सिद्धतः

प्रधानं च कार्यं तदर्थत्वादतिदेशान्तरणामतः कार्यातिदेश एवायं तदाह। 'कर्माश्रयाणि कार्याणि प्रतिपद्यन्तइति'। ननु च नेह सूत्रे कर्तृग्रहणमस्ति यदपि प्रकृतं कर्तरि शबिति तदपि सप्तम्यन्तं तुल्यक्रियइति प्रथमान्तेन सम्बधुचार्हति तत्राह। 'कर्तरि शबित्यत इति'। 'यगात्मनेपदेत्यादि'। लान्तस्य कर्त्ता कर्मवदिति वक्ष्यमाणत्वाद्यगादीनामेव सम्भव इति भावः। भिद्यतइत्यादीनि चीण्यात्मनेपदस्योदाहरणानि यगादीनां क्रमेण, कथं पुनः काष्ठस्य भिदां प्रति कर्तृत्वं यावता भिद्यते ऽसौ देवदत्तेन यो ह्युद्यमननिपातनादि कुठारस्य करोति स भेदने कर्ता उच्यते सर्वेषामेव कारकाणां प्रातिस्विकोवान्तरव्यापारोऽस्ति अकिंचित्करस्य कारकत्वानुपपत्तेः, एतच्च कारकप्रकरणएवोपपादितं तत्र च स्वव्यापारे स्वतन्त्रत्वं सर्वत्रैवास्ति कारके कर्तृव्यापारेण तिरस्कृतत्वात्तु न्यभूतं स्वातन्त्र्यमिति कर्तृत्वं न भवति करणादिसंज्ञैव भवतीत्येतावत्सकर्मकास्तु केचिद्धातवः कर्मव्यापारमप्यभिधाय तावत्येवापर्यवस्यन्तस्तदुपसर्जनं कर्तृव्यापारमाचक्षते तद्यथा भिदिर्द्विधाभवनोपसर्जनं द्विधाभावनमाह न खल्वयमुद्यमननिपातनमात्रवचनः रजकेपि प्रसङ्गात् सोपि हि वस्त्रमुद्यच्छति निपातयति च, अथ च न भिनत्तीत्युच्यते द्विधाभवनाभावात्, एतेन छिनत्तिलुनत्ती व्याख्यातौ, तथा पचिरपि विक्लित्युपसर्जनं विक्लेदनमाह तत्र यदा कर्मणः सौकर्यातिशयप्रतिपादनाय कर्तृव्यापारो न विवक्ष्यते तदा निवृत्तप्रेषणं कर्म स्वक्रियावयस्थितं निवर्तमाने कर्मत्वे स्वे कर्तृत्वे ऽवतिष्ठते धातुरपि तद्व्यापारमात्रे वर्त्तते। कथं पुनरुभयवचनो धातुः कर्मव्यापारमात्रवचनो भवति को विरोधः, अनेकार्था धातवः समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते तदेवं कर्मव्यापारमात्रवाचिषु कर्तृत्वमेव काष्ठादीनाच तु कर्मत्वगन्धोऽप्यस्ति धातवश्चैते प्रयोगे ऽस्मिन्नकर्मका यथा विक्लिद्यति द्विधा भवतीति, कथं तर्हि कर्मणा तुल्यक्रियः कर्ता, न ब्रूमो ऽस्मिन् प्रयोगे यत्कर्म तेन तुल्यक्रिय इति किं तर्हि प्रयोगान्तरे यत्कर्म तेन तुल्यक्रिय इति, नन्वेवं पचत्योदनं देवदत्तो राध्नुत्योदनः स्वयमेव अत्रापि प्राप्नोति अत्र परिहारं वक्ष्यति धात्वधिकारादिति, कर्तृकर्मणोर्द्धातोरन्यत्रासम्भवादेव सिद्धेस्तद-

नुवृत्तिरेकत्वविवक्षार्थो यस्मिन्नेव धातौ यत्कर्म तेन तुल्यक्रियस्तस्यैव धातोः कर्त्तेति तेन धातुभेदे न भविष्यति, आहाध्यारोपोयमस्तु कोर्थः क्लृप्त एव धात्वर्थः कर्मण्यध्यारोप्यते किमत्र देवदत्तेन ओदन एव पाकं करोतीति एवं हि सौकर्यातिशयः सुतरां प्रतिपादितो भवति करणाधिकरणवत्, यथा साध्वसिश्छिनत्ति साधु स्थाली पचतीति तत्र येषु तावत्क्लृप्त एव धात्वर्थः कर्मण्यपि सम्भवति आत्मना बुद्ध्यते आत्मना मुच्यते आत्मना हन्यते आत्मना ताड्यतइति तेषु शुद्धे कर्मणि लकारः केन चिद्रूपेण कर्तृत्वं केन चिद्रूपेण कर्मत्वमिति तथा भिद्यते कुसूल इति यत्रापि चेतनो भेत्ता न दृश्यते तत्र वातातपकालाभिवर्षणानामन्यतमस्य कर्तृत्वमध्यारोपो वा पच्यते ओदनः स्वयमेव लूयते केदारः स्वयमेवेत्यादावध्यारोप एव आत्मनैवोदनः पच्यते न तु देवदत्तेनेति एवं नाम पाकेनुकूलो भवतीत्यर्थः, तदेवं शुद्धे कर्मणि लकारोत्पत्तेर्नार्थ एतेन, यद्येवं भिद्यते कुसूलेनेति भावे लो न स्यात् सकर्मकत्वात् अथाप्यत्र भिद्यते कुसूलेनात्मेति कर्मणि व्याख्यायेतैवमपि भेत्तव्यं कुसूलेन भिन्नं कुसूलेन ईषद्भेदं कुसूलेनेति भावे कृत्यक्तखलर्था न स्युः, न च तत्रापि कर्मणीति शक्यमाश्रयितुं नपुंसकलिङ्गदर्शनात्, तथा नमते दण्डः स्वयमेव कारयते कटः स्वयमेव अचीकरत् कटः स्वयमेव यक्चिणोः प्रतिषिद्धयोरपि शप्चङौ न स्याताम् अकर्तृत्वात् तस्मात्कर्मव्यापारमात्रवाचिभ्यः कर्त्तरि भावे च लादय इत्येतदेव साधीयः, तथा च शृतं पाक इत्यत्र पचेः कर्मव्यापारे कर्तृव्यापारे च शृतमिति भवति द्वयोरपि पाकशब्दाभिधेयत्वात् एवं हि या विसृष्टा शास्त्रं न करिष्यामीति मतिः सापि त्याज्या असति सूत्रे 'न दुहस्नुनमां यक्चिणौ' विति प्रतिषेधस्य विषयो न प्रदर्शितः स्यात्, किञ्च यद्यपि पच्यते ओदनः स्वयमेवेत्यादिकः प्रयोगः कर्मणि समर्थ्यते कर्त्तरि तु लकारोत्पत्तौ पचत्योदन इत्यादिकः प्रयोगोपि प्रसज्येत तस्मादारब्धव्यं सूत्रम् । अत्रोदाहरणेषु कर्त्रन्तरव्युदासार्थं स्वयमिति प्रयुज्यते न त्वेतदुदाहरणाङ्गं, प्रयुक्तएतस्मिन्नात्मनेत्यस्यार्थे वृत्तेः प्राकृतमेवैतत्कर्म स्यात् स्वाश्रयमपि यथा स्यादिति, असति वत्करणे कर्त्तुः कर्मसंज्ञा ज्ञायेत ततश्चानेन कर्मणा सकर्मकत्वाद्भावे चाकर्मकेभ्य

इति भावे लो न स्यात् सति तु तस्मिन्स्वतः प्राप्तस्याकर्मकव्यपदेशस्यानिवर्त्तनादकर्मकाणाम्भावे लः सिद्धो भवति, अकर्मकाणाम्भावे यो लो विधीयते स सिद्धो भवतीत्यर्थः, कथं सिद्धो भवति यावता नित्योयमतिदेशः नित्ये चास्मिंस्तत्र लविधिरपि कर्मकार्यमेवेति स्यादेवातिदेशः आतिदेशिकाविरुद्धं स्वाश्रयं वतिना प्राप्यते न तु विरुद्धमपि नह्ययं विकल्पार्थः कदा चित्कर्मवत्कदा चिदेति, अथ लान्तस्य कर्त्तेति वक्ष्यमाणत्वादेतत्सूत्रप्रवृत्तेः प्रागेव लः कर्मणि चेत्येतत्प्रवृत्तिरङ्गीक्रियते तच्च प्रवर्त्तमानमकर्मकत्वाद्भावे कर्त्तरि च प्रवर्त्तते यदा कर्त्तरि तदाऽयमतिदेश इति भावे लविधिः समर्थ्यते, यद्येवं माभूद्वृत्तिः लकारवाच्यस्य कर्त्तुः कर्मसञ्ज्ञैवास्तु यगात्मनेपदयोस्त्वप्रसिद्धिः परत्वाच्छुबादीनां परस्मैपदस्य च प्रसङ्गः, न च कर्मसञ्ज्ञया कर्तृसञ्ज्ञाया बाधः, एकसञ्ज्ञाधिकारादन्यत्र सञ्ज्ञानां समावेशात्, सत्यमुक्तोत्र परिहारः, तदेतद्वत्करणं सर्वसादृश्यार्थं तेनोदाहरणेषु काष्ठादिभ्यो द्वितीया न भवति इतरथा कर्मकार्यत्वात्प्राप्नोति, अभिहितत्वान्न भविष्यति, भवेदयं परिहारः शास्त्रातिदेशे, कार्यातिदेशे त्वनेनैव कर्मकार्याणि प्राप्यन्ते न चात्रानभिहिताधिकारोस्तीति स्यादेव द्वितीया वत्करणात्तु सर्वसादृश्यार्थाद्यथा कर्मण्यभिहिते न भवति एवं कर्त्तर्यपीति द्वितीयाभावः, यदा तर्ह्यकर्मकत्वाद्भावे लकारस्तदा प्राप्नोति तत्राह । 'लिङ्याशिष्यङित्यादि' । तत्र लग्रहणमनुवृत्तं षष्ठ्या विपरिणम्यतइत्यभिप्रायेणाह। 'लान्तस्य कर्त्तेति'।लकारवाच्यः कर्त्तेत्यर्थः।'कुसूलाद् द्वितीया न भवतीति'। भिद्यते कुसूलेनेत्यनन्तरोदाहृतेषु उदाहरणेषु तु वत्करणादेव सर्वसादृश्यार्थाद् द्वितीयाया अभाव इति भावः। तदेवं वृत्तिकारस्याभिप्रेतमेतद्वतिः सर्वसादृश्यार्थ इति। किं च नावश्यं द्वितीयैव कृत्यक्तखलर्था अप्यस्मिन्विषये कर्त्तर्यतिदेशेन प्राप्नुवन्ति भेत्तव्यः कुसूलः स्वयमेव भिन्नः कुसूलः स्वयमेव ईषद्भेदः कुसूलः स्वयमेवेति भाव एव चेष्यन्ते भेत्तव्यं कुसूलेन कुसूलस्य वा 'कृत्यानां कर्त्तरि वा,' भिन्नं कुसूलेन ईषद्भेदं कुसूलेनेति अत्र वार्त्तिके क्तग्रहणमन्यत्र सहपाठात्पठितं यथा ककारो गुणवृद्धिप्रतिषेधार्थं इति भवत्येव क्तेभ्यो ऽकर्मकत्वाद् गत्यर्थाकर्मकेति कर्त्तरि क्तः, तथा च सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्त-

मिति निष्ठानत्वे । भिनो ग्रासः स्वयमेवेति कर्त्तरि क्त उदाहरिष्यते तस्मात्कृत्यखलर्थेष्वेवैष दोषो ऽतस्तत्र लान्तस्य कर्त्तृत्वाश्रयणादेवातिदेशाभावः। ‘कर्मणेति किमिति’। धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता तत्र सादृश्यस्य भेदाधिष्ठानत्वात्कर्तृस्थया क्रियया तुल्यक्रियः कर्त्ता न सम्भवतीति कर्मस्थैव क्रिया आश्रयिष्यतइति मत्वा प्रश्नः। ‘करणाधिकरणाभ्यामिति’। तत्स्थक्रिययेत्यर्थः। ‘साध्वसिश्छिनत्तीति’। किं पुनरत्र करणाधिकरणव्यापारमात्रे धातुर्वर्त्तते आहोस्वित्तत्र कृत्स्नधात्वर्थाध्यारोपः, न तावदाद्यकल्पः तावति धातोरवृत्तेरसिना छिनत्तीत्यत्रापि नैव करणव्यापारो धातुनोपादीयते केवलं करणत्वादवान्तरव्यापारोऽस्तीत्येतावत्, द्वितीये तु भिन्नक्रियत्वादेवाप्रसङ्गः, तस्मात्करणाधिकरणव्यापारमात्रेऽपि धातोर्वृत्तिमङ्गीकृत्य प्रत्युदाहृतं द्रष्टव्यं, क्व चित्तु करणेनापि तुल्यक्रियस्य कर्मवद्भाव इष्यते यदाह करणेन तुल्यक्रियः कर्त्ता बहुलमिष्यते, परिवारयति कण्टकैर्वृक्षं परिवारयन्ते कण्टका वृक्षम् आत्मनेपदं भवति वृत्तिकारस्तु णिचश्चेत्यात्मनेपदमुपपद्यतइति मन्यमानो नैतदुपसमचष्ट । ‘धात्वधिकारात्समाने धाताविति’। एकस्यैव धातोरित्यर्थः। एतच्च प्रागेव व्याख्यातं, ‘कर्मस्थभावकानामित्यादि’। यद्यपि क्रियाभावशब्दयोरभिन्न एवार्थस्तथा च ‘यस्य च भावेन भावलक्षण’मिति क्रियापि गृह्यते लक्षणहेत्वोः क्रियायाः कर्मणा तुल्यक्रिय इति च वाचोऽपि, तथाप्यस्मिन् ग्रन्थे भेदेनोपादानादर्थभेदो द्रष्टव्यः। अपरिस्पन्दरूपो धात्वर्थो भावः, परिस्पन्द रूपस्तु क्रिया, क्व पुनरसौ कर्मस्थः क्व वा कर्तृस्थः । केचिदाहुः । येषु कर्मव्यापारोपसर्जनः कर्तृव्यापारोऽभिधीयते तेषु कर्मस्थः, येषु कर्तृव्यापार एव तेषु कर्तृस्थ इति । नेति वयं, प्रधानक्रिया यत्र समवैति कर्त्तरि कर्मणि वा तत्स्थो धात्वर्थः यदुद्देशेन कारकव्यापारः सा प्रधानक्रिया यथा पचेर्विक्लित्तिः, गमेर्देशान्तरप्राप्तिः, एवञ्च कृत्वा न्यग्भवनोपसर्जनन्यग्भाववचनोऽपि रुहिः कर्तृस्थक्रियः। ‘आरोहन्ति हस्तिनं हस्तिपका इति’। उपरिदेशप्राप्तेरुद्देश्यायाः कर्त्तरि समवायात्, तत्रेह कर्मस्थेन व्यापारेण कर्तृव्यापारस्योपमानात्, अस्य चार्थस्य कर्तृस्थव्यापारेष्वसम्भवाच्चावप्राप्त एवार्थो वृत्तिकारेण दर्शितः, तत्र कर्मस्थव्यापारस्य

कर्तृस्थस्य चोदाहरणमात्रं श्लोकेन दर्शयति । 'कर्मस्थः पचतेर्भाव इति' । पच्यते घट इत्यत्र तद्देशस्यैव घटस्य पाक इति भावोसौ भवति कर्मस्थश्च पच्यते ओदन इत्यत्र परिस्पन्दत एव पाक्यस्य पाकाभिनिर्वृत्तिरिति कर्मस्थैव पचेः क्रिया भवति । 'कर्मस्था च भिदेः क्रियेति' । भिद्यते कुसूल इत्यत्रावयवविशरणात्मिका भिदिक्रिया भेदस्य परिस्पन्दे सति भवतीति कर्मस्था च भिदेः क्रिया भवति । 'मासासिभावः कर्तृस्थ इति' । मासमास्त इत्यत्र कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणामिति मासकर्मकोयमासिधातुः, तत्र मासासिधातौ प्रतीयमानोर्थो भावोऽपरिस्पन्दरूपत्वात् स च कर्तृस्थ इत्यर्थः । 'कर्तृस्था च गमेः क्रियेति' । गमेरर्थः क्रिया सा च कर्तृस्थेत्यर्थः । तेनास्यते मासः स्वयमेव गम्यते ग्रामः स्वयमेवेति न भवति । अथेह कथं कर्मवद्भावः, तस्मादुदुम्बरः सलोहितं पच्यते फलमिति, अत्राहुः । पचिरत्र विषये द्विकर्मकः वृक्षस्य पाकमन्तरेण फलस्य पाकासम्भवात्, तत्राप्रधाने दुहादीनामिति वृक्षोऽकथितं कर्मेति तत्र लकारः कालस्तु कर्त्तेति । इदन्तु वक्तव्यमेव सृजियुज्योः श्यंस्त्विति सृजि विसर्गे युजिर्योगे अनयोः सकर्मकयोः कर्त्ता कर्मवद्भवति तत्र सृजेः श्रद्धोपपन्ने कर्त्तरि कर्मवद्भावः, यग्विषये च श्यन् चिण्विषये तु चिणेवेष्यते, सृज्यते मालां देवदत्तः श्रद्धया निष्पादयतीत्यर्थः, श्यनि सति प्रकृतेराद्युदात्तत्वं भवति यकि तु सार्वधातुकानुदात्तत्वे यक एवोदात्तत्वं स्यात् असर्जि मालां श्रद्धया निष्पादयति स्मेत्यर्थः, युजिर् युज्यते ब्रह्मचारी योगेन ॥

"तपस्तपःकर्मकस्यैव" ॥ क्रियाभेदाद्विध्यर्थमिदमिति वक्ष्यति, कथं तर्ह्येवकारस्यान्वय इत्याशङ्क्य वाक्यभेदेन व्याचष्टे । 'तप सन्तापे अस्य कर्त्ता कर्मवद्भवति स च तपः कर्मकस्यैवेति' । एवकारस्य व्यवच्छेद्यं दर्शयति । 'नान्यकर्मकस्येति' । एतच्च श्रुतस्यैवकारस्यान्वयो वक्तव्य इति मत्वोक्तं न पुनरस्य किंचित्प्रयोजनमस्ति । 'क्रियाभेदादिति' । अत्यन्तभेदादित्यर्थः । नियमपक्षेपि क्रियाणां च भेदोपेक्षितः, तुल्यत्वस्य भेदाधिष्ठानत्वात् । क्रियाभेदमेव दर्शयति । 'उपवासादीनीति' । 'दुःखयन्तीत्यर्थं

इति'। सुखदुःख तत्क्रियायामिति चुरादिपाठाण्णिच्, अनेन तापसस्य कर्मत्वे तपेर्दुःखनमर्थ इति दर्शितम्। 'अर्जयतीत्यर्थ इति'। अनेनापि तापसस्य कर्तृत्वे तपेरर्जनमर्थ इति दर्शितं, क्वचित्त्वाजयतीति पाठः, तत्राङ्पूर्वस्य प्रयोगः, नन्वेवमपि शरीरसन्तापलक्षणा क्रिया ऽवस्थाद्वयेपि तुल्या नहि शरीरसन्तापादन्यदर्जनं तापसस्य व्यापारः, तदसत्। वस्तुस्थित्या सतोपि शरीरसन्तापस्याशब्दार्थत्वात्, कथमन्यथा तपसः कर्मत्वं, तस्मादर्जनं निष्पादनमलब्धस्य लाभः दुःखं तु शरीरसन्ताप एवेति स्पष्ट एव क्रियाभेदः। विद्धयर्थमेतदिति यदुक्तन्तदेवोपसंहरति। 'पूर्वेणाप्राप्तः कर्मवद्भावो विधीयतइति'। 'अतप्त तपस्तापस इति'। 'तपोनुतापेचे'ति चिणः प्रतिषेधात्सिच्, झलो झलीति लोपः॥

"न दुहस्नुनमां यक्चिणौ"॥ दुह प्रपूरणे ष्णु प्रस्रवणे, टुदु उपतापे ह्रसे ह्रसने णु स्तवने इत्येतेषां तु ग्रहणं न भवति, नैतिह्रसत्योरकर्मकस्याक्रियत्वात्, यदि च तेषां ग्रहणमिष्टं स्यादसन्देहार्थं न दुनुह्रस्नमामित्येव ब्रूयात्, अवयवप्रसिद्धेश्च समुदायप्रसिद्धिर्बलीयसी। कर्मवद्भावापदिष्टाविति,। एतेनानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति कर्मवत्कर्मणेति प्राप्तयोर्यक्चिणोरयं प्रतिषेधो न तु 'चिण् भावकर्मणोः' 'सार्वधातुके यगि'ति शुद्धे कर्मणि भावे प्राप्तयोरिति दर्शयति। 'दुग्धइति'। यकि प्रतिषिद्धे शप्, तस्य अदादित्वाल्लुक्, 'दादेर्धातोर्घः', 'झषस्तथोर्धोधः' जश्त्वं दुहिरयं द्विकर्मकः, तत्राप्रधाने दुहादीनामिति यस्मिन्कर्मणि लकारस्तस्य कर्तृत्वविवक्षा प्रधानं तु कर्म कर्मैवेति, यथा स्वयं प्रदुग्धेस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनीति। 'अदुग्धेति'। णिच्, भावे क्तः, लुग्वा दुहेत्यादिना तस्य लुक्। नन्विदानीमेवोक्तं दुहेरनेन यक् प्रतिषिध्यते चिण् तु दुहश्चेति पूर्वमेव विकल्पित इति, तस्माचैतदत्रोदाहर्त्तव्यम्। 'प्रस्नुतइति'। यकि प्रतिषिद्धे पूर्ववच्छपो लुक्। 'प्रास्नोष्टेति'। चिण्प्रतिषेधे सिच्। 'नमतइति'। अन्तर्भावितण्यर्थोत्र नमिस्तत्र यथा नमयति दण्डं देवदत्तः, नमयते दण्डः स्वयमेवेति ण्यन्तस्य कर्मस्यक्रि-

यत्वमेवमस्यापि द्रष्टव्यम्। 'णिश्रन्थिग्रन्थीत्यादि'। णीति णिङो णिचश्च सामान्येन ग्रहणं, श्रन्थ ग्रन्थ सन्दर्भे चुरादावाधृषीयौ तयोर्णिज-भावपक्षे ग्रहणं, तथा क्र्यादिष्वपि पठ्येते तयोरपि ग्रहणं, ब्रूञ् व्यक्तायां वाचि आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावित-ण्यर्थाः सकर्मका भवन्ति तदमे आत्मनेपदाकर्मकाः। वृत्तौ क्व चिदेषामुदा-हरणानि पठ्यन्ते क्व चित्, णिचि, कार्यते कटः स्वयमेव, अचीकरत कटः स्वयमेव, यक्चिणोः प्रतिषिद्धयोः शप्चङौ भवतः, णिङ्, पुच्छमुदस्यति उत्पुच्छयते गौः, स यदान्तर्भावितण्यर्थस्तदा उत्पुच्छयते गां, पुनः सौक-र्यातिशयेन कर्तृत्वविवक्षायामुत्पुच्छयते गौः स्वयमेव, उदपुपुच्छत गौः स्वयमेव, श्रन्थिग्रन्थ्योराधृषीययोः ग्रन्थति ग्रन्थं देवदत्तः, श्रन्थति मेखलां, ग्रन्थते ग्रन्थः स्वयमेव अग्रन्थिष्ट ग्रन्थः स्वयमेव, श्रन्थते मेखला स्वयमेव अश्रन्थिष्ट मेखला स्वयमेव, क्रैयादिकयोस्तु ग्रथ्नीते ग्रन्थः स्वयमेव श्रथ्नीते मेखला स्वयमेव। ब्रूञ्,ब्रवीति कथां देवदत्तः, ब्रूते कथा स्वयमेव, वचनं शब्दप्रकाशनफलत्वात्कर्मस्थम्, आत्मनेपदाकर्मक, 'वेः शब्दकर्मणः' 'अक-र्मकाच्च' विकुर्वते सैन्धवाः वल्गन्तीत्यर्थः, तान्यदान्यो वल्गयति तदा तेषां कर्मत्वं, पुनः सौकर्यातिशयात्कर्तृत्वविवक्षायां विकुर्वते सैन्धवाः स्वयमेव व्यकृषत सैन्धवाः स्वयमेव, यक्चिणौ न भवतः, क्व चित्तु वृत्तौ आहन्ति माणवकम्, आहते माणवकः स्वयमेवेति पठ्यते, तदयुक्तम्, आहन्ति माण-वकमिति सकर्मकत्वादात्मनेपदाभावाच्च, अन्ये पुनराहुः। आत्मनेपदाकर्म-केति धातूपलक्षणं हन्तिश्चाय 'आङो यमहन' इत्यत्र यदा कर्माविवक्षया ऽकर्मकस्तदात्मनेपदस्य निमित्तं स्यात्तस्यात्सकर्मकत्वेऽप्यविरुद्धमुदाहरण-मिति, भूषाकर्मकिरादिसनां यक्चिणोः प्रतिषेधो वक्तव्यः, कर्मशब्दः क्रि-यावाची भूषाफलं च शोभाख्यं कर्मणि दृश्यतइति कर्मस्था भूषा, अलङ्कु-रुते कन्या स्वयमेव अलंकरिष्यते कन्यास्वयमेव अलमकृत कन्या स्वय-मेव, अवकिरते हस्ती स्वयमेव अवाकीर्ष्ट हस्ती स्वयमेव अवकरिष्यते हस्ती स्वयमेव, यक्चिण्चिण्वद्भावा न भवन्ति, सन्, मुमुक्षते वत्सः स्वय-मेव अमुमुक्षिष्ट वत्सः स्वयमेव, चिकीर्षते कटः स्वयमेव अचिकीर्षिष्ट कटः

स्वयमेव प्रकृत्यर्थोपेत्तमत्र कर्मस्थक्रियत्वम्, इच्छा तु कर्तृस्था, आर्थं च प्रकृत्यर्थस्य प्राधान्यं तदर्थत्वादिच्छायाः ॥

"कुषिरजोः प्राचां श्यन् परस्मैपदं च" ॥ 'यगात्मनेपदयोरपवादाविति'। श्यन्यकोपवादः परस्मैपदमात्मनेपदस्य, श्यन्यकोश्चात्र नुमि स्वरे च विशेषः, कुष्यन्ती जङ्घा, श्यनि 'शप्श्यनोर्नित्य'मिति नित्यं नुमागमः, नित्त्वाच्चाद्युदात्तत्वं भवति, यकि 'त्वाच्छीनद्योर्नुमि'ति नुम्विकल्पः, लसार्वधातुकानुदात्तत्वे च यक एवोदात्तत्वं स्यात्। 'रज्यतीति'। अनिदितामिति नलोपः। कुष्यते रज्यतइति पक्षे यगात्मनेपदे भवतः। 'लिङ्लिटोरिति'। आशिषि लिङत्र गृह्यते यदुक्तं कुषिरजोः श्यन्विधाने सार्वधातुकवचनमवचने हि लिङ्लिटोः प्रतिषेध इति। 'स्यादिविषये चेति'। आदिशब्देन सिजादीनां ग्रहणम्। 'चुकुषे ररञ्जइति'। लिट् आत्मनेपदं तस्य एशादेशः। 'कोषिषीष्टेति'। 'लिङः सीयुट्' 'सुट्तिथोः' लघूपधगुणः। 'रङ्क्षीष्टेति'। एकाच इतीट्प्रतिषेधः, 'चोः कु'रिति कुत्वं गकारः, तस्य चर्त्वं ककारः। 'अकोषि अरञ्जीति'। चिण् ॥

"धातोः"॥ आ कुतोयमधिकारः, किं प्राग्लादेशाद् आहो स्विदाध्यायपरिसमाप्तेरिति विचारे द्वितीयं पक्षमाश्रयति। 'आध्यायपरिसमाप्तेरिति'। एशः शित्करणात्, तद्धि धातोरित्यधिकारे सति 'तस्मादित्युत्तरस्य' 'आदेः परस्य' तकारस्य स्थाने एत्वे सति अकारस्य स्थाने टेरेत्वे अयादेशे च सत्ययेशब्दस्य श्रवणं मा भूदित्येवमर्थं क्रियते प्रग्लादेशात्पुनर्द्धात्वधिकारे ऽलोन्त्यस्य विधयो भवन्तीति एकारस्यैकारवचने प्रयोजनं नास्तीति कृत्वान्तरेणापि शकारमन्त्ये ऽल्यनुसंहारं बाधित्वा सर्वादेशो भविष्यति किं शकारेण, यद्याध्यायपरिसमाप्तेरयमधिकारः, आद्ये योगे न व्यवाये तिङः स्युः, आद्ये योगे तिबादिसूत्रे येमी लावस्थायां स्यादयो विधीयन्ते तेषु कृतेषु तेष्वप्रधाने तिबादयो न स्युः, करिष्यति हरिष्यति कर्ता, शबादिषु तु न दोषः, तेषां सार्वधातुकाश्रयत्वादकृते लादेशे प्राप्त्यभावात् तिबादयश्च तत्र सावकाशाः, न स्यादेत्वं टेष्टितां यद्विधत्ते व्यवायद-

त्येव पचते यजते, क्व तर्हि स्यात् आस्ते शेते धत्ते रुन्धे वेभिद्यते इत्यादौ यत्र न विकरणाः सन्ति एशः शित्त्वं लिटस्तझयोरेशित्ययमेश् शित्कर्त्तव्यः, एतच्चोपक्रमएव व्याख्यातं, यच्च लोटो विधत्ते तच्च विकरणव्यवाये न स्यात् 'लोटो लङ्वत्' 'एरुः' 'सेर्ह्यपिच्चे'त्यादि पचतु पचतामित्यादि, स्तौतु जुहोतु भिनत्तु आस्तामित्यादावेव स्यात्, यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात् 'नित्यं ङितः' इतश्च 'तस्थस्थमिपां तान्तन्तामः' 'लिङः सीयुट्' 'यासुट् परस्मैपदेषूदात्तो ङिच्चे'त्यादि, तथा 'थासः से' पचसे इत्यादौ न स्यात्। नैष दोषः। विहितविशेषणं विज्ञास्यते धातोर्विहितस्य लोट इति, यद्येवं 'विदो लटो वे'त्यत्रापि विदेर्धातोर्विहितस्य लटस्तिबादीनां णलादय इति विज्ञायमाने विन्दति विन्दतः विन्दन्तीति लाभार्थस्य विकरणेन व्यवायेऽपि णलादयः प्राप्नुवन्ति, न क्वचिद्विहितविशेषणं धातुग्रहणमिति सर्वत्र तथा भवितव्यम्। अथ वात्र धातुना विहितं विशेषयिष्यामो विदिनाऽऽनन्तर्यं, धातोर्विहितस्य लटो विदेरनन्तरस्येति, 'सिजभ्यस्तविदिभ्यश्चे'त्यत्रापि धातुना विहितं विशेष्यते अभ्यस्तेन चानन्तर्यं धातोर्विहितस्याभ्यस्तादनन्तरस्य ङितो झेरिति तेऽजक्षिष्यन् अजागरिष्यन्नित्यादौ न भविष्यति, आत इत्यत्र कथं, यदि तावद्धातोर्विहितस्याकारादनन्तरस्येति अलुनन् अपुनन् अत्रापि प्राप्नोति, अथ आकारान्ताद्धातोर्विहितस्येति, अपिबन्नित्यत्र प्राप्नोति, अस्तु धातोर्विहितस्याकारादनन्तरस्येति अलुनन् अपुनन् इत्यत्र लुना झि इति स्थिते 'श्नाभ्यस्तयोरातः' इति लोपे कृते आकाराभावान्न भविष्यति नात्र लोपः प्राप्नोति 'ई हल्यघोः' रितीत्त्वेन बाध्यते एवमप्याकारान्न भविष्यति, न चेत्त्वं प्राप्नोति अन्तिभावेन बाध्यते, नात्रान्तिभावः प्राप्नोति जुस्भावेन बाधनात्, तदेवं लोप ईत्त्वेन ईत्त्वमन्तिभावेन अन्तिभावो जुस्भावेन जुस्भावो लोपेन लोप ईत्त्वेनेति चक्रकमव्यवस्था प्राप्नोति। नैष दोषः। आयादिषूपदेशिवद्वचनादुपदेशकालएव झस्यान्तिभावे कृते लोपो लोपेन व्यवस्था, किं चात इत्यत्र सिज्ग्रहणमनुवर्त्तते आकारान्तात्सिज्लुगन्तादिति तेन न क्वाप्यनिष्टप्रसङ्गः, तदेवमाध्यायपरिसमाप्तेर्धात्वधिकार

इति स्थितं, वक्ष्यति 'तव्यत्तव्यानीयर' इति, किं च स्यात् यदि तव्यादिविधौ धातोरिति नानुवर्तेत ङ्याप्प्रातिपदिकादपि तव्यादयः स्युः, साधने तव्यादयो विधीयन्ते साधनं च क्रियायाः क्रियाया अभावात्साधनाभावः साधनाभावान् ङ्याप्प्रातिपदिकात्तव्यादयो न भविष्यन्ति, कथं तर्हि कर्मादिषु विधीयमाना द्वितीयादयो भवन्ति, नैव प्रातिपदिकार्थस्य साधने द्वितीयादयः किं तर्हि शब्दान्तरवाच्यक्रियापेक्षे तस्यैव कर्मादिभावे, तव्यादयस्तु प्रकृतिवाच्यक्रियापेक्षे साधने चरितार्था न ङ्याप्प्रातिपदिकाद्भविष्यन्ति, इदं तर्हि प्रयोजनं सत्यापयेत्यादयो येपभ्रंशाः क्रियावचनास्तेभ्यस्तव्यादयो मा भूवन्निति, नहि ते धातवः, भूवादिपाठाश्रयत्वाद्धातुसंज्ञायाः, किं च सोपसर्गोल्लङादयो मा भूवन्निति धात्वधिकारः क्रियते अन्यथा प्राकरोत्प्रास्थित अध्यैष्टेति धातूपसर्गसमुदायस्य विशिष्टक्रियावचनत्वात्ततः प्रत्ययविधावङ्गसंज्ञायामडादिप्रसङ्गः, चोदयति। 'धातुग्रहणमनर्थं यङ्विधौ धात्वधिकारादिति'। धातोरेकाच इत्यत्र यङ्विधौ धात्वधिकारादिति धातोरेकाच इत्यत्र यङ्विधौ यद्धातुग्रहणं तस्येहाधिकारादित्यर्थः। परिहरति। 'कृदुपपदसंज्ञार्थं त्विति'। एतदेवव्याचष्टे। 'अस्मिन्निति'। अस्मिन्नेवेत्यवधारणं द्रष्टव्यं तद्दर्शयति। 'पूर्वत्र मा भूतामिति'। असत्यस्मिन्नधिकारे धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदमित्येतावानर्थः स्यात् ततश्च पूर्वत्रापि स्यात् 'च्लि लुङि' लुङन्तउपपदे च्लिरिति, एवं कृत्संज्ञापि धातोर्विहितस्यातिङो भवतीति पूर्वत्रापि स्यात् ततश्च करिष्यतीत्यत्र स्यप्रत्ययस्य कृत्संज्ञायां कृदन्तं प्रातिपदिकमिति प्रातिपदिकत्वे सति तिङोक्तेप्येकत्वे वचनग्रहणादेकवचनस्य चोत्सर्गत्वात्सोरुत्पत्तिः प्रसज्येत तस्मादस्मिन्धात्वधिकारे यथा स्यातां पूर्वत्र मा भूतामिति पुनर्द्धात्वधिकारः क्रियते। ननु चाधिकारेण ते संज्ञे विधास्येते प्रत्ययसंज्ञा च तत्र ते पूर्वत्र भविष्यत इत्याशङ्क्य प्रयोजनान्तरमाह 'आर्द्धधातुकसंज्ञार्थं चेति'। कः पुनरार्द्धधातुकसंज्ञायां द्वितीयधातुग्रहणस्योपयोग इत्यत आह। 'धातोरित्येवं विहितस्येति'। 'लूभिरिति'। अत्र सत्यपि प्रातिपदिकत्वे धातुत्वमप्यस्ति पूर्वप्रवृत्ताया धातुसंज्ञाया अनिवर्तनात् ततश्च

धातोरेवायं विहित इति आर्द्धधातुकसंज्ञा स्यादेव, यदि तु शमि धातोरित्यत्र धातुग्रहणस्य द्वितीयस्यार्द्धधातुकसंज्ञार्थं स्वरितत्वं प्रतिज्ञायेत अयमप्यधिकारः शक्योकर्त्तुं वासरूपविधिरप्यधिकारेण सिद्धस्तेन क्तादिभिः सिचः समावेशो न भविष्यति॥

"तत्रोपपदं सप्तमीस्थम्"॥ सप्तमीस्थमित्यस्यार्थमाह। 'सप्तम्या निर्दिष्टमिति'। सप्तम्या विभक्त्योच्चारितमित्यर्थः। सप्तम्यन्तेन पदेन प्रतिपादितमिति वा, अस्मिन्पक्षे सूत्रे सप्तमीशब्देन सप्तम्यन्तमुच्यते सप्तम्यन्ते पदे कर्मणीत्यादौ प्रतिपाद्यत्वेन स्थितं कुम्भादिकमित्यर्थः, प्रथमे तु पक्षे कर्मणीत्यादेर्यः सप्तम्या निर्देशः स एव कुम्भमित्यादेरपि प्रयोगगतस्य सप्तम्या निर्देशः यथा 'तस्यापत्य'मित्यादौ तस्येति सामान्यं विशेषोपलक्षणार्थमिति तदीयमेव प्राथम्यं विशेषाणामपि भवति तद्वदत्रापि। 'कुम्भकार इति'। अत्रोपपदत्वात्समासः कृदुत्तरपदप्रकृतिस्वरत्वं च भवति। 'स्थग्रहणमित्यादि'। सूत्रेषु यः सप्तम्या विभक्त्या निर्देश उच्चारणं सप्तम्यन्तेन वा पदेन प्रतिपादनं तदेव संज्ञाङ्गमिति प्रतिपत्त्यर्थमित्यर्थः। ननु सप्तमीशब्देन साहचर्यात्सूत्रादिषु सप्तम्या निर्दिष्टं ग्रहीष्यते नार्थ एतदर्थेन ग्रहणेन तत्राह। '[१]अन्यथा हीति'। मुख्यार्थसंभवे गौणस्याग्रहणात् सप्तम्या एव संज्ञा स्यात् संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात्, न चासतस्संज्ञिनः संज्ञा शक्या विधातुमिति यत्र सप्तमी श्रूयते तत्रैव स्यादित्यर्थः। 'स्तम्बे रम इति'। 'स्तम्बकर्णयोरमिजपो'रित्यत्र 'तत्पुरुषे कृति बहुल'मित्यलुक्। 'यत्र वेति'। यत्र सूत्रे सप्तमीश्रुतिः सप्तमीशब्दस्य श्रवणमित्यर्थः। 'अशब्दसंज्ञेति'। स्वरूपग्रहणप्रतिषेधादभ्युपगम्य वादोयं सर्वथेष्टं न सिद्ध्यतीत्यत्र तात्पर्यम्। 'स्थग्रहणात्त्विति'। स्थग्रहणे सति सौत्रसप्तम्युपलक्षितस्य संज्ञाविधानात्सर्वत्र सिद्ध्यतीत्यर्थः। ननु च लघ्वर्थं संज्ञाकरणं तत्किमर्थं गुर्वी संज्ञा क्रियत इत्यत आह। 'गुरुसंज्ञाकरणमिति'। उपोच्चारितं पदमुपपदमित्येवमर्थानुगता संज्ञा अन्वर्थसंज्ञा। 'समर्थपरिभाषाव्यापारार्थमिति'। इह यदा स्वार्थद्रव्यलिङ्गात्मकस्त्रिकः

[१] इतरथेति ज पुस्तके पाठः स एव मुद्रितमूलपुस्तकानुगुणः।

प्रातिपदिकार्थस्तदा नान्तरेण विभक्तिं कर्माधिकरणाद्युपपदमुपपन्नमतश्त्य-वश्यमुत्पाद्या विभक्तिरिति पदविधित्वादेव सिद्धः परिभाषाव्यापारः, पञ्चकपक्षे तु प्रातिपदिकस्यैव कर्माद्यभिधायित्वेन पदविधित्वाभावा-त्परिभाषाव्यापारो न स्यादित्यन्वर्थया संज्ञया बलात्प्रवर्त्यते। नैतदस्ति। पञ्चकपक्षेपि विभक्त्युत्पत्त्या पदत्वे सत्येव प्रत्यय इति प्रतिपादनात्, ननु गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेरिति वच-नात्कथमुपपदस्य सुबन्तत्वं, साम्नि स्मर्त्ता भवान्, 'उपपदमतिङि' त्यत्र हि सुपेति तृतीयान्तमेव निवृत्तं सुबिति प्रथमान्तमनुवर्त्ततइत्यवोचाम कथ-मपरथा चर्मकारादौ नलोपादि स्यात् 'पश्य कुम्भं करोति कटमिति'। धातोरिति वर्त्तते कर्मादिशब्दाश्च संबन्धिशब्दाः तत एवं विज्ञास्यामो यस्य धातोर्यत्कर्मेति, एवमपि महान्तं कुम्भं करोतीत्यत्र प्राप्नोति न वा भवति महाकुम्भकार इति भवति यदैतद्वाक्यं महान् कुम्भो महाकुम्भः महा-कुम्भं करोतीति, यदा त्वेतद्वाक्यं महान्तं कुम्भं करोतीति तदा नेष्यते, किं च स्याद् यद्यत्र स्यात् कुम्भशब्दस्य कारशब्देन समासे कृते तदर्थे-एकार्थीभावात् महच्छब्देन समासो न स्याद् अन्वर्थत्वादेव संज्ञायाः सप्तमीनिर्दिष्टत्वेपि प्रकृत्यर्थविशेषणात्तद्विशेषणानां च उपोच्चारित-पदत्वाभावादुपपदसंज्ञा न भवति, अथ तत्रग्रहणं किमर्थं धात्वधिकारः प्रतिनिर्दिश्यते तत्रेतस्मिंस्तृतीये धात्वधिकारइति, नैतदस्ति प्रयोजनम्, अधिकारादप्येतत्सिद्धम्। इदं तर्हि प्रयोजनं सप्तमीस्थस्य प्रत्ययोत्पत्तिं प्रति निमित्तत्वं यथा स्यादिति, कथं प्रत्यय इति वर्त्तते सप्तमीस्थमुप-पदसंज्ञं भवति तत्र चोपपदे सत्येव प्रत्यय इति, अथ कर्मणीत्यादिका सत्सप्तमी तत्कुतोसत्युपपदे प्रत्ययप्रसङ्गः, न, कर्मणीत्यादिका सैत्री सप्तम्यर्थापेक्षा तथा हि सत्यणप्रत्ययस्याभिधेयं कर्म स्यात् यथा 'धः कर्मणि ष्ट्रन्' ति तथा चोपपदत्वं न प्रतीयेत अतो यथेत्संज्ञार्थमनुनासि-कत्वं प्रतिज्ञायते तथार्थनिरपेक्षा केवलमुपपदसंज्ञाया लिङ्गं सप्तमी तथा च धातोरण् भवति कर्म चोपपदमित्येतावानर्थः स्यात् कर्मणः प्रत्ययो-त्पत्तिं प्रति निमित्तत्वं न प्रतीयेत तस्मात्तदर्थं तत्रग्रहणं, किमिदानीं

हेय एवायं ग्रन्थस्तत्रेतस्मिन्धात्वधिकारइति, न ब्रूमो हेय इति सोप-स्कारस्तु भवति एतस्मिन्धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति तत्र च सति प्रत्यय इति ॥

"कृदतिङ्" ॥ 'तिङ्वर्जित इति'। तिङ्त्वेन त्यक्तस्तिङ्त्वेन रहितः, तिङोन्य इति यावत्। 'अतिङिति किमिति'। इह क्रियमाणोप्ययं प्रतिषेधः स्वाश्रयामेव तिङः कृत्सञ्ज्ञां बाधितुं प्रभवति न तु लकारस्य कृत्त्वा-त्स्थानिवद्भावेन प्राप्ताम् अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति वच-नादिति मत्वा प्रश्नः, तिङ्भाविनो लकारस्यैव कृत्सञ्ज्ञा प्रतिषिध्यते प्रति-षेधसामर्थ्याद्वा स्थानिवद्भावो न भविष्यतीत्युत्तरम्। 'चीयात्स्तूयादिति'। ननु च ज्ञापकादेतत्सिद्धं यदयमकृत्सार्वधातुकयोरिति पृथक् सार्वधातुके प्रतिषेधं शास्ति तज् ज्ञापयति अकृदिति प्रतिषेधो न तिङ्तु भवतीति यदि स्यात् चिनुयात्सुनुयादित्यादौ सार्वधातुकेपि कृत्प्रतिषेधादेव दीर्घो न भविष्यति किं पृथक् सार्वधातुकपर्युदासेन, इह तर्हि पचति पठति 'ह्रस्वस्य पिति कृति तुगि'ति तुङ् माभूदिति, तुग्विधौ धात्वादेरित्यतो धातुग्रहणमनुवर्त्तिष्यते, एवमपि चिकीर्षति जिहीर्षतीत्यत्र प्राप्नोति, शपा व्यवधानाच्च भविष्यति, एकादेशे कृते नास्ति व्यवधानम्, एकादेशः पूर्व-विधौ स्थानिवद्भवतीति व्यवधानमेव, नात्र स्थानिवद्भावः प्राप्नोति परत्वा-दन्तवद्भावेन बाध्यते तस्माच्चिकीर्षतीत्यादौ तुङ् माभूदित्यतिङिति प्रति-षेधः कर्त्तव्यः, किं च तिङन्तस्य कृदन्तं प्रातिपदिकमिति प्रातिपदिकस-ञ्ज्ञायां पचेरन् नलोपः प्राप्नोति, पपाच ब्राह्मणी टाप्प्राप्नोति, सर्वत्र च स्वाद्युत्पत्तिः प्रसज्येत तदेतदस्मादन्यार्थादतिङिति प्रतिषेधादेव सिद्धे चीयादित्यादौ ज्ञापकमाश्रयितव्यमिति वृत्तिकारो मन्यते स्म ॥

"वा ऽसरूपो ऽस्त्रियाम्" ॥ असरूप इति पदच्छेदः, अन्यथा लाघवे विशेषाभावादसन्देहार्थं सरूपोस्त्रियां वेति ब्रूयात्, अपवादविषयेपि केषां चित्कृतां प्रवृत्तिर्यथा स्यादित्येवमर्थमिदं वचनं, यथोक्तम् असरूपस्य वावचनमुत्सर्गस्य बाधकविषये निवृत्त्यर्थमिति, परिभाषा चेयम्, अस्मि-न्धात्वधिकारे स्त्र्यधिकारव्यतिरेकेण यान्यसरूपस्यापवादस्य विधायकानि

शास्त्राणि तच्छेषभूता, तत्रतत्र वचने क्रियमाणे गौरवं स्यादिति साधारणरूपेण परिभाष्यते, तत्र च असरूप इति व्यर्थं कृन्मात्रस्य विकल्पने सर्वस्यैवासरूपत्वात्किञ्चित्कृदपेक्षया, ऽसरूपपदं चैतत्सापेक्षं प्रतियोगिनि यतोऽत्र भिन्नरूपत्वमसरूपत्वमिष्यते, केन विहितं किञ्चित्सरूपमसरूपं वा भवति तत्र केनासरूप इत्यपेक्षायां स्वविधानवेलायां यः स्वस्मिन्विषये प्राप्तः स एव बुद्धिस्थः प्रतियोगी गम्यते, ऽपवादविधानसमये चोत्सर्गस्तमपि विषयमवगाहमुपढौकमान उपारूढो बुद्धौ भवतीति तदपेक्षया भिन्नरूपोऽपवाद एवात्रासरूपो विवक्षित इत्याह। 'असरूपोऽपवादप्रत्यय इति'। एवं स्थिते यद्यप्युत्पत्तिविकल्पस्यापवादप्रत्ययो वा भवतीति, ततः स्वविषये कामं विकल्पस्तस्य लभ्यते न तूत्सर्गः प्रवर्त्तेत तत्रातद्विषयो ह्यसौ, उत्सर्गापवादशास्त्रयोर्हि प्रमितिव्यापारे पर्यवसिते पश्चादियमत्रैव प्रदेशे स्थिता ऽपवादस्य पक्षे प्रवृत्तिं प्रतिबध्नाति, अपवादशास्त्रेण यः स्वीकृतो विषयस्तद्व्यतिरिक्तविषया सामान्यशास्त्रस्य प्रमितिरित्यपवादस्याप्रवृत्तावपि नैवोत्सर्गस्य तस्मिन्विषये प्रमितिः प्रवृत्तिर्वोपपद्यते तद्धितवत्, तद्यथा दक्षस्यापत्यमत इञिति विकल्पिते पक्षे ऽण् न भवति अपि तु वाक्यमेव भवति तत्कस्य हेतोः समर्थानां प्रथमाद्वेति तटस्थेन पक्षे प्रवृत्तिर्निरुद्ध्यते न पुनरेकवाक्यतया प्राप्तिरेव विकल्पितेति तथेहापीति, अपवादाभावपक्षे प्रकृतिरेव कर्त्राद्यभिधानायानुज्ञाता स्यात्तथाग्निचिदित्यादौ क्विबादिलोपे तदाह। 'तत्रोत्पत्तिर्वा प्रसज्येत यथा तद्धित इति'। तमिममुत्पत्तिविकल्पपक्षे दोषं दृष्ट्वा बाधकत्वं विकल्प्यत इत्याह। 'वा बाधको भवतीति'। उक्तं च सिद्धन्त्वसरूपबाधकस्य वावचनादित्यसरूपो वा बाधको भवतीति वक्तव्यमित्यर्थः। ननु तत्रतत्रोच्यते यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवतिपर इति ततश्चासरूपो वेत्युक्ते भवतीत्येवाध्याहारो युक्तो न पुनर्वा बाधक इति। उच्यते। उत्पत्तिविकल्पस्य प्रयोजनं केवलायाः प्रकृतेः प्रयोगः, केवला च प्रकृतिः स्वार्थमात्रमभिधातुमसमर्था किं पुनः कर्त्रादिकमभिधास्यति प्रकृतिप्रत्ययसमुदाये हि प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यामयं प्रकृत्यर्थो ऽयं

प्रत्ययार्थे इति व्यवस्थाप्यते ऽनुत्पन्नप्रत्यया तु प्रकृतिर्न कञ्चिदप्यर्थं गमयति, प्रयोगोपि हि तस्या दुर्लभः परश्चेति नियमात्, तद्धिते त्वनुत्पत्तिपक्षे उत्सर्गप्रवृत्तिव्यतिरेकेण प्रत्ययान्तरमस्ति षष्ठी, इह तु न तथेति सामर्थ्याद्बहिरङ्गमपि बाधकत्वमविकल्प्यते । ननु च शास्त्रं शास्त्रेण बाध्यते न पुनः कार्यं कार्येण निदानोच्छेदेनैव हि निदानिन उच्छेदः शक्यते कर्तुं नहि प्रदीपे ऽनुच्छिन्ने तत्प्रकाश उच्छिद्यते तत्किमुच्यते ऽपवादप्रत्यय इति, एवं तु वक्तव्यम् अपवादशास्त्रमिति । उच्यते । सर्वस्यैवापवादशास्त्रस्य स्वगतमसारूप्यमव्यभिचारीति प्रत्ययद्वारकं तदाश्रयणीयमित्यपवादप्रत्यय इत्युक्तम् । एवम्भूतस्य प्रत्ययस्य विधायकं शास्त्रमित्यर्थः । यद्वा प्रत्ययस्य बाधकत्वविकल्पसामर्थ्याच्छास्त्रमपि पक्षे बाधकं भविष्यति । अथ वा वृत्तौ वस्तुमात्रं दर्शितं यथा त्वयमर्थ उपपद्यते तथा सूत्रं व्याख्येयं तत्रेदं व्याख्यानं परिभाषेयमित्युक्तं तत्रेकुपरिभाषावद्वियमपि पदमुपस्थापयति अस्मिन्धात्वधिकारे यत्रासरूपोपवादप्रत्ययो विधीयते तत्र वेत्युपतिष्ठते स्त्र्यधिकारे तु नेति किं कृतं भवति ददातिदधात्योर्विभाषेत्यादिवत् प्रमितिरेव विकल्परूपिता भवति ततस्तद्द्वारेणोत्सर्गस्य प्रवृत्तिसिद्धिरिति, अथासरूप उत्सर्गप्रत्ययोपवादविषये वा भवतीति विज्ञायमाने को दोषः, न खलु कश्चिद्दोषः, अपवादविकल्पे प्राप्ते विभाषा उत्सर्गविकल्पे त्वप्राप्तविभाषेति किन्तु प्रतियोग्यपेक्षमसरूपपदमप्यपवादमेव गोचरयतीत्युक्तम् । अस्त्रियामित्यत्र पक्षत्रयं सम्भवति अभिधेयसप्तमी वा स्यात् स्त्रियामभिधेयायां वासरूपो न भवतीति, स्त्रियामित्येव वा विहितस्यासरूपस्य निषेधः स्यात् स्त्रियामित्युच्चार्य ये विधीयन्ते ते नेति, स्त्रीग्रहणं वा स्वर्यते स्वरितेनाधिकारावगतिर्भवतीति स्त्रियां क्तिन्नित्यस्मिन्नधिकारे नेति, तत्राद्ये पक्षे विक्षिपा विक्षेपिका विक्षेप्सेति क्तविषये ण्वुल्तृचौ न स्याताम्, द्वितीये तु 'कर्मव्यतिहारे णच् स्त्रियां' व्यावक्रोशी व्यावकुष्टिरिति णचो विषये क्तिन् न स्यात्, द्वयोरपि स्त्रियामित्युच्चार्य विधानादिति, ममाद्ययोः पक्षयोर्दोषं दृष्ट्वा तृतीयं पक्षमाश्रित्याह । 'स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वेति' । केचिदाहुः । अपवा-

दप्रत्ययं वर्जयित्वेति वक्तव्ये प्रत्ययं वर्जयित्वेति वचनं प्रत्ययमात्रपरिग्रहार्थं तेनोत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशिनोरयं प्रतिषेधः, किं सिद्धं भवति आसना आस्या स्त्र्यधिकारविहितेनापि युचापवादेन क्यहलोरण्यंतः समावेशः सिद्धो भवति, घञस्तु क्तिनादिभिरनभिधानादसमावेश इति, अन्ये तु अपवादो वा बाधको भवतीति प्रकृतत्वात्स एवात्र प्रत्यय इति व्याचक्षते तेन घञः क्तिचादिभिरसमावेशः 'आस्येत्यत्र कृत्यल्युटो बहुलमिति ण्यदिति'। 'ण्वुल्तृचावुत्सर्गाविति'। धातुमात्रे विधानात्। 'इगुपधज्ञाप्रीकिरः क इत्यपवाद इति'। धातुविशेषे विधानात्, किं पुनः प्रयोगगतमसारूप्यमाहोस्विदुपदेशगतं, किं चातः प्रयोगे लादेशेषु प्रतिषेधो ह्यो ऽपचदित्यत्र लुङपि प्राप्नोति प्रयोगे ह्यसरूपत्वात् लङ्यनद्यतनस्तकारः प्रत्ययः,लुङ्यपाक्षीदितीकृधः, श्वः कर्तेत्यत्र लडपि प्राप्नोति, ज्ञापकात्सिद्धं यदयं 'कशश्वतोर्लङ्चे' ति लिड्विषये लङं शास्ति तज्ज्ञापयति न लादेशेषु वासरूपविधिरिति, एवमपि ग्रामणीः ग्रामनाय इति क्विवादिविषये ऽणादयो न स्युः नहि क्विवादयः प्रयोगे रूपवन्तो लोपविधानात्तेषाम्, तस्मादुपदेशगतमसारूप्यं, यद्येवमनुबन्धभिन्नेषु विभाषा प्रसङ्गः कागोरपि ह्युपदेशे भिन्नं रूपं प्रयोगे तु समानं तत्राह। 'नानुबन्धकृतमिति'। अनुबन्धानामनेकान्तत्वात्तत्कृतमसारूप्यं नाश्रीयते तथा चोदीचां माङ इति श्रूयमाणेपि ङकारे तस्यानेकान्तत्वादव्याहतमेजन्तत्वमित्यात्वं प्रयुक्तं ददातिदधात्योर्विभाषेति विभाषाग्रहणं च लिङ्गमस्यार्थस्य, अन्यथा ऽनुबन्धकृतादसारूप्यादेव शविषये णो भविष्यतीति किन्तेन, इह क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिः प्राप्नोति, हसितं छात्रस्य शोभनं हसनं छात्रस्य अत्र क्तल्युड्विषये घञपि प्राप्नोति, तुमुन् इच्छति भोक्तुम्, अत्र इच्छार्थेषु लिङ्लोटाविति लोट् प्राप्नोति, तुमुना च बाध इष्यते लिङ् तु लिङ् चेति वचनाद्भवत्येव, यद्येवमस्मादेव नियमाल्लोडपि न भविष्यति, खलर्थे आतो युच् ईषत्पानः, अत्र खलपि प्राप्नोति। ननु स्त्र्यधिकारे तावदस्त्रियामिति प्रतिषेधादस्याप्रवृत्तिः परस्तादपि विच्छिन्नत्वादेव न भविष्यति, स्यादेतदेवं, यद्ययमधिकारस्स्यात् परिभाषा त्वेषेत्युक्तम्

दृश्यते च स्त्र्यधिकारादूर्ध्वमपि वासरूपविधिः, आसित्वा भुङ्क्ते आस्यते भोक्तुमित्यपि यथा स्याद् अन्यथा भोजनार्थत्वादासनस्य पौर्वकाल्यमवगम्यते तुमर्थाधिकाराद्भावे क्त्वाप्रत्ययस्तत्रैव च लकार इति समानविषयत्वाद्बाध्यबाधकभावः स्यात्, तथा कालो भोक्तुं कालो भोजनस्य तुमुना ल्युटो बाधस्यात्, तस्मात् स्त्र्यधिकारस्य परस्तादपि वासरूपविधिरेषितव्यः, 'अर्हे कृत्यतृचश्चे' त्यत्र कृत्यतृज्ग्रहणं ज्ञापकं स्त्र्यधिकारस्य परस्तादनित्यैषा परिभाषेति, तस्मात् क्तल्युट्तुमुन्खलर्थेषु प्रतिषेधोऽवक्तव्य एव ॥

"कृत्याः प्राङ् ण्वुलः" ॥ 'ण्वुल्तृचाविति वक्ष्यतीति'। रोगाख्यायां ण्वुल् बहुलमित्ययं त्ववधिर्न भवति अर्हे कृत्यतृचश्चेति पृथक् तृचो ग्रहणात्, यद्येवं प्राङ् ण्वुल इति न वक्तव्यं कृत्या इत्येवास्तु तृज्ग्रहणादेव ज्ञापकात्परतोनुवृत्तिर्न भविष्यति योगापेक्षं च ज्ञापकं 'ण्वुल्तृचा' वित्यस्माद्योगात्प्राक् कृत्यसञ्ज्ञाधिकार इति, सत्यं कृत्या इत्येतावदेव पठितं सूत्रकारेण वृत्तिकारस्तु भाष्ये पूर्वपक्षरूपेण पठितं सूत्रे प्रचिक्षेप विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण, कृत्या इति बहुवचनमनुक्तसमुच्चयार्थं तेन केलिमर उपसङ्ख्यानमित्यादि नोपसंख्येयं भवति ॥

"तव्यत्तव्यानीयरः" ॥ 'वसेरिति'। वस निवासइत्यस्य ग्रहणं न तु वस आच्छादनइत्यस्य लुग्विकरणस्य तयोरेव कृत्यक्तखलर्था इति वचनात्कर्त्तरि न प्राप्नोतीति वचनं णिद्वद्भावार्थं च। 'वास्तव्य इति'। तद्धितान्तो वा पुनरेव भविष्यति वास्तुनि भवो वास्तव्यः, दिगादित्वाद्यत्, अवास्तव्य इत्यत्र स्वरभेदो नास्ति कृत्योकेष्णुजिति यदन्तोदात्तत्वं तदेव 'ययतोश्चातदर्थे' इत्यनेन भविष्यति, केलिमर इति ककारो गुणवृद्धिप्रतिषेधार्थः, रेफस्वरार्थः। 'कर्मकर्त्तरि चायमिष्यतइति'। भाष्ये तु पचेलिमा माषाः पक्तव्याः भिदेलिमास्सरला भेत्तव्या इति शुद्धे कर्मणि प्रदर्शितम् ॥

"अचो यत्" ॥ 'अज्ग्रहणं किमिति'। पूर्वसूत्रएव यद्ग्रहणं कर्त्तव्यमिति प्रश्नः। 'यावतेत्यादि'। द्वये हि धातवो ऽजन्ता हलन्ताश्च तत्र हलन्ताद् ण्यतं वक्ष्यति अतः पारिशेष्यादजन्तादेव यद्भविष्यतीत्य-

भिप्रायः । 'अजन्तभूतपूर्वादपीति' । पूर्वं भूतो भूतपूर्वः 'सुप् सुपे' ति समासः अजन्तश्चासौ भूतपूर्वश्च अजन्तभूतपूर्वः । 'दित्स्यं धित्स्यमिति' । दाञो धाञश्च सन् द्विर्वचनं सनिमीमाघ्वित्यादिना इस् 'सः स्यार्द्धधातुक' इति तत्वम् 'अत्र लोपोऽभ्यासस्य' दित्स धित्स इति स्थिते अनुत्पन्नएवार्द्ध धातुके बुद्धिस्थे एवातो लोपे कृते सम्प्रत्ययं हलन्त इति ण्यत् स्याद् अज्-ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवति तेन यतो नाव इत्याद्युदात्तत्वं ण्यति तु तित्स्वरितं स्यात्, चिकीर्ष्यमित्यादौ तु ण्यत्कृतो विशेषाभावः, 'यतो नाव' इत्यत्र हि द्व्यच इति वर्त्तते यदा त्वार्द्धधातुके परतो लोपः, तदेतदज्ग्रहणं न कर्त्तव्यमेव । 'तकिशसीत्यादि' । तकि हसने शसु हिंसायां चते चदे याचने यती प्रयत्ने जनी प्रादुर्भावे 'यतो नाव' इति स्वरार्थं जनेर्यद्विधानं जन्यमिति रूपं न तु ण्यतापि सिद्धं 'जनिवध्योश्चे' ति वृद्धिप्रतिषेधात्, शंसिमपि केचित्पठन्ति, तद्वा नराशंस्यं राज्ञं च । 'हनो वा वध चेति' । हन्तेर्वा यत्प्रत्ययो भवति तत्सन्नियोगेन च वधादेशः । 'वध्यमिति' । तद्धितान्तो वा पुनरेव भविष्यति वधमर्हतीति वध्यः, दण्डादिभ्य इति यत्, यदि तद्धितः समासो न प्राप्नोति असिवध्यो मुसलवध्य इति, कृति पुनः सति 'कर्तृकरणे कृता बहुल' मिति समासः सिद्धो भवति । 'घात्यमिति' । 'हनस्तोऽचिण्णलो' रिति तत्वं हो हन्तेर्ञ्णिन्नेष्विति कुत्वम् ॥

"पोरदुपधात्" । 'पाक्यं वाक्यमिति' । 'चजोः कुघिण्ण्यतो'-रिति कुत्वम् । 'कोप्यं गोप्यमिति' । कुप कोपने गुप व्याकुलत्वे । 'आप्यमिति' । आप्लृ व्याप्तौ एषु त्रिषु 'यतो नाव' इत्याद्युदात्तत्वन्न भवति तित्स्वरित एव तु भवति ॥

"शकिसहोश्च" । 'शक्ऌ शक्ताविति' । उपलक्षणमेतत् शक विभाषितो मर्षणइत्यस्यापि ग्रहणम् । 'षह मर्षणइति' । ननु षह शक्त्यर्थइत्यस्यैव परस्मैपदिनोऽननुबन्धकस्य ग्रहणं प्राप्तं, नैष दोषः, प्रत्ययविधिविषयत्वादननुबन्धकपरिभाषायास्तस्माद् द्वयोरपि ग्रहणम् । अन्ये तु 'कृत्यल्युटो बहुल' मिति वृत्तिकारोक्तयोरेव ग्रहणमिच्छन्ति ॥

"गदमदचरयमश्चानुपसर्गे" ॥ 'अनुपसर्गेभ्य इति'। सूत्रे ऽनुपसर्गइति व्यत्ययेन पञ्चम्यर्थे सप्तमीति भावः । अत एवोपसर्गादन्योनुपसर्गस्तस्मिन्ननुपसर्ग उपपदइत्यर्थो न भवति. एवं हि केवलेभ्यो न स्यात् 'वदः सुपि क्यप् चे' त्यत्र सुब्ग्रहणमनर्थकं स्यात्, अनुपसर्गइति हि वर्त्तते तत्र नञिवयुक्तन्यायेनोपसर्गसदृशस्य सुबन्तस्य ग्रहणं भविष्यति। 'नियमार्थमिति'। अनुपसर्गादेव यथा स्यात्सोपसर्गान्मा भूदिति, कथं तर्हि तेन न तत्र भवेद्विनियम्यमिति, प्रमादपाठोयं विनियाम्यमिति पाठः, एतेन इति यच्चोपचर्य्यम् इति व्याख्यातम् । 'चरेराङि चागुराविति' । सोपसर्गार्थं वचनम् । 'आचर्यो देश इति'। गन्तव्य इत्यर्थः । उपनेता गुरुः ॥

"अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु" ॥ 'अवद्यमिति' । 'निपात्यतइति'। वदेर्नञ्युपपदे 'वदः सुपि क्यप् चे' ति यत्क्यपोः प्राप्तयोर्यदेव यथा स्याद् गर्ह्यएव च यथा स्यादित्युभयार्थंनिपातनम् । 'अवद्यं पापमिति'। अवदनार्हत्वात् । 'अनुद्यमन्यदिति'। गुरुनामादि तद्धि गर्ह्यं न भवत्यथ च वदनार्हमपि न भवति अत्र क्यबेव भवति यजादित्वात्सम्प्रसारणं 'नलोपो नञः' 'तस्मान्नुडचि' 'पद व्यव हर्त्तव्यमिति'। निपातनस्य रूढ्यर्थत्वात् पण्यशब्दस्य च तत्रैव रूढत्वात्, उक्तं च ॥

धातुसाधनकालानां प्राप्त्यर्थंनियमस्य च ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥

इति । 'पाण्यमन्यदिति'। स्तुत्यमित्यर्थः । 'वर्येति स्त्रियां निपात्यतइति'। सूत्रे ऽवद्यादीनि अविभक्तिकानि पृथक् पदानि न तु द्वन्द्वस्य जसन्तनिर्देश इति भावः । 'शतेन वर्येति'। वृङ् सम्भक्ताविन्यस्येदं निपातनं तत्रैवानिरोधसम्भवात् । 'वृत्यान्येति'। वृञ् वरणे एतिस्तुशास्त्रित्यादिना क्यप् । 'वार्या ऋत्विज इति'। एतिस्तुशास्त्रित्यत्र वृञो ग्रहणं वृङस्तु स्त्रीलिङ्गादन्यत्र ण्यदेव भवति, भट्टिकाव्ये तु पुँल्लिगेपि यदेव प्रयुक्तः सुग्रीवो नाम वर्योसौ भवता चारुविक्रम इति ॥

१ पण्यमिति निपात्यते व्यवहर्त्तव्यं चेत्तत्प्रतीति मूलानुसारेण टीका, मुद्रितमूलपुस्तके तु पण्यमिति निपात्यते पणितव्यं चेदिति पाठः ।

"वह्यं करणम्" ॥ 'वहेर्धातोः करणे यत्प्रत्ययो निपात्यत इति'। अर्थव्याख्यानमेतत्, वह्यमिति निपात्यते करणं चेद्भवतीति वक्तुं युक्तम् ॥

"अर्यः स्वामिवैश्ययोः" ॥ 'स्वामिन्यन्तोदात्तत्वञ्चेति'। अथ यो वैश्यः स्वामी च तत्र कथम्, उच्यते, वैश्याख्यायामाद्युदात्तत्वं स्वाम्याख्यायामन्तोदात्तत्वं, तथा चार्यस्य स्वाम्याख्यायामिति फिट्सूत्रे आख्याग्रहणं कृतम्। 'आर्यो ब्राह्मण इति'। प्राप्तव्य इत्यर्थः ॥

"उपसर्या काल्या प्रजने" ॥ 'उपपूर्वात्सर्त्तेरिति'। भौवादिकस्य जौहोत्यादिकस्य च सर्त्तिशास्त्यर्त्तिभ्यश्चेति निर्देशात्सूत्राद्बहिरपि लुका निर्देशः। 'प्राप्तकाला काल्येति'। तदस्य प्राप्तमिति वर्त्तमाने 'कालाद्यदि'ति यत् प्रजननं प्रजनः भावे घञ् 'जनिवध्योश्चे'ति वृद्धिप्रतिषेधः। 'उपसर्या गौरिति'। गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः, वृषभोपगमनस्य प्राप्तकालेति यावत्। 'उपसार्येति'। उपसरणीया प्राप्तव्येत्यर्थः ॥

"अजर्यं सङ्गतम्" ॥ 'सङ्गमने कर्त्तरीति'। सूत्रे सङ्गतमिति नपुंसके भावे क्त इति दर्शयति, कर्त्तरीति तयोरेव कृत्यक्तखलर्था इति भावे मा भूदिति निपातनाश्रयणं तेन भावे सङ्गतकर्तृकेपि ण्यदेव भवति अजार्यं सङ्गतेनेति। 'अजरितेति'। तृच् ॥

"वदः सुपि क्यप् च" ॥ 'अनुपसर्ग इति वर्त्तत इति'। सत्सूद्विषेत्यादौ सूत्रे वक्ष्यति उपसर्गग्रहणं ज्ञापकमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति तच्चावश्यं तथैवाश्रयणीयं सुप्यजातौ 'स्पृशोनुदके क्विन्' त्यादावुपसर्गग्रहणं मा भूदिति ततश्च नार्थ इहानुपसर्गग्रहणानुवृत्त्या। 'सुबन्ते उपपदे अनुपसर्ग इति'। यद्यपि पूर्वं बहुव्रीहिः पञ्चम्यर्थे सप्तमीति व्याख्यातम् इह तु विरोधाभावात्तत्पुरुषात्स्वार्थेव सप्तमीति भावः। 'ब्रह्मोद्यमिति'। भावे क्यप् पूर्ववत्संप्रसारणं ब्रह्मवेदः तस्य वदनमित्यर्थः, कथं पुनः सकर्मकाद्भावे कृत्यप्रत्ययः यावता भावे चाकर्मकेभ्यः 'तयोरेव कृत्यक्तखलर्था' इति वक्ष्यति न च कर्माविवक्षयाऽकर्मकत्वं ब्रह्मेति कर्मणः श्रुतत्वात् तस्मादुत्तरसूत्रादिह भावग्रहणमपेक्षणीयमित्याहुः ॥

"भुवो भावे" ॥ 'यत्तु नानुवर्त्ततइति'। पूर्वसूत्रे चानुकृष्टत्वात्। ननु 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोः कृत्या विधीयन्ते ऽनुपसर्ग इति चानुवर्त्तते ऽनुपसर्गश्च भवतिरकर्मक एवातः सामर्थ्याद्भावएव भविष्यति, ननु च प्राप्त्यर्थः सकर्मक एव, सत्यं, व्यक्तिनिर्द्देशात् प्राथम्याच्च सत्तार्थस्यैव ग्रहणम्, न च कालादिकर्मणि प्रसङ्गः, अनभिधानात् तत्किमर्थं भावग्रहणमित्यत्राह। 'भावग्रहणमुत्तरार्थमिति'। 'हनस्त चे'ति सकर्मकादपि हनो भावे यथा स्याद् ब्रह्महत्या वर्त्ततइति कर्मणि मा भूत्त्वया घात्यो वृषल इति ॥

"हनस्त च" ॥ 'ब्रह्महत्येति'। स्वभावतः स्त्रीलिङ्गत्वमस्य क्यबन्तस्य यथान्येषाम्भावे कृत्यानां नपुंसकत्वं, छन्दसि तु क्यबन्तस्यापि नपुंसकत्वमिष्यते सनादेव दस्युहत्याय जज्ञिषे, छन्दसि च स्त्रियां चिदुक्तम्:, अस्यै ब्रह्महत्यायै तृतीयं परिगृह्णाणेति,। 'प्रघातो वर्त्ततइति'। किं पुनः कारणं घञ् प्रत्युदाह्रियते न ण्यदित्यत आह। 'ण्यत्तु भावे न भवतीति'। कर्माविवक्षायामकर्मकत्वे सत्यपीति भावः, सकर्मकात्तु भावे ण्यतः प्राप्तिरेव नास्ति ॥

"एतिस्तुशास्वृदृजुषः क्यप्" ॥ एतीति तिपा निर्द्देशः, किमर्थं धातोर्ग्रहणं यथा स्यादिवर्णान्तस्य मा भूदिति, अत्र चेण एव ग्रहणं नेङिकोः तयोरधिपूर्वयोरेव प्रयोगादेतीति निर्द्देशानुपपत्तेः, तथा च रक्षार्थं वेदानामध्येयं व्याकरणमिति भाष्ये यदेव प्रयुक्तः। केचित्तु इणवदिक इति वक्तव्यमिति वचनादधीत्या मातेत्यप्युदाहरन्ति। 'स्तुत्य इति'। ह्रस्वस्य तुक्। 'शिष्य इति'। 'शास इदङ्हलो'रितीत्वं 'शासिवसिघसीनां चे'ति षत्वम्, आङः शासु इच्छायामित्यस्यापि ग्रहणमविशेषात् तेनाशास्यमिति धातुस्वरेण मध्योदात्तं पदं भवति ण्यति तु गतिकारकोपपदात्कृदिति अन्तस्वरितत्वं स्यात्। केचित्तु शासु अनुशिष्टावित्यस्यैव ग्रहणमिच्छन्ति। 'ओरावश्यकइत्यादि'। इह स्तुग्रहणस्यावकाश आवश्यकाविवक्षायां स्तुत्य इति, 'ओरावश्यके' इत्यस्यावकाशो ऽवश्यलाव्यमिति, अवश्यस्तुत्य इत्यत्रोभयप्रसङ्गे परत्वाद् ण्यत्स्यात् पुनः क्यब्ग्रहणात्क्यबेव भवति।

'इग्रहणे वृञो ग्रहणमिष्यते न वृङ इति'। ज्ञापकात्, यदप 'मीडवन्दशंसदुहां ण्यत' इति वार्यशब्दस्याद्युदात्तत्वं शास्ति तत्र चेडिवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङो ग्रहणम्। 'शंसिदुहीत्यादि'। शंसु स्तुतौ दुह प्रपूरणे गुहू संवरणे। 'शस्यमिति'। क्यप्यत्र उपधालोपः, भाष्यएतदुपसङ्ख्यानं न दृष्टम्। 'आङ्पूर्वादिति'। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। 'आज्यमिति'। 'कृत्यल्युटो बहुल'मिति करणे क्यप्, पूर्ववदुपधालोपः, अथ कस्माद् ण्यत्येवोपधालोपो नोक्तः कुत्वप्रसङ्गात्तित्स्वरप्रसङ्गाच्च तस्मात्क्यबन्त एषः, यद्येवमवग्रहः प्राप्नोति आज्यमित्या अज्यमिति, अवगृह्यतां को दोषः, नहि लक्षणेन पदकारा अनुवर्त्याः किन्तु पदकारैर्नाम लक्षणमनुवर्त्यं पदविच्छेदो हि पौरुषेयः संहितैव तु नित्यार्थे चार्थनिश्चयाभावे नावगृह्णन्ति यथा हरिवदिति किं हरिशब्द इकारान्त उत हरिच्छब्दस्तकारान्त इति सन्देहात्। 'कथमिति'। इण एवैतद्रूपमिति मन्यमानस्य प्रश्नः। 'इरिति'। इ गतावित्यस्य॥

"ऋदुपधाच्चाक्लृपिचृतेः"। 'क्लृपिचृती वर्जयित्वेति'। क्लृप् सामर्थ्ये चृती हिंसाग्रन्थनयोः क्लृपेर्लत्वस्यासिद्धत्वादृकारऌकारयोस्सवर्णसंज्ञाविधानाच्च ऋदुपधात्वम्। 'कृत संशब्दने ण्यदेव भवतीति'। अनित्यण्यन्ताश्चुरादय इति णिजभावपक्ष इति भावः। इदमेव च तपरकरणं लिङ्गमनित्यण्यन्ताश्चुरादय इति णिजन्तात्तु णिलोपे कृते चाकृते च दित्स्यं धित्स्यमिति वद्यदेव भवति। 'पाणिसर्ग्येति'। पाणिभ्यां सृज्यतइत्युपपदसमासः पूर्ववत्कुत्वम्, एवं समवसर्ग्येत्यत्रापि॥

"ई च खनः"॥ दीर्घोच्चारणं किमर्थं न इ च खन इत्येवोच्येत दीर्घस्य ह्रस्वस्य वा आद्गुणे नास्ति विशेषः, ह्रस्वादेशे 'षत्वतुकोरसिद्ध' इत्येकादेशस्यासिद्धत्वाद् ह्रस्वाश्रयस्तुक् स्यादिति चेद्न, पदान्तपदाद्योरेकादेशस्तुग्विधावसिद्धः, अन्यथा वृक्षेच्छत्रमिति ङावाद्गुणस्यासिद्धत्वा 'च्छे चे'ति ह्रस्वाश्रयो नित्यस्तुक् स्यादित्यत आह। 'दीर्घनिर्देश इत्यादि'। एतेन ह्रस्वद्वयमत्र विधीयते न दीर्घ इति दर्शयति पूर्वं तु यथा श्रुताश्रयणेनोक्तमीकारश्चान्तादेश इति। 'तत्रेति'। प्रश्लेषे। 'सति ये विभाषेत्यात्व-

बाधनार्थ इति’ । अन्यथा ये विभाषेत्यस्यावकाशः खायते खन्यते अस्य त्ववकाशो यस्मिन्पक्षे आत्वं नास्ति आत्वपक्षे उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात्, एतच्च ये विभाषेति विषयसप्तमीपक्ष उच्यते, तदा हि यकारादौ बुद्धिस्थ एव भवदात्वमन्तरङ्गम् अयं त्विकारः क्यपा सह विधानाद्बहिरङ्गः, परसप्तमीपक्षे त्विदमेवेत्यनन्तरङ्गं परनिमित्तमनपेक्ष्य विधानात् ॥

“भृञो ऽसञ्ज्ञायाम्”॥‘भर्त्तव्या इत्यर्थ इति’। एतेन क्रियाशब्दत्वं दर्शयन् संज्ञात्वमपाकरोति।‘संपूर्वाद्विभाषेति’। असंज्ञायामेव सूत्रेण नित्यं प्रसक्तस्य क्यपोऽयं विकल्पः। प्राप्तविभाषेत्यर्थः। ‘संज्ञायामित्यादि’। प्रतिषेधस्येति शेषः। असंज्ञायामित्यस्य प्रतिषेधस्य भार्या नाम क्षत्रिय इत्यत्र पुंसि दृष्टत्वाच्चरितार्थत्वान्न ते सूत्रकारस्य भार्या शब्दः सिद्ध्यतीत्यर्थः । पुंसि चरितार्थे हि प्रतिषेधे स्त्रियां क्यपा भवितव्यम् । ननु भार्याशब्दोऽपि संज्ञा, अभ्रियमाणापि हि भार्या भार्येत्युच्यते तत्कुतोऽस्य क्यपः प्रसङ्गः, न ब्रूमोऽनेन क्यपा भवितव्यमिति यस्तु संज्ञायामेव विधीयते संज्ञायां समजनिषदेत्यादिना तस्यात्र प्रसङ्गः, न च तस्यापि प्रतिषेधसामर्थ्यान्निवृत्तिः, पुंसि प्रतिषेधस्य चरितार्थत्वादिति चोद्यम् उत्तरमाह । ‘स्त्रियां भावाधिकारोऽस्तीति’ । ननु सञ्ज्ञायां समजनिषदेत्यत्र वक्ष्यति भावइति न स्वर्यते पूर्वक एवार्थोऽधिकार इति यथा समजन्ति तस्यामिति समज्या निषदन्ति तस्यामिति निषद्येत्यादि भवति तत्कथमिदमुच्यते स्त्रियां भावाधिकारोऽस्तीति, नेदमपूर्वं चोद्यं वृत्तिकार एव हि तत्र वक्ष्यति कथं तदुक्तं स्त्रियां भावाधिकारोऽस्तीति स्त्रियां स्त्रीप्रकरणे संज्ञायां समजेत्यादिना क्यपि विधीयमाने भावस्याधिकारो ऽभिधेयभावोपगमलक्षणो ऽप्याकारोऽस्ति शब्दशक्तिस्वाभाव्याद् भावएव तेन क्यब् भवति न कर्मणि तेन भार्या प्रसिद्ध्यतीति कर्मणीत्यभिप्रायः, एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति भृञ् भरणइत्यस्यैव क्यब्विधौ ग्रहणं न डुभृञ् धारणपोषणयोरित्यस्य, अतस्तस्माद्वा भृञ् भरणइत्यस्माद्दीर्घान्ताद्वा भार्येति प्रसिद्ध्यतीति परिहारान्तरमप्यत्र सम्भवति ॥

"मृजेर्विभाषा" ॥ 'परिमार्ग्य इति'। 'मृजेर्वृद्धिः' पूर्ववत्कुत्वम् ॥

"राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" ॥ 'राज्ञा सोतव्य इति'। अभिषिक्तः क्षत्रियो राजा तेन सोतव्योऽभिषवद्वारेण निष्पादयितव्य इत्यर्थः, कर्मणि क्यप् दीर्घत्वं च निपात्यते, 'राजा वा इह सूयतइति'। अत्र पक्षे लतात्मकः सोमो राजा राजानं क्रीणन्तीत्यादौ दर्शनात्, सुनोतिरत्राप्यभिषवे ऽधिकरणे, क्यप्निपातनं रूढ्यर्थं, तेन ज्योतिष्टोमादौ न भवति, पूर्वस्मिन्नपि पक्षेऽश्वमेधादावतिप्रसङ्गः। 'सूसर्त्तिभ्यामिति'। ननु सर्तेरुत्वं सुवतेर्वा रुडागम इत्यभिधानाद्विकल्पोऽत्राभिप्रेत इति चार्थाभावाद् द्वन्द्वानुपपत्तिः, भाष्यकारप्रयोगात्तु द्वन्द्वः, प्रयुक्तं हि भाष्ये सूसर्त्तिभ्यां च सर्त्तेरुत्वं सुवतेर्वा रुडागम इति। 'सर्त्तेरुत्वमिति'। दीर्घत्वं तु रपरत्वे सति 'हलि चे'त्येव सिद्धम्। 'सुवतेर्वा रुडागम इति'। सुवतेरिति पञ्चमी सुवतेः परस्य क्यप इत्यर्थः, रुगागम इति पाठे षष्ठी। 'सरतीति'। आकाशे। 'सुवतीति'। षू प्रेरणे तुदादिः, कर्मणि लोकं प्रेरयतीत्यर्थः, उदिते हि तस्मिन्क्रियासु लोकस्य प्रवृत्तिः, कर्तृप्रत्ययेन कर्तरि निपातनं दर्शयति, एवं रुच्याव्यथ्ययोरपि द्रष्टव्यम्। आह च सूर्यरुच्याव्यथ्याः कर्त्तरीति। 'कुप्यमिति'। संज्ञायामेतन्निष्यते सुवर्णरजतव्यतिरिक्तस्य धनस्येयं संज्ञा, सर्वत्रातिप्रसङ्गो निपातनाश्रयेण परिहार्यः। 'कर्मकर्त्तरि निपातनमिति'। अन्तोदात्तत्वं चेति द्रष्टव्यम्, आह हि कृष्टपच्यस्यान्तोदात्तत्वं कर्मकर्त्तरि चेति, शुद्धे तु कर्मणि कृष्टपाक्य इत्येव भवति ॥

"पुष्यसिद्ध्यौ नक्षत्रे" ॥ 'पुष्यन्त्यस्मिन्नर्था इति'। आरब्धा इति शेषः। 'सिद्ध्यन्त्यस्मिन्निति'। अत्रार्था इत्यपेक्ष्यते पुष्यसिद्ध्यशब्दौ पर्यायौ स्वरूपपरत्वात्तु सूत्रे द्वन्द्वः ॥

"विपूयविनीयजित्या मुञ्जकल्कहलिषु" ॥ 'विपूयो मुञ्ज इति'। रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः। 'विनीयः कल्क इति'। कल्कशब्दोऽयमस्ति पिष्ट औषधे, पथ्या शुण्ठी सैन्धवांशस्य कल्कः पेयो नित्यं सर्वरोगक्षयायेति, तैले घृते वा औषधे प्रक्षिप्ते यदजीर्णं तत्रापि वर्तते, पापे च प्रसिद्धः तपो न कल्कोऽध्ययनं न कल्क इत्यादौ, इह तु प्रथमस्य

ग्रहणमिति केचि,दविशेषेणेति वयं, तथा च माघः प्रायुङ्क्त, अविनीय संभ्रमविकासिभक्तिभिरिति । 'जित्य इति' । बलेनाकृष्यः, कृष्टसमीकरणार्थं स्थूलं काष्ठं हलिरित्युच्यते ॥

"पदास्वैरिबाह्यापक्ष्येषु च" ॥ 'अस्वैरिणीति' । ईर प्रेरणे स्वयमेवेरितुं शीलमस्या इति ताच्छीलिको णिनिः,'स्वादीरेरिणो' रिति वृद्धिः।'बाह्यायामिति' । बहिर्भवा बहिषष्टिलोपश्चेति यञ्टिलोपौ, पक्षे भवः पक्ष्यः, दिगादित्वाद्यत् । 'यस्य प्रगृह्यसंज्ञा विहितेति' । ननु पदावयवस्य द्विवचनादेः प्रगृह्यसंज्ञा न तु पदस्य, सत्यं, यौगिकस्त्वयं पदशब्दः पद्यते गम्यतेऽनेनार्थ इति, यद्वा प्रातिशाख्ये द्विवचनान्ते पदएव प्रगृह्यशब्दः प्रसिद्धः सन्निकर्षाच्च गृह्यतेरर्थः स्वरसन्ध्यभावादग्नी इत्यादौ कियतापि कालेन व्यवधानात्परस्परमचो न सन्निकृष्यन्ते । 'अवगृह्यमिति' । समासे पूर्वपदं तत्र हि पदकाले ऽवग्रहो विच्छेदः । 'गृह्यका इमे गृहीतका इत्यर्थ इति' । उभयत्रानुकम्पायां कन्,पञ्जरादिबन्धेन परतन्त्रीकृताः शुकादय उच्यन्ते । 'ग्रामगृह्येति' । शेषलक्षणायाः षष्ठ्याः समासः । वासुदेवगृह्येत्यत्र तु कर्त्तरिषष्ठ्याः शेषषष्ठ्या वा समासः ॥

"विभाषा कृवृषोः" ॥ 'वृष्यमिति' । वृषु सेचने ॥

"युग्यं च पत्रे" ॥ 'पतत्यनेनेति पत्रमिति' । दाम्नीशसेत्यादिना करणे 'ष्ट्रन्, तद्वहति रथयुगप्रासङ्गमि'ति प्राग्दीव्यतीयेनैव यता सिद्धं स्वरेऽपि नास्ति भेदः क्यपि धातुस्वरः यत्यपि 'यतो नाव' इत्याद्युदात्तत्वम्, अयुग्यमित्यत्रापि न स्वरे भेदः, 'ययतोश्चातदर्थे' कृत्योकेष्णुच्चार्वादयश्चेत्युभयत्रान्तोदात्तविधानात् ॥

"अमावस्यदन्यतरस्याम्" ॥ 'अमाशब्दः सहार्थे वर्त्ततइति' । अमात्य इत्यादौ दर्शनात् । 'तस्मिन्नुपपदइति' । उपपदत्वमपि निपातनादेव, अमेति वा सप्तम्या लुका निर्द्देशः, तकारोच्चारणात्प्रकृतस्य ण्यपस्तावन्निपातनं न भवति, यदि तु परमप्रकृतस्य यतो निपातनं स्यात्स्वरे दोषः स्याद्यति सति वस्याशब्दे यतो नाव इत्याद्युदात्तत्वं कृदुत्तरपदप्रकृतिस्वरत्वेपि स एव स्वरोवतिष्ठेत ण्यति त्वन्तस्वरितत्वं भवति तथा

यता मुक्ते ऽमावास्येत्यधिकरणे ण्यत्र प्राप्नोति, 'कृत्यल्युटो बहुल' मिति भविष्यति, एवमप्युपपदसमासो न प्राप्नोति, मयूरव्यंसकादित्व द्भविष्यति, एवमपि गतिकारकोपपदादिति स्वरो न प्राप्नोति, तथा 'अमावास्याया वे' ति ण्यदन्तस्य यत्कार्यं तदमदन्तस्यामावस्यशब्दस्य न स्याद् भिन्नत्वा-दिति यदन्तपक्षे दोषं दृष्ट्वा प्रकृतस्यापि ण्यत एव निपातनमित्याह । 'ण्यत्प्रत्ययो भवतीति'। किं तदुच्यते ण्यत्प्रत्ययो भवतीति न पुनर्ण्यत्प्र-त्ययो निपात्यतइति, सत्यं स एवार्थः । निपातनाद् ण्यत्प्रत्ययो भवतीत्यर्थः । 'अन्यतरस्यां वृद्ध्यभावो निपात्यतइति'। ण्यत्प्रत्ययो नित्यः वृद्ध्यभा-वस्तु पाक्षिक इत्यर्थः । 'सह वसतइति'। सन्निकृष्टौ वसतइत्यर्थः । यदुक्तं ण्यत्प्रत्ययो निपात्यतइति तत्रायं गुण इत्याह । 'एकदेशविकृत स्यानन्यत्वादिति'। ण्यति ह्यमावास्येति स्वतः प्राप्तं रूपं वृद्ध्यभावस्तु तस्यैव विकार इति भावः, यद्वा ण्यति वृद्धौ कृतायां पक्षे ह्रस्वोपि निपा-त्यते स एव वृद्ध्यभाव उक्तः, एवं श्लोकेप्यवृद्धितामिति, किमत्र निपात्य-तइत्याशङ्कायां श्लोकः । 'अमावसोरित्यादि'। 'वृद्धिभावाभावकृतविशे-षाश्रयो द्विवचननिर्देशः । 'निपातयामीति'। एकस्यैवेति शेषः, अमापूर्व-योर्वसोर्ण्यन्तयोर्मध्ये एकस्य वृद्ध्यभावमहं निपातयामीत्यर्थः । सूत्रकारस्ये-व्यमापन्नस्यैतद्वचनं, तथा सति किं सिद्धमित्यत्राह । 'तथेति'। एका तद्वि-तद्वृत्तिरेकदेशविकृतस्यानन्यत्वाद् एतयोर्द्वयोरपि सिद्ध्यतीत्यर्थः । 'स्वरश्च मे प्रसिद्ध्यतीति'। एवं निपातयतो मम स्वरोपि सिद्ध्यति,व्याख्यातः स्वरः ॥

"छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्य-खान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" ॥

'नुगभावश्चेति'। यदा जुहोतेस्तदेति भावः । 'उपचाय्यपृडमिति'। मृड सुखे पृड च इत्येतस्मादिगुपधलक्षणः कः, उपचाय्यं च तत्पृडं चेति कर्मधा-रयः । 'हिरण्ये चेति वक्तव्यमिति'। 'हिरण्येभिधेयइत्यर्थः'। व्यत्यय-मिति'। आद्यन्तविपर्यास इत्यर्थः । 'ण्यदेकस्मादिति'। एकस्माद्धा-तोर्ण्यत्प्रत्ययो निपात्यते, तदनन्तरेषु देवहूयादिषु चतुर्षु चतुर्भ्यो धातुभ्यः क्यप् निपात्यते । उपसर्गभेदाच्चयतेर्भेदः । 'द्वौ क्यपाविति'। द्वाभ्यां

धातुभ्यां द्वौ क्यपौ निपात्येते इत्यर्थः । 'गृध्रद्धिधिश्चतुरिति' । सुबन्तमेतत्, क्रियाभ्यावृत्तिवाचिचतुरो वा गृध्रद्धिधीयतइत्यर्थः ॥

"ऋहलोर्ण्यत्" ॥ 'ऋवर्णान्तादिति' । ऋतेस्तु ग्रहणं न भवति हला साहचर्यात् परं कार्यमिति निर्देशाद् 'ईडवन्दवृशंसदुहां ण्यत' इति लिङ्गाच्च ॥

"ओरावश्यके" ॥ 'अवश्यं भाव आवश्यकमिति' । मनोज्ञादित्वाद्वुञ्, अव्ययानां भमात्रे टिलोपः, किं पुनरवश्यार्थवाचिन्युपपदे प्रत्यय आहो स्विदावश्यके द्योत्ये, तत्राद्ये पक्षउपपदरहितात्प्रत्ययो न स्यात् लाव्यं पाव्यमिति तस्माद् द्वितीयः पक्ष आश्रीयतइत्याह । 'आवश्यके द्योत्यइति' । 'स्वरसमासानुपपत्तिरिति' । उपपदपक्षे उपपदसमासो लभ्यते गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वं च द्योत्यपक्षे त्वेतदुभयमपि न सिद्ध्यतीत्यर्थः । 'अवश्यलाव्यमिति' । लुम्पेदवश्यमः कृत्यइति मलोपः, द्योतितार्थस्यापि क्व चित्प्रयोगो दृश्यते लाघवं प्रत्यनादरात्, न त्वेतदत्र वक्तव्यं लुम्पेदवश्यमः कृत्यइति वचनादेव द्योतिते अवश्यमः प्रयोग इति तस्यावश्यकर्तव्यादौ चरितार्थत्वात् । 'मयूरव्यंसकादित्वादिति' । तस्याकृतिगणत्वादिति भावः । 'उत्तरपदप्रकृतिस्वरत्वे चेति' । मयूरव्यंसकादिनिपातनादेव स्वरोऽपि भविष्यतीत्यपि शक्यं वक्तुम् ॥

"आसुयुवपिरपिलपित्रपिचमश्च" ॥ युप्रभृतीनां द्वन्द्वेन आसुनोतेर्द्वन्द्व इत्याहुः । सुनोतेरभिसम्बन्धस्तदाह । 'आङ्पूर्वात्सुनोतेरिति' । षु प्रसवैश्वर्ययोरित्यस्य त्वग्रहणं कृत्यल्युटो बहुलमिति, यु इति यु मिश्रणइत्यस्य ग्रहणं युज् बन्धनइत्यस्य तु सानुबन्धकत्वादग्रहणम् । 'यतोपवाद इति' । 'अचो यत्' 'पोरदुपधादि' ति यथायोगं प्राप्तस्य । 'दाभ्यमिति' । दिभेर्धातुष्वपठितस्यापि चुरादौ बहुलमेतन्निदर्शनमिति वचनाच्छिष्टप्रयोगाच्च तपयत्यर्थयत्यवधीरयत्यादिवद्धातुत्वं द्रष्टव्यम् ॥

"आनाय्योनित्ये" ॥ 'रूढिरेषेति' । तेन घटादावतिप्रसङ्गो नोद्भावनीय इति भावो निपातनाच्च रूढित्वम्, उक्तं हि रूढ्यर्थं च निपातनमिति । 'कुतः पुनरनित्यत्वमित्यत आह' । 'तस्य चानित्यत्वमिति' । 'नि-

त्यमजागरणादिति'। सततमज्वलनादित्यर्थः, ज्वलनमेव हि तस्य जागरणम्, दक्षिणाग्नावपि विशिष्ट एवेष्यते न सर्वत्रैवेति दर्शयति। 'यश्चेति'। योनिरुत्पत्तिस्थानम्। वैश्यकुलादित्यादिना योनिविकल्पं दर्शयति। 'आनाय्योऽनित्यइति'। 'चेदिति'। घटादिष्वपि प्रसङ्ग इति शेषः। 'भवेदिति'। सम्भावने लिङ् निपातनादेव सम्भाव्यतइत्यर्थः। 'एकयोनाविति' 'आहवनीयेन'। 'आनेयोऽन्यथा भवेदिति'। घटादावनित्ये भिन्नयोनौ च दक्षिणाग्ना 'वचो यदि' ति यदेव भवतीत्यर्थः॥

"प्रणाय्योऽसम्मतौ"॥ असम्मताविति बहुव्रीहिरित्याह। 'अविद्यमाना सम्मतिरस्मिन्निति'। सम्मतिश्चात्र संमननं प्रीतिविषयभावोपगमनं कर्मव्यापारो विवक्ष्यते न संमन्तृव्यापारः तथा सत्यसंमन्तरि निपातनप्रसङ्गात् तस्य चानिष्टत्वादित्यभिप्रायेणाह।'संमतता संमतिरिति'।'संमतिरभिलाषोऽप्युच्यतइति'॥ भोगविषयोऽप्यादरः संमतिशब्देनोच्यते, तन्नेत्यर्थः॥

"पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु"। मीयतेऽनेनेति मानं हूयत इति हविः निवसत्यस्मिन्निति निवासः समिधामाधानी ऋक् सामिधेनी। 'माङो ण्यत्प्रत्यय इति'। करणे तत्र 'आतो युक् चिण्कृतो'रि'ति युक्। 'मेयमन्यदिति'। भावकर्मणोर्यदेव भवतीत्यर्थः।'सान्नाय्यमिति'। सम्यङ्नीयते होमार्थमग्निं प्रतीति कर्मणि ण्यत्।'हविर्विशेष इति'। ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोमावास्यायामिति विहितयोर्दधिपयसोः। माघस्तु यथाश्रुतार्थग्राही हविर्मात्रे प्रायुङ्क्त हुतमयमवलीढे साधु सान्नाय्यमग्निरिति। 'निचीयतेऽस्मिन्धान्यादिकमिति'। 'अधिकरणे ण्यत्'। 'धाय्येति'। धीयतेऽनया समिदिति करणे ण्यत् पूर्ववद्युक्। 'ऋग्विशेषस्येति'। प्रवोवाजा अभिद्यवइत्यादिकस्य। 'किं तर्हि का चिदेवेति'। समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा पृथुपाजा अमर्त्य इत्यादिका। कथं पुनरयं विशेषो लभ्यतइत्याह। 'रूढिशब्दो ह्ययमिति'। अत एव निपातनाश्रयणमिति भावः। रूढित्वमेव द्रढयति। 'तथा चेति'। धाय्याः

१ संमननमिति मुद्रितमूलपुस्तके पाठः।

शंसतीति ज्योतिष्टोमे मरुत्वतीये शस्त्रे विधानमेतत्, सामिधेनीग्रहणं प्रयोगविषयोपलक्षणार्थमिति भावः॥

"क्रतौ कुण्डपाय्यसंचाय्यौ"॥ ण्यदिति प्रकृते यत्प्रत्ययान्तः कुण्डपाय्यशब्दो निपात्यतइत्युक्तं तत्र प्रयोजनमाह। 'यतो नाव इतीति'। यदुत्तरपदस्याद्युदात्तत्वं कृदुत्तरपदप्रकृतिस्वरेण स एव स्वरः सिद्धो भवतीत्यर्थः, ण्यति तु स्वरितत्वं स्यात्॥

"अग्नौ परिचाय्योपचाय्यसमूह्याः"॥ 'अग्नाविति'। न ज्वलने किं तर्हि तदर्थेष्टकाचयनविशेषे, तत्रैव रूढत्वात्, ईह संऽर्वोहूह वितर्क इत्यस्मादनेकार्थत्वाद्वहेरर्थे वर्तमानाद्दलन्तत्वाद् ण्यति समूह्यमिति सिद्धं, तथा च समूह्यं चिन्वीत पशुकामः पशवो वै पुरुषः पशूनेवास्य तत्समूहतीति वह्यर्थेनोहिना ब्राह्मणे समूह्यशब्दो निरुक्तः॥

"चित्याग्निचित्ये च"॥ 'चित्योऽग्निरिति' कर्मणि यदपवादः क्यप् निपात्यते तेनाद्युदात्तत्वं भवति। 'भावे यकारप्रत्यय इति'। किमर्थं पुनरत्रापि क्यबेव न निपातितः, एवं हि तुङ् निपात्यो न भवति तत्राह। 'तेनान्तोदात्तत्वं भवतीति'। 'अग्नावित्येवेति'। तच्च चित्यशब्दस्यैव विशेषणार्थं नाग्निचित्याशब्दस्य, तस्य भावे निपातितत्वात् तदेतद्दर्शितं 'चेयमन्यदिति'॥

"नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः"॥ 'आदिशब्दः प्रत्येकमभिसंबध्यतइति'। गणपाठादिति भावः। 'अपोद्धृत्य ये पठ्यन्तइति'। ते गृह्यन्तइत्यन्वयः, अपोद्धृत्येति बुद्ध्या पृथक्कृत्येत्यर्थः। किमर्थं पुनरपोद्धृत्य प्रत्ययविधानं यावता नन्दनादीनां गणपाठादेव सिद्धं साधुत्वम्, उच्यते, असत्यस्मिन्नष्टाध्याय्यां क्वचिदप्यनुपयोगाद्गणत्रयपाठो ऽनर्थकोऽध्यवसीयेत। 'नन्दिवाशीत्यादि'। टुनदि समृद्धौ, वाशृ शब्दे, मदी हर्षे, दुष वैकृत्ये, राध साध संसिद्धौ, वृधु वृद्धौ, शुभ शुम्भ शोभार्थे, रुच दीप्तौ। 'दूषण इति'। 'दोषो णौ' इत्यूत्वम्। 'सहितपीत्यादि'। षह मर्षणे, तप सन्तापे, शमु दमु उपशमे। 'जल्पन इत्यादि'। जल्प जप व्यक्तायां वाचि। रमु क्रीडायाम्, दृप हर्षविमोचनयोः, क्रदि आह्वाने

रोदने च । लुप विलेखने, चणु अलीके, अर्द्द हिंसायाम्, जनमर्दयतीति जनार्दनः, कर्मण्यणि प्राप्ते, एवमुत्तरत्रापि कर्मण्युपपदे द्रष्टव्यम् । यु मिश्रणे, षूद क्षरणे, मधुनामाऽसुरस्तं सूदयतीति मधुसूदनः । ञिभी भये । णिचि 'भियो हेतुभये षुक्' । लूञ् छेदने, णश अदर्शने, दमु उपशमे, णय तौ, चित्तं नाशयतीति चित्तनाशनः, कुलं दमयतीति कुलदमनः । 'ग्राहीत्यादि' । ग्रह उपादाने, षह मर्षणे, तसु उपक्षये, दसु च, भस भर्त्सनदीप्त्योः, तिष्ठतेरातो युक्, मत्रि गुप्तभाषणे चुरादिः, अर्द्द हिंसायाम् । 'रक्षेत्यादि' । रक्ष पालने, श्रु श्रवणे, डुवप् बीजसन्ताने, शो तनूकरणे, एषां निशब्दउपपदे णिनिः । 'याचीत्यादि' । टुयाचृ याञ्चायाम्, हृञ् हरणे, व्रज गतौ, वद व्यक्तायां वाचि, वस निवासे, एषां प्रतिषिद्धानां णिनिर्भवति, प्रतिषिद्धार्थानामित्यर्थः, प्रतिषिद्धार्थता च नञ्पूर्वाणां भवतीति दर्शयति । 'अयाचीत्यादि' । यद्यपि विशब्दोपि विगर्द्दभरथैरित्यादौ प्रतिषेधे दृष्टः, याच्यादीनां तु विपूर्वाणां णिनिर्न दृश्यतइति नञ्येव णिनिर्विज्ञायते । 'अचामित्यादि' । अजन्तानान्धातूनामचित्तकर्तृकाणां प्रतिषिद्धार्थानां णिनिर्भवति, न विद्यते चित्तमस्येत्यचित्तः स कर्त्ता येषान्ते तथोक्ताः । 'विशयी विषयीति' । शीङ् स्वप्ने, षिञ् बन्धने, वृद्ध्यभावो निपातनात् । 'अभिभावीभूत इति' । अभिभूतवानभिभावी । अपराधी अवरोधी, राध साध संसिद्धौ, रुधिर् आवरणे । 'परिभवी परिभावीति' । पक्षे वृद्ध्यभावः । 'पचेत्यादि' । डुपचष् पाके । वच परिभाषणे, ब्रुवादेशार्थः, एवं वदिरपि । चल कम्पने, पत्लृ गतौ । 'नदडिति' । नद अव्यक्ते शब्दे । टकारो ङीबर्थः, एवमुत्तरत्रापि । भष भर्त्सने, प्लुङ् गतौ, चर गत्यर्थः, गृ निगरणे । तॄ प्लवनतरणयोः, चुर स्तेये, दिवु क्रीडादौ, सूदिरुक्तार्थः, जृष् वयोहानौ, मृङ् प्राणत्यागे, क्षमूष् सहने, षिवु तन्तुसन्ताने, मिष स्पर्द्धायाम्, कुप क्रोधे, मिधृ मेधाहिंसनयोः, व्रण गात्रचूर्णने चुरादिः, नृती गात्रविक्षेपे, दृशिर् प्रेक्षणे, सृप्लृ गतौ, डुभृञ् धारणपोषणयोः, जारं बिभर्तीति जारभरा, एवं श्वानं पचतीति श्वपचा, न्यङ्क्वादिषु श्वपाकशब्दस्य पाठा-

न्यते कर्मण्यणपि भवति। 'पचादिराकृतिगण इति'। तत्सम्बन्धिन आदिशब्दस्य प्रकारवचनत्वात्, तथा च 'शिवशमरिष्टस्य करे' इति कर्तरोच् प्रत्ययः कृतः। घटेश्च 'कर्मणि घटोऽठजि'ति, तथा यङन्तानां 'यङोऽचि च'ति यङोऽस्मिन्नचि लुगुक्तः, भाष्ये चाऽचपि सर्वधातुभ्यो वक्तव्य इत्युक्तं पचाद्यनुक्रमणन्तु नदडित्यादावनुबन्धासञ्जनार्थं कर्मोपपदानाम् इगुपधानां च बाधकबाधनार्थम्, देवडित्युभयार्थमन्येषां तु प्रपञ्चार्थं द्रष्टव्यम्॥

"इगुपधज्ञाप्रीकिरः कः"॥ इगुपधादीनां समाहारद्वन्द्वे नपुंसकत्वेन ह्रस्वप्रसङ्गादितरेतरयोगे द्वन्द्वो व्यत्ययेन भ्यसः पञ्चम्येकवचनं तत्र कृशब्दस्य धात्वनुकरणत्वात्प्रकृतिवदनुकरणं विभक्तावित्वम्। 'ज्ञ इति'। 'आतो लोप इटि च'। 'प्रिय इति'। प्रीञ् तर्पणे, इयङादेशः। 'किर इति'। कॄ विक्षेपे 'ऋत इद्धातोः'। 'पचादिषु द्रष्टव्या इति'। यद्यप्यजपि वृषादिवत्सर्वधातुभ्यो भवति तथाप्यपवादबाधनार्थमेते पचादिष्ववश्यं पाठ्या इत्यर्थः॥

"पाघ्राध्माधेट्दृशः शः"॥ पा पाने, घ्रा गन्धोपादाने, ध्मा शब्दाग्निसंयोगयोः, धेट् पाने, दृशिर् प्रेक्षणे, पा रक्षणइत्यस्य तु लुग्विकरणत्वादग्रहणम्। 'उत्पिब इत्यादि'। पाघ्रादिसूत्रेण यथायोगं पिबादय आदेशाः। 'व्याघ्र इति'। अत्र 'तश्चोपसर्गे' इति क एव भवति, अत्र च व्याघ्रादिभिरिति वचनं लिङ्गम्॥

"अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च"॥ अनुपसर्गादिति व्यत्ययेनैकवचनमित्याह। 'अनुपसर्गेभ्य इति'। लिप उपदेहे, विद्लृ लाभे, आगमिना नुमा सनुम्कयोर्ग्रहणं तेन विद्यन्तराणामग्रहणम्, धृञ् धारणे, धृङ् अवस्थाने, ण्यन्तयोर्द्वयोरपि ग्रहणम्, पार तीर कर्मसमाप्तौ, विद चेतनाख्यानादिषु चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः, एजृ कम्पने ण्यन्तः, चिती संज्ञाने चुरादिः, सातिर्हेतुमण्ण्यन्तः, षह मर्षणे चुरादिर्हेतुमण्ण्यन्तो वा। 'लिम्पः विन्द इति'। 'तुदादिभ्यः शः' 'शे मुचादीना'मिति नुम्, धारयादिषु शब्गुणायादेशाः। 'नौ

लिम्पेरिति'। छन्दसि तु धर्त्ता च विधर्त्ता च विधारय इति दृश्यते। 'अरविन्द इति'। अराकाराणि दलान्यरशब्देनोच्यन्ते॥

"ददातिदधात्योर्विभाषा"॥ 'ददः दध इति'। शपः श्लुः। द्विर्वचनं 'श्नाभ्यस्तयोरातः' इत्याकारलोपः, दद दाने, दध धारणइत्येताभ्यामचि कृते ददः दध इति सिद्धं दाधाभ्यामपि णे कृते दायो धाय इति. इदन्तु वचनं स्वरार्थम् अददः अदध इति अच्कावशक्ताविलन्तोदात्तत्वम्मा भूत् नञ्स्वर एव यथा स्यादिति॥

"ज्वलिति कसन्तेभ्यो णः"॥ 'इतिशब्द आद्यर्थ इति'। अनेकार्थत्वान्निपातानामुच्चावचेष्वर्थेषु निपतन्तीति निपाता इति निरुक्तकारो निपातशब्दं निराह, ज्वलितीत्यविभक्तिको निर्द्देशः, ज्वलादिभ्य इत्यर्थः, कसिरन्ते येषां ते कसन्ताः, तत्र ये कसमधीत्य वृदिति पठन्ति तेषां मते कसन्तग्रहणं चिन्त्यप्रयोजनम्। ननु च ज्वल दीप्ताविति द्विः पठ्यते घटादिषु परस्ताच्च तेषामसत्यस्मिन्विशेषणे सन्देहः स्यात् किं पूर्वो ज्वलिरादिरुत पर इति, अतः कसः समीपभूतेभ्यो ज्वलादिभ्य इति विशेषणमर्थवत्. नैतत्सुष्ठूच्यते, यद्यन्तशब्दः समीपवचनो बहुव्रीहौ तत्पुरुषे च कसेर्ग्रहणं न प्राप्नोति, पूर्वत्र ज्वलतावादावभिप्रेते तदनन्तर एव धातुरुपादीयेत परोपदेशेनैव ज्वलतेर्ग्रहणसिद्धेः, घटादिपाठश्च मित्संज्ञायां चरितार्थः, इतरस्त्वचरितार्थ इति स एवाद्रिर्भविष्यति। 'अचोपवाद इति'। तस्यापि सर्वधातुविषयत्वादिति भावः। भ्रमु चलनइत्यस्य ज्वलादिपाठः किमर्थः, यावता पचाद्यचि भ्रम इति सिद्धं णेप्येतदेव रूपं नोदात्तोपदेशस्येति वृद्धिप्रतिषेधात्, इहाभ्रम इति अच्कावशक्ताविति स्वरो मा भूदिति॥

"श्याद्व्यधास्रुसंस्त्रवतीणवसावहृलिहश्लिषश्वसश्च"। 'अनुपसर्गादिति निवृत्तमिति'। उत्तरसूत्रे पुनरनुपसर्गग्रहणात्। 'विभाषेति चेति'। निवृत्तमित्यपेक्ष्यते विभाषाग्रहणं ह्यनुपसर्गग्रहणेन सम्बद्धमतस्तन्निवृत्तावस्यापि निवृत्तिः। 'श्येङ् इति'। श्यैङ्गताविल्यस्मात्, शी आत् श्यादिति शीङो यणादेशेन ग्रहणन्न भवति व्याख्यानात् झटिति प्रतीताय-

नारोहाव्य। 'आकारान्तेभ्य इति'। एतेन अतेरच्छब्दान्तानां पतिप्रभृतीनामकारान्तानां च ग्रहणं न भवतीति दर्शयति, एतदपि व्याख्यानादेव। व्यध ताडने, स्रु गतौ आङ्पूर्वः संपूर्वश्च, इण् गतौ अतिपूर्वः, षोऽन्तकर्मणि, हृञ् हरणे अवपूर्वो, लिह आस्वादने, श्लिष आलिङ्गने, श्वस प्राणने, येत्र सोपसर्गास्तेभ्यः सोपसर्गेभ्य एव भवति शेषेभ्यस्त्वविशेषेण। 'बाधकबाधनार्थमिति'। 'आतश्चोपसर्गे' इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकस्तद्बाधनार्थमिदम्, एतेनावस्यतेरुपादानं व्याख्यातम्। 'अवश्याय इति'। पूर्ववद्युक्॥

"दुन्योरनुपसर्गे"॥ 'दाव इति'। वनवह्निः। कथन्तत्रैव दव इति, नयतिसाहचर्यात्सानुबन्धकस्य दुनोतेरिह ग्रहणं निरनुबन्धकाद्द्रवतेः पचाद्यचि भविष्यति, करणसाधनो वा 'ऋदोरबि'त्यबन्तः॥

"विभाषा ग्रहः"॥ 'व्यवस्थितविभाषा चेयमिति'। एतदेव स्पष्टयति। 'जलचरइति'। 'भव इति'। भवत्येव न तु कदा चिन्न भवतीति भवो देवः संसारश्च भावाः पदार्थाः॥

"गेहे कः"॥ 'गेहइति'। प्रत्ययार्थस्य कर्तुर्विशेषणं नोपपदं गृहपतिना संयुक्तइति निर्देशादित्याह। 'गेहे कर्त्तरीति'। 'तात्स्थ्याद्वा- राश्चेति'। गेहमित्यपेक्ष्यते तेन गौणस्यापि गेहस्य ग्रहणमिति दर्शयति,तच्च तन्त्रावृत्त्योरन्यतराश्रयणेन लभ्यते तत्र वेश्मनि पुल्लिङ्गबहुवचनान्त एव गृहान्द दाहुको भवति, गृहानुत्तरया संकाशयते, गृहान्गच्छ, गृहपत्नी गृहानहं सुमनसः प्रपद्यइति, नपुंसकलिङ्गोभिधेयवचनः, एवं दारेष्वपि, अन्ये तु गृहशब्दो वेश्मन्येव मुख्यः, दारेषु गौण इति वदन्ति, तथा न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यतइति वेश्मन्येव मुख्यतां दर्शयन्ति, यथा वृत्तिकारेणोक्तं तथा दारेष्वपि मुख्य एवेति लक्ष्यते॥

"शिल्पिनि ष्वुन्"॥ पूर्वेण साहचर्यात् शिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणवोपपदमित्याह। 'शिल्पिनि कर्त्तरीति'। क्रियासु कौशलं शिल्पं तद्यस्यास्तीति शिल्पी। 'नृतिखनीत्यादि'। एतद्वचनमेव, तेनाह्वाता आह्वायक इत्यादौ न भवति। 'रञ्जेरनुनासिकलोपश्चेति'। एतत्तु ज्ञापका-

त्सिद्धं यदयं 'जनीजृष्क्नसुरञ्जोऽमन्ताश्चे'ति मित्संज्ञां शास्ति तज्ज्ञापयति रञ्जेरक्वित्यप्यनुनासिकलोपो भवतीति ॥

"गस्थकन्" ॥ 'गायतेरिति'। कै गै शब्दे, गामादाग्रहणेष्वविशेष इति गाङ्गतावित्यस्यापि ग्रहणं प्राप्तम्, अनभिधानान्न भवति थकन्प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थः ॥

"ण्युट् च" ॥ णकारो युगर्थः, टकारो ङीबर्थः। 'योगविभाग उत्तरार्थ इति'। उत्तरत्र ण्युट एवानुवृत्तिर्यथा स्यात् थकनो मा भूदिति ॥

"हश्च व्रीहिकालयोः"॥ 'जहातेरिति'। ओहाक् त्यागे। 'जिहातेरिति'। ओहाङ्गतौ, प्रायेण जिहीतेरिति पाठः स त्वयुक्तश्लिपः पित्वादीत्वाभावात्, जहातेः ककारोऽत्र सामान्यग्रहणार्थः, अन्यथा एकानुबन्धकत्वादस्यैव स्यात्, अथ हाङ इत्युच्येत एवमपि तस्य ग्रहणं न स्यात् तस्माद् द्वयोरपि ग्रहणम्। व्रीहिकालयोरिति कर्तुर्विशेषणञ्चोपपदं त्रिचतुर्भ्यां हायनस्य 'दामहायनान्ताच्चे'ति वचनादिति मत्वाह। 'व्रीहौ काले च कर्त्तरीति'। 'जहत्युदकमिति कृत्वेति'। व्रीहौ हायनशब्दस्य प्रवृत्तिनिमित्तं दर्शितं, जाङ्गलदेशोद्भवाः केचिद् व्रीहयो हायना इत्याहुः। 'जिहीते भावानिति'। भावाः पदार्थास्तान् जिहीते गच्छति परिच्छेदकत्वेन व्याप्नोतीत्यर्थः ॥

"प्रुसृल्वः समभिहारे वुन्" ॥ प्रुसृल्व इति पञ्चम्याः स्थाने जस्, 'ओस्सुपी'ति यणादेशः। 'साधुकारित्वं लक्ष्यतइति'। प्रायः सहचरितत्वात् पुनःपुनरनुष्ठानं समभिहारः, यश्च यां क्रियां पुनःपुनरनुतिष्ठति तस्य तत्र प्रायेण कौशलमुपजायते ऽतः प्रायः साहचर्यात्साधुकारित्वं लक्ष्यते, लक्षणया तत्र वर्त्ततइत्यर्थः, तेन किं सिद्धं भवतीत्याह। 'सकृदपीति' ॥

"आशिषि च" ॥ 'आशिषि गम्यमानायामिति'। न वाच्यायां 'कर्त्तरि कृदि'ति कर्त्तुरेव वाच्यत्वात्। 'प्रार्थनाविशेष इति'। अप्राप्तस्याभिलषितस्य प्राप्तुमिच्छा प्रार्थना आशीः। 'स चेत्क्रियाविषय इति'। धातोरित्यधिकाराद् धातोश्च क्रियावचनत्वात्। 'अमुष्याः क्रियाया

इति'। जीवनादिकायाः, अनेन प्रयोक्तृधर्मत्वमाशिषो दर्शयति। 'जीवतादिति'। आशिषि लोट्प्रयोगेणोदाहरणे आशिषं दर्शयति॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयस्याध्यायस्य प्रथमः पादः॥

"कर्मण्यण्"॥ कर्मणीति नेदं स्वरूपग्रहणमशब्दसञ्ज्ञेति प्रतिषेधात्, ननु चार्थस्येयं सञ्ज्ञा न शब्दस्य, अशब्दसञ्ज्ञेति नैवं विज्ञायते शब्दस्य सञ्ज्ञा शब्दसञ्ज्ञेति किन्तर्हि शब्दे सञ्ज्ञा शब्दसञ्ज्ञेति, शब्दशब्देन शब्दानामनुशासनं व्याकरणमुच्यते, अमति च बाधे कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणं युक्तं तस्मात्पारिभाषिकस्य कर्मणो ग्रहणमङ्गीकृत्य तस्यावान्तरभेदमाह। 'त्रिविधं कर्मेति'। ता एव तिस्रो विधा दर्शयति। 'निर्वर्त्यं विकार्यं प्राप्यं चेति'। यदसज्जायते सद्वा जन्मना यत्प्रकाशते तन्निर्वर्त्यं, यथा कुम्भं करोति पुत्रं प्रसूतइति, यस्य तु सत एव कश्चिद्विकारः क्रियते तद्विकार्यं, स च विकारः क्वचित्प्रत्यक्षगम्यः, यथा काष्ठानि भस्म करोति, सुवर्णं कुण्डलङ्करोतीति, क्वचिच्छास्त्रगम्यो व्रीहीन् प्रोक्षतीति, अत्र प्रोक्षणेन व्रीहिषु कश्चिदतिशयो जन्यतइति शास्त्रादेव गम्यते, एतावता च भेदेन संस्कार्यमेतत्कर्मेति चातुर्विध्यं मीमांसका मन्यन्ते, क्रियाकृतविशेषाभावे तु प्राप्यं कर्म, यथा वेदमधीते चर्चां पारयतीति, ननु च कर्तुरीप्सिततममित्येतदेव कर्म त्रिविधं, अन्यदप्यस्ति 'तथायुक्तं चानीप्सित'मिति तच्च द्विविधं द्वेष्यमितरच्च, तथा 'अकथितं च' एवं 'दिवः कर्म च' तथा 'अधिशीङ्स्थासां कर्मेति' तदेवमवान्तरभेदविवक्षायां सप्तविधं कर्म। उक्तं च

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तत्रेप्सिततमं कर्म चतुर्द्धान्यत्तु सञ्ज्ञितम्॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम्।
सञ्ज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्॥

इति। तत्किमुच्यते त्रिविधं कर्मेति। केचिदाहुः कर्तुरीप्सिततममेवात्र कर्म गृह्यते ऽन्यत्राण् न भवतीति, अन्ये त्वाहुः। आदित्यं पश्यता-

त्यादौ मा भूदित्येवमर्थं कर्मणि निर्वर्त्यमाने विक्रियमाणइति वक्तव्यमित्याशङ्क्य वार्त्तिककारेणोक्तं कर्मणि निर्वर्त्यमाने विक्रियमाणइति चेद्दुदाख्यानानामुपसंख्यानमित्यादि तदनेन प्रदर्श्यते, त्रिविधमपि कर्म गृह्यते न पुनः प्राप्यं न गृह्यतइति न तु सूत्रान्तरोक्तं व्यावर्त्यते, तथा च 'दिवः कर्म चे' त्यत्र समावेशस्य प्रयोजनमुक्तं मनसा देव इत्यत्र कर्मत्वादण्प्रसङ्गेत्वात्तृतीयेति, एवं च वृत्तावासः पर्वताधिवास इत्यादावपि यथादर्शनं भवतीति। 'अनभिधानादिति'। तच्चानभिधानं यत्रास्तिरुक्तं तत्रैवान्यत्र तु यथालक्षणं भवत्येव, तथा च पठति यथालक्षणमप्रयुक्तइति। 'शीलिकामीत्यादि'। शील समाधौ, भक्ष अदने चुरादिः, कमु कान्तौ णिङन्तः, चर गत्यर्थ आङ्पूर्वः, णस्य णित्करणं चरेर्वृद्ध्यर्थम्। 'पूर्वपदप्रकृतिस्वरत्वं चेति'। कृदुत्तरपदप्रकृतिस्वरस्यापवादः। 'मांसशीलेति'। अत्राणि सति ङीप्स्यात्, णोपि क्वचिदणुक्तं भवतीत्येतत्तु ताच्छीलिकएव णे भवति मनेर्दीर्घश्चेति सप्रत्ययान्तो मांसशब्दः, कल्याणशब्दो लघावन्ते द्वयोश्च बहुषो गुरुरिति मध्योदात्तः। अस्यायमर्थ, अन्ते लघौ परतो द्वयोश्चान्तयोर्लघ्वोः परतो बहुषः शब्दस्य यो गुरुः स उदात्तो भवति, बहुष इति बहुच इत्यर्थः, अपित्यचः पूर्व चायं तज्ञा। 'ईक्षिक्षमिभ्यां चेति'। अत्रापि पूर्वपदप्रकृतिस्वरत्वं चेत्येव वाक्यभेदस्तु वैचित्र्यार्थः। इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति तत्र भक्षयतेः कर्मण्यरजन्तस्य बहुव्रीहिणा सिद्धम्, एवमन्यत्रापि, यः पुनरण्यन्तस्तस्य घञन्तस्य बहुव्रीहिर्नार्थ एतेन, ननु बहुभक्ष इत्यत्र बहोर्नञ्वदित्युत्तरपदान्तोदात्तत्वं प्राप्नोति एवं तर्हि भावेऽजन्तेन व्यधिकरणपदो बहुव्रीहिर्भविष्यति बहु! भक्षोस्य बहुभक्ष इति, तत्रोत्तरपदार्थस्य बहुत्वाभावाद्बहुस्वरो न भविष्यति, सत्यम्, अणाबाधनार्थं तु वचनम् अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन। पचादिभ्योऽज् अनुपपदोकारस्तस्यावकाशः पचतीति पचः,कर्मोपपदस्यावकाशः काण्डलावः शरलावः, ओदनपाव इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति तेनोपधावृद्धिरुपपदसमासश्च नित्यो भवति अचि तु षष्ठीसमासो विकल्पितस्स्यात्, न च वाच्यं युगपद्विवक्षायां भवतु विप्रतिषेधः केवले

पच्यर्थे विवक्षिते ऽचि कृते पश्चादोदनसम्बन्धे विवक्षिते चौदनपच इत्यपि
प्राप्नोति एकत्वात्प्रयोगस्य नहि तस्मिन्नेव प्रयोगे विवक्षितं चाविवक्षितं
च कर्म भवति तस्मादोदनपच इत्यसाधुरेव, गङ्गाधरः श्रीधरः वज्रधरः
भूधरः स्रग्धरेति तु सञ्ज्ञाशब्दाः, यदा त्वजपि सर्वधातुभ्य इति पचस्त-
दापवादत्वादेव तस्याण् बाधकः, तथा 'इगुपधज्ञाप्रीकिरः कः' अनुपपद-
स्तस्यावकाशः विक्षिपः विलिखः कर्मोपपदस्य स एव, काष्ठभेद इत्यत्रो-
भयप्रसङ्गे परत्वादयमेवाण् भवति, तथा ऽनुपसर्गाल्लिम्पविन्देत्यनुपपदः
शस्तस्यावकाशो लिम्पतीति लिम्पः कर्मोपपदस्य स एव, कुड्यलेप
इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति 'आतश्चोपसर्गे' इति कोनु
पपदस्तस्यावकाशः सुग्लः सुम्लः कर्मोपपदस्य स एव, गोसन्दाय इत्यत्रो-
भयप्रसङ्गे परत्वादयमेवाण् भवति ॥

"ह्वावामश्च" ॥ 'वेञ् तन्तुसन्ताने इति'। वा गतिगन्धनयोरित्यस्य
ग्रहणं न भवति अकर्मकत्वात् भ्रमणार्थो ह्यसौ, सर्वा दिश आवाति
वात आवातु भेषजमिति सोपसर्गस्य तु सकर्मकत्वेऽप्यग्रहणं पूर्वेणैवाणः
सिद्धत्वात्, वाता वान्ति दिशो दशेति प्रयोगश्चिन्त्यः, अथापि क्वचित्कथं
चित्सकर्मकत्वं तथापि ह्वेञा साहचर्यात्सानुबन्धकस्यैव वेञो ग्रहणम् ।
'माङ् माने इति'। ङितो माङ्रूपस्योपलक्षणमेतत्, तेन मेङ् प्रणिदाने इत्य-
स्यापि ग्रहणं, मा माने इत्यस्य तु संभवनार्थस्याकर्मकत्वादग्रहणम् ।

"आतोनुपसर्गे कः" ॥ कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः,
संप्रसारणभाजः प्रसारणिनः, ज्या वयोहानौ, ब्रह्म जिनातीति ब्रह्मज्यः,
सर्वत्रग्रहणाच्चावश्यमिहैव 'आतश्चोपसर्गे' आह्वः प्रह्वः, के हि संप्रसा-
रणप्रसङ्गः, आह्व अ इति स्थिते संप्रसारणे पूर्वत्वे च कृते उवङादेशे
आहुवः प्रहुव इति प्राप्नोति एवं ब्रह्मजिय इति प्राप्नोति, ननु संप्रसारणे
कृते आतो लोपस्तस्य स्थानिवद्भावादियङुवङौ न भविष्यतः, लोपो न
सिद्ध्यति अन्तरङ्गत्वात्पूर्वत्वं प्राप्नोति समानाश्रये च वार्णादाङ्गं बलीय
इति एवन्तर्हि प्रागेव संप्रसारणादातो लोपो भविष्यति परत्वाद् नित्यं
संप्रसारणं कृताकृतप्रसङ्गित्वात्, आतो लोपस्त्वनित्यः कृते संप्रसारणे

पूर्वत्वेन बाध्यते यस्य च निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यं तदेवं परत्वादातो लोपस्ततः संप्रसारणं तत इयङुवङो प्रसक्तावाल्लोपस्य स्थानिवत्त्वान्न भविष्यतः, ननु योनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भाव आदिष्टाच्चैवोचः पूर्वे इदानीमेव ह्युक्तं पूर्वमल्लोपः पश्चात्संप्रसारणमिति एवं तर्ह्याकारलोपस्यासिद्धत्वादुवङ् न भविष्यति, इहापि तर्हि जुहुवतुः जुहुवुः, आल्लोपस्यासिद्धत्वादुवङ् प्राप्नोति आभीयमसिद्धत्वमनित्यमित्यत्र न भविष्यति, अथ वा संप्रसारणाच्च एङः पदान्तादित्यत्र एङ इति योगविभागः संप्रसारणादेङि परतः पूर्वपरयोः पूर्वमेकादेशो भवतीति, किमर्थमिदं, न संप्रसारणाच्चेत्येव सिद्धं, ज्ञापनार्थं, यत्र संप्रसारणात्पर एङ् संभवति तथा 'दैच उपदेशेऽशिती' त्यात्वं न भवतीति, यदि स्यात्पूर्वत्वेन तस्य निवृत्तिविधानमनुपपन्नं स्यात् तेन जुहुवतुरित्यत्रानैमित्तिकत्वेनान्तरङ्गमप्यात्वमकृत्वा एङभावादेव लिटि विहिते संप्रसारणे पूर्वत्वे न स्थानिवत्त्वं नासिद्धत्वमिति सिद्धमिष्टम्, आहुःप्रहुः इत्यत्र त्वाकारान्तलक्षणः प्रत्ययो नासत्यात्वे भवितुमर्हतीति पूर्वमात्वन्ततः प्रत्ययः, आल्लोपः संप्रसारणम्, असिद्धत्वादियङुवङोरभावः ॥

"सुपि स्थः" ॥ सुपीति न सप्तमीबहुवचनस्य ग्रहणं किन्तर्हि प्रत्याहारस्य 'सुप्तिङन्तं पदम्' 'सुप आत्मनः क्यच्' 'सुपो धातुप्रातिपदिकयोः' 'अत्र्यादाप्सुप' इत्यादौ तस्यैव प्रसिद्धत्वात्। 'द्वाभ्यां पिबतीति'। ननु रूढिशब्दा द्विपादयस्ततश्चासन्तमप्यवयवार्थमाश्रित्य कर्मोपपदएव कः करिष्यते, नैतदेवं, द्वाभ्यां पिबतीत्यादेरवयवार्थस्य सम्भवतोपरित्यागेनैव व्युत्पत्तौ सम्भवत्यामस्याः कल्पनाया अयुक्तत्वात्, यत्र त्वत्यन्तमसम्भवो युक्ता तत्रैव सा कल्पना यथा तैलपायिकादौ। 'अनेन भावे यथा स्यादिति'। आरम्भसामर्थ्यात्तावदयं कर्तुरपकृष्यते न चान्योऽर्थो निर्दिश्यते, अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति स्वार्थश्च धातूनां भाव एव। ननु घञर्थे कविधानमिति भावे कः सिद्धः, सत्यं, नित्यसमासार्थन्तु वचनम् अन्यथा पाक्षिकः षष्ठीसमासः स्याद् नित्य एव तूपपदस-

मासो भवति तथा चाखूनामुत्थानमित्यस्वपदेन विग्रहः कृतः, घञर्थे कविधानमित्यत्र स्थाग्रहणं कर्तृवर्जिते कारकेपि यथा स्यादिति ॥

"तुन्दशोकयोः परिमृजापनुदोः"॥ 'तुन्दपरिमृज इति'। मृजेरजादौ संक्रमइत्यत्र यस्मिन्विधिस्तदादावित्येव सिद्धे आदिग्रहणं मुख्याजादिपरिग्रहार्थं तेन व्यपदेशिवद्भावेनाजादावत्र के वृद्धिर्न भवति। 'आलस्यइत्यादि'। आलस्ये गम्यमाने सुखोत्पादने च प्रत्यय इत्यर्थः, तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाहर्तरि प्रत्ययो भवतीत्युक्तं भवति। 'शोकापनोद एवान्य इति'। यस्संसारानित्यताद्युपदेशेन शोकमेव केवलमपनुदति न तु सुखमुत्पादयति स शोकापनोदः। 'मूलविभुजादिभ्य इति'। तादर्थ्यएषा चतुर्थी मूलविभुजादिसिद्ध्यर्थमित्यर्थः, आकृतिगणश्चायन्तेन महीध्रकुध्रशिरोरुहादि सिद्धं भवति। 'काकगुहा इति'। काकेभ्यो गूहितव्या इति कर्मणि कप्रत्यय इष्यते, अतो घञर्थे कविधानमित्यत्रेदं द्रष्टव्यम् ॥

"प्रे दाज्ञः"॥ 'ददातेरिति'। उपलक्षणमेतत्, गामादाग्रहणेष्वविशेष इति सर्वेषामेव दारूपाणां ग्रहणमिष्यते। 'जानातेश्चेति'। जनेस्त्वल्लोपेनायचिर्देशो न भवति 'खनो घ च' 'हनश्च वध' इत्यादौ धातुनिर्देशे ऽल्लोपस्याकरणात्। 'प्रेणोपसृष्टादिति'। प्रशब्देनोपसर्गेण सम्बद्धादित्यर्थः, अनुपसर्गइति चानुवर्त्तते, तेन केवलेन प्रेणोपसृष्टादित्यर्थः, ततश्च गोसम्प्रदाय इत्यणेव भवति ॥

"गापोष्टक्"॥ 'गायतेरिति'। गामादाग्रहणेष्वविशेष इति गाङो लुग्विकरणस्यापि ग्रहणं प्राप्तं पिबतिसाहचर्यात्तु न भवति। 'सामगीति'। टकः कित्त्वादातो लोपः, टित्वान् ङीप्। सुराशीध्वोः पिबतेरिति वक्तव्यमित्यत्र पिबतेरिति लुग्विकरणालुग्विकरणपरिभाषालभ्यस्यैवार्थस्य कथनमुपपदपरिगणनं तु वाचनिकमेव। 'क्षीरपेति'। स्त्रियामेव विशेषात् स्त्रीलिङ्गमुदाहृतम् ॥

"हरतेरनुद्यमनेऽच्"॥ 'अच्प्रकरणइति'। लिङ्गविशिष्टपरिभाषयैव घटग्रहणेन घटीग्रहणेपि सिद्धे घटीग्रहणं परिभाषाया अनित्य-

त्वज्ञापनार्थम् । 'सूत्रग्राह एवान्य इति' । यस्सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव भवतीत्यर्थः ॥

"वयसि च" ॥ 'संभाव्यमानं वेति' । तेनासत्यपि कवचग्रहणे वयसि गम्यमाने कवचहर इति भवतीति भावः ॥

"आङि ताच्छील्ये" ॥ पुष्पाद्याहरणइत्यादिना ताच्छील्यमुदाहरणे दर्शयति । 'स्वाभाविकीति'। स्वभावे भवा स्वाभाविकी, अध्यात्मादिः । स्वशब्दो द्वारादिषु पठ्यते तदादिविधिश्च तत्रेष्यते भाष्यकारप्रयोगात्तु द्वारादिकार्याभावः स्वार्थिकस्वाभाविकशब्दौ भाष्ये प्रयुक्तौ अस्य विवरणं 'फलानपेक्षेति,' कथंपुनःफलमनपेक्ष्य तत्र प्रवर्त्तते न हि स्वभावः पर्यनुयोगमर्हति ॥

"स्तम्बकर्णयोरमिजपोः" ॥ 'रमेरकर्मकत्वादिति' । ननु 'व्याङ्परिभ्यो रमः' 'उपाच्चे'त्यत्रोदाहृतं देवदत्तमुपरमतीति, एवं मन्यते अनुपसर्गइति वर्त्तत इति । 'जपेश्च शब्दकर्मकत्वादिति' । मन्त्रं जपतीत्यादौ तत्रैव प्रयोगदर्शनात् । 'कर्म न संभवतीति' । केवलस्य रमेर्जपेश्च कर्णाख्यशब्दात्मकमिति भावः। सूचकः पिशुनः। 'स्तम्बेरम इति' । 'तत्पुरुषे कृति बहुल' मित्यलुक् । 'कर्णे जपिता मशक इति' । उपांशुशब्दायितेत्यर्थः ॥

"शमिधातोः संज्ञायाम्" । 'धातुमात्रादिति' । मात्रग्रहणेनापवादविषयेपि विधानं भवतीति दर्शयति । 'शङ्कर इति' । ऐहिकमामुष्मिकं मोक्षाख्यं च सुखं करोतीति शङ्करः। धातुग्रहणस्य प्रयोजनं दर्शयन्मात्रग्रहणप्रतिपादितमेवार्थं स्पष्टीकरोति । 'शमिसंज्ञायामिति'। अस्मिन्सूत्रइत्यर्थः । असति धातुग्रहणे शमिसंज्ञायामित्यस्यावकाशः शम्भवः, शम्वदइति कृञो हेतुताच्छील्यइत्यस्यावकाशः श्राद्धकरइति, शङ्करा इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्याद् धातुग्रहणसामर्थ्यादजेव भवति । कुणडवाडवस्त्वाचार्यो मन्यते शृणातेः शब्दकर्मण एतद्रूपं पृषो.दरादित्वान्नकारस्य ककारइति तन्मते धातुग्रहणं चिन्त्यप्रयोजनम् ॥

"अधिकरणे शेतेः" ॥ 'पार्श्वादिष्विति'। अनधिकरणार्थमिदं तद्विग्रहेण दर्शयति । 'पार्श्वाभ्यामिति' । 'दिग्धसहशयइति' । दिग्धेन सह शेतइत्यचि कृते मयूरव्यंसकादित्वात्समासः दिग्धसहशब्दो मयूरव्यंसकादिस्तस्योपपदसमासः । 'अवमूर्द्धशयइति' । अवनतो मूर्द्धा यस्य अवमूर्द्धा अधोमुखः शेतइत्यर्थः । 'गिरौ डश्छन्दसीति' । यदि छन्दसीत्युच्यते कथं गिरिशमुपचचार प्रत्यहं सा सुकेशी, अलेपितं यद्गिरिशेन पश्चादिति निरंकुशाः कवयः । अन्ये त्वाहुः, इह यो गिरौ शेते गिरिस्तस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः तथा चात्रैव वार्त्तिके तद्धितो वेति, न च लोमादिष्वपि छन्दोग्रहणमस्ति तेन भाषायामपि गिरिश इति भवति एवं च कृत्वा निघण्टुषु पाठोप्युपपन्नो भवति । 'गिरौशेतइति' । गिरावास्तइत्यर्थः ॥

"भिक्षासेनादायेषु च" ॥ 'भिक्षाचर इति' । चरतिरत्र तत्पूर्वके अर्ज्जने वर्त्तते चरणेन भिक्षामर्जयतीत्यर्थः । 'सेनाचरइति' । सेनां प्रविशन्नुच्यते । 'आदायचर इति' । आदाय गच्छतीत्यर्थः, भक्षयतीति वा । कथं सहचरः सहचरीति पचादिषु चरडिति पठ्यते सुप्सुपेति समासः ॥

"पुरोग्रतोग्रेषु सर्त्तेः" ॥ 'अग्रे इत्येतेष्विति' । एतेनाग्रशब्दस्यैकारान्तत्वं निपात्यतइति दर्शयति एतच्चाग्रेशब्दस्य परनिपातनादेव विज्ञायते ऽन्यथा ऽजाद्यदन्तमिति पूर्वनिपातः स्यात् किमयं पुनरेकारान्तत्वं निपात्यते यावता सप्तम्या अलुकाप्यग्रेसरइति सिद्धं यदा तर्ह्ययं सरति अग्रेण सरतीति वा विगृह्यते तदाप्यग्रेसर इत्येव यथा स्यात् । कथं यूयं तदग्रसरगर्वितकृष्णसारमिति, । 'कृत्यल्युटो बहुलमि' ति समर्थनीयम् ॥

"कृञो हेतुताच्छील्यानुलोम्येषु" ॥ 'करोतेर्द्धातोरिति' । प्रसिद्धतरत्वाद्ग्रनुबन्धकस्याप्यस्यैव ग्रहणञ्च तु कृञ् हिंसायामित्यस्येति भावः, 'आनुलोम्ये च गम्यमानइति' । एतेन हेत्वादीनि नोपपदानीति दर्शयति, एतच्च शमिधातोरित्यत्र धातुग्रहणात्कृञो हेत्वादिषु टप्रतिषेधार्थाद्विज्ञायते उपपदत्वे हि शम्युपपदे टप्रत्ययस्य प्राप्त्यभावादनर्थकं तत्स्याद् अतो नैषामुपपदत्वं नापि प्रत्ययार्थत्वं 'कर्त्तरि कृदि' त्यस्य बाधप्रस-

ङ्गात्, न चासति विरोधे बाधा युक्ता । 'हेतुरैकान्तिकं कारणमिति' । एकान्तशब्दो विनयादिषु द्रष्टव्यः, नियतमव्यभिचारीत्यर्थः, एतेन लौकिकस्य हेतोर्ग्रहणमिति दर्शयति, नहि केवले कृत्रिमे प्रयोजककर्त्ता सम्भवतीति भावः । ननु लौकिकेनापि हेतुना कर्त्तुर्विशेषणमयुक्तम्, अव्यभिचारात्, नहि कर्त्तुरनिमित्तत्वमस्ति सत्यं, पुनर्हेतुशब्दोपादानदैकान्तिकत्वमाश्रीयते ऽन्यथा निमित्तमात्रमुपादीयेत। अनुकूलता आराध्यचित्तानुवर्त्तनम् । 'यशस्करी विद्येति' । अतः कृकमीत्यादिना विसर्जनीयस्य सत्वम् ॥

"दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" ॥ 'यथायोगमिति' । तत्र दिवाशब्दो ऽन्हीति सप्तम्यन्तस्यार्थे वर्त्तत इति तस्य कर्मत्वानुपपत्तेः सुपीत्यनेनाभिसम्बन्धः शेषाणां तु कर्मणीत्यनेन, यदि तु दोषामन्यमहर्दिवामन्या रात्रिरितिवद्वृत्तिविषये कर्मत्वमभ्युपगम्येत तदा दिवाशब्दस्यापि कर्मणीत्यनेन संबन्धः । 'सकारस्येति' । भास्करान्तेति भाशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते तस्माद्भास्कर इत्यत्र विसर्जनीयजिह्वामूलीयौ न भवतः, अथ वा सकारस्य विसर्जनीयजिह्वामूलीयौ न भवतः कुतः निपातनात् । भास्करान्तेति सूत्रे सकारोच्चारणमेव निपातनम् । 'कारकर इति' । कर एव कारः प्रज्ञादित्वात्स्वार्थेऽण्, 'अनन्तकर इति' । अन्तकरशब्देन नञ्समासेऽप्येतद्रूपं सम्भवति स्वरे हि दोषः स्यात् सतिशिष्टोऽव्ययपूर्वपदप्रकृतिस्वरः प्रसज्येत इष्यते हि गतिकारकोपपदात्कृदितिकृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। 'बहुकर इति'। बहुशब्दो वैपुल्यवचनः,संख्यावचनस्य तु संख्याग्रहणेनैव सिद्धम्,लिपिलिबिशब्दौ पर्यायौ। 'अहस्कर इति' । अहन् रोऽसुपीति रेफः पूर्ववत्सत्वम्। 'धनुष्करः अरुष्कर इति' । 'नित्यं समासेऽनुत्तरपदस्थस्ये' ति षत्वम्, कियत्तद्बहुषु कृञोऽज्विधानमिति वार्त्तिकेन सूत्रस्य बाधितत्वाट्टस्याभावाद्वेत्वादिष्वन्यत्र किंकरीत्यसाधुरित्याहुः । क्वचिद्वन्यः । अथ वा पचादिषु पाठः करिष्यत इति । तत्रायमर्थः इह किमादिग्रहणमपनीय पचादिष्वेव कियत्तद्बहुषु कृञ इति पठितव्यमिति ॥

"कर्मणि भृतौ" ॥ 'कर्मणीति' । 'स्वरूपग्रहणमिति' । अनुवृत्तेन कर्मणीत्यनेन विशेषणात् । 'कर्मनिर्वेश इति' । कर्म क्रिया तस्य निष्क्रयाय देयं भक्तादिद्रव्यमित्यर्थः ॥

"स्तम्बशकृतोरिन्" ॥ 'स्तम्बकरिरिति' । नित्त्वात्कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तं भवति ॥

"हरतेर्दृतिनाथयोः पशौ" ॥ 'पशौ कर्त्तरीति' । एतेन प्रत्ययार्थस्य कर्त्तुः पशुर्विशेषणं न तु तस्य बाधक इति दर्शयति । धातोर्हि प्रत्ययविधानात्तदर्थस्य येन सम्बन्धस्तत्र वाच्ये प्रत्ययो भवितुमर्हति धात्वर्थस्य च क्रियायाः साधनेन संबन्धः पशुशब्दस्तु चतुष्पाज्जातीयं वस्तुस्वरूपेणाचष्टे न शक्तिमद्रूपेण नतरां शक्तिरूपेणेति न पश्वर्थः स्वरूपेण प्रत्ययार्थो भवितुमर्हतीति युक्तमुक्तं पशौ कर्त्तरीति, एवं सर्वत्र प्रत्ययार्थविशेषणं द्रष्टव्यम् ॥

"फलेग्रहिरात्मम्भरिश्च" ॥ 'उपपदस्यैकारान्तत्वमिति' । छन्दस्यकारान्तत्वमपि दृश्यते या वनस्पतीनां फलग्रहिरिति, स कुक्षिम्भरिवच्चकारेण समुच्चेतव्यः ॥

"छन्दसि वनसनरक्षिमथाम्" ॥ 'वनषणसंभक्ताविति' । गणेनहपठितयोर्भ्वादिकयोरेव ग्रहणं न तु वनु याचने षणु दाने इति तानादिकयोरिति भावः । अत्र साहचर्यमेव हेतुः, निरनुबन्धकत्वं च । 'ब्रह्मवनिमिति' । ब्रह्म वनति तत्र वनतीति विवक्षायामिन् प्रत्ययस्तदन्ताद्द्वितीयैकवचनम् । 'गोसनिमिति' । गां सनतीति विग्रहः । 'पथिरक्षी इति' । पन्थानं रक्षते इति विग्रहः । हविर्मथ्नन्तीति हविर्मथयस्तेषां हविर्मथीनाम् ॥

"एजेः खश्" ॥ 'ण्यन्तादिति' । एजेस्त्वयमिकानिर्देशो न भवति खशः शित्करणात् तद्धि सार्वधातुकत्वे सति शब्यथा स्यादिति, न चैजेः प्रकृत्यन्तस्य शपि सत्यसति वा विशेषोऽस्ति न चैवमिहार्थत्वे सम्भवति केवलोत्तरार्थत्वं युक्तम् । 'खित्करणं मुमर्थमिति' । खित्कार्योपलक्षणमेतत् शुनिन्धयः नाडिन्धयः नासिकन्धय इति ह्रस्वत्वमपि प्रयोजनम् । 'शकारः

सार्वधातुकार्थ इति'। सार्वधातुकसंज्ञार्थ इत्यर्थः। 'वातशुनीत्यादि'। वातादिषु यथासंख्यमुपपदेषु अजादिभ्यो धातुभ्यः खश् प्रत्ययो भवति। 'शर्द्धंजहा इति'। ओहाक् त्यागे जुहोत्यादित्वाच्छपः श्लौ द्विर्वचने 'श्नाभ्यस्तयोरात' इत्याकारलोपः॥

"नासिकास्तनयोर्ध्माधेटोः" ॥ 'नासिकन्धम इति'। पाघ्रादिसूत्रेण धमादेशः। तच्चैतदित्यादिना यथासंख्याभावे हेतुमाह, तच्चैतत् यथासंख्याभावलक्षणं कार्यम् एतेन च व्याख्यातॄणां मूलत्वेन सूत्रकारस्याप्यत्र किंचिदभिप्रेतमित्येतावत्प्रदर्श्यते तेनैतच्चनोदनीयमुत्तरसूत्रवत्प्रत्येकमभिसम्बन्धः कस्मान्न भवति विपर्ययो वा कस्मान्न भवतीति। 'स्तनन्धयतीति'। अत्रैव ङीबिष्यते नान्यत्रेत्याहुः॥

"नाडीमुष्ट्योश्च" ॥ 'घटिन्धमः खरिन्धमइति'। घटी घटः खरीगर्द्दभी जातिलक्षणो ङीष्, खारीत्यन्ये पठन्ति स च परिमाणवचनः। वातशब्दो न दृष्टः॥

"उदि कूले रुजिवहोः" ॥ यत्र प्रत्येकमुपपदत्वमिच्छति तत्र समुदायात्सप्तमीमुच्चारयति यथा नाडीमुष्ट्योरिति इह तु विपर्ययः कृतः तस्मादुदीति सत्सप्तमी कूलइति त्वर्थेनिरपेक्षैवोपपदसंज्ञायां लिङ्गं तत्र च 'ते प्राग्धातो'रिति उच्छब्दस्य धातोः प्राक् प्रयोगः, ततः पूर्वः कूलशब्दः तदेतद्दर्शितमुत्पूर्वाभ्यां कूले कर्मण्युपपदइति॥

"परिमाणे पचः" ॥ परिमाणशब्दः काष्ठादिनिर्मिते प्रस्थादौ वर्त्तते न तस्य विक्लित्तिवाचिना पचिना कर्मत्वेनान्वयः। अतो न स्वरूपग्रहणं किं तर्हि तद्विशेषाः प्रस्थादयो गृह्यन्ते ते च परिमाणे परिमेये व्रीह्यादौ च वर्त्तन्ते तत्र परिमाणनिष्ठानां न पचिनान्वय इति परिमेयनिष्ठेभ्यः प्रत्ययः। न तर्हि परिमाणवाचित्वम्, न परिमाणाध्यारोपेण परिमेये प्रस्थादिशब्दस्य प्रवृत्तेः॥

"मितनखे च" ॥ 'नखंपचेति'। पचिरत्रातापवचनः॥

"विध्वरुषोस्तुदः" ॥ 'अरुन्तुद इति'। 'अरुर्द्विषदजन्तस्य मुमि' ति उकारात्परो मुम् संयोगान्तस्य लोपः॥

"असूर्यललाटयोर्दृशितपोः" ॥ 'असूर्यंपश्या इति'। पाघ्रादिसूत्रेण पश्यादेशः । 'गुप्तिपरं चैतदिति'। यद्वचनम् असूर्यंपश्या राजदारा इति एतद्गुप्तिप्रधानं, तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुद्ध्यतइति भावः, गुप्तिपरत्वमेव प्रकटयति । 'एवं नामेति' ॥

"उग्रंपश्येरम्मदपाणिन्धमाश्च" ॥ 'उग्रं पश्यतीति'। क्रियाविशेषणमेतत् । 'इरम्मद इति'। मदी हर्षे दिवादित्वाच्छ्यनि प्राप्ते तदभावो निपातनात्, इरा उदकम् । 'पाणिन्धमाः पन्थान इति'। ते पुनर्येषु गच्छद्भिः सर्पाद्यपनोदनाय पाणयो ध्मायन्ते शब्द्यन्ते ॥

"प्रियवशे वदः खच्" ॥ 'चकारः 'खचि ह्रस्व' इति विशेषणार्थं इति'। खे ह्रस्व इत्युच्यमाने 'एजेः खश्' अङ्गमेजयः जनमेजयः, अत्रापि प्राप्नोति, एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्यत्र न भविष्यति, इह तर्हि 'कुलात्खः' कुलीनः, यस्येति लोपनिवृत्तये ह्रस्वः स्यात् तत्र धातुप्रत्ययस्य ग्रहणं तत्प्रकरणसाहचर्यादेव चिन्त्यप्रयोजनश्चकारः । 'प्रत्ययान्तरकरणमुत्तरार्थमिति'। द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप् च मा भूदिति । यद्येवमुत्तरत्रैव कर्त्तव्यइह करणे किं प्रयोजनम् अन्येभ्योपि भवतीति ज्ञापनार्थं, तेन गमेः सुप्युपसंख्यानमिति न वक्तव्यं भवति। 'मितङ्गम इति'। असंज्ञार्थमिदं संज्ञायां तु 'गमश्चे'ति वक्ष्यमाणेनैव सिद्धम् ॥

"द्विषत्परयोस्तापेः" ॥ 'द्विषन्तप इति'। मुमि संयोगान्तलोपः। 'द्वितकारको निर्द्देश इति'। तत्रैकेन द्विषच्छब्दो विशेष्यते तकारान्तो यो द्विषच्छब्द इति, सौत्रत्वान्निर्द्देशस्य विशेषणस्य परनिपातः । 'तेन स्त्रियां न भवतीति'। अन्यथा लिङ्गविशिष्टपरिभाषया स्यादेव प्रसङ्ग इति भावः ॥

"वाचि यमो व्रते" ॥ 'शास्त्रित इति'। शास्त्रशब्दात्तद्विधाने धात्वर्थे णिच् तदन्तात्कर्मणि क्तः । शास्त्रे विहितः शास्त्रेण वा शास्त्रितः । 'नियम इति'। सङ्कल्पविशेषः । 'वाचंयम इति । 'वाचंयमपुरंदरौ चे'ति पूर्वपदस्यामन्तत्वं, तत एव तर्हि निपातनात्प्रत्ययो भविष्यति । व्रतादन्यत्रापि तर्हि प्राप्नोति, तत्रैव व्रतग्रहणं करिष्यते वाचंयमो

व्रते पुरन्दरश्चेति तदेतच्चिन्त्यप्रयोजनम्, एतेन पुरन्दरो व्याख्यातः। 'वाग्याम इति'। योऽशक्त्यादिना वाचं यच्छति तत्रायेव भवति ॥

"पूःसर्वयोर्दारिसहोः" ॥ दॄ विदारण इत्यस्य ग्रहणं न दॄ भये दृङ् आदरे इत्येतयोरित्युपदेशः, असंज्ञार्थं सहिग्रहणं संज्ञायां तु वक्ष्यति सर्वंसहो राजेति सर्वं संपादयितुं समर्थ इत्यर्थः ॥

"मेघर्तिभयेषु कृञः" ॥ 'करोतेरिति'। कृणोतेस्तु पूर्ववद्वेवा-ग्रहणम्, शिवंकर इत्यपि छन्दसि दृश्यते शिव एको ध्येयः शिवंकर इति ॥

"आशिते भुवः करणभावयोः" ॥ 'अत्र सुपीत्युपतिष्ठत इति'। न तु कर्मणीति भवतेरकर्मकत्वात्, सोपसर्गात्प्राप्त्यर्थात्त्व खचा न भवितव्यमनभिधानादिति भावः। आशितशब्दोयमश भोजन इत्यस्मा-दाङ्पूर्वाद्विवक्षिते कर्मणि कर्त्तरि क्तप्रत्ययान्तो गृह्यते। 'आशितः कर्त्तेति'। यस्याद्युदात्तत्वं विधास्यते यत्तु ध्रौव्यगतिप्रत्यवसानार्थेभ्य इति भावकर्माधिकरणेषु क्तो न तदन्तो गृह्यते ऽनभिधानादित्याहुः। अन्ये त्वशेष्यंन्तात्प्रयोज्ये कर्मणि क्तप्रत्यये कृते य आशितशब्दः स गृह्यते, एवमाशितः कर्त्तेति यस्याद्युदात्तत्वं तत्रापि प्रयोज्यएव भूतपूर्व-गत्या कर्त्तोच्यते गतिबुद्धिप्रत्यवसानार्थेति अणौ कर्त्तुर्णौ कर्मसंज्ञाविधा-नात्, तथा च कृपचित्काल आशितं कृणोतीति आद्युदात्तस्याप्रयोगो न दृश्यते, कर्तृग्रहणं तु तत्र भावनिवृत्त्यर्थमिति। 'आशितं भव ओदन इति'। यावतौदनेनातिथ्यादिराशितो भवति स एवमुच्यते ॥

"संज्ञायां भृतृवृजिधारिसहितपिदमः" ॥ 'संज्ञावशादित्या-दि'। शत्रुन्तप इत्यादौ यत्र कर्मार्थानुगमस्तत्र कर्मणीति सम्बध्यते यत्र तु न रथन्तरमित्यादौ तत्र सुपीति। 'अरिन्दम इति'। अन्तर्भावितण्यर्थो दमिः सकर्मको भवति ॥

"गमश्च" ॥ 'योगविभाग उत्तरार्थ इति'। उत्तरत्र गमेरेवा-नुवृत्तिर्यथा स्याद् भृतृप्रभृतीनां मा भूत् ॥

"अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" ॥ 'अनुबन्धकरणसाम-र्थ्यादिति'।'इवर्णार्थस्तु डकारो न भवति, 'पादस्य पदाज्यातिगोपहते-

ष्वि' ति कृतटिलोपस्य इप्रत्ययान्तस्य निर्देशात् । अत्रात्यन्तानन्तग्रहणमनर्थकम्, अन्तशब्दोत्र गृह्यते तेन कर्मणो विशेषणात्तदन्तविधिर्भविष्यति उपपदविधौ तु न सर्वत्र तदन्तविधिः, उपपदविधौ तदाद्यादिग्रहणमिति नियमात् । पन्नं पतितं यथा गच्छतीति पन्नगः, 'सुदुरोरधिकरणे' इति कर्मणि खलेव भवति । 'सुगमो दुर्गम इति' । 'अन्यत्रापि दृश्यत इति' । एवं च सूत्रमपि प्रपञ्चार्थम् ॥

"आशिषि हनः" ॥ 'दाराविति' । दारुशब्दइत्यर्थः । शब्दापेक्षया पुल्लिङ्गः, टविधानार्थं वचनमण् 'कर्मण्यणि' त्येव सिद्धः, अन्तग्रहणं विस्पष्टार्थमलोन्त्यस्येत्येव सिद्धम् ॥

"कुमारशीर्षयोर्णिनिः" ॥ सुप्यजाताविति सिद्धे ऽताच्छील्यार्थमिदं वचनं शिरसः शीर्षभावार्थं च ॥

"लक्षणे जायापत्योष्टक्" ॥ 'लक्षणवतीति' । एतेनार्श आद्यच्प्रत्ययान्तो लक्षणशब्द इति दर्शयति, एतच्च सूत्रारम्भादेवावसीयते, केवले हि लक्षणे उत्तरेणैव सिद्धः प्रत्ययः । 'जायाघ्नो ब्राह्मण इति' । यस्य तिलकालकादि जायामरणलिङ्गमस्ति स तां हन्तीति गौणो गदः, एतेन पतिघ्नी व्याख्याता, गमहनेत्युपधालोपः, टित्त्वान्ङीप् ॥

"अमनुष्यकर्तृके च" ॥ अमनुष्यशब्दो रक्षःपिशाचादिषु रूढ इति पूर्वमुक्तमिह तु मनुष्यादन्यः सर्व एव गृह्यते, ननु यथा पूर्वसूत्रे लक्षणग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणमेवमिहाप्यमनुष्यग्रहणं भविष्यतीति नार्थः कर्तृग्रहणेन, अमनुष्यइत्युच्यमाने उपपदत्वमपि विज्ञायेत तस्मात्कर्तृग्रहणम्, कृतघ्नशब्दो मूलविभुजादिषु द्रष्टव्यः ॥

"शक्तौ हस्तिकपाटयोः" ॥ 'विषेण हस्तिनं हन्तीति' । नन्वत्राप्यशक्तस्य कर्तृत्वानुपपत्तेरस्त्येव शक्तिः, सत्यं, शक्तिग्रहणसामर्थ्यात्प्रकर्षविज्ञानादन्यनिरपेक्षस्वबलेनैव हन्तुं या शक्तिः सा गृह्यते तद्दर्शयति । 'हस्तिनं हन्तुं समर्थो हस्तिघ्नो मनुष्य इति' । एवं च हस्तिनं हन्तु मा वा वधीत् सामर्थ्ययोगाद्धस्तिघ्न इत्युच्यते । 'कं पाटयति प्रविशतइति' ।

कपाटशब्दं व्युत्पादयति, कवाटमिति तु प्रसिद्धः, तत्राटतेः पचाद्यच्। 'कवङ् चोष्णइति' योगविभागात्कोः कवादेशः॥

"आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्"॥ 'आढ्यादिष्विति'। अनेन आढ्यादीनामुपपदत्वं दर्शयति। करणे कारकइत्यनेनापि करणस्य प्रत्ययार्थत्वम्। अथैवं कस्मान्न विज्ञायते करण-उपपदे आढ्यादिषु कर्तृष्विति, उच्यते, च्व्यर्थेष्वच्वावितिवचनाद् आढ्यादि-शब्दाः स्वरूपप्रधानाः, न च शब्दानां कर्तृत्वमुपपद्यते, ननु च श्रवणेनकरोति सुखमाढ्यशब्द इत्यत्र शब्दस्यापि कर्तृत्वं सम्भवति, एवं तर्हि व्याख्या-नात्तथा नाश्रीयते, अच्वाविति तत्पुरुषो बहुव्रीहिर्वा ऽच्व्यन्तइत्यर्थः। प्रत्येकं सम्बधात्त्वेकवचनं, कथं पुनरच्व्यर्थाश्च भवन्त्यच्व्यन्ताश्च भवन्ती-त्याह। 'च्वेर्विकल्पेन विधानादिति'। 'आढ्यङ्करणमिति'। ख्युनः खकारो मुमर्थः, लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गेष्वाढ्यादिषूपपदेषु ह्रस्वा-र्थश्च, नकारः स्वरार्थः, योरनादेशः। 'अभ्यञ्जयतीत्यर्थ इति'। अनेका-र्थत्वाद्धातूनां, तेनात्र प्रागनाढ्यः सन्नाढ्यः क्रियतइति अभूततद्भावाभावो भवतु वा ऽभूततद्भावस्तथापि युक्तमेवेदं प्रत्युदाहरणमित्याह। 'प्रकृते-रविवक्षायामिति'। प्रकृतिरेव परिणामित्वेन यत्र विवक्ष्यते यथा तन्तवः पटो भवतीति तदा च्विप्रत्ययः, तथा च वार्त्तिकं प्रकृतिविवक्षा ग्रहणं चेति, प्रकृतिः कार्यस्य पूर्वावस्था 'अच्वाविति किमिति'। अस्य वक्ष्यमाणोऽभिप्रायः तमाविष्करोति। 'ननु चेति'। 'ल्युटात्र भवित-व्यमिति'। 'करणाधिकरणयोश्चे' ति, न च ल्युटः ख्युनश्च विशेषो ऽस्तीति ल्युटि तावदाढ्यीकरणमिति रूपं स्वरेऽपि लित्स्वरेणोत्तरपदाद्यु-दात्तत्वं ख्युन्यपि नित्स्वरेणाद्युदात्तत्वं 'खित्यनव्ययस्य' 'अरुर्द्विषदज-न्तस्य मुम्' ति ह्रस्वत्वं मुम् चानव्ययस्य विधीयते च्व्यन्ताश्चाव्ययम् 'ऊर्यादिच्विडाचश्चे' ति निपातत्वात्, स्त्रियामप्युभयत्र टिड्ढाणञि-त्यादिना ङीप् भवति, अतो रूपे स्वरे च नास्ति विशेषः। 'उत्तरार्थश्चे-ति'। उत्तरसूत्रे खिष्णुच्खुकञभ्यां मुक्ते तृन्नादिभिर्भवितव्यमित्यस्ति विशेषः, कथन्तर्हि पूर्वमुक्तं प्रतिषेधसामर्थ्यादिति, अस्मिन्सूत्रे प्रतिषेध-

सामर्थ्यादिति भावः, केवलोत्तरार्थत्वे हि तत्रैवाख्यास्यदिति, यथा वक्ष्यते इह किं चित्रपो इति, भाष्ये तूत्तरार्थमेव स्थितम् ॥

"कर्त्तरि भुवः खिष्णुच्खुकञौ" ॥ कर्तृग्रहणं करणनिवृत्त्यर्थमुत्तरार्थं च, खकारो मुमर्थः, चकारः स्वरार्थः, ञकारो वृद्ध्यर्थश्च, किमर्थं खिष्णुजिकारादिः क्रियते न ख्णुरित्येवोच्येत, तत्रायमप्यर्थः, स्वरार्थश्च-कारो न कर्त्तव्यो भवति प्रत्ययस्वरेणैव सिद्धम्, केनेदानीमिकारादित्वं सिध्यति तत्राह । 'उदात्तत्वादिति' । भवतिरयमुदात्तः, तस्मादात-त्वादिड् भविष्यति । 'नञस्त्विति' । नञ इति पञ्चमी नञ उत्तरस्य खि-ष्णुजन्तस्य स्वरसिद्ध्यर्थमित्यर्थः । यद्ययमिकारादिर्न क्रियेत ततः सत्य-पीटि कृत्योकेष्णुच्चार्वादयश्चेत्यस्य ग्रहणं न स्याद् अस्य चकाराभावात्, अथास्यापि चकारः क्रियेत एवमपि लाक्षणिकत्वात् षत्वणत्वयोश्चासि-द्धत्वादिष्णुजितिरूपाभावाद्ग्रहणं न स्यादेव तत इकारादित्वं क्रियते, ननु च सत्यपीकारादित्वे तदनुबन्धकग्रहणे नातदनुबन्धकस्य, एकानुबन्धक-ग्रहणे न द्व्यनुबन्धकस्येति वालंकृञादीष्णुच एव ग्रहणेन भवितव्यं नास्य, इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भविष्यतीति मन्यते । यद्येवं ख्ष्णुज-यमस्तु तत्र षत्वणत्वयोश्चकारस्य च करणसामर्थ्यादिटि कृते ऽस्यापि ग्रहणं सिद्धमिति चिन्त्यप्रयोजनमिकारादित्वम् ॥

"स्पृशोनुदके क्विन्" ॥ 'ननु चेत्यादि' । 'सुपि स्थ' इत्यत्रोक्तं सकर्मकेषु कर्मणीत्युपतिष्ठते ऽन्यत्र सुपीति ततश्च सुबन्तउपपदे क्विन् प्रत्यय इत्युक्तमनुपपन्नमिति भावः । 'तत्कर्तृप्रचयार्थमिति' । 'कर्त्तरि कृदि'त्येव कर्त्तरि क्विनः सिद्धत्वात्कर्त्रनुवृत्तेर्नान्यत्प्रयोजनमस्तीति भावः । 'कर्तृप्रचयो लभ्यतइति' । कर्मण्युपपदएकः कर्त्ता करणादौ चापर इत्येवं प्रचयो भवति । 'घृतस्पृगिति' । 'क्विन्प्रत्ययस्य कु'रिति शका-रस्य खकारः सोष्मत्वेनान्तरतम्यात्, 'झलां जशोन्ते' क्विनः ककारो गुण-वृद्धिप्रतिषेधार्थं इकारो 'वेरपृक्तस्ये'ति विशेषणार्थः, नकारः किमर्थः एकाज्भ्यो ह्ययं विधीयते तत्र धातुस्वरेणैव सिद्धं यस्तर्ह्यनेकाज् दधृगिति वक्ष्यत्येतद्धृषेर्द्विर्वचनमन्तोदात्तत्वञ्चेति एवन्तर्हि 'क्विन्प्रत्ययस्य कु'-

रिति विशेषणार्थः, क्विप्रत्ययस्येत्युच्यमाने सन्देहः स्यात् क्विः क्विपो वा निर्देश इति, क्विरपि निर्देशे पकारस्यानचि चेति द्विर्वचम् ॥

"ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" ॥ 'ऋतौ यजतीति'। वसन्तादिके। 'ऋतुं यजतीति'। यस्मिन्यागे ऋतुर्देवता यथा वसन्ताय कपिञ्जलानालभते पिशङ्गास्त्रयो वासन्ता इत्यृतुपशूनालभते ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षा इत्यादौ तदभिप्रायमेतत्। 'ऋतुप्रयुक्तो वेति।' वसन्तेवसन्ते ज्योतिषा यजेतेत्यादौ यत्कर्तृत्वं तदभिप्रायमेतत्। 'यत्यञ्चेति'। अन्यथा 'सात्पदाद्यो' रिति निषेधः स्यात्। 'सुबन्तमात्रइति'। अन्यथा सकर्मकत्वात्कर्मण्येव स्यात्। 'केवलादेवेति'। एतत्तु क्विन्विधानसामर्थ्यादपि लभ्यते नहि सोपपदाद्युजेः क्विनि क्विपि वा विशेषोऽस्ति कुत्वस्य 'चोः कु' रित्यनेनैव सिद्धत्वात्, अनुपपदे तु 'युजेरसमास' इति नुमि कृते नकारस्य कुत्वार्थे क्विनो विधानं भवति सार्थकं, यदि तु निपातनसाहचर्यात्सोपपदादनुपपदाच्च युजेः क्विन् भवतीत्युच्येत तदा सत्सूद्विषेत्यत्र युजिग्रहणं शक्यमकर्तुम्। 'नलोपः कस्माच्च भवतीति'। कुञ्च क्रुञ्च कौटिल्याल्पीभावयोरिति नोपधावेतौ धातू। तथा निकुचितिरिति नलोपो दृश्यते चुत्वेन तु ञकारस्य श्रवणं तस्यासिद्धत्वाच्चकारे परत 'श्चोः कु' रिति कुत्वं न भवति कुञ्चौ क्रुञ्च इत्यादौ अकारोपधं तु पठितं स्यात् तत्र सङि झलीति वचनाच्च भवतीति वक्तव्यं, सङिति प्रत्याहारः सनः सशब्दादारभ्या महिङो ङकारात्, अन्ये तु कुञ्चिरेक एव धातुस्तस्य ककारात्परो रेफोऽपि क्विन्सन्नियोगेन निपात्यतइत्याहुः। तदेत् 'च्वोः कु' रित्यत्र वामनो वक्ष्यति ॥

"त्यदादिषु दृशोऽनालोचने कञ्च" ॥ पश्यार्थैश्चेत्यत्र वक्ष्यति आलोचनं चक्षुस्साधनं विज्ञानमिति, इह तु ज्ञानमात्रप्रतिषेधं मन्यते। 'यादृक् तादृगिति'। दृग्दृशवतुष्विति वर्तमाने 'आ सर्वनाम्न' इत्यात्वम्। 'ञकारो विशेषणार्थ इति'। आद्युदात्तत्वस्य नकारेणापि सिद्धत्वात् ञकारोपधस्य प्रयोजनं विशेषणमेवेत्यर्थः, न तु स्वरो न प्रयोजनमित्युच्यते तं पश्यति तद्दृशं इति चक्षुर्विज्ञानेऽपि भवति, कथं पुनः प्रयुज्यमान-

स्यैव दृशेरनालोचनार्थत्वमित्याह । 'तादृशादयो रूढिशब्दा इति'। ततः किमित्याह । 'नैवात्रेति'। रूढिशब्दा ह्यसताप्यवयवार्थेन व्युत्पाद्यन्ते यथा तैलपायिकादयः, एतदर्थमेवानालोचनइत्युक्तं, दृश्यर्थाभावे ऽयं विधिः, सति तु दृश्यर्थेणेव भवतीति । भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता तमिवेमं पश्यन्ति जनाः सोयं स इव दृश्यमानस्तमिवात्मानं पश्यतीति, तत्र कर्मव्यापारमात्रे वा दृशेर्वृत्तिः, कृत्स्नधात्वर्थाध्यारोपो वा सौकर्यातिशयप्रतिपादनायेति द्रष्टव्यम् । 'समानान्ययोश्चेति'। समानस्य दृग्दृशवतुषु सभावविधानात्सिद्धम्, क्सश्चेति त्यदादिषु समानान्ययोश्च तादृक्षः सदृक्षः । 'अन्यादृक्ष इति'। दृक्षे चेति वक्तव्यमिति सभाव आत्वं च ॥

"सत्सूद्विषद्रुहदुहयुजविद्भिद्च्छिद्जिनीराजामुपसर्गेपि क्विप्" ॥ 'अतः प्रभृतीति'। भाष्यकारप्रयोगात्प्रभृतिशब्दयोगे पञ्चमी । 'वदः सुपि क्यप् चेति'। प्रयोजनदिगियं दर्शिता, अत्र ह्यनुपसर्गइति वर्त्तते तस्मात् 'स्पृशोनुदके क्विन्' त्यादौ प्रयोजनं द्रष्टव्यम् । 'सुवतेरिति'। न्यायस्य तुल्यत्वाद्द्वैवादिकस्याप्यग्रहणम् । 'शुचिषदिति'। छान्दसोयं प्रयोगो हंसः शुचिषदिति । पूर्वपदादिति षत्वं, शुचिसदिति पाठे लौकिकः प्रयोगः । 'कथमत्र णत्वमिति'। ग्रामणीविषयः प्रश्नः, प्रणीरित्यत्र तूपसर्गादसमासेपीति णत्वमस्त्येव । 'ज्ञापकादिति'। पूर्वपदस्याविभक्तादुत्तरस्य नयतिनकारस्यासञ्ज्ञायामपि णत्वं भवतीति सामान्येन ज्ञापकमित्यर्थः, तेनाग्रणीरित्यत्रापि भवति कर्मण्यणि तु न भवति नीरूपविषयत्वाज्ज्ञापनस्य, अन्ये त्वग्रग्रामाभ्यां नयतेरिति वक्तव्यमिति वचनाज्ज्ञापनमपि तद्विषयं तत्रापि नीरूपविषयमिति स्थिताः ॥

"छन्दसि सहः" ॥ तुरासाहं पुरोधाय पृतनाषाट् द्विषो योद्धुं पुरुहूतः, पृतनाषाडिति भाषायां प्रयोगाश्चिन्त्याः ॥

"जनसनखनक्रमगमो विट्" ॥ 'विशेषणार्थश्चेति'। विवनोरित्युच्यमाने हि क्विबादीनामपि ग्रहणं स्यात्, अथात्र निरनुबन्धकत्वादस्यैव ग्रहणं वेरपृक्तस्येत्यत्राप्यस्यैव ग्रहणं स्यात्, अथात्र क्विबादीनामपि ग्रहणं

स्याद्विडुनोरनुनासिकस्यादित्यत्रापि स्यादिति समानं वच इति भावः। 'गोषा इति'। सनोतेरन इति षत्वम् 'अग्रेगा इति'। पूर्ववदलुक्॥

"अदोऽनन्ने"॥ 'अन्नाद इति'। भाषायामणेव भवति छन्दसि त्वकारादनुपपदादित्यणि प्राप्ते पचाद्यजिष्यते, तेनान्नाद इत्यत्र अद इत्यवग्रहो भवति॥

"क्रव्ये च"॥ 'वांसरूपबाधनार्थमिति'। तथा च वार्तिकम् अदोऽनन्ने क्रव्यग्रहणं वासरूपनिवृत्त्यर्थमिति। 'कव्यन्तर्हीति'। यद्वि वासरूपविधिबाधनार्थमिति भावः। 'कृत्तविकृत्तेति'। कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तमिति पूर्वकालेति समासः, तस्य पक्वशब्देन पुनः स एव समासः, ततो मांसशब्देन पुनर्विशेषणसमासः,। 'पृषोदरादित्वात्क्रव्यभाव इति'। यद्येवं क्रव्याद इत्यस्य रूपस्यावर्जनीयत्वादलं वासरूपबाधनार्थेनानेन वचनेन वार्त्तिकविरोधश्चैवं वदत इत्याशङ्क्याह। 'कृत्तविकृत्तेत्यादि'। अर्थभेदादुभयमपि नास्ति किलेत्ययमभिप्रायः॥

"दुहः कप् घश्च"॥ 'कामदुघेति'। काम्यन्त इति कामाः तान् दुग्धे कामदुघा, अर्घा मधुपर्कः॥

"मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्"॥ ... 'एतेभ्य इति'। श्वेतादिपूर्वेभ्यो वहादिभ्यो धातुभ्य इत्यर्थः। 'धातूपपदसमुदाया इति'। किमर्थमित्याह। 'अवयाणिकेति'। श्वेतवा इत्यादिषु अवयाः श्वेतवाः पुरोडाश्चेति निपातनाद्रुत्वम्। 'उक्थशा इति'। नलोपे 'अत उपधाया' इति वृद्धिः, रुत्वम्, 'इस्पदस्येति'। प्रत्येकमभिसम्बध्यते भाविपदत्वाश्रयेण चेदमुच्यते यत्र इसन्तस्य पदत्वं भविष्यति तत्र ण्विनोऽपवादो इस्प्रत्ययो वक्तव्य इत्यर्थः, यद्येवमनेन इसि कृते सान्तत्वसन्तस्येति दीर्घे रुत्वे च श्वेतवा इत्यादि सिद्धं नार्थोऽवयाः श्वेतवा इति निपातनेन, एवन्तर्हि सम्बुद्ध्यर्थं निपातनं हे श्वेतवा इन्द्रेति अत्वसन्तस्येत्यत्र हि असम्बुद्धाविति वर्त्तते इसपि वक्तव्य उत्वार्थं श्वेतवोभ्यामुक्थशोभ्यामिति, एवं चोक्थशा इत्यपि सम्बुद्ध्यर्थं निपातनं कर्त्तव्यं यदि मन्त्रे दर्शनमस्ति॥

"अवे यजः" ॥ 'अवया इति'। निपातनाद्रुत्वम् । 'योगविभाग उत्तरार्थ इति'। पुरोडाशवयजो ण्विनित्येकयोगे श्वेतवहादीनामप्युत्तरत्रानुवृत्तिः स्यात्, यजेश्चावपूर्वस्यैवानुवृत्तिः स्यात्केवलस्यैव चेष्यते तदर्थो योगविभाग इत्यर्थः ॥

"विजुपे छन्दसि" ॥ अथ छन्दोग्रहणं किमर्थं यावता मन्त्र इत्यनुवृत्तेरेव भाषायां न भविष्यति तत्राह। 'छन्दोग्रहणं ब्राह्मणार्थमिति'। मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणं यथोक्तं तच्चोदकेषु मन्त्राख्या शेषे ब्राह्मणशब्द इति । 'किमर्थं पुनरिदमिति'। उत्तरसूत्रएव विजग्रहणं छन्दोग्रहणं च क्रियतामिति प्रश्नः । 'नियमार्थमिति'। ननु दृशिग्रहणादेव भाषायां न भविष्यति, सत्यं, तस्यैव प्रपञ्चार्थमिदम् ॥

"आतो मनिन्क्वनिब्वनिपश्च" ॥ अश्व इव तिष्ठति अश्वत्थामा पृषोदरादित्वात्सकारस्य तकारः । 'सुधीवा सुपीवेति'। घुमास्थादिसूत्रेण ईत्वं, चकारो विचोनुकर्षणार्थः, यद्येवमुत्तरत्रानुवृत्तिर्न स्यात् एवन्तर्हि चकारोप्युत्तरत्रानुवर्तिष्यते ॥

"अन्येभ्योपि दृश्यते" ॥ 'अपिशब्दः सर्वविधिव्यभिचारार्थ इति'। विधीयतेनेनेति विधिः उपाधिः, सर्वोपाधिव्यभिचारार्थ इति युक्तः पाठः । 'दृशिग्रहणं प्रयोगानुसरणार्थमिति'। यथा प्रयोगे दृश्यन्ते तथैव भवन्तीति वचनव्यक्त्याश्रयेणेति भावः ॥

"क्विप् च" ॥ 'निरुपपदेभ्यश्चेति'। एतदपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्यानुवृत्तेर्लभ्यते न तु सुपीत्यस्य निवृत्तेः उत्तरसूत्रे सुप्युपसर्गेपीति वर्त्ततइति वक्ष्यमाणत्वात् छन्दसि भाषायाञ्चेति पूर्वसूत्रएव छन्दसीत्यस्य निवृत्तत्वात् । 'उखास्रदिति'। स्रंसु ध्वंसु भ्रंसु अवस्रंसने अनिदितामित्युपधालोपः, वसुस्रंस्वित्यादिना दत्वम् । 'वहाभ्रडिति'। भ्रंशु अधःपतने व्रश्चादिना षत्वम्, 'अन्येषामपि दृश्यत' इति दीर्घः, उखायाः स्रंसते पर्णानि ध्वंसते वाहाद् भ्रश्यतीति विग्रहः, ध्वंसिरन्तर्भावितण्यर्थः सकर्मकः क्व चित्तु वृत्तावेव विग्रहवाक्यानि पठ्यन्ते ॥

"स्थः क च" ॥ 'केत्यविभक्तिको निर्द्देशः । 'अन्येभ्योऽपि दृश्यतइति'। क्विबिति सिद्धएवेत्यपेक्षते, ननु तच्छीलादिग्रहणं तत्रानुवर्त्तते तस्मात् क्विप् चेति क्विप् सिद्ध एवेति वक्तव्यम् । यद्वा तच्छीलादिग्रहणं तत्र न सम्बन्धनीयमिति मन्यते, नन्वेवमपि सुपि स्थ इति विशेषविहितः कः सामान्यविहितं क्विपं बाधेत वासरूपविधिना सोऽपि भविष्यति। 'शमि धातोः संज्ञायामचं बाधतइति'। अन्यथा यथा कृञो हेत्वादिषु टं बाधते धातुग्रहणात्तथा तिष्ठतेरपि कक्विपौ बाधेत अतस्तमप्यचं बाधित्वा कक्विपावेव यथा स्यातामिति पुनर्वचनमित्यर्थः । 'शंस्था इति'। क्विपि लुप्ते प्रत्ययलक्षणेन घुमास्थादिसूत्रेणेत्वमत्र प्राप्नोति भाष्यकारप्रयोगात्तु न भवति, के चित्त्वीत्वमवकारादाविति वचनं पठन्ति तेषां सुपीवा सुधीवा अत्रापि न स्यात् ॥

"सुप्यजातौ णिनिस्ताच्छील्ये" ॥ 'ब्राह्मणानामन्त्रयितेति'। ताच्छील्यस्य विवक्षितत्वात्तृन् प्रत्युदाहृतः, न लोकाव्ययेति षष्ठीप्रतिषेधः। 'उत्प्रतिभ्यामिति'। पुनः सुब्ग्रहणस्योपसर्गनिवृत्त्यर्थत्वादयमारम्भः । 'साधुकारिणि चेति'। अताच्छील्यार्थमिदं तच्चैतज्ज्ञापकात्सिद्धं यदयमा क्वेस्तच्छीले इत्यत्र तच्छीलेत्यभिधाय साधुकारिग्रहणं करोति तज्ज्ञापयति साधुकारिण्यताच्छील्येऽपि णिनिर्भवतीति। 'ब्रह्मणि वद इति'। ब्रह्म वेदः, इदमप्यताच्छील्यार्थम् ॥

"कर्त्तर्युपमाने" ॥ उपमानस्योपमेयापेक्षत्वात् कर्त्तरि च प्रत्ययविधानात्तस्यैवोपपदकर्त्तोपमानं विज्ञायेत इत्याह। 'उपपदकर्त्तेति'। 'उष्ट्रक्रोशीति'। इवशब्दो गतार्थत्वाद्वृत्तौ नैव प्रयुज्यते समासउपमानानां शस्त्रीश्यामादिके यथा ॥

"व्रते" ॥ 'समुदायोपाधिश्चायमिति'। न प्रत्ययार्थविशेषणं तथा हि सति व्रतएव कर्त्तरि प्रत्ययः स्याच्च तद्वतीति भावः । समुदायोपाधित्वमेव स्पष्टयति । 'धातूपपदेत्यादि'। कामचार इच्छाप्रवृत्तिः तत्प्राप्तौ सत्यां नियमः, स च द्विविधः सम्भवति स्थण्डिले शेतएव अश्राद्धं भुङ्क्तएवेत्येवं रूपो वा स्यात् स्थण्डिलएव शेते अश्राद्धमेव

भुङ्क्तइत्येवं रूपो वा, तत्र पूर्वक्ते नियमे यदैवासावशक्त्यादिना ऽश्राद्धं न भुङ्क्ते तदैव व्रतलोपः प्राप्नोति न चैवंविधं शास्त्रमस्ति स्थण्डिले शयितव्यमेव अश्राद्धं भोक्तव्यमेवेति अस्ति तु स्थण्डिलएव शयितव्यम्, अश्राद्धमेव भोक्तव्यमिति, व्रतइति तु शास्त्रितो नियम इत्युक्तं तस्माद् द्वितीयो नियमो विज्ञायतइत्याह। 'सति शयनइत्यादि' ॥

"बहुलमाभीक्ष्ण्ये" ॥ 'आभीक्ष्ण्यं पौनःपुन्यमिति'। पुनः पुनर्भवितरि वर्त्तमानाभ्यामव्ययाभ्यां भावे ष्यञ्, अव्ययानां भमात्रे टि-लोपः। 'ताच्छील्यादन्यदिति'। एतेन सुप्यजातावित्यनेनागतार्थत्वं दर्शयति फलानपेक्षा प्रवृत्तिस्ताच्छील्यं, गान्धारादयस्तु वातादिसाम्यार्थं देशाचारवशेन कषायादिपाने प्रवर्त्तन्ते उदाहरणेष्वातो युक् चिण्कृतो-रिति युक् प्रातिपदिकान्तनुम्विभक्तिषु चेति णत्वम् ॥

"मनः" ॥ 'मन्यतेर्ग्रहणमिति'। मन ज्ञानइत्यस्य दैवादिकस्य मनुतेरिति मनु अवबोधनइत्यस्य तानादिकस्य तिपि गुणेन भवितव्यं यदि नेष्यते संज्ञापूर्वको विधिरनित्यः किं पुनः कारणं प्रयत्नेन मनोतेर्ग्र-हणं निवार्यते यावता इह द्वयोरपि णिनिस्तदेव रूपं न चार्थभेद इत्याह। 'उत्तरसूत्रइति' ॥

"आत्ममाने खश्च" ॥ 'चकाराण्णिनिश्चेति'। वासरूपविधिना सिद्धोपि णिनिरविच्छेदाय समुच्चीयते, तेन करणे यज इत्यत्र णिनेरेवा-नुवृत्तिर्भवति नानन्तरस्य खशः, आत्मशब्दोयम्परव्यावृत्तिं कुर्वाणो यस्त-त्प्रतियोगिनमर्थमाचष्टे स स्वशब्दपर्यायो गृह्यते न चेतनद्रव्यवचनः, मननं मानः भावे घञ् आत्मनो मान आत्ममानः कर्मणि षष्ठ्या समासः, तत्र कस्येत्यपेक्षायां प्रत्ययार्थस्य सन्निहितस्य मन्तुरेवात्मन इति गम्यते तदाह। 'प्रत्ययार्थश्च कर्त्तेति'। दर्शनीयत्वादिना धर्म्मेणेति विशिष्टमिति शेषः, कर्त्तरि षष्ठ्यास्तु समासो न भवति सर्वस्या एव मतेर्मन्तृकर्तृकत्वा-व्यभिचाराद्, एवं चेतनद्रव्यवचनेप्यात्मशब्दे कर्त्तरि षष्ठ्यामव्यभिचारा-दविशेषणं कर्मणि षष्ठ्या न तु चेतनान्तरे कर्मणि प्रत्ययप्रसङ्गस्तस्मात्स्व-शब्दपर्याय एवात्मशब्दः। 'दर्शनीयंमन्य इति'। शरीरधर्ममपि दर्शनीय-

त्वादिकमात्मधर्ममेव मन्यन्ते संसारिणः शरीरशरीरिणोरत्यन्तप्रयोगेऽलक्तयोरिवाभेदं मन्यमानाः। 'पण्डितंमन्य इति'। एकस्याप्यात्मनस्स्वरूपेण कर्तृत्वमपण्डितत्वादिविशिष्टरूपेण कर्मत्वं च युज्यत एव यथोक्तमाचार्यैः, अत्यन्तप्रयोगसम्भिन्ना ज्ञानस्यैव च कर्त्तरि भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृकेति, खशः खकारो मुमर्थः, दर्शनीयंमन्या कुमारीत्यादौ ह्रस्वार्थश्च, शकारस्सार्वधातुकसंज्ञार्थः दिवादित्वाच्छ्यन् स्वरस्तु सति शिष्टोऽपि विकरणस्वरस्सार्वधातुकस्वरञ्च बाधत इति खश एव भवति न नित्स्वरः। 'दर्शनीयमानी देवदत्तो यज्ञदत्तस्येति'। कर्मणि षष्ठी तदपेक्षयास्यापि दर्शनीयशब्दस्य गमकत्वात्समासः॥

"भूते"॥ यस्य सत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते तत्र न ज्ञायते कस्मिन् भूत इति किं साधने भूते किं वा धात्वर्थे तत्राह। 'धात्वधिकाराच्चेति'। चशब्दः पूर्वोक्तेनार्थेनास्य सङ्गतिन्द्योतयति। 'धात्वर्थभूत इति'। ननु धात्वधिकाराद्धातौ भूत इति युक्तं न तु धात्वर्थे भूत इति, उच्यते, प्रयोगे प्रत्ययस्य द्योत्यं भूतत्वमर्थस्यैव विशेषणं भवितुमर्हति विशेषणान्तरवत् न तु शब्दस्य तस्य स्वाभिधेयप्रतिपादने व्ययत्वाद्विशेषणसम्बन्धम्प्रत्ययोग्यत्वात्, किं च नित्यो धातुरनित्यत्वेऽपि भूतात्प्रत्ययविधिरनुपपन्नः, उच्चारितलक्षणे भूतत्वे विशेषणं व्यर्थन्तद्धनुच्चारितात्प्रत्ययविधिः सम्भवति नित्यश्चायं भूतशब्दोऽतिक्रान्तवाचीति निष्ठायामितरेतराश्रयत्वादप्रसिद्धिरित्यचोद्यम्॥

"करणे यजः"॥ 'णिनिरनुवर्त्तते न खशिति'। अत्रोक्तो हेतुः। 'अग्निष्टोमयाजीति'। ननु चाग्निष्टोमशब्दः कर्मनामधेयं तत्कथमग्निष्टोमस्य यजिं प्रति करणत्वं नहि तदेव तत्र करणं भवति, इदन्तु युक्तमुदाहरणं सोमेनेष्टवान् सोमयाजी सान्नाय्येनेष्टवान् सान्नाय्ययाजीति तत्राह। 'अग्निष्टोमः फलभावनायां करणं भवतीति'। सत्यं याग एवाग्निष्टोमो यागोऽपि फलभावनायां करणं फलस्य स्वर्गादेर्भवतो या भावना उत्पादना तस्यामित्यर्थः, ननु दीक्षणीयादिरुदवसानीयान्तो ज्योतिष्टोमाख्यो याग एव स्वर्गभावना न तद्व्यतिरिक्तः कश्चिद्व्यापारो

यज्ञनस्यास्ति यत्र यागः कारणमश्नुते, उच्यते, द्विविधो यजमानव्यापारः सामान्यरूपो विशेषरूपश्चेति तत्र सामान्यरूपश्चाभ्यन्तरश्चौदासीन्यप्रच्युतिरूपः कृतिप्रयत्नादिपदाभिलप्यः, बाह्यस्तु दीक्षणीयादिरुदवसानीयान्तः प्रसिद्ध एव, एवमोदनं पचतीत्यादिष्वप्यात्मगुणः प्रयत्नो बाह्यश्चाधिश्रयणादिर्द्रष्टव्यः, फलं हि प्रेप्सन् तदर्थे प्रयतते नोदास्ते यतोऽयमुपायं जिज्ञासते जानीते च ज्ञात्वा चोपायमनुतिष्ठति सैषा स्वर्गादिफलोद्देशेन प्रवृत्ता कृतिर्भावनेत्युच्यते सा च भाव्यं करणमितिकर्त्तव्यतां चेति त्रितयमपेक्षते इदमनेनेत्थं भावयेदिति। यथाह

भावनापेक्ष्यमाणा हि साधनं किं फलस्य मे।
साधनानुग्रहः को वेत्यनुस्यूतमपेक्षते॥

इति, सैषा सामान्यरूपा वृत्तिर्न शास्त्रकटाक्षमपेक्षते विशेषरूपा त्वपेक्षते, तथाहि। फलार्थी तदुपायं जिज्ञासते, तदुपायं जिज्ञासमानः शृणोति ज्योतिष्टोमेन स्वर्गकामो यजेतेति तत्र च पुरुषप्रवर्त्तनारूपो विधिः श्रूयते न चापुरुषार्थे पुरुषः प्रवर्त्ततइति विधिवशाद्भावना भाव्यापेक्षायां समानपदोपात्तमपि दुःखरूपं धात्वर्थमपहाय पदान्तरोपात्तमपि पुरुषोपसर्जनमपि सुखरूपं स्वर्गमेवावलम्बते ततः करणापेक्षायां समानपदोपात्तो धात्वर्थः करणं भवति पश्चात्सविधिसमाम्नातन्दीक्षणीयादीतिकर्त्तव्यतयान्वेतीत्येषा मीमांसकमर्यादा, यत्र तु न विधिविरोधो भावनायास्तत्र धात्वर्थ एव भाव्यो भवति यथा पचति पाकं करोति गच्छति गमनं करोतीत्यादि निर्द्दिश्यते। ननु भावनया सम्पद्यमानस्य बाह्यव्यापारस्य कथन्तत्र करणत्वं को दोषः करणं खलु सर्वत्र कर्तृव्यापारगोचरः कुठारेण छिनत्तीत्यत्रापि उद्यमननिपातनरूपेण कर्तृव्यापारेणाप्यमानस्यैव कुठारस्य तत्र करणत्वं तदेव कथं द्विधाभवनरूपेण फलेनावच्छिन्नयोस्तयोश्छेदनरूपत्वं न स्वरूपत्वं न स्वरूपेण रजके दर्शनात् सोपि हि वस्त्रमुद्यच्छते निपातयति च, अथ च द्विधाभवनाभावान्न छिनत्तीत्युच्यते तदेवमुद्यमननिपातयोश्छेदरूपत्वं कुठारगोचरत्वनिबन्धनमिति तस्य तत्र करणत्वं तथेहापि भावनायां स्वर्गभावनारूपत्वमग्निष्टोमा-

व्ययागगोचरत्वनिबन्धनमिति तस्य तत्र करणत्वं तदिदमुक्तं फलभावनायां करणमिति, इयं हि फलं धात्वर्थं च सम्पादयति तत्र फलभावनारूपत्वे बाह्यो व्यापारः करणमित्यर्थः, नन्वेवमपि यज्यर्थं प्रति अग्निष्टोमः करणं न भवति, मा भूत्तत्र करणत्वं करणं तावत् सम्बन्धि च यजिना सामानाधिकरण्येन, अथ वा भावनापि धातोरेव वाच्या न प्रत्ययस्य तत्र धात्वर्थैकदेशएकदेशान्तरस्य करणम् अग्निष्टोमशब्दश्च तत्रैकदेशान्तरे वर्तत इति न किं चिदनुपपन्नम् ॥

"कर्मणि हनः" ॥ 'कुत्सितग्रहणमिति'। पितृव्यवधादिना यः कर्त्ता कुत्स्यते तत्रायम्प्रत्यय इति वक्तव्यमित्यर्थः ॥

"ब्रह्मभ्रूणवृत्रेषु क्विप्" ॥ 'चतुर्विधश्चात्रेति'। धातूपपदकालप्रत्ययविषयः, भाष्ये तूपपदविषयनियमद्वयं प्रदर्शितं तदुपलक्षणं न तु नियमान्तरव्यावृत्त्यर्थमिति गम्यते, ब्रह्मादिष्वेव हन्तेरिति धातुनियमः, अत्रापि नियमे भूतइत्याश्रयणात् कालान्तरे उपपदान्तरेपि भवत्येव पुरुषं हन्ति हनिष्यति वा पुरुषहेति, ब्रह्मादिषु हन्तेरेवेत्युपपदनियमः, अत्रापि भूतइत्याश्रयणात्कालान्तरे धात्वन्तरादपि भवत्येव वृत्रं जयति जेष्यति वा वृत्रजिदिति, भूतकाले क्विबेवेति कालनियमः। 'नान्यः प्रत्यय इति'। यथा कर्मणि हनः कर्मण्यणित्युपपदान्तरे तु भूतेपि प्रत्यान्तरं भवत्येव पितृव्यं हतवान्पितृव्यघातीति सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते निष्ठा तु भवत्येव वृत्रं हतवानिति, तथा भूत एवेति प्रत्ययनियमः, अत्रापि ब्रह्मादिषु हन्तेरित्याश्रयणादुपपदान्तरे धात्वन्तराच्च कालान्तरेपि भवत्येव, कथं पुनरेकस्मिन्नेव योगे चतुर्विधो नियमो लभ्यतइत्याह। 'तदेतदिति'। अगृह्यमाणविशेषत्वादेव चतुर्विधो नियमो लब्धुं शक्यते तत्रैव तूपोद्बलकमेतदुक्तं वेदितव्यम् ॥

"सुकर्मपापमन्त्रपुण्येषु कृञः" ॥ 'स्वादिष्विति'। सुशब्दं वर्जयित्वेत्यनन्तरमेवाभिधानादतद्गुणसंविज्ञानो बहुव्रीहिः, बाहुल्याश्रयणेनैवमुक्तम् आढ्यो ग्राम इतिवत्। 'त्रिविधश्चेति'। एतद्बहुलग्रहणानुवृत्तेरेव लभ्यते। 'कालोपपदप्रत्ययविषय इति'। तत्र कालनियमात्कर्म

कृतवान्कर्मकार इत्यण् न भवति, उपपदनियमात् मन्त्रमधीतवान्मन्त्राध्याय इत्यणेव भवति न तु क्विप्, प्रत्ययनियमात् मन्त्रं करोति करिष्यति वेति विवक्षायामणेव भवति न तु क्विप् । 'शास्त्रकृदिति' । क्विप् चेति क्विप् ॥

"सोमे सुञः" ॥ 'कालधातूपपदप्रत्ययविषय इति' । तत्र भूतकालस्य क्विपि नियतत्वात्सोमं सुतवान्सोमसाव इत्यण् न भवति, तथा धातोः सोमएवोपपदे नियतत्वात्सुरां सुतवान्सुरासाव इत्यणेव भवति, तथा सोमस्य सुनोतावेव धातौ नियतत्वात्सोमं क्रीतवान् सोमक्रीरिति क्विब् न भवति अणेव तु भवति, तथा क्विपो भूते नियतत्वात्सोमं सुनोति सोष्यति वेति विवक्षायां क्विब् न भवति अणेव तु भवति ॥

"अग्नौ चेः" ॥ 'अत्रापीत्यादि' । तत्र भूतकालस्य क्विपि नियतत्वादग्निं चितवानग्निचाय इत्यण् न भवति, धातोश्चाग्नावुपपदे नियतत्वादिष्टकाचिदिति न भवति, अग्नेश्चिनोतावेव नियतत्वादग्निभृदिति न भवति, क्विपश्च भूतएव नियतत्वादग्निं चिनोति चेष्यति वेत्यत्राभावः ॥

"कर्मण्यग्न्याख्यायाम्" ॥ कर्मणि हन इत्यतोऽनुवृत्तं कर्मग्रहणमुपपदम् इदं तु कर्मप्रत्ययार्थ इत्याह । 'कर्मण्येव कारकइति' । एवकारः पौनर्वचनिक उपपदन्तावत्कर्मप्रत्ययार्थोऽपि कर्मैवेति । 'आख्याग्रहणं, रूढिसंप्रत्ययार्थमिति' । अग्निशब्दो लोके ज्वलने रूढः, वेदे त्वन्यथेऽइष्टकाचयेऽपि प्रचुरः प्रयोगो य एवं विद्वानग्निं चिनुते अग्निं चेष्यमाण इति स मुख्यो जघन्यो वा भवतु इह त्वसत्याख्याग्रहणे लोकप्रसिद्धिवशेन ज्वलन एव गृह्येत मा ग्राहि इष्टकाचय एव गृह्यतामित्याख्याग्रहणमित्यर्थः ॥

"कर्मणीनिर्विक्रियः" ॥ 'कर्मणीति वर्त्तमानइति' । कर्मणि हन इत्यतः कर्त्तुः कुत्सानिमित्ते कर्मणीति यत्कर्म क्रियासम्बद्धं कर्त्तुः कुत्सामावहति तत्रेत्यर्थः, सोमादीनां विक्रयः शास्त्रे निषिद्धः ॥

"दृशेः क्वनिप्" ॥ 'प्रत्ययान्तरनिवृत्त्यर्थमिति' । प्रत्ययान्तरं सह निर्दिष्टं मनिनादि, अणादि च सोपपदाविष्ठा तु भवत्येव परलोकं दृष्टवानिति ।

"राजनि युधिकृञः" ॥ 'ननु च युधिरकर्मक इति'। तत्कथं राजन्शब्दे कर्मवाचिन्युपपदइत्युक्तमिति भावः । 'अन्तर्भावितण्यर्थ इति'। अनेकार्थत्वाद्धातूनां लक्षणया वा यदा ण्यर्थमपि युधिरेवान्तर्भावयति तदा प्रयोज्येन कर्मणा सकर्मको भवतीत्यर्थः ॥

"सहे च" ॥ 'असत्त्ववचनत्वाचोपपदं कर्मणा विशेष्यतइति'। अतश्च कर्मणीति नानुवर्त्ततइति भावः । न पुनरनुवर्त्तमानस्यैवात्रासम्बन्धः, उत्तरत्राप्यनुपयोगात् ॥

"सप्तम्यां जनेर्डः" ॥ 'मन्दुरज इति'। वाजिशाला तु मन्दुरा ङ्यापोस्संज्ञाछन्दसोर्बहुलमिति ह्रस्वः ॥

"पञ्चम्यामजातौ" ॥ बुद्ध्यादय आत्मगुणाः खेदो रागः खेदात् स्त्रीषु प्रवृत्तिरिति दर्शनात् ॥

"उपसर्गे च संज्ञायाम्" ॥ 'प्रजेति'। प्राणिजातस्यैषा संज्ञा ॥

"अनौ कर्मणि" ॥ 'पुमांसमनुजात इति'। पुमांसमनुरुध्य जात इत्यर्थस्तेनास्य सकर्मकत्वम् । पुमनुज इति पुंसस्संयोगान्तलोपः ॥

"अन्येष्वपि दृश्यते" ॥ 'द्विजात इति'।

मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥

"निष्ठा" ॥ 'क्तक्तवतू निष्ठेत्युक्तमिति'। ककारः कित्कार्यार्थ उकार उगित्कार्यार्थो ऽत्वसन्तस्येति विशेषणार्थश्च। 'निष्ठायामित्यादि'। अप्रसिद्धिरनिष्पत्तिः कस्य संज्ञायाः संज्ञिनो वा कथमित्याह । 'संज्ञयेति'। यदि हि: क्तक्तवतूपग्रहणं क्रियेत इह च संज्ञाविधौ ततो न स्यादितरेतराश्रयत्वमिति संज्ञयेत्युक्तम् । 'सतोश्च तयोरिति'। लोके शास्त्रे वा न तावल्लोके सानुबन्धावेतौ स्तः शास्त्रेपि यद्यपि ञीतः क्तः नपुंसके भावे क्त इति क्तः स्वरूपेण विहितोस्ति भूते तु काले नास्ति क्तवतुस्तु न क्वाप्यस्तीति भावः । 'भाविनी संज्ञेति'। संज्ञिनो भावित्वात् संज्ञापि भाविनी सूत्रशाटकव,त्तद्यथास्य सूत्रस्य शाटकं वयेति तन्तुवाय उक्तः स

पश्यति यदि शाटको न वातव्यो ऽथ वातव्यो न शाटकः शाटको वातव्यश्चेति विप्रतिषिद्धं, मन्ये स वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति। 'सामर्थ्यादिति'। 'क्तक्तवतू निष्ठे'ति वचनात् अन्यस्योत्पन्नस्य निष्ठेति संज्ञाया अभावस्सामर्थ्यम्। 'आदिकर्मणीति'। कर्मशब्दः क्रियावाची एक फलोद्देशप्रवृत्तक्षणसमूहरूपा क्रिया, तत्राद्ये क्रियाक्षणेऽपवृत्तेपि धात्वर्थरूपायाः क्रियाया अनपवृत्तत्वाद्वर्तमानत्वं न्याय्या त्वाद्यपवर्गात् न्याय्या त्वेषा भूतकालता कुतः आद्यपवर्गात् आदिभूतक्रियाक्षणोपवृत्तः तस्मिन्नेव चावयवे समूहरूपो धात्वर्थः परिसमाप्तः, उक्तं च।

समूहः स तथा भूतः प्रतिभेदं समूहिषु।
सामाप्यते ततो भेदे कालभेदस्य सम्भवः॥

इति, तथा च प्राकार्षीत्कटं देवदत्त इति लुङपि प्रयुज्यते कटावयवे वा कटशब्दो द्रष्टव्यः, ततः केषां चित्कटावयवक्षणानामपरिसमाप्तेः प्रकरिष्यति कटं देवदत्त इति लृट्प्रयोगोप्यविरुद्धः। अपर आह। ज्ञापकात्सिद्धं यदय'मादिकर्मणि क्तः कर्तरि च' 'उदुपधाद्भावादिकर्मणोरन्यतरस्या'मिति चाह तज्ज्ञापयति भवत्यादिकर्मणि क्त इति, नैतदस्ति ज्ञापकं, 'जीतः क्त' इति योयं वर्त्तमाने क्तस्तद्विषयमेतत्स्यात्, यदि तद्विषयमेव स्याद्वर्त्तमानग्रहणमेव कुर्यात्॥

"सुयज्ञोर्ङ्वनिप्"॥ 'सुनोतेरिति'। सु स्नु गतौ सु प्रसवैश्वर्ययोरित्यनयोरेव निरनुबन्धकयोर्ग्रहणं प्राप्तम् अनभिधानादुभयपदिना साहचर्याद्वा न भवति, ङकारः सुनोतेर्गुणप्रतिषेधार्थः, इकार उच्चारणार्थः, पकारः स्वरार्थस्तुगर्थश्च॥

"छन्दसि लिट्"॥ 'आततानेति'। 'णलुत्तमो वे'ति णित्त्वपक्षे वृद्धिः। 'धातुसंबन्धे स विधिरिति'। धातुसंबन्धे प्रत्यया इत्यधिकारात्, लिट इकारटकारौ विशेषणार्थौ, लिटः कानज्वा लिट्यभ्यासस्योभयेषामित्यादौ ल इत्युच्यमानेन्येषामपि लङादीनां ग्रहणं स्यत्, निरनुबन्धकत्वादस्यैव ग्रहणं भविष्यति, परोक्षे लिटोपि तर्हि न प्राप्नोति, टकारष्टेरेत्वार्थश्च॥

"लिटः कानज्वा" ॥ 'चिक्यान इति'। चित्र चयने विभाषा चेरिति कुत्वम्। एरनेकाच इति यणादेशः। 'न च भवतीति'। वावचनस्य प्रयोजनं दर्शयति, वासरूपविधिश्च लादेशेषु नास्ति हशश्वतोर्लङ् चेति वचनादित्युक्तम्। नन्वनन्तरसूत्रविहितस्य लिटो नित्यमादेशोऽस्तु यस्तु छन्दसि लुङ्लङ्लिट इति लिट् तत्र तिङां श्रवणं भविष्यति, न। तस्य धातुसम्बन्धविषयत्वादधातुसम्बन्धे तिङां श्रवणं न स्यात् लिण्मात्रस्य च ग्रहणमित्यनन्तरमेव वक्ष्यति। 'पूर्वस्यैवेत्यादि'। प्रत्ययान्तरं तु कानज् न भवति वावचनाद्वासरूपविधिनैव लुङादीनां सिद्धत्वादिति भावः। 'लिण्मात्रस्येति'। भाष्ये त्वनन्तरस्यैव लिटोऽयमादेशो लिङ्ग्रहणं च प्रत्ययान्तरत्वं मा विज्ञायीति, वावचनं चोत्तरार्थमिति स्थितं कानचश्चित्करणं स्वरार्थं कित्करणं किमर्थं नासंयोगाल्लिट् किदित्येव सिद्धत्वेन देजानस्तेपान इत्यादौ संप्रसारणोत्वाभ्यानादिलोपादिकार्यं भविष्यति संयोगान्तार्थं, बन्ध बन्धने वृत्तस्य बद्धुधानस्य, त्वमग्नेवात् बद्धुधाना अरम्या अचानिदितामिति नलोपः छान्दसत्वादभ्यासधकारस्य हलादिशेषेण निवृत्त्यभावे झलां जश् झशीति जश्त्वं दकारः। ननु छान्दसः कानच् लिट् च छन्दसि सार्वधातुकमपि भवति छन्दस्युभयथेति वचनात् तत्र सार्वधातुकमपिदिति ङित्त्वं ङितीत्युपधालोपो भविष्यति, न च संयोगान्तेषु कित्त्वङित्त्वयोर्विशेषोऽस्ति, ऋकारान्तगुणप्रतिषेधार्थं तु, ऋच्छत्यृतामिति ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथेह भवति परितस्तरे इति एवमिहापि स्यात् परितिस्तिराण इति तस्मात्कित्करणं, कित्करणसामर्थ्याद्भाषायामपि कानजस्तीत्येतत्तु भाष्यविरोधादुपेक्ष्यम्॥

"क्वसुश्च" ॥ क्वसोरुकार उगित्कार्यार्थः, जक्षिवानित्यादावुगिदचामिति नुम्, उपसेदुषीत्यादावुगितश्चेति ङीप्, वसोस्संप्रसारणमित्यत्र सामान्यग्रहणमप्युकारस्य प्रयोजनं, कित्करणं किमर्थं नासंयोगाल्लिट्किदित्येव सिद्धं संयोगान्तार्थम्। अञ्जेः आञ्जिवान् उपधालोपो भवति छान्दसः क्वसुः लिट् छन्दसि सार्वधातुकमपि तत्र सार्वधातुकमपिदिति ङित्त्व ङितीत्युपधालोपो भविष्यति, ऋकारान्तगुणप्रतिषेधार्थन्तु, ऋच्छत्यृ-

तामित्ययं गुणः प्रतिषेधश्चारभ्यते स यथेह भवति तेरतुस्तेरुरिति तथा तितीर्वानित्यत्रापि स्यात् किञ्च ग्रहणसामर्थ्याद्भाषायामपि क्वसुर्भवतीत्येत्तु भाष्यविरोधादुपेक्ष्यम्, उत्तरसूत्रानर्थक्यं च यदि भाषायामपि क्वसुर्भवति ॥

"भाषायां सदवसश्रुवः" ॥ 'आदेशविधानादेवेत्यादि'। यदि भाषायां सदादिभ्यो भूतसामान्ये लिण्न स्यात्ततस्तादृशस्य लिट आदेशविधानमनुपपन्नं स्यादिति मन्यते, ननु च लिटः कानज्वेत्यत्र पुनर्लिड्ग्रहणस्य प्रयोजनमुक्तं योपि परोक्षे लिड्विहितस्तस्याप्ययमादेशो भवतीति तच्चेत्सत्यमिहापि यः परोक्षे लिट् स भाषायामपि सदादिभ्यः सम्भवतीति तस्यैवेदमादेशविधानं स्यात्, उच्यते, लङ्लिड्विषयेपि परस्तादनुवृत्तेर्भवतीति वक्ष्यति ततो नानेन परोक्षे लिट आदेशाभिधानं किन्तर्हि भूतसामान्ये ततश्चादेशविधानादेव लिडपि तद्विषयो ऽनुमातव्यः, यद्येवं तस्य पक्षे क्वस्वादेशः पक्षान्तरे तिङां श्रवणं प्राप्नोति, न वावचनेन क्वसुरभिसम्बध्यते क्वसुर्वा भवतीति किं तर्हि लडभिसम्बध्यते भाषायां सदादिभ्यो वा लिट् तस्य नित्यं क्वसुरादेशो भवतीति वृत्तिग्रन्थोप्यस्मिन्नेवार्थे योजनीयः। 'उपासददिति'। 'लृदित्त्वादङ्'। 'उपासीददिति'। 'पाघ्रादिसूत्रेण सीदादेशः। 'अनूषिवानिति'। यजादित्वात्सम्प्रसारणं शासिवसिघसीनां चेति षत्वम्। 'अन्ववात्सीदिति'। सस्यार्द्धधातुकइति तत्वम्। 'अनूवासेति'। लिट्यभ्यासस्योभयेषामित्यभ्यासस्य सम्प्रसारणम्। 'लुङ्विषयेपि परस्तादनुवृत्तेर्भवतीति'। अन्यथा भूतसामान्ये लुङ्विहितस्तत्रैव धातुविशेषेनेनादेशविधानेनानुमितो लिडपवादः, तथा भूतविशेषे लङ्लिटो लुङ एवापवादौ सदादिभ्यस्तु भूतविशेषे एतत्सूत्रविहितं च कार्यं प्राप्नोति लङ्लिटौ च अपवादविप्रतिषेधाल्लङ्लिटावेव स्याताम् ॥

"उपेयिवाननाश्वाननूचानश्च" ॥ 'उपपूर्वादिणः क्वसुरिति'। निपात्यतइत्यर्थः। लिडादेशश्चायम्। अन्यथा द्विर्वचनाभ्यासदीर्घत्वे अपि निपातयितव्ये स्यातां तथा ग्राममुपेयिवानित्यत्र न लोकाव्ययेति षष्ठीप्रतिषेधो न स्यात्। 'द्विर्वचनमिति'। इडागमात्पूर्वं नित्यत्वात्क्रियतइत्यर्थः। 'अभ्यासदीर्घत्वमिति'। 'दीर्घइणः किती' त्यनेन। 'तत्सामर्थ्यादिति'।

यदि ह्येकादेशः स्याद्दीर्घविधानमनर्थकं स्यादेकादेशेनैव दीर्घस्य सिद्धत्वात्, ननु चाभ्यासदीर्घत्वस्येयतुरित्यादिरवकाशः स्यात् अत्र हि इइ अतुस् इति स्थिते दीर्घत्वमेकादेशश्च प्राप्नोति इणो यणिति यणादेशश्च तत्र वार्णादाङ्गं बलीय इति बह्वाश्रयत्वेनैकादेशस्य बहिरङ्गत्वाद्वा यणेव भवति ततश्च दीर्घविधानमर्थवद्भवति, एवं मन्यते अत्रापि पूर्वपरविधिरेकादेशः पूर्वविधिरिति तत्र कर्त्तव्ये यणादेशस्य स्थानिवत्त्वात्स्यादेवैकादेशः तदेवमभ्यासदीर्घत्वमनवकाशत्वात्सवर्णदीर्घत्वं बाधतइति तस्मात्सुष्ठूक्तं तत्सामर्थ्यादेकादेशप्रतिबन्ध इति । 'तत्रेति' । एवं सतीत्यर्थः । 'स निपात्यतइति'। निपातनाश्रयणमिडर्थम् । अन्यत्सर्वं पूर्वत्रैवेणग्रहणादेव सिद्धमित्यर्थः, यदि तर्हीडर्थमेतन्निपातनं संप्रसारणविषयेऽपि प्राप्नोति अत्र वलादेरिति विशेषानुपादानात् यथा वक्ष्यति नित्यश्चायं वल्निमित्तो विघातीति तत्राह । 'क्रादिनियमात्प्राप्तश्चेति' । चशब्दो हेतौ नात्रापूर्व इड्विधीयते किं तर्हि योयं वलादिलक्षण इट् क्रादिनियमेन प्राप्तो 'वस्वेकाजाद्घसा'मिति नियमेन प्रतिषिद्धः स एव प्रतिप्रसूयते प्रतिबन्धापनयनेन पुनः प्रवर्त्त्यते तेनाजादावतिप्रसङ्गो न भवतीत्यर्थः, अन्ये त्वभ्यासदीर्घत्वे कृते धात्विकारस्य व्यञ्जनं यणादेशन्निपातयन्ति ईय्वस् इति स्थिते वस्वेकाजाद्घसामित्येवेट् सिद्धः स च वलादिलक्षण इति नास्त्यतिप्रसङ्गः । अपर आह । पूर्वसूत्रएवेणग्रहणं कर्त्तव्यं नार्थो निपातनाश्रयणेन, अत्र यदुक्तमीयतुरित्यत्राभ्यासदीर्घत्वे कृते एकादेशात्पूर्वं वार्णादाङ्गं बलीय इति यणि कृतेपि तस्य स्थानिवत्त्वादेकादेशः प्राप्नोति, ततश्चावश्यमभ्यासदीर्घत्वेन बाधितव्य एकादेश इति तन्न, नहि स्थानिवद्भावेन रूपमतिदिश्यते रूपाश्रयश्च पूर्वपरयोरेकादेशो न यकारस्य भवितुमर्हति, किञ्च यणादेशेन बाधितस्यैकादेशस्य पुनस्स्थानिवद्भावेनापि प्रवृत्त्यभावो बाधितत्वादेव किमतो यद्येवमिदं ततो भवति, इणः क्वसौ विहिते द्विर्वचनं च प्राप्नोति वस्वेकाजाद्घसामितीडागमश्च किमत्र कर्त्तव्यं परत्वादिट् नित्यं द्विर्वचनं कृतेपीटि प्राप्नोत्यकृतेपि प्राप्नोतीति, इडपि नित्यः कृते द्विर्वचनेऽभ्यासदीर्घत्वे एकादेशे च एकाच्त्वात्प्राप्नोति इदा-

नीमेव लुक्कमभ्यासदीर्घत्वेन न बाधितश्च एकादेश इति तदेवमुभयोर्नित्ययोः परत्वादिट् द्विर्वचनमभ्यासदीर्घत्वं परस्य यणादेशःईयतुरित्यादिवत्सिद्धमुपेयिवानिति, बिभिद्वानित्यादौ नित्यत्वात्पूर्वेन्द्विर्वचनमेव भवति। 'न चात्रोपसर्गस्तन्त्रमिति'। एवमाचार्याणामुपदेश इति भावः। '¹अनुपसर्गाच्चेति'। ईयिवांसमतिस्निध इति हि छन्दसि दृश्यते। 'लुङादयो भवन्तीति'। लङ्लिड्विषयेपि परस्तादनुवृत्तेरयं विधिर्भवतीति दर्शयति। 'उपागादिति'। इणो गा लुङि गातिस्थाघुपाभूभ्य इति सिचो लुक्। 'उपैदिति'। अदादित्वाच्छपो लुक् आडजादीनामाटश्च। 'उपेयायेति'। तिपो णलि वृद्ध्यायादेशौ द्विर्वचनेचीति स्थानिवद्भावादिकारस्य द्विर्वचनम् अभ्यासस्यासवर्णे। 'अश्नातेरिति'। अश भोजने। 'नञ्पूर्वादिति'। तेनान्यपूर्वात्केवलाच्च न भवति। 'नाशीदिति'। तिपि सिचि नेटीति वृद्धिप्रतिषेधः आडजादीनामाटश्च नञा सह सवर्णदीर्घत्वम्। 'नाशेति'। तिपि णलि द्विर्वचने अत आदेरित्यभ्यासदीर्घः, नञा परेण च सवर्णदीर्घत्वम्। 'वचेरिति'। ब्रुवो वचिरित्यस्य तथा च लङ्यन्वब्रवीदित्युदाहरिष्यते, अन्ये तु वच परिभाषणइत्यस्यापि ग्रहणमिच्छन्ति। 'कर्त्तरीति'। न भावकर्मणोः। एतच्च निपातनाल्लभ्यम्। 'अन्ववोचदिति'। वच उम्। 'अन्वब्रवीदिति'। ब्रुव ईट्। 'अनूवाचेति'। पूर्ववदभ्याससंप्रसारणम्।

"लुङ्"॥ इह भूतसामान्ये लुङ् विधीयते तस्य विशेषे ऽनद्यतने लङ्लिटावपवादौ तद्विषयेपि लुङ् दृश्यते, आगमामघोषात् अपामपयः अशेयिष्महि, पूतीकतृणेषु अभूत्रूपो विबुधसखः परन्तप इति चिरवृत्तं कथयतः प्रयुञ्जते, नैष दोषः, विशेषे सामान्यमस्ति तत्र विशेषाविवक्षायां सामान्याश्रयणेन वस्तुतोनद्यतनेपि लुङुपपद्यते तद्रूपविवक्षायामेव तु लङ्लिटौ, विवक्षोपारूढो ह्यर्थः शब्दप्रयोगनिमित्तं न वस्तुतः सचिति गतमेतत्। 'वसेरिति'। वस निवासे रात्रेश्चतुर्थे यामे पृष्टो यदा वाक्यं प्रयुङ्क्ते तदा तस्यातिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ् प्रयोगे लुङ्वक्तव्यः, लङ्निवृत्तिपरं चैतत् लुङ् भूतसामान्यविवक्षया

१ मुद्रितमूलपुस्तके निरुपसर्गाच्चेति पाठः।

सिद्धः । 'जागरणसन्तताविति'। यदा प्रयोक्ता सकलमविश्रान्तं रात्रिप्रहरत्रयं जागरितवान् तदा लुङ्प्रयोगः, यदा तु सुप्त्वा प्रबुद्ध्य प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः ॥

"अनद्यतने लङ्" ॥ अनद्यतनइति तत्पुरुषपक्षे पर्युदासश्चेद्व्यामिश्रेऽपि प्राप्नोति अद्य श्वो वा भुक्ष्महि, भवति ह्यद्यतनानद्यतनसमुदायोऽद्यतनादन्यः, प्रसज्यप्रतिषेधे तु योऽत्राद्यतनस्तदाश्रयः प्रतिषेधो भवति किं तु भूतसमान्ये प्राप्नोति भूतविशेषे हि प्रतिषेधः, न च सामान्यं विशेषो भवति, पर्युदासेप्ययन्दोषो द्रष्टव्यः, बहुव्रीहौ न विद्यतेऽद्यतनो यस्मिन् सोऽनद्यतनो भूतो धात्वर्थः, तत्र वर्त्तमानाल्लङ् भवति ततश्चाद्यतनसमुदायेऽद्यतनस्यैकदेशस्य सम्भवाच्च भवति प्रसङ्गः, भूतसामान्येऽपि न भवत्येव विद्यते हि सामान्ये विशेषः, अतो बहुव्रीहिरेवायं युक्त इत्याह । 'अनद्यतनइति'। 'बहुव्रीहिनिर्द्देश इति'। बहुव्रीहिणा विवक्षितार्थस्य प्रतिपादनं बहुव्रीहेर्वोच्चारणमित्यर्थः। यदि बहुव्रीहिनिर्द्देशः, एवं सत्यद्यतने प्राप्नोति नह्यद्यतने ऽद्यतनो विद्यते, अद्यतनेऽपि मुहूर्त्तादिरद्यतनो विद्यते मुहूर्त्तादावपि क्षणादिः कथं व्यपदेशिवद्भावेन यथा मुख्ये भेदे आधाराधेयभावो भवति तटे तिष्ठतीति तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतने ऽवयवा अद्यतनाः सन्तीत्यनद्यतनो न भवतीत्युच्यते न तु तत्त्वतोऽवयवव्यतिरिक्तोऽत्र समुदाय आधारोऽस्ति, तदुक्तं हरिणा।

कालस्याप्यपरं कालन्निर्द्दिशन्त्येव लौकिकाः ।
न च निर्द्देशमात्रेण व्यतिरेकोऽनुगम्यते ॥

इति । 'अद्य ह्य इति'॥ अद्य च ह्यश्चेत्यर्थः, गामश्वं पुरुषवयमान इतिवच्चशब्दस्याप्रयोगः । 'अभुक्ष्महीति'। भुजोऽनवनइत्यात्मनेपदं महिङि लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावः। चोः कुरिति कुत्वं गकारः, खरि चेति चर्त्वं ककारः, सिचः सस्य षत्वम्। 'परोक्षे चेत्यादि'। परोक्षशब्दोऽयमतीन्द्रियार्थे वर्त्तते लोकविज्ञाते लोकप्रसिद्धे प्रयोक्तुर्दर्शनविषये लङन्तस्य शब्दरूपस्य यः प्रयोक्ता तस्य दर्शनविषये लङ् वक्तव्यः, ननु विप्रतिषिद्धमिदं यदि परोक्षः कथन्दर्शनविषयः, अथ दर्शनविषयः

कथं परोक्षः, शक्यदर्शनत्वाद्दर्शनविषयः क्वचिद्व्यासङ्गादननुभूतत्वात्परोक्ष इति विरोधाभावः । 'अरुणदिति' । रुधिर आवरणे रुधादित्वात् श्नम् तिपो हल्ङ्यादिना लोपः साकेतरोधस्तदानीं प्रयोक्तुर्दर्शनविषयः शक्यदर्शनत्वात् लोकप्रसिद्धश्च क्वचिद्व्यासङ्गादननुभूतत्वात्परोक्षश्च । परोक्ष इति किम् । उदगादादित्यः, इणो लुङ् गादेशादिकार्यम् । 'लोकविज्ञातइति' । किं चकार कटन्देवदत्तः । 'प्रयोक्तुर्दर्शनविषय इति' । किं जघान कंसं किल वासुदेवः हन्तेः परोक्षे लिट् द्विर्वचनम् अभ्यासाच्चेति कुत्वं हकारस्य घकारः कंसवधश्चिरकालान्तरवृत्तत्वादिदानीं प्रयोक्तुर्दर्शनविषयो न भवति यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स लङमेव प्रयुक्तवान् अहन् कंसं वासुदेव इति, मूलोदाहरणेपि प्रयोक्ता साकेतरोधेन तुल्यकालो वेदितव्यः, तस्यैव ह्यसौ दर्शनविषयो नान्यस्य ॥

"अभिज्ञावचने लृट्" ॥ 'वत्स्याम इति' । वसेर्लृट् मस्, स्यतासी लृलुटोरिति स्यप्रत्ययः, सस्यार्द्धधातुकइति सस्य तकारः, अतो दीर्घो यञीति दीर्घः । 'वचनग्रहणमित्यादि' । असति वचनग्रहणे ऽभिज्ञाशब्द एवोपपदे स्यात् तस्मिंस्तु सति यावन्तोभिज्ञानवचनास्तेषु भवति । 'बुद्ध्यसे चेतसइति' । अर्थप्रकरणादिना स्मृतिरूपे ज्ञाने यदानयोर्वृत्तिस्तदात्रापि भवतीति भावः ॥

"न यदि" ॥ यदीति सति सप्तमीयम्, अभिज्ञावचनं चानुवर्त्तते तेन यत्र यच्छब्दोस्ति तत्र यदभिज्ञावचनं तद्वियोगतो यच्छब्देन सहितं भवतीत्यभिप्रेत्याह । 'यच्छब्दसहित इत्यादि' । 'अवसामेति' । वसेर्लङ् मस् नित्यङ्गित इति सलोपः दीर्घः, वासमात्रमित्यादिनोत्तरसूत्रस्य नायं विषय इति दर्शयति, यदि तत्रापरं किञ्चिल्लक्ष्यमपेक्ष्येत तदोत्तरसूत्रेण पाक्षिको विधिस्स्यात् तच्च नेष्यते तस्माच्च तस्य विषयः ॥

"विभाषा साकाङ्क्षे" ॥ 'उभयत्र विभाषेयमिति' । प्राप्ते चाप्राप्ते च, असति यच्छब्दे ऽभिज्ञावचने लृडिति लृटि प्राप्ते सति यच्छब्दे प्रतिषेधे प्राप्ते, आकाङ्क्षणमाकाङ्क्षा आकाङ्क्षया सह वर्त्तते साकाङ्क्षः, आकाङ्क्षा च चेतनावतो धर्मः, तस्मात्साकाङ्क्ष इत्येतत्प्रयोक्तृविशेषणन्तेन

सकर्मक इत्यादिवत्समासः । 'साकाङ्क्षश्चेत्प्रयोक्तेति' । अङ्गयुक्तं तिङाकाङ्क्षमित्यत्र तु प्रयोक्तृगताकाङ्क्षाध्यारोपेण तिङन्तमाकाङ्क्षमिति वक्ष्यते, इह तु मुख्ये प्रयोक्तरि सम्भवति गौणकल्पनया धात्वर्थविशेषणमयुक्तमिति भावः । ईदृशे पुनर्विषये प्रयोक्ता साकाङ्क्षो भवतीत्याह । 'लक्ष्यलक्षणयोः संबन्ध इति' । यत्रैको धात्वर्थो लक्ष्योपरोलक्षणन्तत्र द्वयोर्लक्ष्यलक्षणभावेन संबन्धे सति प्रयोक्तुराकाङ्क्षा भवति तत्र न वासमात्रं प्रतिपाद्य प्रयोक्ता चरितार्थो भवति किन्तु तेन प्रसिद्धेन भोजनादिकं स्मारयितुं प्रवर्तते ॥

"परोक्षे लिट्" ॥ परोक्षशब्दोयमतीन्द्रियवाची प्रसिद्धः, व्युत्पत्तिस्तु परमक्ष्णः परोक्षं, मयूरव्यंसकादित्वात्समासः, अच्प्रत्यन्ववपूर्वादित्यत्राजितियोगविभागादच् समासान्तः, वृत्तिविषये चाक्षिशब्दः सर्वेन्द्रियवचनो न चक्षुःपर्यायः, अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्षमापद्येत, एवं च कृत्वा दर्शनपर्यायोक्षिशब्दो न भवतीत्यक्ष्णोदर्शनादित्येवाच् समासान्तोस्तु । अन्ये तु प्रतिपरसमनुभ्योक्ष्ण इति शरत्प्रभृतिषु पाठादच् समासान्त इत्याहुः । स च यद्यप्यव्ययीभावे विधीयते तथापि परशब्देनाव्ययीभावासम्भवात्समासान्तरे विज्ञायते, एवं तु क्रियायां परोक्षायामिति भाष्यप्रयोगे टिड्ढाणञिति ङीप् प्राप्नोति, तस्मादजन्त एवायन्तत्र परतः परशब्दस्य परोभावोस्मादेव निर्देशाद्भवति परशब्दादुत्तरस्यातिशब्दस्यादेरुत्वं वा । 'ननु चेत्यादि' । एकफलोद्देशेन प्रवृत्तत्वादैक्यमिवापन्नो विततरूपः क्षणप्रवाहो धात्वर्थः, स कार्त्स्न्येनैकस्मिन्क्षणे न सम्भवतीति सद्वस्तुविषयैरिन्द्रियैर्न गृह्यते ततश्चैकैकस्य क्रियाक्षणस्य प्रत्यक्षत्वेपि समूहरूपो धात्वर्थः सर्वः परोक्ष एव, ततश्चाव्यभिचारादविशेषणमिति भावः । 'सत्यमेतदिति' । अनन्तरोक्तं मन्यते, किमर्थन्तर्हि परोक्षग्रहणमित्याह । 'अस्त्विति' । यत्र साधनशक्त्याश्रयभूतं फूत्कारसीत्कारादिविशिष्टं संरम्भरूपं द्रव्यं प्रत्यक्षं तत्र धात्वर्थ एव प्रत्यक्षाभिमानो लौकिकानामभिमानो मिथ्याज्ञानन्तद्व्यावृत्तये परोक्षग्रहणं, यदि तर्हि यत्र साधनशक्त्याश्रयन्द्रव्यं परोक्षं तत्र लिड् भवति तर्ह्युत्तमो न प्राप्नोति, तत्र हि बुद्धीन्द्रियशरीरादिसंघातः कर्त्ता स चात्मनः प्रत्यक्ष एव, परस्मैपदानामिति तु णलादेशवचनं णलुत्तमो वेति च छन्दसि

लुङ्लङ्लिटः, अत्यन्तापह्नवइति चापरोक्षे यो लिट् तद्विषयं भविष्यतीत्यत आह। 'उत्तमविषयेपि चित्तव्याक्षेपादिति'। मदस्वप्नादिभिश्चित्ते व्याक्षिप्ते भवति वै कश्चित्स्वकृतमेव न जानाति पश्चादेव त्वया कृतमिति पार्श्वस्थेभ्यः श्रुत्वा प्रयुङ्क्ते सुप्तोहं किल विललापेति किलेत्यज्ञानं सूचयति। 'अत्यन्तापह्नवइति'। अपह्नवोपलापः, कलिङ्गो नाम जुगुप्सितो देशः तत्र प्रविश्य त्वया चिरकालं स्थितमिति कश्चिदुक्तस्सचाह नाहं कलिङ्गं जगामेति, न केवलमवस्थानमेव प्रतिषिध्यते किन्तर्हि तद्धेतुभूतगमनमपीति भवत्यत्यन्तापह्नवः, तथा दक्षिणापथं प्रविश्यायाज्ययाजनादिकं त्वया कृतमिति कश्चिदुक्तः सचाह नाहन्दक्षिणापथं प्रविवेशेति, अत्रा ऽयाज्ययाजनादेर्हेतुभूतः प्रवेश एव प्रतिषिद्धृतइत्यत्यन्तापह्नवः, क्वचिद्दक्षिणापथं प्रविष्टोसीति श्रुतावेव पठ्यते तत्र प्रविश्येदं कृतवानित्यर्थः॥

"प्रश्ने चासन्नकाले"॥ 'भूतानद्यतनपरोक्षइति वर्त्ततइति'। अयमर्थोनुवर्त्ततइत्यर्थः, न पुनरेवं विधस्समासः प्रकृतोस्ति। 'प्रष्टव्यः प्रश्न इति'। कर्मसाधनं प्रश्नशब्दन्दर्शयति, करणसाधने तु प्रश्नक्रियासाधनभूते धातावासन्नकालइत्यर्थस्स्यात् तत्रासन्नकाल इत्यनर्थकं, नह्यनुच्चारितात्प्रत्ययविधानम् उच्चारितश्चासन्नकाल एव भावसाधनेप्यासन्नकाले प्रश्ने वर्त्तमानादित्यर्थस्स्यात् ततश्चार्थान्तरवाचिभ्यो लङ् न स्यादतः कर्मसाधनोयं प्रश्नशब्दः, तत्र पञ्चवर्षाभ्यन्तरमासन्नकालं पञ्चवर्षातीतन्तु विप्रकृष्टकालमिति वर्णयन्ति॥

"लट् स्मे"॥ 'नलेन स्म पुराधीयतइति'। अधिपूर्वादिङः कर्मणि लकारः, कर्माविवक्षायां वा भावे नलेनेति कर्त्तरि तृतीया, अथ वा ऽधीयतइति कर्त्तरि बहुवचनम्, आत्मनेपदेष्वनत इत्यदादेशः, नलेनेति सहयोगे तृतीया, अन्ये तु व्याचक्षते पुराकल्पे नलाख्यन्तृणविशेषं हस्ते गृहीत्वाधीयाना अधीयते स्मेति॥

"अपरोक्षे च"॥ पूर्वसूत्रेण परोक्षे विधानादपरोक्षे न प्राप्नोतीत्ययमारम्भः, पूर्वसूत्रएव परोक्षग्रहणंविवर्त्तिष्यते, यद्येवं तत्सम्बन्धाद-

नद्यतनग्रहणमपि निवर्त्तत मानिवृत्तदित्येवमर्थमिद,न्नुयोर्हि प्रकृतयोरे-कनिवृत्तिर्यत्नेन क्रियमाणा इतरस्यानिवृत्तिमनुमापयति ॥

"ननौ पृष्टप्रतिवचने" ॥ पृष्टमिति कर्मणि क्तः, पृष्टस्य प्रति-वचनं पृष्टप्रतिवचनम्, वृत्तौ तु वस्तुमात्रं दर्शितम् । 'प्रश्नपूर्वके प्रतिवचन-इति'। उदाहरणे पूर्वांशः प्रश्न उत्तर उदाहार्यं, पृष्टग्रहणमर्थकं प्रश्नपूर्व-कमेव प्रतिवचनं, तच, विरुद्धमपि वचनं प्रतिवचनं वचनाभिमुखं प्रतिवचन-मित्यपि सम्भवात्, तस्मात् पृष्टग्रहणमत्यन्तासन्नकाले चायं विधिरिष्यते तत्र निर्वृत्तयामपि पाकादिक्रियायान्तत्कृतस्य श्रमादेरनुवृत्तिः, एवं च श्रमादिदर्शनेन सैव क्रिया वर्त्ततइति शक्यं वक्तुमिति । वर्त्तमाने लडि-त्येव सिद्धेः प्रत्याख्यातमिदम् । ननौ पृष्टप्रतिवचनइत्यशिष्यं क्रियासमा-प्तेरविवक्षितत्वादिति ॥

"पुरि लुङ् चास्मे" ॥ 'अनद्यतनग्रहणमित्यादि'। लुङ्ग्रहणं चात्र लिङ्गं यदि हि भूतमात्रेयं विधिः स्यात् विभाषा लटो विधानात्तेन मुक्ते लुङपि भविष्यति किं लुङ्ग्रहणेन, अनद्यतनग्रहणानुवृत्तौ तु लटा मुक्ते लङेव स्यादिति कर्त्तव्यं लुङ्ग्रहणम् । 'अन्येपीति'। लङ्लिटावभिज्ञावचने लृट् अभिजानासि देवदत्त वत्स्यन्तीह पुरा छात्रा इति ॥

"वर्त्तमाने लट्" ॥ 'प्रारब्धोपरिसमाप्तश्चेति'। अधिश्रयणादि-रधःश्रयणपर्यन्त ओदनफलावच्छिन्नो विततरूपो व्यापारनिचयः पचेरर्थः, एवं सर्वत्र, स यावता कालेन निवर्त्तते स कालो वर्त्तमानः, तद्योगाद्वर्त्त-मानो धात्वर्थ इत्यर्थः, तेन निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य च भावि-त्वान्निष्पन्नानिष्पन्नव्यतिरेकेण राश्यन्तरस्याभावाद्वर्त्तमानाभाव इति चोद्यं परिहृत, मिहाध्ययने प्रवृत्ता यदा भोजनादिक्रियां कुर्वन्तो नाधीयते तदा धीयतइति प्रयोगो न प्राप्नोति, नैष दोषः, आ फलनिष्पत्तेरध्ययनमपरि-समाप्तमन्तरालवर्ति तु भोजनादिकं नान्तरीयकं तस्यैव वावयवक्रिया,य-मपि भवान्मुक्तसंशयं वर्त्तमानकालं न्याय्यं मन्यते भुङ्क्ते देवदत्त इति, अत्राप्यवश्यं भुञ्जानो हसति जल्पति पानीयं वा पिबति तत्र चेद्युक्ता वर्त्तमानकालता इहापि युक्ता दृश्यताम् । उक्तं च

व्यवधानमिवोपैति निवृत्त इव दृश्यते ।
क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः ॥
न च विच्छिन्नरूपोपि स विरामाद्विवर्त्तते ।
सर्वत्र हि क्रियान्येन सङ्कीर्णैवोपलभ्यते ॥
तदन्तरालदृष्टा वा सर्वैवावयवक्रिया ।
सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते ॥

इति। एतदप्यनेनैवोक्तं प्रारब्धोपरिसमाप्तश्च वर्त्तमान इति। इह तिष्ठन्ति पर्वताः स्रवन्ति सिन्धव इति पर्वतादिस्थित्यादेः सर्वदाभावाद् भूतभविष्यदभावात्तत्प्रतिद्वन्द्विरूपस्य वर्तमानस्याप्यभाव इति लण् न प्राप्नोति, नैष दोषः, कालत्रयवर्त्तिनां राज्ञां याः क्रियाः पालनादिका भूतादिभेदेन भिन्नास्ताः पर्वतस्थित्यादेर्भेदिकाः, ततश्च ये सम्प्रति राजानस्तत्क्रियाभेदेन भिन्नायाः पर्वतादिस्थितेर्वर्त्तमानत्वमेवं च कृत्वा भूतभविष्यत्कालयोगोप्युपपद्यते तस्थुः पर्वता नलदुःष्यन्तादिकाले, स्थास्यन्ति पर्वताः कल्किविष्णुकाले, लटष्टकारष्टेरेत्वार्थः ॥

"लटः शतृशानचावप्रथमासमानाधिकरणे" ॥ शकारः सार्वधातुकसंज्ञार्थः, ऋकार उगित्कार्यार्थः, चकारः स्वरार्थः, प्रथमाशब्दस्सुपामाद्ये त्रिके प्रसिद्धः प्रथमाया अन्या ऽप्रथमा द्वितीयादिस्तत्र प्रत्ययग्रहणपरिभाषया तदन्तविधिः, अप्रथमान्तन्द्वितीयाद्यन्तमित्यर्थः, अधिकरणमभिधेयं समानं साधारणमभिधेयं यस्य तत्समानाधिकरणम् अप्रथमान्तेन समानाधिकरणमप्रथमासमानाधिकरणम्, तृतीयेति योगविभागात्समासः, त्रिपदो वा बहुव्रीहिः अप्रथमासमानाधिकरणं यस्येति, यस्य च भावेनेति सप्तमी, अप्रथमासमानाधिकरणे लटि सति तस्य लट इति षष्ठ्यर्थे सप्तमी एष पर्युदासपक्षो दर्शितः, प्रसज्यप्रतिषेधपक्षे तु नञो भवतिना संबन्धः प्रथमाशब्देन प्रथमान्तं गृह्यते शेषं समानं, तत्राद्ये पक्षे कुर्वतोपत्यं कौर्वतः पाचतः कुर्वतो भक्तिः कुर्वद्भक्तिः कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोः शतृशानचौ न स्यातां नह्यत्र द्वितीयाद्यन्तेन सामानाधिकरण्यं नहि कुर्वतो देवदत्तस्य भक्तिः कुर्वतो देवदत्तस्यापत्यमित्यत्र समासतद्धितौ भवतः सापे-

त्वात् पदान्तरनिरपेक्षत्वे प्रथमान्तेन सामानाधिकरण्याभावः प्रसज्यप्रतिषेधे तु प्रथमान्तेन सामानाधिकरण्याभावाददोषः, अस्तु तर्हि स एव एवमपि कुर्वतो भक्तिरस्य कुर्वद्भक्तिः कुर्वाणभक्तिरत्र न प्राप्नोति ये चाप्यते समानाधिकरणवृत्तयस्तद्धितास्तेषु न स्यात् कुर्वत्तरः कुर्वाणतरः कुर्वद्रूपः कुर्वत्कल्प इति, पर्युदासेप्येष दोषो द्रष्टव्यः, एवं तर्हि प्रत्ययोत्तरपदयोश्चेति लक्षणशेषः कर्त्तव्यः तत्र पृथगुत्तरपदग्रहणमन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति समासार्थो या विभक्तेर्लुकि कृते प्रत्ययलक्षणप्रतिषेधात्प्रत्ययापरत्वार्थं, ननु च प्रत्ययोत्तरपदयोः सतोः शतृशानचौ भवतः तयोश्च कृत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तौ सत्यान्तद्धिताः समासश्च समासे च सत्युत्तरपदं तदितरेतराश्रयं भवति, नैष दोषः, ङ्याप्प्रातिपदिकात्तद्धिताः ते लकारस्य कृत्त्वाद्भविष्यन्ति उत्तरपदेपि विधानसामर्थ्यात्तिङादेशं बाधित्वा लान्तस्य प्रातिपदिकत्वमाश्रित्य सुबुत्पत्तौ समास इति सिद्धम्, एवमपि वीक्षमाणस्यापत्यं वैक्षमाणिरित्यकृते शानचि अकारान्तत्वाभावादत इञोप्रसङ्गः पचतितरामित्यत्र शतृशानचौ प्राप्नुतः तथा पचतिरूपमित्यादौ तिङश्चेत्येतनु लङादिविषयमेव स्यात् तदेवं सर्वत्र दोषसद्भावे समासोपि तावद्व्याख्यो भवतीति पर्युदासमाश्रित्याह। 'अप्रथमान्तेन चेदित्यादि'। 'तस्येति'। लटः कथं, पुनर्लटो द्वितीयाद्यन्तेन सामानाधिकरण्यं यावता लः कर्मणि चेत्यनेन कर्तृकर्मणोर्विधीयमानो लकारः क्रियां प्रति गुणभूते कर्तृकर्मणी प्रतिपादयति तथा च क्रियाप्रधानत्वादाख्यातस्य क्रियान्तरयोगाभावाच्छक्त्यन्तरावेशाभावः, नहि भवति प्रचत्योदनं देवदत्तं पश्य पच्यते ओदनेन तृप्तः अपचदोदनन्देवदत्तं पश्य पच्यते ओदनेन तृप्त इति यथान्येषु कृत्सु पाकं पश्य पाकेन तृप्त इति, सत्यं, तिङ्भाविनो लकारस्यायं स्वभावः यदुक्तगुणभूते कर्तृकर्मणी प्रतिपादयति शत्रादिविषयस्य क्रियोपसर्जनकर्त्राद्यभिधानं ततश्च क्रियान्तरयोगे सति तन्निमित्तं द्वितीयाद्यन्तसामानाधिकरण्यमुपपद्यते, यद्यपि केवलस्य लटः प्रयोगाभावादप्रथमान्तेन सामानाधिकरण्यं न क्वचिदुपलब्धं तथापि तदादेशयोः शतृशानचोर्दृश-

नात् स्थानिनो लकारस्यापि तद्योग्यत्वमनुमीयते तेन लटः प्रक्रियार्थं विहितस्य काल्पनिकप्रथमान्तेन सामानाधिकरण्यमस्तीति दोषाभावः। अथ लड्ग्रहणं किमर्थमादेशौ यथा स्यातां प्रत्ययान्तरं मा भूतामिति, नैतदस्ति, पूर्वसूत्रत एव लड्ग्रहणं स्वरयिष्यते तस्येहानुवृत्तस्यार्थात् षष्ठ्या विपरिणामे तस्यैवादेशौ भविष्यतो न प्रत्ययान्तरमत आह। 'लडिति वर्तमाने पुनर्लड्ग्रहणमिति'। 'क्वचित्प्रथमासामानाधिकरण्येऽपि भवत इति'। अप्रथमासमानाधिकरणत्वाभावोपलक्षणमिदं तेन कौर्वतः कुर्वद्भक्तिरित्यादयोऽपि भवन्ति। 'सन्निति'। अस् भुवि श्नसोरल्लोपः। 'विद्यमान इति'। विद सत्तायां दिवादिरनुदात्तेत्। 'जुह्वदिति'। 'नाभ्यस्ताच्छतु' रिति नुमभावः। 'माङ्याक्रोशइति'। माङि लुङोपवादः, तया पुनर्लड्ग्रहणाद्योपि भूते लट् 'ननौ पृष्टप्रतिवचन' इति तस्यापि भवतो ननु मां कुर्वन्तं पश्य ननु मां कुर्वाणम्पश्येति, एतच्च ननौ पृष्टप्रतिवचनइत्यत्र भाष्यकारेणोक्तम्। 'केचिदित्यादि' न चैवम्पचन्तम्पश्येत्यादावपि विकल्पप्रसङ्ग इत्यत आह। 'व्यवस्थितविभाषा चेयमिति'। 'यथादर्शनमिति'। प्रथमासमानाधिकरणे विकल्पः पचन्तं पश्येत्यादौ प्रत्ययोत्तरपदयोश्च नित्यम्पचतितरामित्यादौ नैव भवतः, अन्यथा तिङोपि स्थानिवद्भावात्स्यात्प्रसङ्गः, न तर्हीदानीमिदं वक्तव्यमप्रथमासमानाधिकरणइति वक्तव्यं च किं प्रयोजनमित्यार्यं, नन्वेतदपि विभाषयैव सिद्धं, सत्यं, स एवार्थो वचनेन स्पष्टीक्रियते, एतेन संबोधने च लक्षणहेत्वोरिति च व्याख्यातम्॥

"सम्बोधने च"॥ 'हे पचन्निति'। संयोगान्तलोपस्यासिद्धत्वान्नलोपाभावः, अत्र सम्बोधने प्रथमा, अयमादेशश्चेत्युभयं मिलितं सम्बोधनं द्योतयति॥

"लक्षणहेत्वोः क्रियायाः"॥ 'लक्ष्यते चिह्न्यते येनेति'। चिह्नयतिरवधारयत्यादिवच्चुरादिषु द्रष्टव्यः। 'धात्वर्थविशेषणं चैतदिति'। नोपपदं क्रियाया इति वचनात्, उपपदं हि धातोर्भवति स च क्रियावचन इति क्रियाग्रहणमनर्थकमुपपदत्वे स्यात् क्रियायाश्च लक्षणापेक्षया कर्मत्वं हेत्व-

पेक्षया तु शेषत्वं तत्रोभयानुग्रहाय कर्मणोऽपि शेषत्वविवक्षया शेषलक्षणैव षष्ठी, वृत्तौ तु वस्तुमात्रं प्रादर्शि। 'क्रियाविषयाविति'। 'शयाना भुञ्जत इति'। अत्र शयनं लक्षणं भोजनस्य। 'तिष्ठन्तोनुशासतीति'। अत्रापि स्थानमनुशासनस्य। 'आर्जयन्वसतीति'। अर्ज प्रतियत्ने चुरादिराङ्पूर्वः। 'लक्षणहेत्वोरिति कर्मिति'। क्रियासम्बन्धिन्यर्थे वर्त्तमानादिति विज्ञायमाने लक्षणहेत्वोरपि भविष्यत इति प्रश्नः, अतिप्रसङ्गेन तूत्तरम्। 'पचति च पठति चेति'। अत्र द्वयोः क्रिययोरेकस्मिन्साधने समुच्चयात्तद्द्वारेण परस्परसम्बन्धोप्यस्तीत्युभयत्रापि प्रसङ्गः, यः कम्पते सोऽश्वत्थ इति बहुषु वृक्षेषु तिष्ठत्सु कम्पनेनाश्वत्थो लक्ष्यते, तच्च द्रव्यं यदुत्प्लवते तल्लघ्विति, अत्राप्युत्प्लवनेन लाघवं गुणो लक्ष्यते निषदनं निमज्जनं तेन गौरवं गुणो लक्ष्यते, इह तु योऽधीयान आस्ते स देवदत्त इति आसिक्रियाया एवाध्ययनक्रियालक्षणं न देवदत्तस्य आसिक्रिया तु तस्य लक्षणम्। एवं यस्तिष्ठन्मूत्रयति स ब्राह्मणब्रुव इति अत्रापि स्थितिक्रिया मूत्रणक्रियाया एव लक्षणं सैव तु देवदस्याशौचादेर्लक्षणञ्च स्थितिक्रियेति मूत्रेणैव सिद्ध आदेशः कथं शयाना वर्द्धते दूर्वा आसीनं वर्द्धते विषमिति नह्यासनशयने वृद्धेर्लक्षणं किन्तर्हि स्वभावमात्रकथनमेतत्, भवति वै स्वभावाख्यानमपि लक्षणं यथा चैतन्यलक्षणं पुरुष इति। 'पूर्वनिपातव्यभिचारलिङ्गमिति'। 'द्वन्द्वे घि' अल्पाच्तरमिति यौ पूर्वनिपातौ तयोर्व्यभिचारे लिङ्गमित्यर्थः, तेन धूमाग्नी मृदङ्गशङ्खपणवा इत्यादिप्रयोगोपपत्तिः॥

"तौ सत्"॥ तौग्रहणं किमर्थं, संज्ञाविधिर्यथा स्यात् सदित्यस्य प्रत्ययस्य विधिर्माभूदिति, नैतदस्ति प्रयोजनं, पूर्वसूत्रे शतृशानचौ स्वरयिष्येते तत्सामर्थ्यात्तयोरनुवृत्तयोः संज्ञैव भविष्यति तत्राह। 'तौग्रहणमुपाध्यसंसर्गार्थमिति'। लट्स्थानिकत्वाद् वर्त्तमानकालविहितत्वं चोपाधिस्तेनोपाधिना ऽसम्बन्धार्थन्तौग्रहणमित्यर्थः, किं सिद्धमित्याह। 'शतृशानचौ मात्रस्येति'। असति तौग्रहणे यादृशौ शतृशानचौ प्रकृतौ लट्स्थानिकौ वर्त्तमानकालौ च तादृशयोरेव संज्ञा स्यात् ततश्च लृडादेशयोर्न स्यात्, लृटः स्सद्वेत्येतत्तु वचनं सत्संज्ञकप्रतिरूपयोर्विधानार्थं स्यात् यथा अमी पितृ-

पिण्डाः सिद्धाः क्रियन्तामिति तदाकाराः क्रियन्ते विहितयोरुत्तरकालं संज्ञा न सिध्यति ततश्च ब्राह्मणस्य पचन् ब्राह्मणस्य पचमान इति समासप्रतिषेधो न स्यात् तस्यान्दशायां सत्संज्ञाया अभावात्, एवं भूत-कालयोरपि न स्यात् वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वचनात् भूतेपि शतृशानचौ भवतः, एवं तत्रापि वर्त्तमानवदित्यतिदेशेन विधानमेव तयो-र्भूते सिद्ध्यति न तु संज्ञा प्रत्ययाधिकाराद्धि प्रत्यय एवातिदिश्यते न संज्ञा, तथा ननौ पृष्टप्रतिवचनइत्यपि, लटः शतृशानचौ भवत इत्युक्तं तयोरपि संज्ञा न भवेत् तौग्रहणे सति तयोरपि संज्ञा भवति, ननु मां ब्राह्मणस्य कुर्वन्तम्पश्य ननु मां ब्राह्मणस्य कुर्वाणम्पश्येति, अथ क्रियमा-णेपि तौग्रहणे कथमिव कालान्तरविहितयोः संज्ञा सिद्ध्यति यावता प्रकृ-तस्यैव वस्तुनस्सर्वनाम्ना परामर्शः, सत्यं, तौग्रहणसामर्थ्यात्तु विशेषणांश-परित्यागेन शतृशानचो रूपमात्रं परामृश्यते ॥

"पूङ्यजोः शानन्" ॥ इहैते शानजादयो यदि लटो ऽनुवृत्तिमाश्रित्य तस्यैवादेशाः क्रियेरन् वेति वक्तव्यं पवमानः यजमानः पवते यजतइत्यपि यथा स्यात्, वासरूपविधिना तिङो भविष्यन्ति, न लादेशेषु वासरूपविधिर-स्तीत्युक्तं साधनाभिधानं साधनस्य चाभिधानं प्राप्नोति लः कर्मणि च भावे चाकर्मकेभ्य इति भावकर्मणोरपि प्रसङ्गः, परस्वरश्च न सिद्ध्यति कतीह पवमानाः, अदुपदेशाल्लसार्वधातुकमित्यनुदात्तत्वं प्राप्नोति आत्मनेपदसंज्ञा तङानावात्मनेपदमित्यात्मनेपदसंज्ञा च प्राप्नोति ततश्च परस्मैपदिभ्यश्चा-नश् न स्यात् कतीह नन्दमानास्तस्मादशक्या एवैते लादेशा विज्ञातुमिति मत्वाह। 'शानच्प्रत्ययो भवतीति'। शकारस्सार्वधातुकसंज्ञार्थः, नकार-स्स्वरार्थः।'यदीत्यादि'। न लोकाव्ययेत्यत्र स्वरूपस्य ग्रहणम्मन्यमानस्य प्रश्नः। 'तृचिति प्रत्याहारनिर्द्देशादिति'। षष्ठीप्रतिषेध इत्यनुषङ्गः। 'द्वि-षश्शतुर्वावचनमिति'। द्विषोमित्र इति योयं शतृप्रत्ययस्तस्य प्रयोगे वा षष्ठी भवति प्रत्याहारेन्तर्भावाचित्यं प्रतिषेधे प्राप्ते वचनं यस्यापि तृचिति स्वरूपग्रहणं तेनाप्येतद्वक्तव्यं पक्षे षष्ठी यथा स्याचित्यम्माभूदिति, शेषविज्ञा-नात्सिद्धं, कर्मणि शेषत्वेन द्विवक्षिते षष्ठीकर्मरूपेण विवक्षिते द्वितीयेति ॥

"ताच्छील्यवयोवचनशक्तिषु चानश्" ॥ 'मण्डयमाना इत्यादि'। मडि भूषायां भूष लङ्कारे चुरादौ असु क्षेपणे। पर्यासस्स्वहनं, शिखापर्यायः शिखण्डशब्दः, वचनग्रहणं विस्पष्टार्थम् ॥

"इङ्धार्योः शत्रकृच्छ्रिणि" ॥ 'अकृच्छ्रः सुखसाध्यो यस्य धात्वर्थ इति'। अस्तीति शेषः, अत इनिठनाविनीनिः, अपुत्रा भार्यादिवद् बहुव्रीहिणैव सिद्धे तत्पुरुषान्मत्वर्थीयः कृतः लघुत्वम्प्रति सर्वत्रानादरात्, इङ आत्मनेपदित्वाद्धारयतेश्च कर्त्रभिप्राये शता न सिद्ध्यति लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः ॥

"द्विषोऽमित्रे" ॥ असन्देहार्थं मित्रे द्विष इति सूत्रान्यासादकारप्रश्लेषो विज्ञायतइत्याह। 'अमित्रशत्रुरिति'। अमेर्द्विषतीति अच् प्रत्ययो न पुनरयं नञ्समासः परवल्लिङ्गप्रसङ्गात् लोकाश्रयत्वाल्लिङ्गस्य स्वरे दोषश्चित् स्वरो हीष्यते बह्वृचास्तु मध्योदात्तममित्रशब्दमधीयते अमित्रस्य व्यथया मन्युमिन्द्रः, अमेरमित्रमर्द्दय, द्विषेस्स्वरितत्त्वात्कर्त्रभिप्राये शता न प्राप्नोतीत्ययमारम्भः ॥

"सुञो यज्ञसंयोगे" ॥ कर्मसाधनस्संयोगशब्द इत्याह। 'यज्ञसंयुक्ते भिषवइति'। 'सर्वे सुन्वन्त इति' 'प्रयोगस्तस्य विषयमाह'। 'सर्वे यजमानास्सत्रिण उच्यन्तइति'। सूत्रेषु हि ये यजमानास्ते ऋत्विज इति सर्वे प्रधानकर्त्तारः, इह सुञो यज्ञइत्येव सिद्धं यज्ञविषयश्चेत्सुनोत्यर्थो भवतीत्यर्थः, तत्किं संयोगग्रहणेन तत्राह। 'संयोगग्रहणमिति'। लटश्शतृशानचावित्यनेनाप्यप्रधाने कर्त्तरि न भवति संयोगग्रहणसामर्थ्यात्प्रधानकर्त्ताधिकारी ॥

"अर्हः प्रशंसायाम्"। 'अर्हति चोरो वधमिति'। लटः शतृशानचावित्यनेनापि न भवति प्रथमासमानाधिकरणत्वात् अस्तु वा ऽस्त्वदुपदेशाल्लसार्वधातुकमित्यनुदात्तः ॥

"आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" ॥ 'तदित्यादि'। धातोरिति वर्त्तते धातुश्च शब्दो न तस्य शीलादिप्रतिविशेषणत्वमुपपद्यते तस्मात्तस्य योऽर्थः स शीलादीनां त्रयाणां विशेष्याणां विशेषणत्वेन त्रिभिस्स-

च्छब्देनिर्दिश्यते तत्र धात्वर्थं शीलं यस्य स धात्वर्थो धर्मो यस्य तस्य धात्वर्थस्य साधुकारीत्येवमित्यर्थः। 'तद्धर्मा तदाचार इति'। धर्मशब्दस्याचारे प्रसिद्धत्वात्। 'विनापि शीलेनेति'। तच्छीलाद्भेदं दर्शयति। 'यो धात्वर्थं साधु करोतीति'। विनापि शीलेनेत्यनुषङ्गः॥

"तृन्"॥ 'मुण्डयितार इति'। श्राविष्ठायनानां गोत्रविशेषाणामेष कुलधर्मः। 'अपहर्त्तार इति'। आहुरदेशे भवा आहुरकाः, रोपयेतोः प्राचामिति वुञ्, तेषामेव देशधर्मः,'आहु सिहु' निर्वृत्ते। 'उवेतार इति'। अयमपि कुलधर्मः। 'तृन्विधाविति'। अताच्छील्याद्यर्थ आरम्भः। 'तृजेव भवतीति'। तृन्तृचौ, शंसिक्षदादिभ्यः संज्ञायां चानिटाविन्यनेन। 'स्वरे विशेष इति'। तृनि नादौ च निति कृत्यताविति गतेः प्रकृतिस्वरः स्यात् तृचि तु कृत्स्वरो भवति, तृन्तृचावित्यस्यैव विषयव्यवस्थार्थमिदम् अनुपसर्गेभ्यस्तृन् सोपसर्गेभ्यस्तृजिति प्रपञ्चार्थं वा, तथा च प्रशास्तेति तृच्यपीष्टनास्ति। 'नयतेः षुक् चेति'। गुणे कृते षुगवेदितव्यः,प्रकृत्यन्तरं वा नेषति नेषतु:नेषिषेति दर्शनात्। 'अनिट्त्वं चेति'। त्विषः स्वत एवानिट्त्वादुक्तवक्ष्यमाणसर्वोपसंख्यानशेषभूतमिदं तेन पोता क्षतेत्यनिट्त्वं भवति। 'क्षदेरिति'। धातुष्वपठितोपि क्षदिरस्मादेव वचनादभ्युपगम्यते. आत्मनेपदी चायम् उक्षाणां वा वेहतं क्षतदन्त इति बह्वृचब्राह्मणप्रयोगात्। 'क्व चिदधिकृत इति'। द्वाररक्षणे रथप्राजने च॥

"अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्"॥ कृञिति करोतेर्ग्रहणं प्रसिद्धः न हिंसार्थस्य जनी प्रादुर्भावे डुपचष्पाके, पचि व्यक्तीकरणइत्यस्येदित्वात्नुमा भाव्यमिति नायं निर्देशः सम्भवति, शल हुल पत्ल गतौ उत्पतिष्णु सहिष्णु च चेरतुः खरदूषणौ इति भट्टिकाव्ये प्रयोगः, पद गतावित्यन्ये पठन्ति, मदी हर्षे, मद तृप्तियोगइत्ययं तु चुरादिस्तस्योन्मदेति निर्देशो न सम्भवति, रुच दीप्तौ त्रपूष् लज्जायां वृतु वर्त्तने वृधु वृद्धौ षह मर्षणे चर गत्यर्थः, येत्र सोपपदा उपात्तास्तत्रोपात्तादेव रूपाद्भवति तत एतच्च नोहनीयम् उदः एचपतमद इति वक्तव्यं किं स्वरूपतः प्रत्येकमुत्पूर्वेपाठेनेति तेन समुच्चयति.

ष्णुरिति न भवतीत्याहुः, ये तु निरुपपदा उपात्तास्तेभ्यो यथादर्शनं भवति ॥

"णेश्छन्दसि" ॥ 'पारयिष्णव इति'। अयामन्ताल्वाय्येत्न्वि-ष्णुष्वित्ययादेशः ॥

"भुवश्च" ॥ छन्दसीत्युच्यते तत्कथं जगत्प्रभोरप्रभविष्णु वैष्णवं विष्णवे प्रभविष्णवइति निरङ्कुशाः कवयः। 'भ्राजिष्णुनेति'। नैतद्भाष्ये समाश्रितम् ॥

"ग्लाजिस्थश्चग्स्नुः" ॥ 'चर्त्वभूत इति'। चर्त्वं प्राप्तश्चर्त्वेन वा प्राप्त इत्यर्थः। 'श्र्युकः कितीत्यत्रापीति'। गकारोपि चर्त्वभूतो निर्दि-श्यतइत्यनुषङ्गः। 'क्स्नोर्गित्त्वान्न स्थ ईकारः' स्थास्नुरित्यत्र ईकारो न भवति क्स्नोर्गित्त्वात्। 'क्ङितोरीत्त्वशासनात्'। ककारे ऽकार उच्चारणार्थः क्ङितोर्हीत्त्वमुच्यते ऽयं तु गित्, यद्येवं जिष्णुर्भूष्णुरित्यत्र गुणः प्राप्नोति 'गुणाभावस्त्रिषु स्मार्यः,' गित् किन्ङिदिति त्रिषु गुणाभावः स्मर्त्तव्यः क्ङि-ति चेत्यत्र गकारप्रश्लेषात्, इह तर्हि भूष्णुरिति श्र्युकः कितीतीट्प्रतिषेधो न प्राप्नोति 'श्र्युको ऽनिट्त्वं गकोरितोः' श्र्युकः परस्य यदनिट्त्वं तद्ग-कारककारयोर्द्वयोरपीतोर्भवति न केवलं ककारे तत्रापि गकारस्य चर्त्व-भूतस्य निर्देशात्, यद्येवं चर्त्वस्यासिद्धत्वाद्झशि चेत्युत्वं प्राप्नोति सौत्रो निर्देशो ऽसंहितया वा निर्देशः करिष्यते छन्दसि। 'दंष्णवः पशव इति'। क्स्नोर्गित्त्वादुपधालोपाभावः ॥

"त्रसिगृधिधृषिक्षिपेः क्नुः" ॥ 'त्रस्नुरिति'। नेड्वशि कृतीती-ट्प्रतिषेधः ॥

"शमित्यष्टाभ्यो घिनुण्" ॥ 'इतिशब्द आद्यर्थ इति'। अनेकार्थ-त्वान्निपातानां तत्र शम् इति आदिर्येषामिति बहुव्रीहौ सुपो लुक्, शमु उपशमने, तमु काङ्क्षायां, दमु उपशमने, श्रमु तपसि खेदे च, भ्रमु अनवस्थाने, क्षमूष् सहने, क्लमु ग्लानौ, मदी हर्षे। 'उकार उच्चारणार्थ इति'। नानुब-न्धः, अनुबन्धे हि सति शमिनौ शमिन इत्यत्रोगिदचामिति नुम् प्रसज्येत शमिनितराशमिनितमेत्यत्र नद्याः शेषस्यान्यतरस्याम् उगितश्चेत्यन्यत-

रस्यां ह्रस्वस्स्यात् घङुपकल्पचेलडिति नित्यमिष्यते तस्माचायमनुबन्धः किं तूच्चारणार्थ इति व्याचक्षते। भाष्ये तूकार उगित्कार्यार्थोनुबन्ध एवेति स्थितं तत्र ह्रस्वत्वं विकल्पेनेष्यते न नित्यं, नुम् विधौ तु झल्ग्रहणमनुवर्त्तिष्यते ऽझलन्तत्वाच्च भविष्यति। 'शमीति'। नोदात्तस्येति वृद्धिप्रतिषेधः। उन्मादीति'। ननु प्रमादीत्यत्र चरितार्थमेतत् उत्पूर्वात्त्वलंकृञादिसूत्रेण विशेषविहित इष्णुजेव प्राप्नोति वासरूपविधिना घिनुण् भविष्यति ताच्छीलिकेषु वासरूपविधिर्नास्तीत्येतत्तु प्रायिकमिति वक्ष्यते। 'असितेति'। असु क्षेपणे, तृन्नेव भवति॥

"संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च"॥ पृची संपर्क्के, रुधिर् आवरणे, अनो रुध कामइत्यस्य तु दैवादिकस्याग्रहणं पृचिना साहचर्यात्, अनुना सह पठितस्य दैवादिकस्य ग्रहणमित्यन्ये, यम उपरमे, यसु प्रयत्ने, सृ गतौ, सृज विसर्गे, देवृ देवने, ज्वर रोगे, क्षिप् प्रेरणे, रट परिभाषणे, वद व्यक्तायां वाचि, दह भस्मीकरणे, मुह वैचित्त्ये, दुष वैकृत्ये, द्विष अप्रीतौ, द्रुह जिघांसायां, दुह प्रपूरणे, युजिर् योगे, क्रीडृ विहारे, विचिर् पृथग्भावे, त्यज हानौ, रञ्ज रागे, भज सेवायाम्, चर गत्यर्थः, मुष स्तेये, हन हिंसागत्योः। 'परिदेविभ्रंशादिरिति'। एक्षतइति संबन्धः, क्रीडार्थस्य तु ण्यन्तस्याग्रहणम् अण्यन्तैः साहचर्यात् प्रतिपदोक्तत्वाच्च, अत एव दिव परिकूजनइत्यस्य चौरादिकस्यापि न भवति। 'संपर्कीति'। चजोः कु घिण्ण्यतोरिति कुत्वं, येत्र संपूर्वाः तेषां द्वन्द्वं कृत्वा सम एतेभ्य इति वक्तव्यम्। एवमाङ्पूर्वेषु परिपूर्वेषु च, एवं सिद्धे यत्प्रतिपदं पठति तस्यैतत्प्रयोजनम् उपात्तादेव रूपाद्यथास्यादुपसर्गान्तरयुक्तान्मा भूदिति॥

"प्रे लपसृद्रुमथवदवसः"॥ रप लप व्यक्तायां वाचि, सृ गतौ, द्रु गतौ, मथे विलोडने॥

"निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्"॥ णिदि कुत्सायाम्, तृह हिंसि हिंसायां, क्लिश विबाधने, खादृ

भक्षणे, णश अदर्शने, ण्यन्तः, भाविना णिलोपेन निर्देश, अकारस्त्वागन्तुकः, केचित्तु विनाशीति ण्यन्तमेव पठन्ति, क्षिप प्रेरणे उत्क्षेपणे, वदि ण्यन्तः, भाष व्यक्तायां वाचि, असूयतिः कण्ड्वादियगन्तः, अथ किमयं निन्दादिभ्यो वुञ् विधीयते न ण्वुल्तृचावित्ति ण्वुलैव सिद्धं तदेव रूप स्वरो-ऽप्यसूयतिमेकं वर्जयित्वान्यत्र स एव, असूयतेस्तु ण्वुलि प्रत्यय स्वरेणु-दात्तं स्यात्, वुञि तु ञित्यादिरिति तस्मादेवैकस्माद् वुञ् विधेयो ऽन्ये-भ्यस्तु ण्वुलैव सिद्धं, योयं तच्छीलादिषु तृन्विधीयते स बाधकः प्राप्नोति वासरूपविधिना ण्वुलपि भविष्यति तत्राह। 'ण्वुलेव सिद्ध इति'। 'तृन्ना-दयो न भवन्तीति'। न केवलं ण्वुल्विषयमेव ज्ञापकं किं तर्हि प्रत्ययमा-त्रविषयमित्यर्थः॥

"देविक्रुशोश्चोपसर्गे"॥ 'देवयतेरिति'। दीव्यतेर्हेतुमण्ण्य-न्तस्य दिव कूजन इत्यस्य चुरादिण्यन्तस्य च॥

"चलनशब्दार्थादकर्मकाद्युच्"॥ 'चोपन इति'। चुप मन्दायां गतौ। 'शब्दन इति'। शब्द शब्दने चुरादिः शब्दप्रातिपदिकाद्वा तत्करोतीति णिच्॥

"अनुदात्तेतश्च हलादेः॥ 'जुगुप्सन इति'। गुपादिष्वनुबन्धक-रणमात्मनेपदार्थमित्युक्तत्वाद् अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति समुदायस्यानुदात्तेत्त्वं तत्रास्त्यादिग्रहणे तदन्तविधि स्यात् ततश्चात्र न स्यात् अतस्तदन्तविधिर्मा भूदित्येवमर्थमादिग्रहणम्॥

"जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदः"॥ जु इति सौत्रो धातुः, गतिवचन इत्येके, वेगवचन इत्यन्ये, क्रमु पादविक्षेपे, द्रम हम्म मीमृ गतौ, सृ गतौ, गृधु अभिकांक्षायां, ज्वल दीप्तौ, शुच शोके, लष इच्छायाम्, शल हुल पत्लृ गतौ, पद गतौ, ननु चात्र चंक्रम्यप्रभृतयः के चिच्चलनार्थाः पदिस्त्वनुदात्तेत् तेभ्यो यथायोगं पूर्वसूत्राभ्यामेव युच् सिद्धः किमर्थमिह ग्रहणमित्यत्राह। 'चलनार्थानामित्यादि'। प्रपूर्वः पदिः सकर्मकः। 'ज्ञापकार्थमिति'। ज्ञापनं ज्ञापकं भाष्यकारप्रयोगाद्भावे वुन्। 'अन्ये पदिग्रहणं वर्णयन्तीति'। भाष्यकारादयः, ते हि मन्यन्ते सकर्मकात्य-

देर्युचा न भवितव्यम् अनभिधानादिति. यथाह पदिग्रहणमनर्थकमनुदा-त्तेतश्च हलादेरिति सिद्धत्वात्। वासरूपनिवृत्त्यर्थं त्विति। ताच्छीलिके वासरूपविधिर्नास्तीति निन्दादिसूत्रे तच्छीलादिषु कर्तृषु वासरूपविधिना तृजादयो न भवन्तीति ज्ञापितम्, इह तु ताच्छीलिकेषु परस्परं वासरूप-विधिर्नास्तीति ज्ञाप्यते। 'अलंकर्तेति'। एवमलंकृञादेस्तृच भवतीत्यर्थः, यथा तु पदिग्रहणं ज्ञापकं तथा दर्शयति। 'तथाहीति'। 'उकञा विशेष-विहितेनेति'। लषपतपदेत्यादिना। 'प्रायिकं चैतदिति'। एतच्च सूद-दीपदीक्षश्चेत्यत्र वक्ष्यते। 'गन्तेति'। गमेर्लषपतपदाद्युकञ् विषये तृन् भवति। 'विकत्थन इति'। वौ कषलसेति घिनुणविषयेऽनुदात्तेल्लक्षणो युच् भवति॥

"न यः"॥ अय पय नय तय गताविति नयतेरनुदात्तेत्त्वादेव युचः सिद्धत्वाच्च तस्येदं ग्रहणं किं तर्हि प्रतिषेध एवेति मत्वाह। 'यकारान्ता-दिति'। 'पूर्वेणेति'। अनुदात्तेतश्चेत्यादिना। 'क्नूयिता क्ष्मायितेति'। क्नूयी शब्दे, क्ष्मायी विधूनने॥

"सूददीपदीक्षश्च"॥ षूद क्षरणे, दीपी दीप्तौ, दीक्ष मौण्ड्ये, ननु ताच्छीलिकेषु वासरूपविधिर्नास्तीति ज्ञापितं तत्कथं वासरूपेण युजिह प्राप्नोति तत्राह। 'ताच्छीलिकेष्विति'। प्रायिकत्वस्य चायमेव प्रतिषेधो लिङ्गं सर्वत्र वासरूपविधेरभावे विशेषविहितेन रजन्ययेन बाधितत्वादेव युच् न भविष्यतीति प्रतिषेधोयमनर्थकः स्यात्, तथा चेत्यादिना प्रायिकत्वस्य प्रयोजनन्दर्शयति, नानेन प्रतिषेधेन युज्ञयोरेव समावेशो ज्ञाप्यते यथा भाष्ये प्रतिभासः किं तर्हि ज्ञापकस्यैव प्रायिकत्वं तेन गन्ता खेदं विकत्थन इत्यपि भवति, एतच्च पूर्वमेवोक्तम्। 'अथ वा नन्द्यादिष्विति'। योगविभाग-स्त्विदानीं वैचित्र्यार्थः॥

"लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्"॥ 'अपलाषुकमिति' अशोभनमित्यर्थः। नन्वत्र विशेषविहितत्वादपे च लष इति घिनुणा भाव्यम् अयं तु केवलेत्योपसर्गपूर्वे च लषौ चरितार्थः, वासरूपविधिनोकञ् भविष्यति ताच्छीलिकेषु वासरूपविधिर्नास्तीत्येतत्तु प्रायिकमित्युक्तम्।

'आघातुकं पाकलिकस्य मूत्रमिति'[1]। पाकलो नाम गजानां व्याधिविशेषः स यस्यास्ति स पाकलिकः, द्वन्द्वोपतापगर्ह्यादितीनिरेव प्राप्नोति व्रीह्यादिपाठाच्च भवति, पाकलिको गजस्तस्य मूत्रं स्पृष्टमाघ्रातं वान्यान् गजान्हन्ति एष तस्य स्वभावः। 'आगामुकं वाराणसीं रक्ष आहुरिति'। यः शापादिना रक्षोभूतः तं मोक्षार्थं वाराणसीं प्रत्यागमनशीलमाहुरित्यर्थः॥

"जल्पभिक्षकुट्टलुण्ठवृङः षाकन्"॥ जल्प जप व्यक्तायां वाचि, भिक्ष याच्ञायाम्, कुट्ट छेदने लुण्ठ स्तेये चौरादिकौ, वृङ् सम्भक्तौ॥

"प्रजोरिनिः"॥ इनेरिकारो नकारस्येत्संज्ञा माभूदिति॥

"जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च"॥ जि जये जि अभिभवे द्वयोरपि ग्रहणं, दृङ् आदरे, श्रिञ् सेवायाम्, इण् गतौ, टुवम् उद्गमने, व्यथ भयचलनयोः नञ्पूर्वः, नञः कृतलोपस्य निर्देशः, निपातनाच्च नञो धातुना समासः, ततो नलोपः, ततः प्रत्ययः, अम रोगे, भू सत्तायाम्। 'द्वयोरपि ग्रहणमिति'। क्षिष हिंसायामित्यस्य तु सानुबन्धकत्वादग्रहणम्। 'सू प्रेरण इत्यस्य ग्रहणमिति'। षूङ् प्राणिगर्भविमोचने षूङ् प्राणिप्रसवइत्येतयोस्तु सानुबन्धकत्वादग्रहणं, प्रजोरप्यत्रैव ग्रहणं कर्तव्यम् एवं हि चकारो न वक्तव्यो भवति तथा तु न कृतमित्येव॥

"स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्"॥ 'चुरादावदन्ताः पठ्यन्तइति'। तेन णौ कृतस्यातो लोपस्य स्थानिवद्भावात्पतयतेरत उपधाया इति वृद्धिर्न भवति, स्पृहयति गृहयत्योश्च लघूपधगुणो न भवतीति भावः। 'श्रत्पूर्वो धाञिति'। धेटस्तु श्रत्पूर्वस्याप्रयोग एव। अथ किमर्थमालुज्विधीयते न लुजेवोच्येत का रूपसिद्धिः स्पृहयालुः शपि कृते अतो दीर्घो यञीति दीर्घो भविष्यति तत्र हि 'तुरुस्तुशम्यमः सार्वधातुके'इति सार्वधातुकग्रहणमनुवर्तते न तु तिङ्ग्रहणं लकारस्येत्संज्ञाप्रयोजनाभावाच्च भविष्यति यकारादित्वाद्वा, किं यकारो न श्रूयते लुप्तनिर्दिष्टो यकारः, एवमपि श्रद्धालुर्न सिद्ध्यति कथं शपः श्लुर्द्विर्वचनं श्नाभ्यस्तयो-

१ मुद्रितमूलपुस्तके आघातुकं कापालिकस्य मूत्रमिति दृश्यते एतद्व्याख्यानात्तु आघातुकं पाकलिकस्य मूत्रमिति पाठोयुक्तः प्रतिभाति।

रातः श्रद्धालुरिति प्राप्नोति श्रथापि संज्ञापूर्वको विधिरनित्य इति द्विर्वचनं न प्रवर्तिष्यतइत्युच्येत एवमपि ज्ञापनार्थमालुच् विधीयते एतज् ज्ञापयति यत्रालुचैव रूपसिद्धिस्ततोऽयं भवतीति तेनालुचि शीङो ग्रहणमित्येतच्च वक्तव्यं भवति॥

"दाधेट्सिशदसदो रुः" ॥ गामादाग्रहणेष्वविशेष इति दारूपाणां त्रयाणां यथाभिधानं ग्रहणं, धेट् पाने, षिञ् बन्धने, शद्लृ शातने, षद्लृ विशरणगत्यवसादनेषु ॥

"सृघस्यदः क्मरच्" ॥ घसिः प्रकृत्यन्तरमस्ति ॥

"भञ्जभासमिदो घुरच्" ॥ भञ्जो आमर्द्दने, भासृ दीप्तौ, ञिमिदा स्नेहने ॥

"विदिभिदिच्छिदेः कुरच्" ॥ 'न लाभार्थस्येति'। ज्ञानार्थस्येदमुपलक्षणं न लाभार्थस्येत्यर्थः, कुत इत्याह। 'स्वभावादिति'। तेन लुग्विकरणालुग्विकरणयोरित्येतदपि न प्रवर्त्ततइत्यर्थः, विदिभिदिच्छिदेर्हिंदिति प्रकृतस्यैव घुरचो ङित्त्वातिदेशेनैव सिद्धे प्रत्ययान्तरकरणमातिदेशिकं ङित्त्वमनित्यमिति ज्ञापनार्थं, तेन धू विधूनने कुटादिः, ततोऽर्त्तिलूधूइतीत्रप्रत्यये कृते ङित्कार्यं न भवति। केचित्तु धुवित्रमित्येवेच्छन्ति प्राणा वै धवित्राणीति छान्दसं तदनुसारेण कल्पसूत्रेषु प्रयोगः। 'कर्मकर्त्तरीति'। माघस्तु शुद्धे कर्त्तरि प्रयुङ्क्ते गुरुमत्सरच्छिदुरयादुरयाचितमङ्गना इति ॥

"इण्नश्जिसर्त्तिभ्यः क्वरप्" ॥ क्वरपः पकारः स्वरार्थः तुगर्थश्च। 'इत्वरीति'। टिड्ढाणञित्यादिना ङीप् ॥

"यजजपदशां यङः" ॥ दंशेर्भाविना नलोपेन निर्द्देशः। 'यायजूक इति'। 'दीर्घोऽकित इत्यभ्यासस्य दीर्घत्वम्। 'जञ्जपूकः दन्दशूक इति'। जपजभदहदशेति नुक् ॥

"नमिकम्पिस्म्यजसकमहिंसदीपो रः" ॥ अजसेत्यकार आगन्तुकः। 'क्रियासातत्यइति'। क्रियाणामविच्छेदेन प्रवृत्तिः क्रियासा-

तव्यं, कथं तर्ह्यग्निषु प्रयोगः अजस्रानजुहूत इन्धीरविति आधानाद् द्वादशरात्रमजस्रा इति अत्राप्यजस्रजागरणादजस्राः ॥

"सनाशंसभिक्ष उः" ॥ 'न सनिर्धातुरिति'। षणु दाने वन षण संभक्ताविति च धातुर्न दृश्यते कुतः गर्गादिषु विजिगीषुशब्दस्य पाठात्। 'न शंसेः स्तुत्यर्थस्येति'। एतदाङा सह निर्देशाद्विज्ञायते इच्छार्थो हि स तेन सह पठ्यते न स्तुत्यर्थः ॥

"विन्दुरिच्छुः" ॥ 'विदेरिति'। ज्ञानार्थस्य ग्रहणं नेतरेषामनभिधानात् निपातनाद्वा बिन्दुशब्दस्तु पवर्गादिर्बिदि अवयवइत्यस्मादौणादिके मृगय्वादयश्चेत्युप्रत्यये भवति वकारस्यच्छन्दसि पक्षे भकार इष्यते वैश्वदेवा भिन्दव इति। 'इषेरिति'। इषु इच्छायामित्यस्य, इषु गतौ इष अभीक्ष्ण्ये इत्येतयोस्तु पूर्ववद्ग्रहणम् ॥

"क्याच्छन्दसि" ॥ 'क्य इति क्यच्क्यष्क्यङां सामान्येन निर्देश इति'। सूत्रे वृत्तौ च ककारानुबन्धवतो धातुसंज्ञानिमित्तस्य प्रत्ययस्योपलक्षणात् कण्ड्वादियकोपि ग्रहणं तेन भुरण्युः तुरण्यवोङ्गिरसो नक्षत्रसपर्यम सपर्यव इत्यादि भवति, भाषायां च सुयुशब्द उणादिषु मृगय्वादिषु पाठाद् द्रष्टव्यः 'मित्रयुरिति'। क्यचि चेतीत्वम् अकृत्सार्वधातुकयोरिति दीर्घत्वं च न भवति न च्छन्दस्यपुत्रस्येति निषेधात् ॥

"आदृगमहनजनः किकिनौ लिट् च" ॥ किकिनौ लिट् चापरार्थं प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति गौर्वाहीक इतिवदित्याह। 'लिड्वच्च तौ भवत इति'। किकिनौ भवतो लिट् च प्रत्ययो भवतीत्ययं त्वर्थो न भवति तथा हि सति लिट् किकिन इत्येव ब्रूयात्, कार्यातिदेशश्चायं, यद्येवं लः परस्मैपदमिति परस्मैपदसंज्ञा किकिनोःस्यात् ततश्च देङ्गृङादिभ्य आत्मनेपदिभ्यो न स्यातां, न लकारस्य परस्मैपदसंज्ञा किं तर्हि तदादेशानां न चैतावादेशौ, एवमपि भावकर्मकर्तृषु त्रिष्वपि लिड्वद्भावात्किकिनौ प्राप्नुतः, नैष दोषः, उत्पन्नयोर्लिट्कार्यमतिदिश्यते। उत्पत्तिश्च तयोः कर्तर्येव भवति कर्त्तरि कृदित्यनेनास्यैकवाक्यत्वात् अनभिधानाद्वा भावकर्मणोर्न भविष्यतः, वर्त्तमानाधिकाराच्च वर्त्तमाने किकि

नोर्विधानमिति भूतकालतापि विरोधाचातिदिश्यते, स्वरूपाबाधेन च कार्यातिदेशः प्रवर्त्ततइति तिबादीनां क्वानच्क्वस्वोरश्चाभावः । 'आद्विति दकारो मुखसुखार्थ इति' । आदित्ययं दकारः स च मुखसुखार्थ इत्यर्थः । 'नत्वयं तपर इति' । तश्चासौ परश्च तपरो नायमकारात्परस्तकारो उरत्वेन निर्दिष्ट इत्यर्थः, किं कारणमित्याह । 'मा भूदिति' । तकारो मुखसुखार्थ इति पाठे तु आदित्ययं तकारः स मुखसुखार्थो न तु तपरकार्यसम्पादनार्थ इत्यर्थः । 'पपिः सोममिति' । न लोकाव्ययेति षष्ठीप्रतिषेधो लिटः कार्यमिति सोमशब्दाद् द्वितीया । 'ततुरिरिति' । बहुलं छन्दसीत्युत्वं द्विर्वचने ऽचीति स्थानिवद्भावात्तृ इत्येतद् द्विरुच्यते । 'जग्मिरिति' । गमहनेत्युपधालोपः, चुत्वम् । 'तद्बाधनार्थं किच्चमिति' । ऋतश्चेकारान्तानां च किकिनोर्गुणो माभूदित्येवमर्थमित्यर्थः । 'उत्सर्ग इति' । धातुमात्राद्विधानं कर्त्तव्यमित्यर्थः । कस्मादित्यत्राह । 'सदादिभ्यो दर्शनादिति' । 'सेदिर्नेमिरिति' । सदेर्नेमेश्चेत्वाभ्यासलोपौ । 'सहिवहीत्यादि' । अत्र भाषायामित्यपेक्ष्यते । 'पापतिरिति' । 'नीग्वञ्चुस्रंस्वित्यादिना नीगागमः प्राप्तः सासहिवावहिचाचलिपापतीनां निपातनमिति वार्त्तिककारवचनाच भवति, इदं तु वृत्तौ पठितं वाक्यमपर आहेति भाष्ये पठितं तत्रापि भाष्यकारवचनान्नीगभावः, उक्तं हि तेन तान्येवोदाहरणानीति ॥

"स्थेशभासपिसकसो वरच्" ॥ 'ईश्वर इति' । नेड्वशि कृतीतीट्प्रतिषेधः, स्त्रियामीश्वरा, विन्यस्तमङ्गलमहौषधिमीश्वरायाः, ईश्वरीं सर्वभूतानामिति तु छान्दसः, औणादिको वरडित्यन्ये, पुंयोगादाख्यायामित्यन्ये, अन्येभ्योऽपि दृश्यन्तइति क्वनिपि वनो र चेति ङीप्रावित्यन्ये ॥

"यश्च यङः" ॥ 'यायावर इति' । पूर्ववदिटि प्रतिषिद्धे ऽतो लोपः, लोपो व्योर्वलि, अल्लोपस्य स्थानिवत्त्वादाल्लोपः प्राप्तो वरे कृतस्य स्थानिवत्त्वनिषेधाच भवति ॥

"भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्" ॥ भ्राज् दीप्तौ, भास दीप्तौ, तुर्वी थुर्वी दुर्वी धुर्वी हिंसायां, द्युत दीप्तौ, ऊर्ज बलप्राण-

नयोः, पॄ पालनपूरणयोः, जु इति सौत्रो धातुः, ष्टुञ् स्तुतौ ग्रावपूर्वः। 'जवतेर्दीर्घत्वं चेति'। केचिदाहुः सूत्रे जू इति दीर्घः पठितव्य इति, विध्यन्तरोपसंग्रहार्थं दृशिग्रहणमुत्तरसूत्रादपकृष्टव्यमित्यन्ये। 'ग्रावस्तुदिति'। ग्रावशब्दः सप्तमीनिर्देशाभावेऽप्युपपदसंज्ञ इष्यते, अन्ये तु सूत्रनिर्देशाद्धातुनैव समासे पश्चात्क्विपं कुर्वन्ति ॥

"अन्येभ्योऽपि दृश्यन्ते" ॥ 'विध्यन्तरोपसंग्रहार्थमिति'। दृशिग्रहणे सति यथा क्विबन्ता धातवो दृश्यन्ते तथैव तेऽनुगन्तव्या इत्यर्थो भवति, एवं च ते तथानुगता भवन्ति यदि यथायोगं द्विर्वचनादयो भवन्ति, विध्यन्तरमेव दर्शयति। 'क्वचिदिति'। 'तथा चाहेति'। वार्त्तिककारः, आयतं स्तौत्यायतस्तूः कटं प्रवते कटप्रूः। 'दिद्युदिति'। द्युतिस्वाप्योः सम्प्रसारणमित्यभ्यासस्य सम्प्रसारणम्, कथं पुनरभ्याससंज्ञा यावता प्रत्यासत्तेः षाष्ठिक एव द्विर्वचने सा विधीयते, अत एवाष्टमिके न भवति एवन्तर्हि दृशिग्रहणादेव सम्प्रसारणमभ्याससंज्ञा वा द्रष्टव्या। 'जगदिति'। गमः क्वाविति मलोपः, अत्रापि पूर्ववदेवाभ्यासकार्यं, द्वे चेति चकारेण दीर्घः समुच्चीयमानो दीर्घश्रुत्याऽचश्चेत्युपस्थानादचा च तदन्तविध्याश्रयणाज्जुहोतेरेवाजन्तस्य विज्ञायते न द्युतिगम्योरित्याह। 'जुहोतेर्दीर्घत्वं चेति'। 'जुहूरिति'। करणस्यात्र कर्तृत्वविवक्षा, धीरित्यत्रापि करणस्यैव कर्तृत्वविवक्षा, पुरुषो हि ध्यायति न धीः ॥

"भुवः संज्ञान्तरयोः" ॥ 'धनिकाधमर्णयोरिति'। यस्मै ऋणं धार्यते स धनिकः, यो धारयति सोऽधमर्णः, तयोरन्तरे मध्ये यस्तिष्ठति विश्वासार्थं स प्रतिभूरित्युच्यते ग्रामयोरन्तरे यस्तिष्ठति तत्र न भवति, एतच्च दृशिग्रहणानुवृत्तेर्लभ्यते, यद्येवं संज्ञेयं भवति तत्र संज्ञायामित्येव सिद्धम्, अत्राहुः। यावद्द्रव्यभाविन्यः संज्ञा भवन्ति प्रतिभूशब्दस्तु सत्येव तस्मिन्नृणप्रतिदाने निवर्त्तते ॥

"विप्रसंभ्यो ड्वसंज्ञायाम्" ॥ 'मितद्र्वादिभ्य इति'। मितादिपूर्वेभ्यो धातुभ्य इत्यर्थः। 'शम्भुरिति'। अन्तर्भावितण्यर्थोऽत्र भवतिः ॥

"धः कर्मणि ष्ट्रन्" ॥ 'कर्मणि कारकइति'। उपपदं तु कर्म न सम्भवति यदि स्यात्कर्मण्यणित्यस्मिन्नेव प्रकरणे ष्ट्रनं विदध्यात्। ननु चोत्तरसूत्रे पुनः ष्ट्रन्ग्रहणं कर्त्तव्यं स्यात् अस्तु लघीयो हि कर्मग्रहणात्ष्ट्रन्ग्रहणम्, न चेह वर्त्तमानकाले ष्ट्रन्प्रत्ययः धात्रीत्युक्ते क्रियाकारकसम्बन्धमात्रं गम्यते अतः कर्मणीति प्रत्ययार्थएव नोपपदम् ॥

"दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" ॥ 'दाप् लवन इति'। दैप् शोधन इत्यस्य त्वग्रहणमनभिधानात्। 'युजिर् योगइति'। युज समाधावित्यस्य तु पूर्ववदेवाग्रहणम्। 'करणे कारकइति'। उपपदं तु करणं न भवति अजादिषु दंष्ट्राशब्दस्य पाठात्, अत एव च पाठात्सूत्रे ऽनुनासिकलोपेन निर्देशेऽपि ष्ट्रनि न भवति ल्युट्येव तु भवति योत्र सेट् ततस्तितुत्रेत्यादिनेट्प्रतिषेधः ॥

"हलसूकरयोः पुवः" ॥ 'तच्चेत्करणं हलसूकरयोरवयवो भवतीति'। एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्यति। 'मुखमुच्यतइति'। नान्यः कर्णादिः, एतदपि स्वभावादेव लभ्यते ॥

"अर्त्तिलूधूसूखनसहचर इत्रः" ॥ इकारोपदेशस्तितुत्रेति एकाच इति च यथायोगमिट्प्रतिषेधो मा भूदिति स्वरार्थश्च, इटि हि सत्यागमानुदात्तत्वं स्यात् इत्रा तु प्रत्ययाद्युदात्तत्वम् ॥

"पुवः संज्ञायाम्" ॥ 'बर्हिष्पवित्रमिति'। बर्हिषा कृतं बर्हिषः पवित्रं भवति तत्र षष्ठीसमासः नित्यं समासेऽनुत्तरपदस्थस्येति षत्वं येनाज्यमुत्पूयते तत्पवित्रं अनामिकायाश्चाङ्गुलेर्वेष्टनं जपादिषु ॥

"कर्त्तरि चर्षिदेवतयोः" ॥ 'ऋषौ करणइति'। ऋषिर्वेदमन्त्रः तदुक्तमृषिणेतिदर्शनादित्याहुः ॥

"ञीतः क्तः" ॥ 'भूते निष्ठाविहितेत्यादि'। तत्र येन नाप्राप्तिन्यायेन क्तस्यैव वर्त्तमानविषयतया भूतविषयता बाध्यते यथा वडवायां वृषे वाच्यइत्यत्र वक्ष्यते अपत्ये प्राप्तस्ततोपकृष्य वृषे विधीयतइति, एवमुत्तरसूत्रविहितस्यापि, ज्ञातमित्येतत्तु भूतेपि भवति तेनेत्यधिकारे उप-

ज्ञातइति तद्धितविधानात्, वर्त्तमाने हि क्तस्य च वर्त्तमानइति षष्ठी भाष्यम् एवं च पूजितो यः सुरैरपीत्यादीनां साधुत्वं चिन्त्यम् ॥

"मतिबुद्धिपूजार्थेभ्यश्च" ॥ 'मतिरिच्छेति'। बुद्धेः पृथगुपादाना-द्बुद्धिर्न गृह्यते। 'मत इति'। अनुदात्तोपदेशे त्यनुनासिकलोपः। 'शीलित इत्यादि'। शील समाधौ रक्ष पालने क्षमूष् सहने क्रुश आह्वाने रोदने च जुषी प्रीतिसेवनयोः रुष रोषे हृञ् हरणे हृषु अलीके हृष् तुष्टाविति वा तुष तुष्टौ कमु कान्तौ यम उपरमे कष हिंसायां मृङ् प्राणत्यागे तत्राद्यौ सेटौ, ऊदितामुदितां च यस्य विभाषेतीट् प्रतिषेधः, ईदितः श्वीदितो निष्ठायामिति। 'हृष्ट इति'। हृषेर्लोमस्विति रुषेः कृच्छ्रगहनयोः कष इति रुषेः त्वरत्वरसंघुषास्वनाममिति विकल्पः। 'सुप्त इति'। सुपेर्जीतः क्त इत्येव सिद्धे नञिङा तच्छीलादिषु बाधा मा भूदिति समुच्चीयते क्वचित्तु सुप्त इति पठ्यते ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयस्याध्यायस्य द्वितीयः पादः ॥

"उणादयो बहुलम्" ॥ 'वर्त्तमाने इत्येवेति'। वर्त्तमाने लडित्यतो वर्त्तमानग्रहणानुवृत्तेरविच्छेदमेवकारेण दर्शयति। 'संज्ञायामिति चेति'। पुवः संज्ञायामित्यत उणादय इत्येव सूत्रमुणादीनां शास्त्रान्तरपरिपठिता-नां साधुत्वानुज्ञानार्थमस्तु किं बहुलग्रहणेन तत्राह। 'बाहुलकमिति'। ला आदाने बहूनर्थान् लाति बहुलं तस्य भावो बाहुलकं मनोज्ञादित्वाद्वुञ् तत्पुनर्बहूर्थादानं बहुलशब्दप्रवृत्तिनिमित्तं बहवः पुनरर्थाः क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरिति वक्ष्यमाणलक्षणाः। 'प्रकृतेरिति'। जातावेकवचनं तनु-शब्दाच्च वृत्तिविषये गुणमात्रवचनः प्रकृतीनां तानवमल्पत्वं दृष्ट्वा तद्बाहुल-कमुक्तं तेनापठिताभ्योऽपि प्रकृतिभ्य उणादयो भवन्ति यथा हृषेरुलजुकः शके-रपि भवति शकुलेति तथा तेषामुणादीनां पञ्चपाद्यां प्रायेण समुच्चयनं कृतं न तु साकल्येन बहुलवचनात्त्वविहिता अपि भवन्ति यथार्त्तेः फि-डफिड्डौ भवतः ऋफिडः ऋफिड्ड इति कार्यमशेषविधेश्च कार्याणि च स शेषाणि विहितानि न निःशेषाणि बहुलवचनात्त्वविहितान्यपि भवन्ति

षणु दाने अस्मन्तादुः, धात्वादेः षः स इति सत्वं न भवति कृते वा सत्वे षत्वं भवति। स्यादेतत् यावत्यः प्रकृतयः पञ्चपाद्यामुपात्ता यावन्तश्च प्रत्यया यावन्ति च कार्याणि विहितानि तावन्त्येव भवन्तु मा भूदन्येषां बहुलग्रहणेन संग्रह इति तत्राह। 'नैगमरूढिभवं हि सुसाध्विति'। निगमश्छन्दस्तत्र भवा नैगमाः निगमशब्दस्याथादिस्वरेणान्तोदात्त इति बह्वचोऽन्तोदात्ताट्ठञिति ठञि प्राप्ते ऋगयनादिपाठादण् रूढिः प्रसिद्धिस्तत्र भवा रूढिभवाः संज्ञाशब्दाः तेषां साधुत्वमनुपात्तानां प्रकृत्यादीनां बहुलग्रहणेन संग्रहे सति भवति नान्यथा हिशब्दो हेतौ यस्मादेवं तस्माद्बाहुलकमुक्तमित्यर्थः, अन्येऽप्याचार्यैर्नैगमरूढिभवानां प्रकृत्यादिविभागेन व्युत्पादनं कृतमतोऽस्माभिरपि तत्कर्त्तव्यमेवेत्यभिप्रायेणाह। 'नाम चेति'। निरुक्तकारो हि यास्क आचार्यः स्वशास्त्रे निरुक्तेः सर्वमेव नामधातुजमाह तोकमित्यपत्यनाम शकटस्य तोकं शाकटायनः, यचेति पदमर्थः प्रयोजनमस्य व्युत्पाद्यत्वेनेति पदार्थः प्रकृत्यादिः पदार्थश्चासौ विशेषश्च पदार्थविशेषः तस्मात्समुत्थितं पदार्थविशेषसमुत्थं यदेवं विधं न भवति प्रकृत्यादिविशेषोपादानेनाव्युत्पादितमित्यर्थः, तद्धातुजत्वेनोह्यं, कथमूह्यं, 'प्रत्ययतः प्रकृतेश्च,' यत्र शब्दरूपे परभागः प्रत्ययत्वेन प्रसिद्धो न केन चित्सदृशः श्रुतः तत्र तं भागं प्रत्ययं कल्पयित्वा परिशिष्टो भागः प्रकृतित्वेनोह्यते ऋवेरुलजिति प्रत्ययं दृष्ट्वा शङ्कुः प्रकृतिरूह्यते तेन सिद्धं शङ्कुलेत्यस्य धातुजत्वं यत्र तु पूर्वो भागो धातुत्वेन प्रसिद्धो न केन चित्सदृशस्तत्र तं भागं प्रकृतिं कल्पयित्वा परिशिष्टो भागः प्रत्ययत्वेनोह्यः यथा ऋफिडः ऋफिड्ड इति फिडफिड्डौ प्रत्ययौ स चायमूहोऽनादिप्रयुक्तास्वेव सञ्ज्ञासु न सर्वत्रेत्याह। 'संज्ञास्विति'। कार्याद्गुणप्रतिषेधादिकादनुबन्धं ककारादिकं विद्यात् तेन फिडफिड्डौ कितावूह्यौ एतदेवानन्तरोक्तमूहात्मकं शास्त्रमुणादिष्वनुक्तेषु ॥

"भूतेऽपि दृश्यन्ते"॥ 'पूर्वत्र वर्त्तमानाधिकारादिति'। तत्रैव वर्त्तमानग्रहणं न निवर्त्तितं बाहुल्येन वर्त्तमाने भवन्ति क्व चिदेव भूते भवन्तीति किल विवेकप्रदर्शनायेति भावः, उदाहरणेषु ताभ्यामन्यत्रोणादय

इति संप्रदानापादानव्यतिरिक्ते कारके मनिन् प्रत्ययः नेड्वशि कृतीतीट्प्रतिषेधः ॥

"भविष्यति गम्यादयः" ॥ यथा स्पदो जव इत्युक्ते जवशब्दपर्यायः स्पदशब्दो भवति तथेहापि भविष्यच्छब्दपर्याया गम्यादयः प्राप्नुवन्तीत्याशङ्क्याह । 'प्रत्ययस्यैवेत्यादि' । प्रकृत्यर्थगता भविष्यत्कालता प्रत्ययस्यैव द्योत्यत्वेन विधीयते न पुनः प्रकृत्यर्थपरित्यागेन समुदायस्येत्यर्थः । 'न प्रकृतेरिति' । न प्रकृतेरपीत्यर्थः, गम्यादिषु के चिदुणादयः के चिदष्टाध्यायीगताः । 'गमी ग्रामगामीति' । गमेरिनिः आङि णिच्चेतीनिः । 'भावी प्रस्थायीति'। अस्मिन्नेवाधिकारे भुवश्च प्रात्स्थ इतीनिः णित्त्वाद्वृद्धिर्युक्च रुधियुधिबुधियातिभ्यः प्रतिपूर्वेभ्यो ग्रहादिनिः, अस्मादेव निपातनादित्यन्ये, सुप्यजातावित्यन्ये । 'प्रतियोगीति' । संपृचादिसूत्रेण घिनुणि चजोः कु घिण्ण्यतोरिति कुत्वं णिनिप्रत्यय एव न्यङ्क्वादिपाठादस्मादेव निपातनाद्वा कुत्वमित्यन्ये । 'अनद्यतनउपसंख्यानमिति' । किं पुनः कारणं न सिद्ध्यति लटायं निर्देशः क्रियते लट् चानद्यतने लुटा बाध्यते तेन लट एव विषये एते स्युः, न वा वाक्यार्थत्वाद्गम्यादयः शब्दा विशेषे यत्सामान्यं तदाश्रयेण प्रवर्त्तन्ते अनद्यतनाख्यस्तु विशेषः श्वःशब्दमहिम्ना गम्यते विशेषविवक्षायां तु लुडेव भवति श्वो गन्ता ग्राममिति वासरूपविधिना च लृडपि भवति तेन भविष्यति गमिष्यतीत्यादयः प्रयोगा उपपद्यन्ते ॥

"यावत्पुरा निपातयोर्लट्" ॥ पुरेत्यविभक्तिको निर्देशः कर्मधारयो वा निपातनाद्विशेषणस्य परनिपातः निपातौ चैतौ निश्चयं द्योतयतः, एतयोश्च प्रयोगे वर्त्तमाने लपन भवति भविष्यत्कालतया वर्त्तमानकालताया बाधनात् । 'यावद्भास्यतीति' । यत्परिमाणमस्य यत्तदेतेभ्यः परिमाणे वतुप् आ सर्वनाम्न इत्यात्वम् । 'पुरा व्रजिष्यतीति' । पॄ पालनपूरणयोः भ्राजभासेत्यादिना क्विप् उदोष्ठ्यपूर्वस्येत्युत्वमस्य, तृतीयान्तत्वं द्योतयितुं करणभूतयेत्युक्तं, प्रतिपदोक्तत्वादेव निपातयोर्ग्रहणे सिद्धे निपातग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थं तेनातां पुष्या-

वित्यत्रलातखिकस्याप्याकारान्तस्य पुग्भवति क्रीङ्जीनां णौ क्रापयति ज्ञापयतीति ॥

"विभाषा कदाकर्ह्योः" ॥ अनद्यतने लुडित्यत्राप्ययं योगोनुवर्त्तनीयः तेन लुड्विषयेपि पक्षे लड् भवति, अत एव पक्षे लुडप्युदाहृतः एतच्च पूर्वयोगेपि द्रष्टव्यम् । 'कर्हि भोक्ष्यतइति' । ननु च कर्हिशब्दो ऽनद्यतनविषयः तत्प्रयोगे लुडेव भवितुमर्हति न लृट् न वा वाक्यर्थत्वात् । भोक्ष्यतइति पदं भविष्यत्सामान्ये वर्त्तते अनद्यतनावगतिस्तु कर्हि शब्दाधीना न च वाक्यार्थः पदसंस्कारउपयुज्यते ॥

"किंवृत्ते लिप्सायाम्" ॥ 'किमो वृत्तं किंवृत्तमिति' । वर्त्ततेस्मिन्निति वृत्तं क्तोधिकरणे चेत्यधिकरणे क्तः अस्मादेव निपातनादधिकरणवाचिना चेति षष्ठीसमासप्रतिषेधाभावः शेषषष्ठ्या वा समासः यत्र किंशब्दोवयवत्वेन वर्त्तते तत्सर्वं किंवृत्तं ततश्च कीदृशः किमीयः किन्तरामित्यादावतिप्रसङ्गात्परिगणनम् । 'वृत्तग्रहणेनेति' । तदिति शब्दरूपापेक्षं नपुंसकत्वम् । 'इतरडतमौ चेति' । इतरडतमान्तं किंशब्दरूपमित्यर्थः । 'कं भवन्तो भोजयितार इति' । अस्याप्यनद्यतने लुडित्यत्रानुवृत्तिरिति भावः, एवमुत्तरेष्वपि योगेषु द्रष्टव्यम् ॥

"लिप्स्यमानसिद्धौ च" ॥ लिप्स्यमानसिद्धाविति षष्ठीसमासो वृत्तौ तु वस्तुमात्रमदर्शि । 'लिप्स्यमानात्सिद्धिरिति' । अस्मादेव निपातनाद्वा पञ्चमीसमासः लिप्स्यमानं भक्तादि तन्निमित्ता या स्वर्गादेः सिद्धिस्तस्यामित्यर्थः, ननु च यत्र लिप्स्यमानस्य सिद्धिर्गम्यते लिप्सापि तत्र भवति ततश्च पूर्वेणैव सिद्धं नार्थ एतेन तत्राह । 'अकिंवृत्तार्थोयमारम्भ इति' । पूर्वसूत्रे किंवृत्तग्रहणं लिप्स्यमानसिद्धिरहिते लिप्सामात्रे किंवृत्त एव यथा स्यादकिंवृत्ते मा भूदित्येवमर्थम् ॥

"लोडर्थलक्षणे च" ॥ 'अध्ययनप्रैषस्येति' । कर्तृकरणे कृता बहुलमित्यत्र साधनं कृतेति वा पादहारकाद्यर्थमितिवचनात्सप्तमीसमासः ॥

"लिङ् चोर्ध्वमौहूर्त्तिके" ॥ 'निपातनात्समास उत्तरपदवृद्धिश्चेति' । ठञ्प्रत्ययस्त्वाध्यात्मादित्वात् बह्वचोन्तोदात्तादित्यत्र तु व्याख्या-

तव्यनाश्च इति वर्त्तते। 'उपाध्यायश्चेदागन्तेति'। ऊर्ध्वंमौहूर्त्तिकेनद्यतनत्वं सम्भवतीति चिन्त्यम् ॥

"तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्"॥'भिक्षिष्य इत्यस्य जटा इति'। अत्र भिक्षणक्रियार्थत्वं जटानां न तु क्रियात्वं द्रव्यरूपत्वाज्जटानाम्। 'धावतस्ते पतिष्यति दण्ड इति'। अस्त्यत्र धावनक्रियोपपदं न त्वसौ दण्डपतनार्थं धावति किं तर्हि धावतोऽर्थेऽत्पतिष्यति दण्डः उद्देशेन हि तादर्थ्यं विविच्यते न तु हेतुत्वमात्रेण तादर्थ्यम्। अथेत्यादिचोद्यं परिहरति। 'लृटा क्रियार्थोपपदेनेति'। तुमुना तु बाधो नाशङ्कनीयो भिन्नार्थत्वात् कर्त्तरि ण्वुल् तुमुन् पुनर्भावे, कथं तुमर्थे सेसेनित्यत्र तुमर्थग्रहणात् यदि हि कर्त्तरि कृदिति वचनात्कर्त्तरि तुमुन् स्यात्तदैव सेसेन्प्रभृतयोऽपि कर्त्तरि भविष्यन्ति अतस्तुमर्थग्रहणात्कर्त्तृमात्रादयमपकृष्यते न चान्यो योऽर्थो निर्दिश्यते ऽनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति कश्च धातोः स्वार्थो भाव एव, लृट् तु यद्यपि भावकर्मणोश्चरितार्थस्तथापि क्रियायां क्रियार्थायामुपपदे भविष्यति काले च विधानाद्विशेषविहितः, ण्वुल् विधौ तु कर्त्तरीति न श्रूयते ऽतोऽसौ विशेषविहितेन लृटा बाध्यते अथ वा किं न एतेन विशेषविहित इति द्वयोः सावकाशत्वेऽपि परत्वाल्लृट् ण्वुलं बाधेत पुनश्चोदयति। 'वासरूपविधिनेति'। परिहरति। 'एवं तर्हीति'। नन्वसति प्रयोजने ज्ञापकं भवति अस्ति चात्र प्रयोजनं किमकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधो भविष्यदधिकारविहितस्याकस्य प्रयोगे यथा स्यात् वर्षशतस्य पूरकः पुत्रपौत्राणां दर्शक इत्यत्र मा भूदिति एवं मन्यते पदान्तरसंविधानादत्र भविष्यत्कालत्वं गम्यते यदा हि बालविषयमेतत्प्रयुज्यते तदा तस्यामवस्थायां वर्षशतपूरणस्य पुत्रपौत्रदर्शनस्य चासम्भवात्तावन्तमसौ कालं जीविष्यतीत्यर्थाद्गम्यते न त्वत्र पदार्थो भविष्यत्कालत्वमिति स्थिते त्वस्मिन् ण्वुल्विधाने वर्षशतस्य पूरक इत्यादौ भविष्यत्कालस्य पदार्थत्वेऽपि न दोष इत्यभिप्रायेणाकेनोर्भविष्यदाधमर्ण्ययोरित्यत्रोक्तं भविष्यदधिकारविहितस्याकस्येदं ग्रहणं तेन वर्षशतस्य पूरकः पुत्रपौत्राणां दर्शक इत्यत्र न भवतीति ॥

"भाववचनाश्च" ॥ वक्तीति वचनः, कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् करणएव वा, भाव उच्यते येन स भाववचनः, अत्र पुरुषाः कर्त्तारः, भावाधिकारविहिता एव भाववचना भवन्तीत्याह । 'भावइति प्रकृत्येति'। 'तुमुना बाह्वोरचिति'। ल्युट् तु भावकर्मकर्तृषु त्रिषु विधानादसमानार्थः, किं च धात्वर्थस्य सिद्धतायां घञादयः शुद्धे तु धात्वर्थे लकारोतोऽप्यसमानार्थत्वम् । इह भावइत्येतावद्वक्तव्यम्, एवमपि ह्युच्यमाने भावे ये विहितास्ते क्रियायां क्रियार्थायामुपपदे भवन्तीत्यर्थो लभ्यतएव तदपार्थकं वचनग्रहणमिति मत्वा पृच्छति । 'अथेति'। 'वाचका यथा स्युरिति'। वचनग्रहणे हि सति भाववचनाः सन्तो घञादयोऽस्मिन्विषये भवन्तीत्यर्थो भवति, भावस्य वाचकाः सन्तो भवन्तीत्यर्थः, एतदेव प्रश्नपूर्वकं विवृणोति । 'कथं चेति' 'याभ्यः प्रकृतिभ्य इति'। इवर्णान्तेभ्योऽच् ऋवर्णान्तेभ्य उवर्णान्तेभ्यश्चाविति । एवं 'येन विशेषणेनेति'। हस्तादाने चेरस्तेये श्रिणीभुवोऽनुपसर्गइत्यादिना । असामञ्जस्यं व्यतिकरः, अन्योन्यविषयावगाहनमिति यावत् । पाकायेत्यादौ तुमर्थाच्च भाववचनादिति चतुर्थी ॥

"अण् कर्मणि च" ॥ 'चकारः सन्नियोगार्थ इति'। अन्यथा पर्यायेण स्यात् कदाचित्क्रियार्थायामेव क्रियायामुपपदे कदाचित्कर्मण्येव केवले, वचनं तु भविष्यति काले क्तादीनामपवादानां बाधनार्थं स्यात्, चकारात्तु सन्नियोगार्थात्समुदायस्यैव प्रत्ययोत्पत्तिं प्रति निमित्तत्वमुपपदसंज्ञा तु प्रत्येकमेव भवति प्रत्येकं सप्तमीनिर्देशात्, तेन केवलस्यापि कर्मणः समासो भवति । 'काण्डलावो व्रजतीति'। 'सोपवादत्वात् ण्वुलं बाधतइति'। ण्वुल्विधाने च क्रियायां क्रियार्थायामुपपदे वासरूपेण तृजादयो न भवन्तीति ज्ञापितं न पुनरस्मिन् प्रकरणे वासरूपविधिर्नास्तीति तेन योऽयं तुमुन्ण्वुलाविति ण्वुल् सोऽस्याणो विषयेऽपि वासरूपविधिना भवत्येव एधानाहारको व्रजतीति, तथा चाकेनोर्भविष्यदाधमर्ण्ययोरिति भविष्यदधिकारविहितस्याकस्य भविष्यति प्रयोगे कर्मणि षष्ठी प्रतिषिद्ध्यते । 'परत्वाच्च क्तादीनिति'। ननु चापूर्वविधानात्प्रतिप्रसववचनस्य लाघवम्,

स्तीति अणविषयएव ण्वुलं बाधित्वाण् स्याबापवादविषये, एवं मन्यते। इह कर्मणीति न वक्तव्यं वचनग्रहणानुवृत्तेर्व यो वचने ऽण् सोऽस्मिन्विषये भवतीति वचनव्यक्त्या कर्मण्येवोपपदेण् सिद्धः, तत्र पुनः कर्मग्रहणं कर्ममात्रपरिग्रहार्थमित्यपवादविषयेऽपि भवतीति, एवं च परत्वादिति कोर्थः उत्कृष्टत्वादाधिक्यादित्यर्थः। अन्ये तु विप्रतिषेधमेव व्याचक्षते ॥

"लृट् शेषे च"॥ 'शेषः क्रियार्थोपपदादन्य उच्यतइति'। क्रिया क्रियार्थोपपदं यस्मिन् भविष्यति काले ततोऽन्यो भविष्यत्वित्यर्थः। 'चकारादिति'। यदि तर्हि शेषे चाशेषे च भवति लृडित्येवास्तु क्रियायां क्रियार्थायामिति निवर्त्तिष्यते तेन सर्वत्र भविष्यति, एवमपि शेषएव स्यादशेषे तु तुमुन्ण्वुलौ बाधकौ स्यातां वासरूपविधिना लृडपि भविष्यति तदेतच्छेषे चेति वचनं चिन्त्यप्रयोजनम्। 'करिष्यामीति व्रजतीति'। इतिशब्दः परस्परसम्बन्धज्ञापनार्थः ॥

"लृटः सद्वा"॥ लृट इति वचनं स्थानिनिर्द्देशार्थम्। अन्यथा सत्संज्ञकौ प्रत्ययौ स्वतन्त्रौ स्यातां न त्वादेशौ। 'अप्रथमासमानाधिकरणादिष्विति'। आदिशब्देन सम्बोधने च लक्षणहेत्वोः क्रियाया इत्यस्मिन्विषये तथा प्रत्ययोत्तरपदयोश्च करिष्यतोपत्यं कारिष्यतः कारिष्यमाणिः करिष्यतोभक्तिः करिष्यद्भक्तिः करिष्यमाणभक्तिः करिष्यन्ती भक्तिरस्य करिष्यद्भक्तिः करिष्यमाणा भक्तिरस्य करिष्यमाणभक्तिः करिष्यत्तरः करिष्यमाणतरः करिष्यमाणतमः करिष्यद्रूपः करिष्यमाणरूपः करिष्यत्कल्पः करिष्यमाणकल्पः, कथं श्वोग्नीनाधास्यमानेनेत्यनद्यतने शतृशानचौ भवतः, उक्तोत्र परिहारो व्यत्ययो बहुलमिति कालव्यत्ययेन लृट्, अथ वोत्तरत्रानद्यतनइति योगविभागः लृटः सद्वेत्येव अनद्यतने यो लृट् तस्यापि सत्संज्ञकौ भवतः, केन पुनरनद्यतने लृट् भवति एतदेव ज्ञापयति भवत्यनद्यतने लृडिति यदयमनद्यतने लृटः सत्संज्ञकौ शास्ति ॥

"अनद्यतने लुट्"॥ 'अनद्यतनइति बहुव्रीहिर्निर्द्देश इति'। अनद्यतने लङित्यत्रैवैतद्व्याख्यातं तत एवावधार्यम्। 'परिदेवनइति'।

परिदेवनमनुशोचनम् । 'श्वस्तीनीति' । लुटः पूर्वाचार्यसंज्ञा । 'भविष्यत्यर्थेइति' । भविष्यन्तीति लृटः संज्ञा तस्या अर्थे भविष्यत्सामान्यइत्यर्थः । भविष्यदर्थेइति वा पाठः, भविष्यत्सामान्यरूपेर्थेइत्यर्थः । 'चैवमिति' । विलम्बितम् । अनभियुक्तः परिचयरहितः ॥

"पदरुजविशस्पृशो घञ्" ॥ 'पद्यतेसाविति' । करणस्यात्र कर्तृत्वेन विवक्षा पदमित्येतत्तु खनो घ चेत्यत्र साधयिष्यते । 'रोग इति' । चजोः कु घिण्ण्यतोरिति कुत्वम् । 'स्पृश उपतापइति' । उपतापो रोगः ॥

"सृ स्थिरे" ॥ सृ इत्यविभक्तिको निर्द्देशः । 'सर्त्तेरिति' । सृ गतौ सृ गताविति द्वयोरपि ग्रहणम् । 'स्थिरे कर्त्तरीति' । एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणं नोपपदमिति दर्शयति, एतच्चार्द्धर्चादिषु सारशब्दपाठाद्विज्ञायते । ननु स्थिरशब्दस्तिष्ठतेर्गतिनिवृत्तिवाचिन उणादिषु किरच्प्रत्ययान्तो निपातितः सर्त्तिस्तु गतिवचनः तत्कथं सरणस्य स्थिरकर्त्ता युज्यतइत्याह । 'स्थिर इति कालान्तरस्थायीत्यादि' । यतः कालान्तरगमनं सम्भवति ततश्च सर्त्तेर्द्धातोरर्थस्य कर्त्ता युज्यतइत्यर्थः । तिष्ठन्विति च हेतौ शतृप्रत्ययः । 'खदिरसार इति' । खदिरास्थि तत् दृढत्वात् स्थिरम् । 'अतीसारो व्याधिरिति' । शरीरान्तरावस्थितं रुधिरादिद्रव्यमतिशयेन सारयतीति कृत्वा, अन्तर्भावितण्यर्थोऽत्र सरतिः । 'उपसर्गस्य घञ्यमनुष्ये बहुल' मिति दीर्घः । 'विसारो मत्स्यइति' । विविधं सरतीति कृत्वा । 'सारो बलमिति' । सारयति चेष्टयतीति कृत्वा, अत्राप्यन्तर्भावितण्यर्थः सरतिः, बलवान्हि चेष्टते, सारशब्द उत्कर्षे पुल्लिङ्गो न्यायादनपेते नपुंसकलिङ्ग इति च दृश्यते ॥

"भावे" ॥

नित्यानामेव शब्दानां साङ्कर्यस्य निवृत्तये ।
अन्वाख्यानाद्भावशब्दे घञि नान्योन्यसंश्रयः ॥

'राग इति' । रञ्जेश्च घञि च भावकरणयोरिति नलोपः, कथं पुनः पाकादिरुदाहरणं भवति यावता भवतिनार्थनिर्द्देशः क्रियमाणोऽस्तिभवतिविद्यतिविषय एव कृतो भवति न पचादिविषयस्तत्राह ।

'क्रियासामान्यवाची भवतिरिति'। सत्ताख्यं सामान्यमपि भवतिना साध्यत्वेनाभिधीयतइति क्रियासामान्यवाची भवतिर्भवति। 'तेनार्थेनिर्द्देशः क्रियमाण इति'। हेतौ शानच्, यस्मात्सामान्यवाचिनार्थेनिर्द्देशः क्रियते न विशेषवाचिना पचादिना तस्मात्सर्वधातुविषयः कृतो भवति सामान्यस्य सर्वेष्वेव विशेषेषु भावात् षण्डादिषु गोत्ववत् विशेषरूपाश्रयनिषेधस्याभावाच्च, इह भावो धात्वर्थः स च पूर्वापरीभूतोऽपरिनिष्पन्नः, तस्य घञवाच्यस्य कथं लिङ्गसङ्ख्यायोग इत्याह। 'धात्वर्थश्चेति'। यथा पचति पाचक इत्यादौ प्रकृतिभागेन क्रियोच्यते प्रत्ययभागेन तु तदीयं साधनं तथा पाकादिषु प्रकृतिभागः साध्यरूपमर्थमाह प्रत्ययभागस्तु तस्यैव सिद्धरूपतां द्रव्यधर्मैर्लिङ्गसङ्ख्याकारकशक्तिभिः सम्बन्धयोग्यमाकारमाहेत्यर्थः। उक्तं च

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः॥

इति बहुवक्तव्योयमर्थः, इह भावइति पुंल्लिङ्गेनायं निर्द्देशः क्रियते एकवचनेन च तत्र पुंल्लिङ्गएव भावे एकवचनएव च प्रत्ययाः स्युर्न लिङ्गान्तरे न च सङ्ख्यान्तरे ततश्च स्त्रियां क्तिन्नित्यत्र स्त्रियां भावइति सामानाधिकरण्येन संबन्धासम्भवात् स्त्रियामकर्त्तरि कारके क्तिन् प्रत्ययः स्यात् भावे तु पुंसीव नपुंसके भावे क्त इत्यत्राकर्त्तरि च कारकइत्यस्य निवृत्तत्वान्नपुंसके कर्त्तरि क्तः स्याद्भावे तु पुंसि द्वित्वबहुत्वयोश्च पाकौ पाका इत्यादौ प्रत्यया न स्युरित्यत आह। 'पुंल्लिङ्गमेकवचनं चातन्त्रमिति'।

न विना लिङ्गसङ्ख्याभ्यां सत्त्वभूतोर्थ उच्यते।
इत्यतन्त्रमुपादानं तयोर्न तु विवक्षितम्॥
धान्यार्थिनामुपादानं पलालादेर्यथा मतम्।
शब्दसंस्कारमात्रं तु तन्निर्द्देशप्रयोजनम्॥

"अकर्तरि च कारके सञ्ज्ञायाम्"॥ प्रासः कुन्तः प्रसेवः सूच्या प्रसेवनेन निष्पाद्य आवपनविशेषः। 'मधुराहार इति'। कर्मधारयः षष्ठी-

समासो वा। 'मेघ इति'। पचादिषु पाठमनपेक्ष्यैतदुदाहृतं तथा चेगुपधज्ञेत्यत्रोक्तं देवसेवमेषादयः पचादिषु द्रष्टव्या इति नहि पाठे सति द्रष्टव्यत्ववचनमुपपद्यते, अथ वा प्रत्युदाहरणदिगियं दर्शिता इदं तु प्रत्युदाहरणं विभर्त्यसौ भर्त्तेति। 'चकार इत्यादि'। चकारोयं भिन्नक्रमः संज्ञायां चेति तेनासंज्ञायामपि घञ् भवति, यद्येवं मा भूत्संज्ञायामिति मा च भूच्चकारोऽकर्त्तरि कारकइत्येवास्तु, सत्यम्। बाहुल्येन संज्ञायां भवति क्वचिदेवासंज्ञायामिति सूचयितुं संज्ञाग्रहणं कृतम्। 'दाय इति'। दीयमानं सर्वमुच्यतइति नेयं संज्ञा, एवं लाभ इत्यत्रापि, उभयत्र कर्मणि घञ्। 'कारकग्रहणमित्यादि'। पर्युदासे हि नञिवयुक्तन्यायेन कर्तुरन्यस्मिंस्तत्सदृशे कारकएव प्रतीतिर्भवति यथाऽब्राह्मण इति क्षत्रियादौ तस्मात्पर्युदासे कारकग्रहणं न कर्त्तव्यं प्रसज्यप्रतिषेधे तु वाक्यभेदेन संज्ञायां घञ् भवति कर्त्तरि तु न भवतीत्यर्थो भवति तत्र प्रथमे वाक्येर्थनिर्द्देशाभावादनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थएव स्यात्। ननु च विहितः स्वार्थे पूर्वेणैव, नेत्याह, धात्वर्थस्य हि सिद्धताख्ये धर्मे घञादयो भवन्तीत्युक्तमिह तु साध्यरूपे शुद्धे प्रकृत्यर्थे स्यात्, ननु च कर्त्तरि प्रतिषेधसामर्थ्यादनिर्दिष्टार्थोपि घञ् धात्वर्थसम्बन्धिनि कारकएव विज्ञास्यते, नैतदस्ति, असति हि प्रतिषेधे कर्त्तरि कृदिति वचनादयमनिर्द्दिष्टार्थः स्याद् अतः प्रसज्यप्रतिषेधार्थं कारकग्रहणं पर्युदासे तु न कर्त्तव्यं, यद्येवं स एवाश्रयिष्यते किं कारकग्रहणेन तत्राह। 'तत्क्रियतइति'। किं पुनः कारणं प्रसज्यप्रतिषेधे प्रयत्नलभ्यः समासः, असामर्थ्यात्तत्र हि नञः क्रियया सम्बन्धः, कर्त्तरि न भवतीति न कर्तृशब्देन। 'आदेच उपदेशेऽशितीति'। अत्र यद्यशितीति पर्युदासः स्यात् तदा शितोन्यत्र तृजादौ प्रत्यये परत आत्वेन भवितव्यं ततश्च सुग्लः सुम्ल इत्यत्रातश्चोपसर्गे इति को न स्यात् प्राक् प्रत्ययोत्पत्तेरनाकारान्तत्वात् प्रतिषेधे त्वनैमित्तिकमात्वं शिति तु प्रतिषेध इति सिद्धमिष्टम्॥

"परिमाणाख्यायां सर्वेभ्यः"॥ 'परिमाणाख्यायामिति'। भावसाधनः परिमाणशब्दः, आख्यानमाख्या उक्तिः, परिच्छित्तेरुक्तौ सत्यामि-

त्यर्थः, कस्य पुनः परिच्छित्तिः प्रत्ययार्थस्य भावस्य कर्तृवर्जितस्य कारकस्य च, परिमाणाख्यायां गम्यमानायामिति वृत्तेरप्ययमेवार्थः, । तण्डुलनिचाय इति' । निचीयते राशीक्रियतइति निचायो राशिः तण्डुलानां निचाय इति षष्ठीसमासः, अत्र राश्येकत्वेन परिच्छित्तिर्गम्यते अचेरचि प्राप्ते घञ्, प्रायेण तु निश्चाय इति पाठस्तत्राप्यर्थः स एव, ग्रहवृदृनिश्चिगमश्चेत्यपि प्राप्ते घञ् । 'शूर्पनिष्पावाविति' । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः शूर्पेण निष्पावः शूर्पनिष्पाव इति कर्तृकरणे कृता बहुलमिति समासः, अत्र शूर्पसङ्ख्यया परिच्छित्तिः, यद्यप्यत्र निरभ्योः पूल्वोरिति घञ् सिध्यति तथापि सर्वापवादार्थसर्वग्रहणोपादानादनेनैव घञ् भवतुमर्हतीत्यस्योपन्यासः।'काराविति'। कृ विक्षेपे कर्मणि घञ्, विक्षिप्तो धान्यादिः कारः, अत्रापि सङ्ख्यया परिच्छित्तिः, ननु च धातोरिति सामान्याधिकारादन्तरेणापि सर्वग्रहणं धातुमात्राद् घञ् भविष्यति नार्थः सर्वग्रहणेन तत्राह। 'सर्वग्रहणमिति'। किं पुनः कारणमपो बाधनं यत्नसाध्यमित्यत आह। 'पुरस्तादिति' 'निश्चय इति'। अत्र न केन चिदियत्ता गम्यते, ननु च परिमाणशब्दस्य प्रस्थादिषु रूढत्वात्प्रस्थस्तण्डुलनिश्चाय इत्यादावेव युक्तं भवितुं न तु द्वौ शूर्पनिष्पावावित्यत्रेत्यत आह । 'आख्याग्रहणं रूढिनिरासार्थमिति' । प्रस्थादिषु निवृत्तिषु परिमाणइत्येव वक्तव्यं किमाख्याग्रहणेन, आख्याग्रहणात्तु मात्रचो लोपो विज्ञायते परिमाणमात्रस्याख्यायामुक्तो सत्यामिति तेन परिमाणशब्दः क्रियाशब्द उपजायते परिमितिः परिमाणं परिच्छित्तिरिति सङ्ख्ययापि परिच्छित्तिर्भवति, एवञ्चोन्मानादावपि यथाभिधानं घञ् भवति, यदि तर्हि सर्वग्रहणात्परमप्ययं घञपं बाधते स्त्रीप्रत्ययानपि बाधेत तत्राह । 'घञनुक्रमणमजपोर्विषय इति' । एतच्च सर्वेभ्य इति पञ्चमीनिर्देशाल्लभ्यते पञ्चम्यन्तो हि सर्वशब्दो धातुशब्देन समानाधिकरणो भवति तेन प्रकृत्याश्रय एवापवादो बाध्यते नार्थाश्रयः।'तिलोच्छित्तिरिति'। कर्मणि भावे वा क्तिन्, उर्ध्वीकृतो राशिः। 'णिलुक्चेति'। णिलोपे सति तस्य स्थानिवद्भावाद् घञाश्रया वृद्धिर्न स्यादिति लुग्विधीयते तस्य परनिमित्तकत्वात्किलुगुपधात्वेति

प्रतिषेधाद्वा स्थानिवत्त्वाभावाज्जारशब्दः सिद्ध्यति । 'जरयन्तीति' । जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति मित्त्वाद् ह्रस्वत्वं, जारः प्रच्छन्नपतिः ॥

"इङश्च" ॥ 'उपाध्याय इति'। उपेत्यस्मादधीयतइति अपादाने घञ् अध्याय इत्यत्र कर्मणि घञ् । 'अपादाने स्त्रियामिति'। घञनुक्रमणमजपोर्विषयइति वचनात् स्त्रियामप्राप्तो घञ् विधीयते। 'उपाध्याया उपाध्यायीति' । या स्वयमध्यापयति तस्यामेतद्रूपं पुंयोगेतु नित्यमेव ङीष् भवति, अत्र चोपाध्यायमातुलाभ्यां वेति वचनात्पक्षे आनुगागमः, उपाध्यायी उपाध्यायानी।'शॄवायुवर्णनिवृत्तेष्विति'। शॄइत्यविभक्तिको निर्द्देशः। 'शारो वायुरिति' । करणे घञ् । 'शारो वर्ण इति' । चित्रीकरणमत्र धात्वर्थः, चित्रीक्रियतेऽनेनाश्व इति, अत्रापि करणे घञ्, वर्णान्तरसंपृक्तश्चेद् वर्णः शारः, निव्रियते आव्रियतेनेन शरीरमिति निवृतमावरणमुच्यते कृत्यल्युटो बहुलमिति करणे क्तः । 'नीशार इति' । 'पूर्ववद्दीर्घः' । 'अकृतनीशार इति' । अकृतप्रावरण इत्यर्थः। प्रदक्षिणप्रसव्यगामिनां शाराणामिति वार्त्तिककारप्रयोगादक्षेष्वपि शार इति भवति ॥

"समि युद्रुदुवः" ॥ संयावः पिष्टविकारोऽपूपविशेषः सम्यूयते मिश्रीक्रियते गुडक्षीरकादिभिरिति कृत्वा ॥

"अवोदोर्नियः" ॥ अधो नयनमवनायः ऊर्ध्वं नयनमुन्नायः, उन्नयस्तूत्प्रेक्षा ॥

"निरभ्योः पूल्वोः" ॥ निष्पावः कोशी धान्यविशेषः निष्पूयते शूर्पादिभिरिति कृत्वा ॥

"उन्न्योर्ग्रः" ॥ उद्गारोऽतिप्रवृद्धः शब्दः, निगारो भक्षणम् ॥

"कॄ धान्ये" ॥ धान्यमिह प्रकृत्यर्थो वा स्यात्प्रत्ययार्थस्य वा कारकस्योपाधिः, प्रकृत्यर्थस्तावन्नोपपद्यते धान्यस्य द्रव्यत्वात् धातोश्च क्रियावाचित्वात् प्रत्ययार्थोपाधित्वे तु प्रत्ययेनाभिहितत्वादुत्कारो धान्यस्येति धान्यशब्दस्य प्रयोगो न प्राप्नोति, अथापि विस्पष्टप्रतिपत्त्यर्थं प्रयोगः स्यादेवमपि प्रत्ययार्थेऽन्तर्भूतत्वाद्धान्ये षष्ठी न स्यात्, इतिहरिः पशुरि-

तिवत्सामानाधिकरण्यमेव तु स्यात् तस्माचायं प्रत्ययार्थस्योपाधिः नापि प्रकृत्यर्थः किं तु प्रत्ययार्थस्य विषयत्वेन विशेषणमित्याह । 'धान्यविषय-श्चेदिति'। उपपदत्वमपि न भवति व्याख्यानात् । 'अनभिधानादिति'। शब्दशक्तिस्वाभाव्यात् । उत्कारनिकारशब्दाभ्यां धान्यविषयो विक्षेप एवा-भिधीयते न हिंसा सापि धान्यस्य कीदृशीति चिन्त्यम् ॥

"यज्ञे समि स्तुवः" ॥ 'समेत्य स्तुवन्ति यस्मिन्देशइति'। अधिकरणे ल्युटोपवादो घञिति दर्शयति । संस्तवः परिचयः ॥

"प्रे स्त्रो ऽयज्ञे" ॥ यज्ञइति प्रकृतत्वादयज्ञइति पदच्छेदः शङ्का-दिषु प्रस्तारो विस्तारः, बर्हिष्प्रस्तर इति प्रस्तरो मुष्टिविशेषः बर्हिर्विकारः प्रस्तरो बर्हिष्प्रस्तरः ऋदोरबित्यप्, इदुदुपधस्य चेति षत्वम् ॥

"प्रथने वावशब्दे" ॥ विस्तारस्तिर्यगायतिः ॥

"छन्दोनाम्नि च" ॥ अक्षराणामियत्ताविशिष्टो विन्यासविशेषो वृत्तम् । 'यस्य गायत्र्यादय इति' । प्रसिद्धत्वादेवमुक्तम् । 'न मन्त्र-ब्राह्मणमिति'। बहुलं छन्दसीत्यादौ, यद्यपि तेषामेव ग्रहणं प्रसिद्धं तथा-पीह तेषां ग्रहणं न भवति कुत इत्याह । 'नामग्रहणादिति'। 'विष्टारप-ङ्क्तिरिति'। विस्तीर्यन्तेस्मिन्नक्षराणीत्यधिकरणे घञ्, ततः कर्मधारयः, छ-न्दोनाम्नि चेति षत्वं, यद्यप्यत्र प्रथनं गम्यते तथापि शब्दविषयत्वात्पूर्वेण न सिद्ध्यति । के चित्तु वाविति नानुवर्त्तयन्ति तेन प्रस्तारपङ्क्तिरास्तारपङ्क्तिः संस्तारपङ्क्तिरित्यपि भवतीत्याहुः । कर्मण्यग्न्याख्यायामित्यादौ यथा प्रत्य-यान्तश्चेदाख्या भवतीत्ययमर्थो भवति एवमिहापि प्रत्ययान्तश्चेच्छन्दो-नाम भवतीत्यर्थः स्याद् इति शङ्कमानं प्रत्याह । 'विष्टारपङ्क्तिशब्दोत्र छन्दो-नामेति'। 'अवयवत्वेन वर्त्ततइति'। घञन्त शब्दरूपमित्यनुषङ्गः, क्व चित्तु तद्वर्त्ततइति तच्छब्दः पठ्यते तत्र नानुषङ्गः, कथं तर्हि छन्दोनाम्नी-त्यस्य निर्वाह इत्याह । 'छन्दोनाम्नीत्यधिकरणसप्तम्येषेति'। प्रत्ययान्त-स्याधिकरणं छन्दोनाम अवयवाश्चावयविनि वर्त्तन्तइति लौकिका मन्यन्ते तेन न का चिदनुपपत्तिरिति भावः ॥

कालेत्यर्थग्रहणं पर्यायोपादनं तु प्रपञ्चार्थं यथा निमित्तकारणहेतुषु सर्वा-सां प्रायदर्शनमिति तेन पर्यायशब्दयोगेपि तुमुन् भवति तथा चावसरो भोक्तुम् अवकाशोभोक्तुमित्यादावपि दृश्यते । विशयः संशयः, उपशयः समीपशयनम् ॥

"हस्तादाने चेरस्तेये" ॥ 'हस्तादानग्रहणेनेत्यादि' । यत्रोपा-यान्तरनिरपेक्षेण हस्तेनैवादेयमादीयते तत्रावश्यमादेयस्य ग्राहस्य प्रत्या-सत्तिर्भवति अतः साहचर्यं लक्षणाहेतुः । 'वृत्तशिखर इति' । वृत्ताग्रे यानि फलानि तेषां यष्ट्यादिना प्रचयं करोतीत्यर्थः, यद्वारुह्य हस्तेनादानेप्यादे-यस्य प्रत्यासत्त्यभावाद् घञभावः ॥

"निवासचितिशरीरोपसमाधानेष्वादेश्च कः" ॥ 'एतेष्वर्थेष्विति' । अत्रोपसमाधानं धात्वर्थोऽन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । 'चिखल्लिनिकाय इति' । चिखल्लिर्जनपदविशेषः, तत्सम्बन्धी ग्रामादि-र्निवासदेश इत्यर्थः । 'आकायमिति' । आचीयतेस्मिन्निष्टका इत्यधिकरणे घञ् । 'काय इति' । चीयन्ते स्मिन्नस्थ्यादीनि अधिकरणएव घञ् । 'गोमयनिकाय इति' । प्रकीर्णानां गोमयानामेकत्र राशीकरणमित्यर्थः । 'बहुत्वमत्र गम्यतइति' । तत्रतत्र विक्षिप्तानामिव काष्ठानामित्यर्थः । चः क इति वक्तव्ये आदेरिति वचनं यङ्लुगन्तेप्यादेरेव यथा स्यादनन्त्य-स्याभ्यासस्य चोभयोर्मा भूदिति गोमयानां निकेचायः गोमयानां पुनः पुना राशीकरणमित्यर्थः ॥

"सङ्घे चानौत्तराधर्य्ये" ॥ 'प्राणिनां समुदायः सङ्घ इति' । सङ्घो-द्घौ गणप्रशंसयोरिति गणमात्रे निपातितोपि सङ्घशब्दः प्राणिनामेव समुदाये रूढ इति भावः । 'एकधर्मसमावेशेनेति' । एकधर्मानुगतः । 'औत्तराधर्यणेति' । उत्तरे चाधरे चोत्तराधराः तेषां भाव औत्तराधर्यम् । 'सूकरनिचय इति' । स्तनपानाय यदोत्तराधरभावेन शेरते तदेदं प्रत्यु-दाहरणं यदा तु भिक्षुवत्पृथक्पृथगेव तिष्ठन्ति तदेदमुदाहरणमेव भवति ॥

"कर्मव्यतिहारे णच् स्त्रियाम्" ॥ धातुरिति वर्त्तते तस्य विशेषणं कर्मव्यतिहारग्रहणं कर्मव्यतिहारे वर्त्तमानादित्यर्थः, धातोश्च क्रियावा-

चित्वं न तस्य साधनकर्मव्यतिहारे वृत्तिः सम्भवति अतो लौकिकस्य क्रियाकर्मणो ग्रहणमित्याह । 'कर्मव्यतिहारः क्रियाव्यतिहार इति' । 'स्त्रीलिङ्गे' 'भावइति'। कर्तृवर्जिते तु कारके न स भवति अनभिधानादिति भावः। 'चकारो विशेषणार्थं इति' । न स्वरार्थः, प्रत्ययस्वरेणैव सिद्धत्वात्, अस्य चाकारो न क्वापि श्रूयते णजन्ताच्च नित्यमञ् विधीयते तत्र सति ञित्त्वाञ्ञित्स्वरेणैव भवितव्यं, णचः स्त्रियामित्यत्र णास्त्रियामित्युच्यमाने ज्वलितिकसन्तेभ्यो ण इत्यस्यापि ग्रहणं स्यात् । 'व्यावक्रोशीत्यादि'। क्रुश आह्वाने लिख अक्षरविन्यासे हसे हसने णजन्तादञ् स च कृद्ग्रहणपरिभाषया सोपसर्गादपि भवति, तद्धितत्वादादिवृद्धिः, न व्याभ्यामित्ययं तु विधिर्न भवति न कर्मव्यतिहारइतिप्रतिषेधात्, स्त्रियां क्तिचित्यत्र प्रकरणएतच्चोक्तं वासरूपविधिर्यथा स्यात्तेन व्यावक्रुष्टिरिति क्तिवपि भवति, व्यावचोरीत्यत्र ण्यासश्रन्थो युजिति युच् प्राप्नोति क्तिनोऽपवादः तथाऽयमपि णच् येन नाप्राप्तिन्यायेन क्तिन एवापवादस्तत्रापवादविप्रतिषेधाद्युचि प्राप्तेऽयमेव णिष्यते । 'व्यतीहा व्यतीहेति'। अत्र क्तिनपवादो गुरोश्च हल इत्यकार एवेष्यते । 'व्यात्युक्षीति'। उक्ष सेचने अत्राकारविषयेप्ययमेवेष्यते । 'तदेतद्वैचित्र्यं कथं भवतीति'। न कथं चिदिति भावः। 'कृत्यल्युटो बहुलमिति'। एवंविधं वैचित्र्यं कर्त्तुं बहुलग्रहणमेव भवतीति भावः॥

"अभिविधौ भावइनुण्" ॥ 'क्रियागुणाभ्यामिति'। अभिविधिस्वरूपकथनमेतत्, इह तु धातोः प्रत्ययविधानात्क्रियाविषय एवाभिविधिर्गृह्यते । 'सांकूटिनमिति'। कूट दाहे दीर्घोपधादिनुण् अणिनुण इतीनुणन्तात्स्वार्थिकोण् प्रत्ययः स च पूर्ववत्सगतिकारकाद्भवति इनण्यनपत्यइति प्रकृतिभावाचस्तद्धितइति टिलोपाभावः, समन्ताद्दाह इत्यर्थः, संशब्दोऽभिविधिद्योतकः । 'सांराविणमिति'। उपसर्गे रुव इति घञ् उपसर्गान्तरेणाभिविधौ चरितार्थः । 'संराव इति'। अत्र संशब्दः पूजायां क्वचित्सन्द्रावइति प्रत्युदाहरणं पठ्यते तदयुक्तं समि युद्रुदुव इत्यस्यानवकाशात् । ननु च भावे कारकइति द्वयेपि प्रकृते शब्दशक्ति-

"उदि ग्रहः" ॥ 'अपवाद इति' । ग्रहवृदृनिश्चिगमश्चेति प्राप्तस्य । 'छन्दसि नीत्यादि' । अवयवसंनिवेशविशिष्टा यज्ञपात्रविशेषाः स्रुच इह तु जुहूप्रभृतेर्ग्रहणम् । 'उद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं नियच्छतीति वचनात्, हृग्रहोर्भश्छन्दसीति भत्वम् ॥

"समि मुष्टौ" ॥ 'मुष्टिविषयश्चेद्धात्वर्थो भवतीति' । क्व धान्यइत्यत्र धान्यविषयश्चेद्धात्वर्थो भवतीति एतदनुसारेणायं ग्रन्थो योज्यः, मुष्टिशब्दोयमस्त्येव परिमाणे चतुरो मुष्टीन्निर्वपतीति, अङ्गुलीनां रचनाविशेषवचनोप्यस्ति मुष्टिना हन्तीति तत्र पूर्वस्य ग्रहणे परिमाणाख्यायामित्येव सिद्धत्वाद् द्वितीयस्य ग्रहणमित्याह । 'मुष्टिरङ्गुलिसंनिवेश इति' । अहोशब्द आश्चर्ये मुष्टौ कुशलो मुष्टिक आकर्षादिपाठात्कन् ॥

"परिन्योर्नीणोर्द्यूताभ्रेषयोः" ॥ अक्षादिभिः क्रीडनं द्यूतं भ्रेष चलने भ्रेषणं भ्रेषः चलनमभ्रेषो ऽचलनम् । 'भ्रेषविषयश्चेदिति' । अयमपि ग्रन्थः पूर्वानुसारेण योज्यः । 'अनपचार इति' । कुत्सितश्चारोपचारः तस्मादन्यः प्रशस्तः चारोनपचार एतदेव स्पष्टयति । 'यथाप्राप्तस्येति' । यथा येन प्रकारेण प्राप्तिर्यस्येति बहुव्रीहिः, अव्ययीभावे त्वम्भावः प्राप्नोति, क्वचित्तु यथाप्राप्तकरणमिति पठ्यते । 'परिणायेनेनेति' । उपसर्गादसमासेपीति णत्वम् । हन्तीति बाधते । 'समन्तान्नयनेनेति' । परिणायेनेत्यस्येदमर्थकथनम् । 'एषोत्र न्याय इति' । एतदत्र यथाप्राप्तमित्यर्थः । परिणयो विवाहः, न्याये नाशः ॥

"परावनुपात्ययइणः" ॥ इह द्विः परिग्रहणं द्विश्चेण्ग्रहणं क्रियते सकृदेव तु कर्तव्यम् एवं वक्ष्यामि परौ नियो द्यूते इणोनुपात्यये नावभ्रेष इति, सत्यं तथा तु न कृतमित्येव ॥

"व्युपयोः शेतेः पर्याये" ॥ पूर्वसूत्रेणानुपात्यये पर्यायशब्दो व्युत्पादितः, ततश्चानुपात्यय इत्यधिकारेणैव सिद्धे पर्यायग्रहणं पुनर्विधानार्थं तेनाभिविधिविवक्षायां परमपीनुणं बाधित्वाघमेव घञ् भवति । 'राजानमुपशयितुं पर्याय इत्यर्थ इति' । कालसमयवेलासु तुमुनित्यत्र

कालेत्यर्थग्रहणं पर्यायोपादनं तु प्रपञ्चार्थं यथा निमित्तकारणहेतुषु सर्वा-सां प्रायदर्शनमिति तेन पर्यायशब्दयोगेपि तुमुन् भवति तथा चावसरो भोक्तुम् अवकाशोभोक्तुमित्यादिपि दृश्यते । विशयः संशयः, उपशयः समीपशयनम् ॥

"हस्तादाने चेरस्तेये" ॥ 'हस्तादानग्रहणेनेत्यादि' । यत्रोपा-यान्तरनिरपेक्षेण हस्तेनैवादेयमादीयते तत्रावश्यमादेयस्य ग्राह्यस्य प्रत्या-सत्तिर्भवति अतः साहचर्यं लक्षणाहेतुः । 'वृत्तशिखर इति' । वृक्षाग्रे यानि फलानि तेषां यष्ट्यादिना प्रचयं करोतीत्यर्थः, यद्वारुह्य हस्तेनादानेप्यादे-यस्य प्रत्यासत्त्यभावाद् घञभावः ॥

"निवासचितिशरीरोपसमाधानेष्वादेश्च कः" ॥ 'एतेष्वर्थेष्वि-ति' । अत्रोपसमाधानं धात्वर्थोऽन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । 'चिखल्लिनिकाय इति' । चिखल्लिर्जनपदविशेषः, तत्सम्बन्धी ग्रामादि-र्निवासदेश इत्यर्थः । 'आकायमिति' । आचीयतेऽस्मिन्निष्टका इत्यधिकरणे घञ् । 'काय इति' । चीयन्ते स्मिन्नस्थ्यादीनि अधिकरणएव घञ् । 'गोमयनिकाय इति' । प्रकीर्णानां गोमयानामेकत्र राशीकरणमित्यर्थः । 'बहुत्वमत्र गम्यतइति' । तत्रतत्र विक्षिप्तानामिव काष्ठानामित्यर्थः । चः क इति वक्तव्ये आदेरिति वचनं यङ्लुगन्तेप्यादेरेव यथा स्यादनन्त्य-स्याभ्यासस्य चोभयोर्मा भूदिति गोमयानां निकेचायः गोमयानां पुनः पुना राशीकरणमित्यर्थः ॥

"सङ्घे चानौत्तराधर्य्ये" ॥ 'प्राणिनां समुदायः सङ्घ इति' । सङ्घो-द्घौ गणप्रशंसयोरिति गणमात्रे निपातितोपि सङ्घशब्दः प्राणिनामेव समुदाये रूढ इति भावः । 'एकधर्मसमावेशेनेति' । एकधर्मानुगतः । 'औत्तराधर्येणेति' । उत्तरे चाधरे चोत्तराधराः तेषां भाव औत्तराधर्यम् । 'सूकरनिचय इति' । स्तनपानाय यदोत्तराधरभावेन शेरते तदेदं प्रत्यु-दाहरणं यदा तु भित्तुवत्पृथक्पृथगेव तिष्ठन्ति तदेदमुदाहरणमेव भवति ॥

"कर्मव्यतिहारे णच् स्त्रियाम्" ॥ धातुरिति वर्त्तते तस्य विशेषणं कर्मव्यतिहारग्रहणं कर्मव्यतिहारे वर्त्तमानादित्यर्थः, धातोश्च क्रियावा-

चित्वं न तस्य साधनकर्मव्यतिहारे वृत्तिः सम्भवति अतो लौकिकस्य क्रियाकर्मणो ग्रहणमित्याह । 'कर्मव्यतिहारः क्रियाव्यतिहार इति' । 'स्त्रीलिङ्गे' 'भावइति'। कर्तृवर्जिते तु कारके न स भवति अनभिधानादिति भावः। 'चकारो विशेषणार्थ इति' । न स्वरार्थः, प्रत्ययस्वरेणैव सिद्धत्वात्, अस्य चाकारो न क्वापि श्रूयते णजन्ताच्च नित्यमञ् विधीयते तत्र सति शिष्टत्वाञ्ञित्स्वरेणैव भवितव्यं, णचः स्त्रियामित्यत्र णात्स्त्रियामित्युच्यमाने ज्वलितिकसन्तेभ्यो ण इत्यस्यापि ग्रहणं स्यात् । 'व्यावक्रोशीत्यादि' । क्रुश आह्वाने लिख अक्षरविन्यासे हसे हसने णजन्तादञ् स च कृद्ग्रहणपरिभाषया सोपसर्गादपि भवति, तद्धितत्वादादिवृद्धिः, न य्वाभ्यामित्ययं तु विधिर्न भवति न कर्मव्यतिहारइतिप्रतिषेधात्, स्त्रियां क्तिचित्यत्र प्रकरणएतचोक्तं वासरूपविधिर्यथा स्यात्तेन व्यावक्रुष्टिरिति क्तिन्नपि भवति, व्यावचोरीत्यत्र ण्यासश्रन्थो युजिति युच् प्राप्नोति क्तिनोऽपवादः तथाऽयमपि णच् येन नाप्राप्तिन्यायेन क्तिन एवापवादस्तत्रापवादविप्रतिषेधाद्युचि प्राप्तेऽयमेव णजिष्यते । 'व्यतीक्षा व्यतीहेति' । अत्र क्तिनपवादो गुरोश्च हल इत्यकार एवेष्यते । 'व्यात्युक्षीति' । उक्ष सेचने अत्राकारविषयेप्ययमेवेष्यते । 'तदेतद्वैचित्र्यं कथं भवतीति' । न कथं चिदिति भावः । 'कृत्यल्युटो बहुलमिति' । एवंविधं वैचित्र्यं कर्तुं बहुलग्रहणमेव भवतीति भावः ॥

"अभिविधौ भावइनुण्" ॥ 'क्रियागुणाभ्यामिति' । अभिविधिस्वरूपकथनमेतत्, इह तु धातोः प्रत्ययविधानात्क्रियाविषय एवाभिविधिर्गृह्यते । 'सांकूटिनमिति' । कूट दाहे दीर्घोपधादिनुण् अणिनुण इतीनुणन्तात्स्वार्थिकोण् प्रत्ययः स च पूर्ववत्सगतिकारकाद्भवति इनण्यनपत्यइति प्रकृतिभावावस्तद्धितइति टिलोपाभावः, समन्ताद्दाह इत्यर्थः, संशब्दोभिविधिद्योतकः । 'सांराविणमिति' । उपसर्गे रुव इति घञ् उपसर्गान्तरेणभिविधौ चरितार्थः । 'संराव इति' । अत्र संशब्दः पूजायां क्वचित्सन्द्भावइति प्रत्युदाहरणं पठ्यते तदयुक्तं समि युद्रुदुव इत्यस्यानवकाशात् । ननु च भावे कारकइति द्वयेपि प्रकृते शब्दशक्ति-

स्वाभाव्यात्पूर्ववत्कारके न भविष्यति तत् किं भावग्रहणेन तत्राह । 'भावइति वर्त्तमानइति' । तेन घञ् नपुंसके भावे क्त इति क्तश्च न भवति । 'ल्युटा त्वित्यादि' । गतार्थं स्वभावतश्चेदमिनुणन्तं नपुंसकलिङ्गम् ॥

"आक्रोशेऽवन्योर्ग्रहः" ॥ ग्रहवृदृनिश्चिगमश्चेत्यपि प्राप्तेयमारम्भः । 'दृष्टानुवृत्तिसामर्थ्यादिति' । दृष्टमनुवृत्तिसामर्थ्यं यस्येति बहुव्रीहौ द्व्येकयोरितिवद्भावप्रत्ययमन्तरेणापि भावप्रधानो निर्देशो दृष्टानुवृत्तिसामर्थ्यत्वादित्यर्थः । यद्वाऽनुवृत्तौ सामर्थ्यमनुवृत्तिसामर्थ्यं ततो दृष्टशब्देन कर्मधारयः । 'आक्रोशः शपनमिति' । न तेपः स्वभावतो घञन्तस्य शपनविषयत्वात् शपनमनिष्टाशंसनम् अवग्रहोभिभवः निग्रहो बाधः, हन्तशब्दः कोपं द्योतयति, अवग्रहः पदस्य छेदः, निग्रहो निरोधः ॥

"प्रे लिप्सायाम्" ॥ लब्धुमिच्छा लिप्सा । 'पात्रप्रग्राहेण चरतीति' । भिक्षापात्रोपादानेन गृहीतपात्र इति यावत् । स्रुवग्रहणं तु दक्षिणार्थिनो लिङ्गं दाक्षिणहोमस्य स्रुवसाधनत्वात् । 'प्रग्रहो देवदत्तस्येति' । प्रग्रहो मदः प्रकृष्टो वाभिनिवेशः ॥

"परौ यज्ञे" ॥ 'उत्तरपरिग्राह इति' । भावे घञ् वेदेः स्फ्येन स्वीकरणं परिग्राहः, ततः कर्मधारयः क्वचिदुत्तरः परिग्राह इत्यसमास एव पठ्यते ॥

"नौ वृ धान्ये" ॥ 'नीवारा नाम व्रीहय इति' । धान्यसामान्योक्तावपि धान्यविशेषरूपव्रीहिविशेषे स्वभावतो घञन्तस्य वृत्तिरिति दर्शयति, अत्र कर्मणि घञ् पूर्ववदुपसर्गस्य दीर्घः । 'निवरा कन्येति' । ग्रहवृदृनिश्चिगमश्चेत्यप् कर्मण्येव, ननु च क्तिना स्त्रियां भवितव्यम् अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति वचनात्, सत्यं, कृत्यल्युटो बहुलमिति बहुलवचनात्क्वचित् क्तिनादिविषयेप्यच् भवति प्रवरा सेना प्रवरा गौरितिवत्, एवं च घञजबन्ताः पुंसीति प्रायिकं द्रष्टव्यम् ॥

"उदि श्रयतियौतिपूद्रुवः" ॥ 'वक्ष्यमाणमिति' । एवं च यौतिप्रभृतिभ्यो विकल्पः प्राप्नोति यदि नेष्यते कृत्यल्युटो बहुलमिति न भवि-

ष्यति । अन्ये तु भाष्येनुक्तत्वादसाधुरेवायं प्रयोगः । प्रदर्शितस्तु भारतप्रयोग आर्षत्वेन निर्वाह्य इत्याहुः ॥

"अवे ग्रहो वर्षप्रतिबन्धे" ॥ 'कुतश्चिन्निमित्तादिति' । सत्त्वकर्मापराधादेरनावृष्टिर्भवेन्नृणाम् । सत्त्वशब्दः प्राणिवचनः कर्मापराधः कर्मविषयो दोषः, विहितानाचरणप्रतिषिद्धाचरणनिमित्तं पापं सत्त्वकर्मापराधः, आदिशब्देन तयोर्मध्यगतो भानुः समुद्रमपि शोषयेदित्यादेर्ग्रहणम् । 'अवग्राहो देवस्येति' । देवकर्तृको वर्षाभाव इत्यर्थः ॥

"प्रे वणिजाम्" ॥ पणन्ते व्यवहरन्तीति वणिजः पणेरिज्यादेश्च वः, पण व्यवहारइत्यस्मादिजिप्रत्ययो भवत्यादेश्च वकारः । 'वणिक्सम्बन्धेनेति' । तुलासूत्रं हि प्रायेण वणिजां भवतीति साहचर्यं लक्षणाहेतुः । 'अन्यो वेति' । न तु वणिजस्तन्त्रमित्यस्येदं प्रयोजनम् ॥

"रश्मौ च" ॥ 'रथादियुक्तानामिति' । आदिशब्देन शकटस्य ग्रहणम् । 'अश्वादेरिति' । अनडुदादेरप्युपलक्षणमेतत्, संयमनं नियमनम् । 'सा रश्मिरिह गृह्यतइति' । रश्मिशब्दः पुल्लिङ्गः सेति रज्जुपरामर्शात्स्त्रीलिङ्गता । चन्द्रादिसम्बन्धिनां तु रश्मीनामग्रहणमनभिधानात् । इह तु बहुकृत्वो ग्रहिरुपादीयते सकृदेव तु कर्त्तुं शक्यं कथमेवं वक्ष्यामि उदि ग्रहः समि मुष्टौ आक्रोशेऽवन्योः प्रे लिप्सायां परौ यज्ञेऽवे वर्षप्रतिबन्धे विभाषा प्रे वणिजामित्यादि परौ भुवोवज्ञानइत्यस्यानन्तरमाङि रुप्लुवोरिति, तथा तु न कृतमित्येव ॥

"वृणोतेराच्छादने" ॥ अत्राप्याच्छादनइति सामान्येनोक्तावपि पूर्ववद्विशेषप्रतिपत्तिरित्याह । 'प्रत्ययान्तेन चेदिति' 'प्रावार इति' । पूर्ववद्दीर्घः' । 'प्रवरा गौरिति । प्रशस्तेत्यर्थः ॥

"वरच्" ॥ 'चकारो विशेषणार्थ इति' । विना हि तेन याथादिसूत्रेऽप्रत्ययादित्यस्यापि ग्रहणं स्यात् । 'वर्षमिति' । वृषभो वर्षणादिति भाष्यकारप्रयोगाद्वर्षणमित्यपि भवति । 'जवसवाविति' । अपि प्राप्तेऽज्विधीयते स्वरे विशेषः, एरजण्यन्तानामिति तु नास्ति वचनं कल्प्या.

दिभ्यः प्रतिषेधवचनमित्येतदेवास्ति । कल्प्यतइति कल्पः अर्थ्यतइत्यर्थः मन्त्र्यतइति मन्त्रः, अचि प्रतिषिद्धे घञेव भवति ॥

"ऋदोरप्" ॥ 'लव इति'। न च तादपि परस्तपर इति उकारस्य तपरत्वाचात्राप्रा भवितव्यं तत्राह । 'दकारो मुखसुखार्थ इति'। नायं तकारः किं तर्हि दकारः, एतच्च निरभ्योः पूल्वोरित्याद्यारम्भाद्विज्ञायते मुखशब्देन ताल्वादिस्थानमुच्यते तस्य सुखमनायासः, अचोर्हि ह्रस्वव्यवहितयोरुच्चारणे मुखस्य लाघवं भवति, असन्देहो यस्यानुषङ्गिकं प्रयोजनम् ॥

"ग्रहवृदृनिश्चिगमश्च"॥ 'निश्चिनोतेस्त्ववोपवाद इति'। एरजिति प्राप्तस्य, यस्तु हस्तादाने चेरस्तेय इति घञ् स निपूर्वादपि पूर्वविप्रतिषेधेनेष्यते यथोक्तमस्तेयार्थमिति चेवानिष्टत्वादिति । कः पुनर्निश्चय इत्यत्राजपोर्विशेषः, यावता तदेव रूपं स एव स्वरोऽपि थाथादिसूत्रेणोभयत्रान्तोदात्तत्वविधानादित्यत आह । 'निश्चिग्रहणं स्वरार्थमिति'। निश्चिग्रहणसामर्थ्यात् थाथादिस्वरोऽत्र न प्रवर्त्तते कृत्स्वरेण तु मध्योदात्तत्वमेव भवतीति भावः । 'वशिरण्योरिति'। घञि प्राप्ते वचनं वशनं वशः रणन्ति शब्दायन्तेऽस्मिन्निति रणः संग्रामः । 'घञर्थइति'। भावः कर्तृवर्जितं च कारकं घञर्थः । प्रस्थः सानुः प्रस्त्रः कटाहः प्रपा पानीयशाला सर्वत्रातो लोप इटि चेत्याकारलोपः । 'आविधमिति'। ग्रहिज्यादिसूत्रेण सम्प्रसारणम् आयुधशब्दपर्यायोऽयम् ॥

"उपसर्गेऽदः"॥ 'अदेर्धातोरिति'। दारूपाणां धातूनामयं निर्देशो न भवति घञपोश्चेत्यपि परतोदेर्घस्लादेशविधानात् । व्यद्यतइति विघसो वैश्वदेवशिष्टमन्नम् । घासस्तु चतुष्पदां भक्ष्यम् । घसिः प्रकृत्यन्तरमस्ति तस्मादेवाच्विधेयः, एवं ह्यदेरपि घस्लृभावो न वक्तव्यो भवति उत्तरार्थं त्वदेर्ग्रहणं नो णच चदेर्यथा स्याद् घसेर्मा भूदिति ॥

"व्यधजपोरनुपसर्गे" ॥ व्यधजपोरिति पञ्चम्यर्थे षष्ठी अनुपसर्गइति प्रसज्यप्रतिषेधः उपसर्गे सति न भवतीति तेन केवलाभ्यामेव

भवति न तूपसर्गव्यतिरिक्तेऽन्यस्मिन्नुपपदे, वृत्तिग्रन्थोप्यस्मिन्नेवार्थे व्याख्येयः, उपजापो मन्त्रभेदः ॥

“क्वणो वीणायां च” ॥ ‘सोपसर्गार्थमिदं वीणाग्रहणमिति’ । निर्व्यतिरिक्तोपसर्गार्थमिदं द्रष्टव्यं निपूर्वादनुपसर्गाच्च सामान्येन विधानात्, कल्याणप्रक्वाणेति बहुव्रीहिः ॥

“मदोऽनुपसर्गे” ॥ ‘विद्यामद इत्यादि’ । कर्तृकरणइत्यादिना समासः क्वणो वीणायां चेत्यस्यानन्तरं नित्यं मदः प्रमदसंमदौ हर्षे पणः परिमाणइति यदि सूत्रन्यासः क्रियेत अत्रानुपसर्गग्रहणं शक्यमकर्तुम् अनुवृत्तेरेव सिद्धत्वात् सत्यम्, एवं विन्यासे हि क्रियमाणे पणः परिमाणइत्यत्राप्यनुपसर्गइत्यस्यानुवृत्तिः शङ्क्येत यथा न्यासे तूत्तरत्राप्यनुपसर्गइति वचनान्नित्यं पणः परिमाणइत्यत्रानुपसर्गइति न संबध्यतइति विज्ञायते तेनोपसर्गेपि भवति यदि परिमाणाभिधानमस्ति । अपर आह मदोनुपसर्गइति सूत्रप्रणयनमस्य विधेरनित्यत्वज्ञापनार्थं तेन माद इति सिद्धं भवतीति नात्राप्तभाषितमस्ति ॥

“प्रमदसंमदौ हर्षे” ॥ ‘निपातनं रूढ्यर्थमिति’ । उपात्तस्यैव रूढिरूपस्य साधुत्वं यथा स्यादित्यर्थः । प्रसंख्यामित्युच्यमाने प्रसंमदः संप्रमदः विप्रमद इत्यादावपि प्राप्नोतीति मन्यते ॥

“अक्षेषु ग्लहः” ॥ अक्षस्य ग्लह इति भावेऽप्, अक्षस्य ग्रहणमित्यर्थः । अन्ये त्वाहुरक्षशब्देनात्र तत्साधनं देवनं लक्ष्यते, अक्षकर्मणि देवनविषये यत्पणरूपेण ग्राह्यं तद् ग्लहशब्देनोच्यते तथा च माघो व्यात्युक्षीमभिसरणग्लहामदीव्यन्निति, वृत्तावप्यक्षस्य ग्लह इत्यक्षसाधनस्य देवनस्य पणबन्ध इत्यर्थः ॥

“प्रजने सर्तेः” ॥ प्रजननं प्रजनः भावे घञ्, जनिवध्योश्चेति वृद्धिप्रतिषेधः णयन्तादुरेच् प्रशब्दो धात्वर्थं विपरीतयति यथा प्रतिष्ठतइत्यत्र प्रादुर्भावस्य च वैपरीत्यं गर्भग्रहणं तदाह । ‘प्रजनः प्रथमं गर्भग्रहणमिति’ । कथमवसरः प्रसर इत्यधिकरणे पुंसि संज्ञायां घः प्रायेण ॥

"हुः सम्प्रसारणं च न्यभ्युपविषु" ॥ निवह इत्यादि रूपं तु जुहोतेरेव सिद्धमनेकार्थत्वाद्धातूनामर्थभेदोऽप्यकिञ्चित्करः, इदं तु वचनं ह्वयतेर्घञि निह्वाय इति रूपं मा भूदिति ॥

"निपानमाहावः" ॥ आहाव इति रूपं तु जुहोतेरेव सिद्धम् अनेकार्थत्वाद्धातूनामर्थभेदोऽप्यकिञ्चित्करः, इदं तु वचनं ह्वयतेर्घञि आह्वाय इति रूपं मा भूदिति, आहाव इत्यधिकरणे निपातनमित्याह । 'तत्र हीति' ॥

"भावेऽनुपसर्गस्य" ॥ 'भावग्रहणमित्यादि' । ननु च ह्वयेऽप्यधिकृते लक्ष्यदर्शनवशाद्भाव एवायं विधिर्भविष्यति यथा कर्मव्यतिहारे णच् स्त्रियामित्यत्र सत्यमेव एवार्थो भावग्रहणेनाख्यायते । अथ यथाभिविधौ भाव इनुणित्यत्र वासरूपनिवृत्त्यर्थं भावग्रहणं तथेहापि कस्मान्न भवति असरूपस्य बाधनीयस्याभावात्, घञ् तावत्सरूपः क्तल्युट्क्तिनस्तु नास्यौत्सर्गा नहि तेषु नाप्राप्तेष्वस्यारम्भः, दृश्यन्ते च ते हूतं ह्वानं हूतिरिति ॥

"हनश्च वधः" ॥ 'स चान्तोदात्त इति' । सूत्रे तथैवोच्चारणात् । किमर्थं पुनरकारान्तत्वं किमर्थं चान्तोदात्तत्वं यावता नायमकारः क्वचिच्छ्रूयतेऽतो लोपोऽस्य भवति तत्राह । 'तत्रेति' । अन्तोदात्तत्वे सतीत्यर्थः । 'उदात्तनिवृत्तिस्वरेणेति' । अनुदात्तस्य च यत्रोदात्तलोप इत्येव उदात्तनिवृत्तिनिमित्तत्वादुदात्तनिवृत्तिस्वरः । 'घात इति' । अत्र कर्मादौ कारके घञ् । 'किं तर्हि प्रकृतेन प्रत्ययेनेति' । अथ धातोरनन्तरं श्रुतः प्रकृतेन धातुना कस्मान्न सम्बध्यते हनश्च वधादेशो भवति ह्वयतेश्चेति, पूर्वसूत्रे सम्प्रसारणविधानसामर्थ्यात् ॥

"मूर्तौ घनः" ॥ 'अभ्रघन इति' । अभ्रस्य काठिन्यमित्यर्थः । 'धर्मशब्देनेति' । शुक्लादिवदिति भावः । यद्येवं गुणेनेति प्रतिषेधात्समासो न प्राप्नोति तत्स्थैश्च गुणैरित्येतदपि नास्ति इदानीमेव ह्युक्तं धर्मशब्देन धर्मी भण्यत इति वक्तव्योऽत्र समासः ॥

अन्तर्घनो देशे ॥ 'तदपि ग्राह्यमेवेति' । उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ॥

"अगारैकदेशे प्रघणः प्रघाणश्च"॥ 'द्वारप्रकोष्ठो बाह्य उच्यत-इति'। द्वारप्रदेशे द्वौ प्रकोष्ठावलिन्दावाभ्यन्तरो बाह्यश्च तत्र बाह्ये प्रकोष्ठे निपातनं नागारैकदेशमात्रे, एतच्च निपातनाल्लभ्यते, प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यतइति अप् कर्मणि पत्ते वृद्धिश्च॥

"उद्घनोत्याधानम्"॥ 'अत्याधानमिति'। अतिशब्द उपरिभावे वर्त्तते, आङ्धातिः स्थापने, अधिकरणे ल्युट्, उद्घन इत्यत्राप्यधिकरण-एवाप्॥

"अपघनोऽङ्गम्"॥ 'अपघन इति'। करणेप्॥

"करणेयोविद्रुषु"॥ 'द्रुघन इति'। द्रुरिति वनस्पतिनाम वनस्पतयो वै द्रव इति निगमो भवति। 'पूर्वपदात्सञ्ज्ञायामग इति वेति'। संज्ञा चैषा कुठारविशेषस्य॥

"स्तम्बे क च"॥ 'तत्र चेति'। अनन्तरोक्तेऽपि के तु घनादेशो न भवति पूर्वमेव घनादेशस्याप्सम्बन्धित्वात्। 'स्तम्बघ्न इति'। उपपद-समासः, गमहनेत्युपधालोपः, होहन्तेरिति कुत्वम्। 'स्त्रियामित्यादि'। एतच्च कापोः प्रतिपदविधानात्सर्वापवादत्वात् कृत्यल्युटो बहुलमिति वचनाद्वा लभ्यते, अन्ये पुनरूतियूतिजूतिसातिहेतीति हन्तेः क्तिनि निपात-नात्तन्निपातनस्य च सर्वापवादत्वात्स्तम्बहेतिरितीच्छन्ति, अपरे तु करणाधि-करणयोश्चेति ल्युटि स्तम्बहननीति भवितव्यम्, यथा रतोयातूनां हननी-त्युक्तमित्याहुः। 'स्तम्बघात इति'। भावे घञ्, षष्ठीसमासः॥

"परौ घः"॥ 'पलिघ इति'। परेश्च घाङ्कयोरिति विभाषा लत्वम्॥

"उपघ्न आश्रये"॥ 'आश्रयशब्द इत्यादि'। आश्रयणमाश्रयः स प्रत्यासत्त्या ऽविनाभावीत्येष लक्षणा हेतुः। 'पर्वतोपघ्न इति'। पर्वते-नोपहन्यते सामीप्येन गम्यतइति कर्मण्यप्॥

"संघोद्घौ गणप्रशंसयोः"॥ संहननं संघो भावेप्, उद्घन्यते उत्कृष्टो ज्ञायतइति कर्मण्यप्, गत्यर्था बुद्ध्यर्था इति हन्तिर्ज्ञाने वर्त्तते। 'उद्घो मनुष्याणा[१]मिति'। मनुष्याणां मध्ये प्रशस्त इत्यर्थः॥

१ मुद्रितमूलपुस्तके मनुष्य इति प्रथमान्तपाठोऽपपाठः।

"निघो निमितम्" ॥ 'समारोहपरिणाहमिति'। आरोह उच्छ्रायः, परिणाहो विस्तारः, तौ समानौ यस्य तत्तथोक्तम्। 'निघा वृक्षा इति'। निर्विशेषं हन्यन्ते ज्ञायन्तइति कर्मण्यप् ॥

"ड्वितः क्त्रिः"॥'भावे ऽकर्त्तरि च कारके इति वर्त्ततइति'। अधिकारस्याविच्छेदं दर्शयति, अयं तु क्त्रिप्रत्ययः स्वभावाद्भावएव भवति पाकेन निर्वृत्तं पक्त्रिममित्युच्यते न तु पक्त्रेनेति। 'केवलो न प्रयुज्यतइति'। तेनावश्यमन्यशब्देनैव विग्रहः कर्त्तव्यः, तद्दर्शयति। 'पाकेन निर्वृत्तं पक्त्रिममिति'। 'उप्त्रिममिति'। यजादित्वात्सम्प्रसारणम्, अथ ड्वितः त्क्रिममित्येव कस्मान्नोक्तमेवं हि त्क्रेर्मम् नित्यमिति न वक्तव्यं भवति, नैवं शक्यम्, भावइत्यधिकाराद्भावेपि कृत्रिममिति प्राप्नोति, अथाप्युभयानुवृत्तावप्यभिधानस्वाभाव्यात्कारकएव कर्मणि भवेद् एवमपि भूतकालो न गम्येत, एतदप्यभिधानस्वाभाव्याद्भवतु नाम एवमर्थाभिधाने प्रकारभेदो न स्यात् नहि पक्वपक्त्रिमशब्दयोः पर्यायतां मन्यन्ते ॥

"ट्वितोऽथुच्" ॥ अयमपि स्वभावाद्भाव एव भवति घञादेरपवादो वासरूपविधिना सोपि भवत्येव ॥

"यजयाचयतविच्छप्रच्छरक्षो नङ्" ॥ नङो ङकारो विच्छेर्गुणप्रतिषेधार्थः, अन्यथान्तरङ्गत्वात्तुकि च्छ्वोः शूडनुनासिके चेति सतुक्कस्य छस्यादेशे कृते लघूपधत्वाद्गुणः स्यात्, नङन्ताः सर्वे पुल्लिङ्गाः, याचिस्तु स्त्रीलिङ्गः, वासरूपविधिश्च यथाभिधानं भवति। 'प्रश्न इति'। अत्र ग्रहिज्यादिसूत्रेण सम्प्रसारणं कस्मान्न भवतीत्याह। 'प्रच्छेरिति'॥

"कर्मण्यधिकरणे च" ॥ कर्माधिकरणयोः पृथक् पृथक् सप्तमीनिर्देशान्न तावदुभयोरुपपदत्वं तत्र व्याख्यानात्कर्मोपपदमधिकरणं तु प्रत्ययार्थ इत्याह। 'कर्मण्युपपदइति'। 'अधिकरणग्रहणमर्थान्तरनिरासार्थमिति'। अर्थान्तरं भावः करणादि च कारकम् ॥

"स्त्रियां क्तिन्" ॥ 'घञजपामपवाद इति'। येन नाप्राप्तिन्यायेन घञोपवादः, अजपोस्तु परत्वादपवादो बाधक इत्यर्थः, उक्तं च अजब्भ्यां

स्त्रीखलना: स्त्रिया: खलनौ विप्रतिषेधेनेति । अजपोरवकाशः चयः जयः लव इति, क्तिनोवकाशः कृतिर्हृतिः, चितिः स्तुतिरित्यत्रोभयप्राप्तौ क्तिन् भवति विप्रतिषेधेन, लब्धिः, पित्त्वादङपि भवति लभेति । ननु निष्ठायां वा सेटोऽकारवचनात्सिद्धमिति ब्रुवतो वार्तिककारस्य गुरोश्च हल इत्यकारप्राप्तावेवाबादिभ्यश्चेति क्तिचभिमत इति गम्यते तत्कथमङ्विषये क्तिचुदाहृतः, सत्यं, प्रयोगबाहुल्यादिदमपि भवतीति मन्यते, एवं च युज्विषयेपि क्तिन्प्रयुज्यते आस्तिरिति, अत एवाबादयः प्रयोगतोनुसर्त्तव्या इत्युक्तम् । 'श्रुयजिस्तुभ्यः करणइति' । ल्युटि प्राप्ते वचनम्, श्रुतिः श्रोत्रम्, इज्यतेऽनया देवता इष्टिः । 'ऋकारल्वादिभ्य इति' । ऋकारान्तेभ्यो ल्वादिभ्यश्च परः क्तिन्निष्ठाकार्यं लभते रदाभ्यां निष्ठातो नः ल्वादिभ्य इति च निष्ठायां विधीयमानं नत्वं क्तिनोपि भवतीत्यर्थः । 'क्तिन्नपीष्यतइति' । अस्त्रियामिति प्रतिषेधाद्वासरूपविधेरभावादिदमुक्तम् ॥

"स्थागापापचो भावे" ॥ 'अङोपवादस्य बाधक इति' । स्थादिभ्य आतश्चोपसर्गेइति प्राप्तस्य पचेस्तु पित्त्वात्प्राप्तस्याङोपवादः । कां स्थायिकां कां स्थायिमित्यत्र विभाषाख्यानपरिप्रश्नयोरिति प्राप्तयोर्ण्वुलिञोरपि बाधकः कस्मान्न भवति पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरानिति । 'कथमिति' । न कथं चिद्वासरूपविधेरभावात् । 'नात्यन्तायेति' । नियमेन चतुर्थ्यन्तप्रतिरूपकोयं निपातो यथा चिरायेति ॥

"मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः" ॥ 'प्रकृतिप्रत्यययोरिति' । प्रकृतिसामान्यविवक्षायां द्विवचनमन्यथा बहुत्वात्प्रकृतीनां बहुवचनप्रसङ्गात् । 'विभक्तिविपरिणामेनेति' । वृषादीनां द्वन्द्वे या प्रथमा तस्याः पञ्चमीभावेन यो विपरिणामस्तेन प्रकृतिप्रत्यययोः संबन्धः, अन्यथा संबन्धानुपपत्तिरित्यर्थः । वृषु सेचने इषु इच्छायां, वृषिसाहचर्यादुदितो ग्रहणं सूत्रे त्वकारो न विवक्षितः, मन ज्ञाने मनु अवबोधने द्वयोरपि ग्रहणं विदादीनामपि यथादर्शनम् । 'सर्वत्रेति' । मन्त्रे चामन्त्रे

चेत्यर्थः। वृषादिभ्यः क्तिप्रत्यये विधातव्यउदात्तवचनमुत्तरार्थं, व्रजयजो-र्भावे क्यबुदात्तो यथा स्यात् प्रमतिरित्यादौ च तादौ च निति कृत्य-ताविति पूर्वपदप्रकृतिस्वरार्थं च, पिबतेरपि मन्त्रे क्तिवुदात्तो दृश्यते त्वं सुतस्य पीतये, मध्वः सोमस्य पीतयइति ॥

"ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च" ॥ 'मन्त्रइति नानुवर्त्तत-इति'। तेन ब्राह्मणे भाषायां चायं विधिर्भवति'। 'स्यतेरिति'। षोन्त कर्म-णीत्यस्य। 'इत्वाभाव इति'। द्यतिस्यतीत्यादिना प्राप्तस्येत्वस्याभावः। 'सनोतेर्वेति'। षणु दानइत्यस्य। 'हन्तेर्हिनोतेर्वेति'। यदा हन्तेस्तदा नकारस्येत्वं निपात्यते, यदा हिनोतेस्तदा तु गुणः। 'कीर्त्तयतेरिति'। कॄत संशब्दन इत्यस्य चुरादिणिजन्तस्य ण्यासश्रन्थो युजिति युचोपवादः क्तिनि-पात्यतउदात्तत्वं च, इडभावस्तु तितुत्रेत्यादिना सिद्धः, उपधायाश्चेती-त्वम्, हलि चोपधायां चेति दीर्घत्वम्। कालापास्तु युचमपीच्छन्ति की-र्त्तनेति ॥

"व्रजयजोर्भावे क्यप्" ॥ 'इज्येति'। वच्यादिसूत्रेण संप्रसारणम्। यत्युदात्त इति वर्त्तते पित्करणं किमर्थमित्यत आह। 'पित्करणमुत्तरत्र तुगर्थमिति' ॥

"संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" ॥ 'भाव-इति न स्वर्यतइति।' पूर्वसूत्रे यद्भावग्रहणं तस्येहास्वरितत्वान्नानुवृत्तिरि-त्यर्थः। 'समज्येति'। घञपोः प्रतिषेधे क्यप उपसंख्यानमिति वचनाद्वीभा-वाभावः, अन्ये तु संज्ञायामित्येव क्यपो विधानात् रूढ्यनुगमार्थत्वाच्च संज्ञाग्रहणस्य वीभावाभावमाहुः, नहि वीभावे सति संज्ञा गम्यते। समज्या सभा, निषद्या आपणः, निपत्या पिच्छिला भूमिः, मन्या गलपार्श्वेशिरा मन्यन्ते नयेति कृत्वा, तया हि क्रुद्धो ज्ञायते, क्यपोऽझलादित्वादनुदा-त्तोपदेशेत्यनुनासिकलोपो न भवति तदभावात्तुगपि न भवति, अन्ये तु संज्ञायामिति वचनाद्यथा समज्येत्यत्र वीभावो न भवति एवं मनेरनुनासि-कलोपस्तत्र कृते तुगपीत्याहुः। नात्राप्तवचनमस्ति। विद्यते एतत्तेनयार्थं इति विद्या, सूयतेभिषूयते सोमोस्यामिति सुत्याभिषवदिवसः, सुत्यमह-

इतममिति स्वार्थे नपुंसकत्वम्, शय्यतेस्यामिति शय्या खट्वादिः, भरणं भृत्या जीविका, ईयते गम्यतेनयेतीत्या दीपिका, भृञोसंज्ञायामित्यत्रोक्तं स्त्रियां भावाधिकारोस्ति तेन भार्या प्रसिद्ध्यतीति, इह तु भावइति न स्वर्यतइत्युक्तं, तत्र पूर्वापरविरोधं मन्यमानः पृच्छति। 'कथं तदुक्तमिति'। परिहरति। 'भावाधिकार इति'। संज्ञायामित्युच्यते भृञश्च भावएवोत्पद्यमानेन क्यपा संज्ञा गम्यते ऽतः संज्ञावशाद्योयं भावस्य भृत्याशब्दवाच्यत्वेन व्यापारः स एव तत्र भावाधिकारो विवक्षितो न तु शास्त्रीयः स्वरितत्वनिबन्धन इत्यर्थः, संज्ञायामिति वर्त्तमाने पुनः संज्ञाग्रहणं भावार्थं, पूर्वकं हि संज्ञाग्रहणं कारकेण संबद्धम् असंज्ञायां तु क्तिचेव भवति ॥

"कृञः श च"॥ 'योगविभाग इति'। कृञः क्यप् भवति ततः श च चकाराद्यथाप्राप्तं चेति तेन त्रीणि रूपाणि भवन्ति, अन्यथा चकारेणानन्तरस्य क्यप एव समुच्चयो न तु क्तिन इति क्तिच स्यात्, शकारः सार्वधातुकसंज्ञार्थस्तत्र यदा भावकर्मणोः शस्तदा सार्वधातुके यक् रिङ् शयग्लिङ्क्ष्विति रिङादेशोन्यत्र शकार एव परतो रिङादेशोचिश्नुधात्वित्यादिनेयङ् ॥

"इच्छा"॥ 'इषेर्द्धातोरिति'। इषु इच्छायामित्यस्माद्भावे शप्रत्ययो भवतीति न त्वकर्त्तरि कारके स्वभावात्। 'परिचर्येत्यादि'। परिचर्यादीनामपि निपातनस्योपसंख्यानं परिचर्यादयोपि शप्रत्ययान्ता निपातयितव्या इत्यर्थः, तत्र सर्वत्र शप्रत्ययो यक्च निपात्यते, परिचर्या पूजा, परिसर्या परिसरणमत्र गुणोपि निपात्यते, मृग अन्वेषणे चुरादावदन्तोत्रातो लोपाभावो निपातनात्, शे यकि णिलोपः, मृगया, अटतेः शे यकि यका सह टकारस्य द्विर्वचनं पूर्वभागे यकारस्य निवृत्तिर्दीर्घत्वमित्येतत्सर्वं निपात्यते, हलादिशेषस्तु नास्ति षाष्ठिके द्विर्वचनेभ्याससंज्ञाविधानाद् यदा त्वटस्यर्त्तिशूर्णोतीनामिति यङन्तादप्रत्ययादित्यकारस्तदातोलोपे यलोपे चाटाट्येति भवति। 'जागर्त्तेरकारो वेति'। वाशब्दात्यते शः, तदा सार्वधातुके यक्, जाग्रोविचिण्णल्ङित्स्विति गुणः ॥

"गुरोश्च हलः" ॥ प्रकृतस्य धातोर्हला विशेषणात्तदन्तविधिरित्याह । 'हलन्तो यो धातुरिति' । अज्विशेषवाचिनो गुरुशब्दस्य हलन्ते धातौ न मुख्या वृत्तिः सम्भवतीति तद्वति तच्छब्दो विज्ञायतइत्याह । 'गुरुमानिति' । विपर्ययस्तु न भवति गुर्वन्तो यो धातुर्हल्वानिति चेष्टायामनध्वनि आशंसायां भूतवच्चेति निर्द्देशात् । 'कुण्डा हुण्डेति' । कुडि दाहे हुडि संघाते ॥

"षिद्भिदादिभ्योऽङ्" ॥ 'गणपरिपठितेष्विति' । गणे तावद्भिदा छिदेत्यङन्ता एव समुदायाः पठ्यन्ते तेषु भिदिच्छिदिप्रभृतयोऽङः प्रकृतयो यास्ता इह भिदादिशब्देन निर्द्दिश्यन्तइत्यर्थः, कुत एतत्, धात्वधिकारात्, भिदादिभ्यो धातुभ्य इति, भिदिर् विदारणे, छिदिर् द्वैधीकरणे, विद ज्ञाने, क्षिप प्रेरणे, गुहू संवरणे, डुधाञ् धारणपोषणयोः, मिधृ मेधृ हिंसासंक्लेशनयोः, ऋ गतौ, हृञ् हरणे, क्षि क्षये । अथ वा क्षि निवासगत्योः, तॄ प्लवनतरणयोः, धृञ् धारणे, लिख अक्षरविन्यासे, चुद प्रेरणे, पीड अवगाहने, डुवप् बीजतन्तुसन्ताने, वस निवासे, मृजूष् शुद्धौ, क्रप कृपायामित्येता वेदितव्याः । 'जरेति' । ऋदृशोऽङि गुणः । 'गुहा गिर्योषध्योरिति' । गिरिशब्देन तदेकदेश उच्यते, अन्यत्र गूढिः क्तिन्नेव भवति । 'आरा हारा कारा तारा धारेति' । गुणे कृते दीर्घत्वं च निपात्यते । 'रेखा लेखेति' । लिखेः पक्षे लकारस्य रेफो निपात्यते गुणश्च । 'चूडेति' । चुदेर्डत्वं दीर्घत्वं च निपात्यते । 'भित्तिरन्येति' । भिद्यतइति भित्तिः कुड्यम्, छित्तिश्छिद्रम् । 'आरा शस्त्र्यामिति' । शस्त्री शस्त्रजातिः स्वभावाच्च विशेषः परिगृह्यते, आरा प्रतोदः, अर्यन्ते प्रेर्यन्तेनयाश्वा इति कृत्वा । 'आर्त्तिरन्येति' । आङोर्त्तेश्चोपसर्गाद्दृति धाताविति वृद्धिः । धार्यते प्रपात्यतइति धारा । 'धृतिरन्येति' । प्रीतिर्धैर्यं च ॥

"चिन्तिपूजिकथिकुम्बिचर्चश्च" ॥ 'युचि प्राप्तइति' । सर्वेषामेव ण्यन्तत्वात् । कुम्बा अयम् । उदीचीनकुम्बां शम्यामिति हि दृश्यते, चकारोनुक्तसमुच्चयार्थस्तुलयतेस्तुला, अथ गुरोश्चहल इत्यस्यानन्तरं कस्मान्न कृतं किमङ्विधानेन, तत्रापि कर्त्तव्यं कोन्वत्र विशेषः, अपर

आह अङ्विधानसामर्थ्यात्पत्ते णिलोपो न भवति चिन्तियेत्यादि भवतीति, नात्राप्तभाषितमस्ति॥

"आतश्चोपसर्गे"॥ 'श्रदन्तरोरित्यादि'। उपसर्गे यादृशी वृत्तिः प्रत्ययोत्पत्तिलक्षणा तादृश्येव तयोरपि भवतीत्यर्थस्तत्र श्रद्धाशब्दस्तारकादिपाठात्सिद्धः, यदयमन्तर्द्धावित्युपसर्गनिबन्धनं किप्रत्ययं निर्द्दिशति तद् ज्ञापयति अन्तःशब्द उपसर्गश्रुत्तिरिति, एवं च कृत्वान्तर्णयतीत्युपसर्गादसमासेपीति णत्वमपि भवति॥

"ण्यासश्रन्थो युच्"॥ 'ण्यद्भविष्यतीति'। ननु वासरूपविधिना ण्यत्स्यात् स चास्त्रियामिति प्रतिषिद्धस्तत्राह। 'वासरूपप्रतिषेधश्चेति'। 'उत्सर्गापवादस्येति'। समाहारद्वन्द्वः, द्वयोरप्युत्सर्गापवादयोः स्त्र्यधिकारावस्थितयोरित्यर्थः। 'घट्टिवन्दिविदिभ्यश्चेति'। विदिर्लाभार्थो गृह्यते न ज्ञानार्थो विदचेतनाख्याननिवासेष्वित्यस्यैव चुरादेर्वेदनेति ज्ञाने सिद्धत्वात्, न च वेत्तेः क्तिनो निवृत्त्यर्थं वचनं संवित्तिरिति दर्शनात्। 'अन्वेषणेति'। इष आभीक्ष्ण्ये इष गताविति वा, युचश्चकारश्चिन्त्यप्रयोजन उदात्त इति हि वर्त्तते तत्सामर्थ्यादन्तोदात्तत्वं भविष्यति, प्रत्ययस्वरेणैवाद्युदात्तत्वसिद्धेः॥

"रोगाख्यायां ण्वुल्बहुलम्"॥ 'आख्याग्रहणमित्यादि'। यदि प्रत्ययान्तं रोगस्य नाम भवति एवं प्रत्ययो भवति नान्यथेत्येवमर्थमाख्याग्रहणमित्यर्थः, तेन पदान्तरद्योत्ये रोगे न भवति, बुभुक्षा भस्मकेनेति भस्मको नाम रोगविशेषस्तत्राशितपीतादिकं शरीरस्य व्यापकं न भवति सर्वदा च बुभुक्षा भवति। 'बहुलग्रहणं व्यभिचारार्थमिति'। क्व चित्प्रवृत्तिः क्व चिदप्रवृत्तिः क्व चिद्विभाषा क्व चिदन्यदेवेत्ययं व्यभिचारः। 'प्रच्छर्द्दिकेति'। छर्द्द वमने, वमिः मुहुर्मुहुः प्रवाहयति प्रवर्त्तयतीति ग्रहणी प्रवाहिका। 'विचर्च्चिकेति'। चर्च्च अध्ययने प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः, पामा विचर्च्चिका शिरोर्त्तिः शिरस्तोदः, अर्द्द हिंसायां तितुत्रेतीडभावः पूर्वपदस्य ह्रस्वमतो रोग्प्रतादित्युत्वमाद्गुणः एङः पदान्तादति। 'धात्वर्थनिर्द्देश इति'। क्रियानिर्द्देशइत्यर्थः। 'इक्श्तिपौ धातुनिर्द्देश इति'। धात्वनुकरणादित्यर्थः, बहु-

लवचनाच्च क्वचिन्न भवति गुप्तिज्किद्भ्यः सन्मान्बधदान्शान्भ्य इति, श्तिपः श्तिपःकरणसामर्थ्यादकर्तृवाचिन्यप्येतस्मिन् शबादयो भवन्ति, एवमभावकर्म वाचिन्यपि क्वचिद्यगपि भवति यथा विभाषा लीयतेरत्र लीलिङोर्येका निर्द्देशः कृतः, श्यनि तु लीङ एव ग्रहणं स्यात् न तु लीनातेः, कथं पुनः श्तिकरणस्य सामर्थ्यं यावता पिबतिर्जिघ्रतिरित्यादौ श्तिपि पिबाद्यादेशार्थं ग्लायत्यादावात्वप्रतिषेधार्थं च श्तिकरणं स्यात्, एवं तर्ह्युपसर्गात्सुनोतिसुवतिस्यति विभाषा लीयतेः भवतेर्णं उपसंख्यानं ध्यायतेः सम्प्रसारणं चेत्येवमादिनिर्द्देशाच्छबादयो भविष्यन्ति । 'वर्णादिति'। वर्णवाचिनो वर्णानुकरणादित्यर्थः, न तु वर्णादुच्चार्यमाणादिति, किं सिद्धं भवति ककार इत्यादौ साच्कादपि संघातात्कारः सिद्धो भवति अकारस्योच्चारणार्थत्वेन वर्णमात्रस्यानुकार्यत्वात्, ककारस्येत्सञ्ज्ञाप्रयोजनाभावाच भवति बहुलग्रहणादस्य च्वौ यस्येति चेत्यादौ कारप्रत्ययो न भवति, बहुलवचनादेव क्वचिद्वर्णसङ्घातादनुकरणादपि भवति एवकार इति, अधातुविहितत्वेपि कारप्रत्ययस्य कृत्सञ्ज्ञाधिकारसामर्थ्याद्भवति तेन कृदन्तत्वात्प्रातिपदिकसञ्ज्ञा भवति, इडागमस्त्वनार्द्धधातुकत्वान्न भवति, किमर्थं पुनः कारप्रत्ययो विधीयते यावता करणं कारः, अस्य कारोकार इत्येवमस्तु, नैवं शक्यम्, एवं हि विज्ञायमाने ककारकरणमिति न स्यात् करोतेः पौनरुक्त्यात् । 'रादिफ इति'। कारस्यायमपवादः, कथं तर्हि रकारादीनि नामानि वासरूपविधीना कारोपि भविष्यति, [1]पूर्ववत्कृत्सञ्ज्ञायां प्रातिपदिकत्वम् । 'मत्वर्थाच्छ इति'। मतुना समानार्थो मत्वर्थस्ततः स्वार्थे छः, बहुलवचनादभत्वेपि यस्येति लोपः, पूर्ववत्प्रातिपदिकत्वम्, बहुलवचनात्क्वचिन्न भवति यथा तसौ मत्वर्थे[2]इति, बहुलवचनादेव च मतुबर्थशब्दादपि भवति शैषिकान्मतुबर्थीयादिति । 'आज्जिरिति'। बहुलवचनाद्गीभावाभावः । 'इकृ यादिभ्य इति'। धात्वर्थनिर्द्देशे ण्वुलोपवादः ॥

---

१ 'रेफइति' २ पुस्तके अधिकम् ।

"सञ्ज्ञायाम्" ॥ उद्दालः श्लेष्मातकस्तस्य पुष्पाणि भज्यन्ते यस्यां सा उद्दालपुष्पभञ्जिका, वरणपुष्पाणि प्रचीयन्ते यस्यां वरणपुष्पप्रचायिका, अभ्यूषः पूलिकाऽपूपविशेषः स खाद्यते यस्यां साभ्यूषखादिका, तालस्य भञ्जनं यस्यां सा तालभञ्जिका, एवं सालभञ्जिका ॥

"विभाषाख्यानपरिप्रश्नयोरिञ्च" ॥ ननु पूर्वं परिप्रश्नः पश्चादाख्यानं भवति तत्कथं क्रमव्युदासेन सूत्रे पूर्वमाख्यानस्य निर्देशः पश्चात्परिप्रश्नस्य तत्राह । 'पूर्वं परिप्रश्न इत्यादि' । सत्यं पूर्वं प्रश्नः पश्चादाख्यानमिति सूत्रे तु लक्षणवशाद्विपर्यय आश्रित इत्यर्थः, स्वयं तु व्यत्यासेन व्याचक्षाणोऽर्थक्रमेण व्याचष्टउदाहरति च । 'कारिकामिति' । ण्वुल् । 'क्रियां कृत्यामिति' । कृञः श च चकारात्क्यप् च । 'कृतिमिति' । योगविभागात् क्तिन् । 'गणिमिति' । गण सङ्ख्याने चुरादिरदन्तः । 'गणनामिति । 'युच् । 'एवमित्यादि' । कां पाचिकां पचां षित्त्वादङ्, पक्तिं स्यागापापच इति क्तिन्, कां याजिं याजिकामि॰ कां पाठिं पाठिकां पठितिं, तितुत्रेष्वग्रहादीनामिति वचनादिट् ॥

"पर्यायार्हर्णोत्पत्तिषु ण्वुच्" ॥ 'परिपाटीति' । पटेः परिपूर्वादिजजादिभ्य इति इञ्, तदन्तात्कृदिकारादक्तिन इति ङीष् । 'तद्योग्यतेति' । तच्छब्देन धात्वर्थ उच्यते । 'परस्मादिति' । धारेरुत्तमर्णइति सम्प्रदानसञ्ज्ञा, परस्येति तु पाठे परस्य वस्त्वित्यर्थः, धार्यते बध्यते, ग्रामगामिकेति कर्मणि षष्ठ्याः समासः । 'उदपादीति' । चिण् ते पद इति कर्त्तरि चिण् । 'स्वरार्थमिति' । चित इत्यन्तोदात्तत्वं यथा स्यात् ण्वुलि तु लितीति प्रत्ययात्पूर्वमुदात्तं स्यात् ॥

"आक्रोशे नञ्यनिः" ॥ आक्रोशः शपनं न क्षेपः स्वभावादकरणिरित्यादिकं शपनवाक्यम् ॥

"कृत्यल्युटो बहुलम्" ॥ 'स्नानीयमिति' । करणे कृत्यः । 'दानीय इति' । संप्रदाने अवसेचनादौ कर्मणि ल्युट् । 'प्रस्कन्दनः प्रपतन इति' । कर्त्तरि । बहुलग्रहणं न कर्त्तव्यमारम्भसामर्थ्यादेव कृत्यल्युटो यत्र विहिता-

स्ततोऽन्यत्र भविष्यन्ति ततो बहुलग्रहणात्कृन्मात्रस्य स्वार्थव्यभिचारः साधितो भवति तयोरेव कृत्यक्तखलर्थाः कर्त्तरि कृदित्ययं त्वर्थनिर्देशो बाहुल्याद्भावादिषु भवन्ति क्वचिदेव त्वन्यत्रेति ज्ञापनार्थः। 'पादहारक इति'। कर्मणि ण्वुलि पञ्चम्यन्तस्य साधनं कृतेति समासः। 'गलेचोपक इति'। अमूर्द्धमस्तकादित्यलुक् ॥

"नपुंसके भावे क्तः"॥ ननु च तयोरेव कृत्यक्तखलर्था इति नपुंसके भावे क्तः सिद्धः, सत्यं, भूते सिद्धः कालसामान्ये तु नपुंसके न प्राप्नोतीत्ययमारम्भः, इह सकर्मकेभ्योऽपि यथा भावे घञादयो भवन्ति ओदनस्य पाक ओदनस्य भोजनमिति तथायमपि क्तः सकर्मकेभ्यो भावे भवति अत्राकर्मकेभ्य इत्यवचनादिति केचिदाहुः, अथ तदा कर्मणि का विभक्तिर्भवति कृद्योगलक्षणा कर्मणि षष्ठी सा निष्ठायोगे प्रतिषिध्यते, नपुंके भावउपसंख्यानमिति षष्ठी भविष्यति ओदनस्य भुक्तमुदकस्य पीतमिति, अस्मिन्पक्षएतदर्थोऽप्ययमारम्भो नहि तयोरेवेत्यनेन सकर्मकेभ्यो भावे क्तः सिध्यति, अन्ये तु तयोरेवेत्येतदस्यापि क्तस्य विषयव्यवस्थापकं मन्यन्ते तद्धि निष्ठेति विहितस्य क्तस्य भावमर्थं विधत्तेऽकर्मकेभ्य इति च विषयं व्यवस्थापयति अस्य तु भावे क्त इत्यनुवादेनाकर्मकेभ्य इति विषयं व्यवस्थापयति ॥

"ल्युट् च"॥ 'योगविभाग उत्तरार्थ इति'। उत्तरत्र ल्युट एवानुवृत्तिर्यथा स्यात् क्तस्य माभूदित्येवमर्थम् ॥

"कर्मणि च येन संस्पर्शात्कर्त्तुः शरीरसुखम्"॥ कर्त्तुरिति कर्मणि षष्ठी उभयप्राप्तौ कर्मणीति नियमाद्येनेति कर्त्तरि तृतीया तदाह। 'येन कर्मणा संस्पृश्यमानस्येति'। कस्य शरीरसुखमित्यपेक्षायां कर्त्तुः सन्निधानात्तस्यैव विज्ञायतइत्याह। 'कर्त्तुः शरीरसुखमुत्पद्यतइति'। किमिदं शरीरस्य सुखमिति, ननु शरीरव्यतिरिक्तस्यात्मनो धर्मः सुखं, सत्यं, यस्मिन् सुखे समुत्पन्ने शरीरेऽपि स्वास्थ्यमुत्पद्यते तच्छरीरसुखमित्युच्यते। 'नित्यसमासार्थं वचनमिति'। कथं तर्ह्युभयप्राप्तौ कर्मणीत्यत्रोदाहृतं साधु खलु पयसः पानं देवदत्तेनेति यत्र प्रतिकूलतया सुखं नोत्पद्यते तत्र तदुदा-

हृतं द्रष्टव्यम् । 'पयःपानं सुखमिति' । तत्र पानेन सुखं न स्पर्शेन, इदं तूदाहर्त्तुमुचितं चन्दनानुलेपनं सुखमिति, नैष दोषः, यत्र संस्पर्शनमन्तरेण न सुखमुत्पद्यते तद्विषयोपलक्षणं संस्पर्शग्रहणं तत्र स्पर्शनादेव सुखं भवतु तत्पूर्वकात्पानादेर्वा सर्वत्र भविष्यति । 'तूलिकाया इति' । तूलेन निर्मितः कशिपुस्तूलिका तत्र शयित्वोत्थानं सुखम् । 'अग्निकुण्डस्योपासनमिति' । अत्राग्निकुण्डेनास्पृश्यमानस्यैव सुखम् । 'गुरोः स्नापनमिति' । यद्यप्यत्र गुरुः सुखानुभवस्य कर्त्ता तथापि न तदत्राश्रितमव्यभिचारात् किं तर्हि ल्युट्प्रकृतौ यत्कर्तृत्वं तदाश्रितं तदाह । 'स्नापयतेर्न गुरुः कर्त्तेति' । 'मानसी तु प्रीतिरिति' । पुत्रेण बलवत्परिष्वज्यमानस्य शरीरतोद एव भवति मानसी तु प्रीतिः, ननु प्रत्युदाहरणेष्वपि सर्वत्र ल्युट् प्रयुज्यते तत्कथं प्रत्युदाहरणत्वं तत्राह । 'सर्वत्रासमासः प्रत्युदाह्रियतइति' ॥

"करणाधिकरणयोश्च" ॥ 'करणे चाधिकरणे चाभिधेयइति' । उपपदे तु करणाधिकरणे न भवतः करणाधिकरणयोरित्यत एव निर्द्देशात्, क्रियते ऽनेनेति करणम् अधिक्रियतेस्मिन्नित्यधिकरणमिति करणाधिकरणसाधनौ ह्येतौ,यद्येवं सति निर्द्देशे प्रत्ययविधानं सति च प्रत्ययविधाने निर्द्देश इतीतरेतराश्रयः प्राप्नोति,न, नित्यत्वाच्छब्दानां नास्मान्निर्द्देशात्करणाधिकरणशब्दौ स्तः । 'इध्मप्रव्रश्चन इति' । 'कर्मणि षष्ठ्याः समासः दात्रादिरुच्यते । 'पलाशशातन इति' । शद्लृ शातने हेतुमण्णिच्, शदेरगतौ त इति तत्वं, येन दण्डेन वृक्षस्य पर्णानि पात्यन्ते स एवमुच्यते, गोदोहनी सक्तुधानी पात्री, योगश्चायं येन नाप्राप्तिन्यायेन घञोपवादः, अजपौ स्त्रीप्रत्ययांश्च परत्वाद्बाधते, उक्तं हि, अजप्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति ॥

"पुंसि संज्ञायां घः प्रायेण" ॥ 'दन्तच्छदाविति' । छद आवरणे चुरादिः, छादेर्घे द्व्युपसर्गस्येति ह्रस्वः, एत्यास्मिन्कुर्वन्ति व्यवहारमित्याकरः उत्पत्तिस्थानम् ॥

"गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च" ॥ गावश्चरन्त्यस्मिन्निति रूढिशब्दोयं विषयपर्यायः, तस्य यथाकथंचिन्निर्वचनं तथा च गो-

चर इन्द्रियगोचर इत्याद्यपि। 'सञ्चरन्तेनेनेति'। समस्तृतीयायुक्तादित्यात्मनेपदम्, सञ्चरो मार्गः, वहः स्कन्धः, व्रजो गोष्ठम्, व्यजस्तालवृन्तम्, आपणः पण्यस्थानं, निगमश्छन्दः, अयं योगः शक्योऽवक्तुं, पूर्वेणैव घः सिद्धः, हलश्चेति घञ् कस्मान्न भवति, प्रायेणग्रहणं तत्रानुवर्त्तते यथा कषो निकष इत्यत्र घञ् न भवति, एवं गोचरादिष्वपि न भविष्यति ॥

"अवे तृस्त्रोर्घञ्"॥ अवतारो कूपादिः, अवस्तारो जवनिकादिः, नद्यवतारस्तीर्थम् । 'प्रायेणग्रहणानुवृत्तेरसंज्ञायामपि भवतीति'। ननु घञ् विधेयः प्रधानं तस्य प्रायग्रहणमुपाधिस्ततश्च संज्ञायामेव क्वचिच्च भवतीत्यर्थः स्यात्, एवं मन्यते, संज्ञायामित्युपाधेरेव प्रायग्रहणमुपाधिर्नोपाधेरुपाधिर्भवति विशेषणस्यैव वा विशेषणमिति तु नाश्रीयते लक्ष्यानुरोधादिति ॥

"हलश्च" ॥ लेखो लेखनी, वेष्टो वस्त्रादिः, वेष्ट वेष्टने, विद्येते ज्ञायेते अनेन धर्माधर्माविति वेदः, अपमृज्यतेनेन व्याध्यादिरित्यपामार्गो वीरुद्विशेषः, वीमार्गः समूहनी, पूर्ववत्कुत्वदीर्घत्वे ॥

"अध्यायन्यायोद्यावसंहाराश्च"॥ 'आवयन्तीति'। एत्यवयन्तीत्यर्थः । 'चकारोनुक्तसमुच्चयार्थ इति'। घञ्विधाववहाराबायानामुपसंख्यानमिति वार्त्तिकं, वृत्तिकारस्तु आधाराबायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं साधयति स्म विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण ॥

"उदङ्कोऽनुदके" ॥ तैलमुदच्यते, उद्ध्रियतेस्मिन्निति तैलोदकं चर्ममयं भाजनम् । 'घः कस्मादिति'। पुंसि संज्ञायामित्यादिना घे प्राप्ते घञ्विहितः, ततश्च तेन मुक्ते घ एव भवितुमर्हतीति भावः । 'विशेषाभावादिति'। ननु घे सति प्रत्ययस्वरो घञि ञित्स्वरेणाद्युदात्तं तत्कथं विशेषाभावस्तत्राह । 'घञ्यपि हीत्यादि' ॥

"जालमानायः" ॥ जल धान्यइत्यतो ज्वलितिकसन्तेभ्यो ण इति णे कृते जालमिति भवति, आनीयन्ते मत्स्यादयोनेनेत्यानायः ॥

"खनो घ च" ॥ घित्करणं किमर्थं यावता न खनः कश्चिदवयवः कुत्वभागस्ति ज्ञापनार्थं तु एतज्ज्ञापयति अन्येभ्योप्ययं भवतीति

तेन भजेर्भंगः पदेः पदं करणे घः, खल सञ्चलने ऽधिकरणे घः खल एव-मादि सिद्धं भवति, आखनादयः खनित्रवचनाः ॥

"ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" ॥ 'तद्दुर इति'। सुदुरो-रधिकरणइतिनिर्द्देशाद्दुःशब्दो रेफान्तोऽप्यस्ति । 'सम्भवादिति'। दुर एव कृच्छ्रे सम्भव इतरयोरेवाकृच्छ्रेतः सामान्येनोक्तावपि विशेषणस्य विषय-विभागो लभ्यतइति भावः। 'ईषत्कार्यमिति'। मनागित्यर्थे ईषच्छब्दः ॥

"कर्तृकर्मणोश्च भूकृञोः" ॥ 'कर्त्तरि कर्मणि चोपपदइति'। प्रत्ययार्थत्वं तु कर्तृकर्मणोर्न भवति चकारस्योपपदसमुच्चयार्थत्वात् । किं च यदि तयोः प्रत्ययार्थत्वं स्यादीषदादिष्वेवोपपदेषु प्रत्ययः स्यात्ततश्च खित्करणमनर्थकं स्याद् अनव्ययस्य हि मुम् विधीयते तस्मात्सुष्ठूक्तं कर्त्तरि कर्मणि चोपपदइति, अत्र चकारः सन्नियोगार्थः क्रियते, यदा कर्तृ-कर्मणोरीषदादीनां च युगपदुपपदत्वं तदा प्रत्ययो भवति समासस्तु युगपत्पर्यायेण वा भवति किं पुनरत्र परमुपपदं कर्तृकर्मणी, कुत एतत् खलः खित्करणात्, तद्धि मुमर्थं मुमागमश्चानव्ययस्य तत्रेषदादीनां धातो-श्चानन्तर्यं खित्करणमनर्थकं स्यात्, ननु माभूदीषदो धातोश्चानन्तर्यं यत्रैतन्नास्ति ते प्राग्धातोरिति यत्र त्वस्ति सुदुरोस्तत्र तयोरेव प्राक् प्रयोगो युक्तः खित्करणं त्वीषदाढ्यंभवन्तीमित्यादौ मुमर्थं स्यात् सुदु-रोरपि कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति तत्रापि मुमर्थं स्यात् यथोद्दिकूले रुजिवहोः कूलमुद्रुज इति, वक्तव्योऽत्र परिहारः कृत्यल्युटो बहुलमिति, बहुलग्रहणं वात्राश्रयणीयम् । 'ईषदाढ्यंभवमिति'। अना-ढ्येन भवता सुखेनाढ्येन भूयतइत्यर्थः। 'ईषदाढ्यंकर इति'। अनाढ्यो देवदत्तः सुखेनाढ्यः क्रियतइत्यर्थः । 'स्वाढ्येन भूयतइति'। प्रमाद-पाठोऽयम् अत्र हि खलभावात्सुशब्दस्य धातोः प्राक् प्रयोगेण भाव्यं तस्मा-दाढ्येन सुभूयतइति पाठः ॥

"अन्येभ्योऽपि दृश्यते" ॥ 'अन्येभ्योऽपि धातुभ्यो गत्यर्थेभ्य इति'। गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्य इत्यर्थः, अथ वा नञोऽत्र प्रश्लेषः अन्येभ्योऽपि धातुभ्यः, कोऽर्थः, अगत्यर्थेभ्य इति, । 'भाषायामिति'। छन्दसीत्यधि-

कारादयमारम्भ:, शासु अनुशिष्टौ, युध संप्रहारे, दृशिर् प्रेक्षणे, ञिधृष प्रागल्भ्ये, मृष तितिक्षायाम् ॥

"वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ॥ अत्र केचिद्व्याचक्षते समीपस्य भाव: सामीप्यं भावे ष्यञ्, वर्त्तमानस्य सामीप्यं वर्त्तमानसामीप्यं षष्ठीसमास:, वर्त्तमानस्य भूतभविष्यन्तौ प्रति यत्सामीप्यं तत्र वर्त्तमानवत्प्रत्ययातिदेशोनर्थको ये हि वर्त्तमाने प्रत्ययास्ते समीपभूतेपि तस्मिन् भवन्त्येव, अतो वर्त्तमानं प्रति भूतभविष्यतोर्यत्सामीप्यं तदत्र वर्त्तमानसामीप्यमित्युच्यते समीपद्वारकाच्च वर्त्तमानस्य सामीप्येनाभिसम्बन्धात्समासो नानुपपन्नो यथा देवदत्तस्य गुरुकुलमिति, गुणेन नेति प्रतिषेधोपि न भवति यस्माद्गुणशब्दस्य सम्बन्धिशब्दत्वाद्गुणाक्षिप्तस्य गुणिन एव समासनिषेधो न च वर्त्तमान: सामीप्यस्य गुणी, भूतभविष्यतोस्तद्गुणित्वादिति तदिदं क्लिष्टं व्याख्यानं ष्यञ्निर्द्देशश्च केवलं गौरवायैव स्यादित्यन्यथा व्याचष्टे। 'समीपमेव सामीप्यमिति'। न चास्मिन् पक्षे ष्यञो वैयर्थ्यमित्याह। 'ष्यञ: स्वार्थिकत्वं ज्ञाप्यतइति'। स्वार्थेपि ष्यञ् भवतीति एतमर्थं ज्ञापयितुं ष्यञा निर्द्देश: कृत इत्यर्थ:। 'चातुर्वर्ण्यादिसिद्ध्यर्थमिति'। आदिशब्देन चातुराश्रम्यमन्यस्य भावोन्यभावोन्यभाव एवान्यभाव्यमित्येवमादीनां ग्रहणम्। 'कदा देवदत्त आगतोसीति'। भूतकालेन प्रश्न:, उदाहरणे भूतकालाभिव्यक्तयेयमेष इत्यागमनाविनाभूतं यद्रूपं श्वेतपरिकरबन्धादियुक्तं तद्रूपं प्रतिनिर्द्दिश्यते, इदानीमागममित्यर्थ:, एवं च कदेति प्रश्ने चोत्तरं सङ्गच्छते सामीप्यं च द्योतितं भवति। 'आगममिति'। लुङ् मिपोम्भाव:, लृदित्वादङ्। 'कदा देवदत्त गमिष्यसीति'। अत्रापि भविष्यत्कालेन प्रश्न उदाहरणे भविष्यत्कालाभिव्यक्तये। 'गन्तास्मीति'। अनद्यतने लुट्, अत्रापि सामीप्यं यथासम्भवं द्रष्टव्यम्। अथ वत्करणं किमर्थं यावतासत्यपि तस्मिन् प्रत्ययाधिकाराद्वर्त्तमाने ये प्रत्यया विहितास्ते वर्त्तमानसामीप्ये भवन्तीत्ययमर्थो लभ्यतएव नार्थो वत्करणेनात आह। 'वत्करणं सर्वसादृश्यार्थमिति'। असति वत्करणे वर्त्तमाने ये प्रत्यया इत्यनेन प्रत्ययानां रूपमात्रं लक्ष्येत ततश्च

सङ्करोऽपि स्यात्, अन्यस्माद्धातोर्यो वर्त्तमाने विहितः प्रत्ययः स धात्वन्तरादपि स्यात् वत्करणे तु सति सर्वसादृश्यावगतेः सङ्करो न भवति, सर्वसादृश्यमेव दर्शयति । 'येन विशेषणेनेति' । आदिशब्देनोपाधेरभिधेयस्य च ग्रहणम् । 'पचमानो यजमान इति' । वर्त्तमाने पूङ्यजोः शानन्विहितः सामीप्ये स ताभ्यामेव भवति । 'अलङ्करिष्णुरिति' । तच्छीलादिविशिष्टे कर्त्तर्यलम्पूर्वात्कृञ इष्णुज्विहितः स सामीप्येऽपि तस्मादेव तत्पूर्वादेव तस्मिन्नेवार्थे भवति, 'परुत्' पूर्वस्मिन् संवत्सरे यो हि मन्यत इत्यादिना प्रतिपत्तृविशेषं प्रतिप्रकरणं प्रत्याचष्टे । 'कालान्तरगतिस्त्विति' । कालान्तरं वर्त्तमानसमीपो भूतो भविष्यंश्च कालस्तस्य या गतिः प्रतीतिः सा ऽयं गच्छामीत्यतो वाक्यात् कदा देवदत्त गमिष्यसीत्यस्योत्तरत्वेन प्रयुक्ताद्भवति, ततः किमित्यत्राह । 'न चेति' । 'वाक्यार्थप्रतिपत्तारमिति' । वाक्यार्थोऽयं न पदार्थ इति यः प्रतिपद्यते स वाक्यार्थप्रतिपत्ता, कर्मणि षष्ठ्याः समासः, कर्त्तरि चेति प्रतिषेधस्त्वनित्यो जनिकर्त्तुरिति निर्देशात् शेषषष्ठ्या वा समासः । 'प्रकरणमिति' । इत आरभ्याष्टसूत्री प्रकरणशब्देनोच्यते । 'तथा च श्वः करिष्यतीत्यादि' । यदि वाक्यगम्योऽपि कालः पदसंस्कारउपयुज्यते तदा नैवमाद्युपपद्यते अनद्यतने लुटैव भवितव्यमिति कृत्वा ॥

"आशंसायां भूतवच्च" ॥ 'तस्याश्च भविष्यत्कालो विषय इति' । भविष्यत्कालोऽस्येति भविष्यत्कालो धात्वर्थः स आशंसाविषयः, सा तु वर्त्तमानकालैव, एवं च सामर्थ्याद्भविष्यद्विषयोऽयमतिदेशो विज्ञायत इत्याह । 'भविष्यत्काल इति' । 'आशंसायां गम्यमानायामिति' । आशंस्यमानक्रियावचनाद्धातोरित्यर्थः । उपाध्यायश्चेदित्यादिकमाशंसावाक्यं तत्रोपाध्यायागमनं व्याकरणाध्ययनं चोभयमशंस्यमानमित्युभयत्रापि प्रत्ययः । 'अध्यगीष्महीति' । 'विभाषा लुङ्लृङोः' रिति इङो गाङादेशो गाङ्कुटादिभ्य इति सिचो ङित्त्वं, घुमास्थादिसूत्रेणेत्वम् । 'सामान्यातिदेश इति' । अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते न तु तद्विशेषोऽनद्यतनः, सामान्यातिदेशे च विशेषो नातिदिश्यते ब्राह्मणवदस्मिन्क्षत्रिये वर्त्तितव्य-

मित्युक्ते ब्राह्मणमात्रप्रयुक्तं कार्यं गम्यते न तु माठरादिविशेषप्रयुक्तं तेनानद्यतनप्रयुक्तो लङ्लिटौ न भवतः, इहानिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यो देवश्चेद्वृष्टो निष्पन्नाः शालय इति वस्तुस्वरूपकथनमेतन्नात्राशंसा तेन सूत्रेणाप्राप्तिः, नैष दोषः, अपशालिबीजसंयोग एव निष्पत्तिः शालीनां तत्रैव निष्पादेर्वृत्तेः, अत एव लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति देवश्चेद्वृष्टः सम्पत्स्यन्ते शालय इति उक्ते वक्तारो भवन्ति मैवं वोचः सम्पन्नाः शालय इति ब्रूहीति, हेतुभूतकालसम्प्रेक्षितत्वात्सिद्धं हेतुभूतस्य वर्षादेर्यः कालः स एव कार्यस्य सम्प्रेक्षितः स एव कार्यस्यापि कालो व्यवस्थाप्यते कारणान्तरापेक्षाभावप्रतिपादनाय, ततश्च कारणस्यैव कार्यरूपेण विवक्षितत्वादभेदाध्यवसायात्कारणस्य भूतत्वात्कार्यस्यापि भूतत्वं सिद्धमित्यर्थः । इह तु कश्चिदध्वानं जिगमिषुः पश्यति अमुष्मिन्नवकाशे कूपो भविष्यतीति अनद्यतने कूपो भवितेति समासाद्य कूपोऽस्तीति अतिक्रम्य कूपोऽभूदिति, अतिक्रम्योषितत्वात् कूप आसीदिति, अतिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति तदत्र सर्वत्र कूपसत्ताया वर्त्तमानत्वं भूतभविष्यद्रूपत्वमिति सर्वत्र लडेव प्राप्नोति लुङादयस्तु वक्तव्याः, तदाहाः-स्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्त्तुर्विद्यमानार्थत्वादिति, भवन्तीशब्दो लटः पूर्वाचार्याणां सञ्ज्ञा, यदि वचनेन वर्त्तमान एव लुङादयो विधीयन्ते कूपोऽभूदिति प्रयोक्तव्ये कूपो भविष्यतीत्यपि प्रयुज्येत तस्माद्यथास्वमेता विभक्तयः कालेषु प्रयुज्यन्ते, कथ,मिन्द्रियव्यापारस्य कालस्य कूपसत्तां प्रति भेदकत्वेनाश्रयणात्तस्या अपि तत्कालत्वं ततश्चेन्द्रियव्यापारे भाविनि भविष्यद्विभक्तिर्वर्त्तमाने वर्त्तमानविभक्तिर्भूते भूतविभक्तिरिति सिद्धमिष्टम् उक्तं च ।

सत्तामिन्द्रियसम्बन्धात्सैव सत्ता विशेष्यते ।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥
अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते ।
यः समासादनाद्भेदः स तत्र न विवक्षितः ॥

इति ॥

"क्षिप्रवचने लृट्" ॥ 'वचनग्रहणं पर्यायार्थमिति'। असति तस्मिन् स्वं रूपं शब्दस्येति वचनात्क्षिप्रशब्दएवोपपदे स्यात् सति तु पर्यायेष्वपि भवति, ननु भूतवच्चेत्यस्यायमपवादः स च भविष्यत्कालविषयस्तत्र नेत्येव वक्तव्यं तस्मिन्प्रतिषिद्धे लृट् शेषे चेत्यनेनैव लृट् सिद्धः तत्किं लृड्ग्रहणेन तत्राह। 'नेति वक्तव्यइत्यादि'। नेत्युच्यमाने लृट् शेषे चेत्यनेन लृड्व्वनद्य-तने न स्यात् लुटा बाधितत्वाद् अतो लुड्विषयेपि यथा स्यादिति लृड्ग्र-हणं क्रियतइत्यर्थः ॥

"आशंसावचने लिङ्" ॥ 'अधीयेति'। इङो लिङ् इटोत्, सीयुट् लिङः सलोपो धातोरियङ् उपसर्गेण सह सवर्णदीर्घत्वं, क्षिप्रवचने लृट् आशंसावचने लिङ् विप्रतिषेधेन । क्षिप्रवचने लृडित्यस्यावकाशः क्षिप्रम-ध्येष्यामहे इति, आशंसावचने लिङित्यस्यावकाशः आशंसे युक्तोधीयी-येति, इहोभयं प्राप्नोति आशंसे क्षिप्रमधीयीयेति लिङ् भवति विप्रति-षेधेन तदेतदुदाहरणे दर्शयति । 'आशंसे क्षिप्रमधीयीयेति' ॥

"नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः" ॥ 'कालानां सामीप्य-मिति'। वर्त्तमानसामीप्यइत्यारभ्य कालप्रायत्वादस्य प्रकरणस्य सामा-न्येनोक्तावपि कालसम्बन्धिन एव सामीप्यस्याश्रयणमिति भावः। 'तुल्यजा-तीयेनेति'। तत्रैव लोके सामीप्यव्यवहारादिति भावः। 'अदादिति'। गातिस्थेत्यादिना सिचो लुक्। 'अध्यापिपदिति'। इङो णिच्, क्रीङ्जीनां णावित्यात्वम्, अर्त्तिह्रीत्यादिना पुक्, लुङि चङि अजादेर्द्वितीयस्येति पिश-ब्दस्य द्विर्वचनं णिलोपः। 'येयं पौर्णमास्यतिक्रान्तेति'। पौर्णमास्यन्तरेणा-व्यवहिता या पौर्णमासी तामधिकृत्येदमुच्यते सापि यद्यप्यमावास्ययान्या-भिश्च तिथिभिर्व्यवहिता तथापि तुल्यजातीयेन पौर्णमास्याख्येनाव्यवहित-त्वात्सामीप्यं नातिवर्त्तते। 'आधितेति'। दधातेराङ्पूर्वस्य स्याघ्वोरिच्चे-तीत्वं, ह्रस्वादङ्गादिति सिचो लोपः। 'अयष्टेति'। झलो झलीति सिचो लोपः, व्रश्चादिसूत्रेण षत्वम्। 'अदितेति'। ददातेे रूपं पूर्ववत्। 'यत्यत-इति'। व्रश्चादिषत्वे षढोः कः सीति कत्वं, सर्वत्र स्वरितञित इत्यात्मनेपदम्, इह क्रियाप्रबन्धसामीप्ययोरद्यतनप्रत्ययौ लुङ्लृटाविष्येते नानद्यतनप्रत्ययौ

शक्तिभेदविवक्षां परिहारमाह। 'प्रधानशक्त्यभिधाने चेति'। आख्यातपद-वाच्या क्रिया विशेष्यत्वात्प्रधानं विशेषणभूता त्वप्रधानं तद्द्वारेण तद्विषययोः शक्त्योरपि गुणप्रधानभावः, तत्र प्रधानानुवर्तित्वाद्गुणानां तन्मुखप्रेक्षित्वात्तद्विरुद्धस्वकार्यारम्भाभावात् यथायथं विभक्तिसिद्धिरित्यर्थः। उक्तं च

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥

इति। वयं तु ब्रूमः सकृच्छ्रुतस्य युगपदुभाभ्यां सम्बन्धाभावादेकेनैव प्रधानेन शाब्दोन्वय इति इतरेण तु सन्निधानादार्थ इति॥

"अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्"॥ 'कथं पुनरसौ सिद्धाप्रयोग इति'। सिद्ध ओदन इत्यादौ सिद्धशब्दो निष्पन्नवचनः, ततश्च सिद्धश्चेदप्रयोगः कथमप्रयुज्यमानात्ततो णमुल्विधिरिति प्रश्नः, सिद्धे सत्यारम्भो नियमार्थ इतिवत्प्राप्तवचनः सिद्धशब्द इत्युत्तरम्। 'निरर्थं कत्वादिति'। निष्प्रयोजनत्वात्। 'एवमेवेति'। निरर्थक एव सन्नित्यर्थः। एतदेव स्फोरयति। 'अन्यथा भुङ्क्त इति'। 'यावानर्थ इति'। उदाहरणेष्वनुप्रयोगेषु या क्रिया तत्प्रकारवचना अत्रान्यथादयः। 'अन्यथा कृत्वा शिरो भुङ्क्त इति'। अत्र तु विना करोतिना शिरसोन्यथा करणं न प्रतीयते भुजिक्रियागत एव प्रकारो गम्यते ऽतोवश्यं प्रयोज्यः करोतिः॥

"यथातथयोरसूयाप्रतिवचने"॥'यदसूयन् पृच्छति प्रतिवक्तीति'। पृच्छति सति यदसूयन्प्रतिवक्तीत्यर्थः, असु मानसोपतापे कण्ड्वादिः। 'तत्रेति'। एवं भूते विषये यत्प्रतिवचनं तदसूयाप्रतिवचनमित्यर्थः। 'यथाकारमिति'। प्रष्टुमनर्हः सन्यदि पृच्छति तदेदमुत्तरम्। 'यथा कृत्वाहं भोक्ष्य इति'। तत्त्वकथनमेतत्। कथं पुनरत्र क्त्वाप्रत्ययो यावता सिद्धाप्रयोग इति वचनादनर्थकोत्र करोतिः, ततश्च भेदनिबन्धनस्य पौर्वकाल्यस्य समानकर्तृकत्वस्य चाभावाचात्र प्राप्नोति, णमुल् पुनरुभयाभावेपि वचन-

सामर्थ्याद्भवति, उच्यते, क्रियासामान्यवचनः करोतिस्तद्विषयप्रकारो यथा-तथाशब्दाभ्यामुच्यते तत्र सामान्यस्य संनिहिते विशेषे पर्यवसानात्तद्विषय एव प्रकार उक्तो भवति ततश्च यथा भोक्ष्यत इति यावानर्थस्तावानेव सत्यपि करोतावित्येतावता सिद्धाप्रयोगत्वमुच्यते न पुनरत्यन्तमभिधे-याभावात्, ततश्च क्रियाभेदनिबन्धन उपपन्न एव क्त्वाप्रत्ययः, एवं च कृत्वा पूर्वसूत्रेपि वासरूपेण क्त्वा भवति, भाष्येपि तत्र तत्र प्रयुज्यते अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार उक्तः, कथं कृत्वा बाधकमि-त्यादि ॥

"कर्मणि दृशिविदोः साकल्ये" ॥ 'कर्मण्युपपदे साकल्यविशिष्ट इति' । सकलस्य भावः साकल्यं तद्विशिष्टे कर्मण्युपपद इत्यर्थः । 'कन्यादर्शं वरयतीति' । अत्र दर्शनविषयभूतानां सर्वासामेव कन्यानां वाक्यार्थेनान्वयात्साकल्यं, सर्वाः कन्या वरयतीत्यत्रापि दर्शनविषयभूता इत्यर्थः, अतिशयप्रतिपादनपरं चैतत्, यस्मात्कस्याश्चित्परित्यागेपि भव-त्येव । 'जानाति लभते विचारयति वेति' । सत्तार्थस्य तु विदेरकर्मक-त्वादग्रहणमिति भावः ॥

"यावति विन्दजीवोः" ॥ विन्देति विदेर्लाभार्थस्यानुकरणं तस्य हि विन्दतीत्यादौ शे मुचादीनामिति नुमस्ति । 'यावल्लभते तावद् भुङ्क्ते इत्यर्थ इति' । एतेनासाकल्यं दर्शयति साकल्ये हि पूर्वेणैव सिद्धम् ॥

"चर्मोदरयोः पूरेः" ॥ कर्मणीत्यनुवृत्तेः पूरेरिति ण्यन्तस्येदं ग्रहणं केवलस्याकर्मकत्वादित्याह । 'पूरयतेरिति' । 'उदरपूरं भुङ्क्त इति' । उदरं पूरयन् भुङ्क्त इत्यर्थः । एवमादिषु प्रायेण पौर्वकाल्यं नास्ति तस्मा-त्पूर्वकाल इति न सम्बन्धनीयमित्याहुः ॥

"वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्" ॥ 'गोष्पदपूरमिति' । गोः पदं पूरयन्वृष्ट इत्यर्थः, वृषेरकर्मकत्वात्कर्तरि क्तः, अत्रापि पूर्वकाल इति न सम्बन्धनीयमित्याहुः । 'सीतापूरमिति' । सीता लाङ्गलपद्धतिः । 'अस्य ग्रहणं किमर्थमिति' । संनिधानादेव पूरयतेरूलोपो विज्ञास्यत इति

प्रश्नः। 'उपपदस्य मा भूदिति'। अस्येत्यनुच्यमाने वर्षप्रमाणवदूलोपोऽपि समुदायविषयो विज्ञायेत प्रकृत्युपपदसमुदाये सन्निहितो य ऊकारस्तस्य लोप इति ततश्चोपपदस्याऽपि स्यादिति भावः। ऊलोपश्चास्यान्यतरस्यामिति शक्यमकर्तुं, कथं गोष्पदप्रमिति, प्रा पूरण इत्यस्माद्धातोरातोऽनुपसर्गे कः क्रियाविशेषणत्वात्कर्मत्वनपुंसकत्वे, न रूपभेदो नार्थभेदो न स्वरभेदः कप्रत्यये थाथादिसूत्रेणान्तोदात्तत्वं णमुल्यूलोपे कृते पूर्वस्य स्वरभाजोऽभावाल्लितीत्यस्याप्रवृत्तौ प्रत्ययस्वरस्तस्य कृदुत्तरपदप्रकृतिस्वरेणावस्थानमित्यन्तोदात्तत्वमेव, ननु च णमुलि सति कृन्मेजन्त इत्यव्ययत्वाद्विभक्तीनां श्रवणं न भवति तरपि च गोष्पदप्रतरमिति भवति, कल्पबादौ च गोष्पदप्रकल्प इति भवति, अज्ञातादिषु चाव्ययत्वादकज्भवति के तु सति सर्वमेतन्न सिद्ध्यति, उच्यते, इष्यते तावद्विभक्तीनां श्रवणमेकेन गोष्पदप्रेणेति तरबादिषु दोपन्यस्तानि रूपाणि नेष्यन्त एव, एतच्च भाष्ये ऊलोपप्रत्याख्यानादवसीयते। ननु च गोष्पदपूरमित्याद्यपि घञैव सिद्धं न सिद्ध्यति यदि तावत्करणे घञं विधाय तदन्तेन कर्मणि षष्ठ्याः समासः क्रियते ततस्थाथादिस्वरेणान्तोदात्तत्वं स्यादथ भावे घञि व्यधिकरणपदो बहुव्रीहिः क्रियते गोष्पदस्य पूरणमस्मिन्वर्ष इति ततः पूर्वपदप्रकृतिस्वरप्रसङ्गः, गोष्पदपूरन्तरां गोष्पदपूरङ्कल्पमित्यादि न च सिद्ध्यति तस्माद्वर्षप्रमाण इति वक्तव्यम्॥

"चेले क्नोपेः"॥ 'अस्माद्धातोर्ण्यन्तादिति'। पुका निर्देशादेव ण्यन्तत्वमवसीयते, व्याख्यानाच्चेल इत्यर्थग्रहणमित्याह। 'चेलार्थेष्विति'। 'चेलक्नोपं वृष्ट इति'। चेलं क्नोपयन् शब्द यन्वृष्ट इत्यर्थः, यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इति यावत्॥

"निमूलसमूलयोः कषः"॥ अत्र प्रकरणे समानकर्तृकत्वमेव। 'निमूलकाषमिति'। कषतिर्हिंसार्थः। एकस्यैव धात्वर्थस्य सामान्यविशेषभावेन भेदे सति विशेषणविशेष्यभावः, निर्गतं मूलमस्य निमूलं, सह मूलेन समूलं कषणं करोति, सह मूलेन कर्षतीत्यर्थः। एवं सर्वत्र प्रकरणे द्रष्टव्यम्॥

"समूलाकृतजीवेषु हन्कृञ्ग्रहः" ॥ 'जीवग्राहमिति' । जीवतीति जीवः, इगुपधलक्षणः कः, जीवन्तं गृह्णातीत्यर्थः ॥

"करणे हनः" ॥ 'नित्यसमासार्थं चेति' । हिंसार्थानामित्यनेन णमुलि तृतीयाप्रभृतीन्यन्यतरस्यामिति विकल्पितः समासः स्याद् अतो हिंसार्थेष्वनेनैव णमुलेषितव्य इत्यर्थः । कथं पुनरिष्यमाणोपि लभ्यते, यावता ऽहिंसार्थे हन्तौ सावकाशोयं विधिर्हिंसार्थानामित्यस्य तु हन्तिव्यतिरिक्तो हिंसार्थो ऽवकाशः, हिंसार्थे हन्तावुभयप्रसङ्गे परत्वात्स एव विधिः प्राप्नोति तत्राह । 'पूर्वविप्रतिषेधेनेति' । कथं तर्हि हिंसार्थानामित्यत्रोदाहरिष्यते दण्डोपघातं गाः कालयति दण्डेनोपघातं वेति । अत्राहुः । यत्रैक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेषणविशेष्यभावमनुभवति सोस्य विषयः, कषादिषु यथाविध्यनुप्रयोग इति वचनात्, अत्यन्तभिन्नधात्वर्थसम्बन्धे तु तेनैव णमुल् भवतीति, एवं च नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्चेति, कोर्थः, यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थ इत्यर्थः । इह द्विर्हन्ग्रहणं समूलग्रहणं च क्रियते सकृदेव तु शक्यं कर्तुं, कथम्, एवं वक्ष्यामि जीवाकृतयोर्ग्रहकृञः, शुष्कचूर्णरूक्षेषु पिषः, निमूले कषः, समूले हनश्च, चकारात्कषश्च, ततः करणे हन इत्येव, यदेतत्कषादिषु यथाविध्यनुप्रयोग इति एतद्ग्रहादिष्विति वक्तव्यं, तथा तु न कृतमित्येव ॥

"स्नेहने पिषः" ॥ व्याख्यानात्स्नेहनइत्यर्थग्रहणमित्याह । 'स्नेहनवाचिनीति' । 'उदपेषमिति' । पेषंवासवाहनधिषु चेत्युदकस्योदभावः, शुष्कचूर्णेत्यत्र स्नेहनग्रहणं न कृतं कर्मणि तत्र प्रत्यय इह तु करणे ॥

"हस्ते वर्तिग्रहोः" ॥ जीवे ग्रहः, हस्ते च, वर्तेश्चेति, नोक्तं तत्र कर्मोपपदमिह तु करणम् । 'वर्तिर्ण्यन्त इति' । निर्द्देश एवात्र प्रमाणम् । 'हस्तवर्त्तं वर्त्तयतीति' । हस्तेन वर्त्तयति गुलिकां करोतीत्यर्थः ॥

"स्वे पुषः" ॥ 'स्वपोषमिति' । 'पित्पर्यायवचनस्य चेति' । स्वरूपेपि भवति ॥

"सञ्ज्ञायाम्" ॥ अनधिकरणार्थोयमारम्भः, पूर्वयोगस्त्वसञ्ज्ञार्थः, कथं तर्हि ग्रामे बन्ध इति. वासरूपविधिना घञ् भविष्यति ॥

"कर्त्रोर्जीवपुरुषयोर्नशिवहोः" ॥ 'जीवेन नष्ट इति'। जीवेन करणेनापदं प्राप्त इत्यर्थः। 'पुरुषेणोढ इति'। पुरुषेण करणेन देशान्तरं प्रापितो देवदत्तादिरित्यर्थः ॥

"ऊर्द्धे शुषिपूरोः" ॥ 'ऊर्द्धशोषं शुष्यतीति'। वृक्षादिरूर्द्ध एव तिष्ठन् शुष्यतीत्यर्थः। 'ऊर्द्धः पूर्यतइत्यर्थ इति'। ऊर्द्धमुख एव सन् घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः ॥

"उपदंशस्तृतीयायाम्" ॥ इतः प्रभृति पौर्वकाल्यमप्यस्ति। 'मूलकोपदंशं भुङ्क्तइति'। ननु च नात्र तृतीयान्तस्योपदंशिना संबन्धः, नहि मूलकेनान्य उपदश्यते किं तर्हि तदेवोपदश्यते, भुजिना तु संबन्ध उपपद्यते तम्प्रति करणत्वात् किं तूपदंशिना सामर्थ्याभावात्प्रत्ययो न प्राप्नोति उपपदसञ्ज्ञा च न स्यात् तदभावादुपपदसमासोपि न प्राप्नोति, वचनस्य तु दशनेरुपदश्य भुङ्क्तइत्यादिरवकाशः स्यादित्यत आह। 'मूलकादि चेति'। सत्यं मूलकादेर्भुजिनैव शाब्दोऽन्वय उपदंशिना तु कर्मापेक्षायां सन्निधानाद्योग्यत्वाच्च वस्तुतः संबन्धोस्त्येव, भुजिं प्रति करणत्वमन्यथा नोपपद्यते, ततश्चायमर्थः, मूलकेन भुङ्क्ते किं कृत्वोपदश्य, किमुपदश्य तदेव मूलकमिति, यदि तु यत्र तृतीयान्तेनैव शाब्दोन्वयस्तत्रैवायं प्रत्ययोभिमतः स्यात् करणइत्येव ब्रूयाद् यथा करणे हन इति, तस्मादार्थेन संबन्धेन सामर्थ्ये सति प्रत्ययादिकं सर्वं भविष्यति ॥

"हिंसार्थानां च समानकर्मकाणाम्" ॥ धातुसंबन्धइत्यधिकारादनुप्रयोगधातुना समानकर्मत्वं विज्ञायतइत्याह। 'अनुप्रयोगधातुना समानकर्मकाणामिति'। 'कालयति'। काल विक्षेपे चुरादिः। 'दण्डताडमिति'। तड आघाते चुरादिरेव। 'उपहत्येति'। वा ल्यपीत्यनुनासिकलोपः, ह्रस्वस्य तुक् ॥

"सप्तम्यां चोपपीडरुधकर्षः" ॥ 'उपशब्दः प्रत्येकमिति'। पीडादीनां समाहारद्वन्द्वं कृत्वोपपूर्वः पीडरुधकर्ष इत्युत्तरपदलोपी समासः,

सौत्रः पुल्लिङ्गनिर्द्देशः, करणाधिकरणविवक्षाभेदेनोपपदेषु विभक्तिद्वयम् । कर्षतेरिति भौवादिकस्य न कृषतेरिति तौदादिकस्य शपा निर्द्देशात्, शपा निर्द्देशस्तु विहितगुणस्योच्चारणाद्विज्ञायते, सूत्रे तु पञ्चम्यर्थे प्रथमा, किञ्च स्याद्यदि तौदादिकस्य ग्रहणं स्यात् यावतोभयोरपि विलेखनार्थत्वाचार्थभेदो नापि रूपभेदः, यद्यप्युभयोरपि विलेखने पाठस्तथापि तौदादिकस्य क्षेत्रविषये विलेखने वृत्तिः पञ्चभिर्हलैः कृषतीति, तेन क्षेत्रे उपकृष्य हलेनोपकृष्येति तौदादिकात्क्त्वाप्रत्यय एव भवति न णमुल् ॥

"समासत्तौ" ॥ 'सप्तम्यां तृतीयायामित्यनुवर्त्ततइति' । पूर्वसूत्रेपि स्वरितत्वादेव तृतीयानुवर्त्तते सप्तम्यां तु तस्या निवृत्तिर्मा विज्ञायीति चकारः क्रियते, तेन चानुकृष्टमुत्तरत्र नानुवर्त्ततइति न चोदनीयम् । 'युद्धसंरम्भादिति' । कोपादिना मनःक्षोभपूर्वको वाक्कायविकारः संरम्भः, युद्धार्थः संरम्भो युद्धसंरम्भः, अश्वघासादिवत्षष्ठीसमासः । 'अत्यन्तं सन्निकृष्य युद्ध्यन्तइत्यर्थं इति' । सन्निकर्षप्रतिपादनपरमेतत्केशग्रहणं भवतु मा वा भूदिति ॥

"प्रमाणे च" ॥ 'तृतीयासप्तम्योरित्येवेति' । अर्थानुवृत्तिप्रदर्शनमेतत्, नह्येवंविधः शब्दः प्रकृतोस्ति । 'द्व्यङ्गुलोत्कर्षमिति' । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलं तत्पुरुषस्याङ्गुलेरित्यच् समासान्तः, द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः, ह्रस्वाः खण्डाः खण्डिकाः ।

"अपादाने परीप्सायाम्" ॥ 'परीप्सा त्वरेति' । ञित्वरा सम्भ्रमे घटादिः, घटादयः षितः, षित्त्वादङ् । 'शय्योत्थायमिति' । उदः स्थास्तम्भोरिति तिष्ठतिसकारस्य तकारः, पूर्ववद्युक् 'अवश्यकर्त्तव्यमपीति' । अक्षिप्रक्षालनादिकम् । 'द्वितीयायां परीप्सायामित्येवेति' । अनुदात्तं पदमेकवर्जमित्यत्रापि परीप्सा भवत्येव, कथं परिभाषेयं पदग्रहणं च परिभाषार्थं तेनोदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्त्तव्यं न विलम्बितव्यमिति ॥

"स्वाङ्गे ध्रुवे" ॥ स्वाङ्गलक्षणं चतुर्थे वक्ष्यते अद्रवन्मूर्त्तिमदित्यादि । 'अक्षिनिकाणमिति' । कण निमीलने चुरादिर्निपूर्वः । 'उत्क्षिप्य शिरः क-

यतीति'। ननु च ध्रुवमिति नित्यमुच्यते ध्रुवा द्यौर्ध्रुवा पृथिवीति यथा, अध्रुवमनित्यं शिरश्चाप्यनित्यमेव प्राणिनामेवानित्यत्वादत आह। 'यस्मिन्नङ्गइति'। अयं भावः। विशेषणसामर्थ्यात्प्रकर्ष आश्रीयते प्रकर्षेण यदध्रुवमिति, प्रकर्षश्च जीवत्यपि प्राणिनि कदा चिदभाव इति॥

"परिक्लिश्यमानेच च" ॥ 'परिक्लिश्यमानइति'। क्लिश विबाधनइत्येतस्यैतद्रूपं न तु क्लिश उपतापइत्यस्य, परिश्च सर्वतो भावइत्याह। 'परिक्लेशः सर्वतो विबाधनमिति'॥

"विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" ॥ 'अनवयवेनेति'। साकल्येन। 'पदार्थानामिति'। गेहादीनाम्। 'तात्पर्यमिति'। पौनःपुन्यमाभीक्ष्ण्यमित्यर्थः, द्रव्ये व्याप्तिरित्यादिना व्याप्त्यासेवयोर्विषयविभागं दर्शयति। 'गेहानुप्रवेशमिति'। ननु व्याप्तौ वीप्सा गम्यते आसेवायां च नित्यत्वमिति नित्यवीप्सयोरिति द्विर्वचनं प्राप्नोति तत्कस्मान्न भवतीत्याह। 'समासेनेति'। यद्यपि समास एतयोरर्थयोर्न विधीयते तथापि स्वभावत एतयोस्तेनाभिधानं यथा सप्तपर्ण इति, पर्वगताया वीप्सायाः पर्वणिपर्वणि सप्तपर्णान्यस्येति। 'तथा च वक्ष्यतीति'। नित्यवीप्सयोरित्यत्र वक्ष्यति भाष्यकारः। 'तिङ्क्षु नित्यतेति'। उपलक्षणमव्ययकृत्सु चेत्यपि द्रष्टव्यम्। 'क्त्वानिवृत्त्यर्थमिति चेदिति'। आभीक्ष्ण्ये णमुल् चेत्यनेन क्त्वाणमुलौ द्वावपि विहितौ तत्र विश्यादिभ्यो णमुलेव यथा स्यात् क्त्वाप्रत्ययो मा भूदित्येवमर्थं पुनर्णमुलुच्यतइति चेदित्यर्थः। दूषयति। 'नेष्टत्वादिति'। इष्यते ह्यासेवायां विशिप्रभृतिभ्यः क्त्वा गेहमनुप्रविश्यानुप्रविश्यास्तइति। 'द्वितीयोपपदार्थं तर्हीति'। अत्र हि द्वितीयायां चेत्यधिकाराद् द्वितीयान्तस्योपपदसंज्ञा लभ्यते, किमर्थं पुनरुपपदत्वमिष्यतइत्याह। 'उपपदसमास इति'। तृतीयाप्रभृतीन्यन्यतरस्यामिति वचनात्पक्षइत्युक्तम्। 'तेन हि सत्युपपदाभाव इति'। सप्तमीस्थस्य कस्य चिदभावात्॥

"अस्यतितृषोः क्रियान्तरे कालेषु" ॥ असु क्षेपणे ञितृषा पिपासायाम् । 'क्रियामन्तरयतीति क्रियान्तर इति' । व्यवधानवाचिनोन्तरशब्दात्तत्करोतीति णिचि कर्मण्यण् । 'पाययतीति' । पिबतेर्णिचि शाच्छासाह्वेत्यादिना युक् । 'अत्यसनेनेत्यादि' । यच्चाद्य पानं यच्च त्र्यहे गते भविता तन्मध्यवर्त्तित्वादत्यसनतर्षणयो,रेतदेव स्पष्टयतुदाहरणस्यार्थमाह । 'अद्य पाययित्वेत्यादि' । 'त्र्यहमुपोष्येति' । उपपूर्वाद्वसेः क्त्वो ल्यप्, यजादित्वात्सम्प्रसारणं, शासिवसिघसीनां चेति षत्व, मत्रोपवासेन भोजनं व्यवधीयते । 'अहरिति' । कालाध्वनोरिति द्वितीया । अत्यमहरितूनत्यस्य क्षिप्वा गत इत्यर्थः । 'योजनमत्यस्येति' । क चित्कुपादौ पाययित्वा ततो योजनमतिक्रम्य पाययतीत्यर्थः ॥

"नाम्न्यादिशिग्रहोः" ॥ 'आदिशेर्ग्रहेश्चेति' । एतेनाद्रो दिशिनैव सम्बन्धो न ग्रहिणेति दर्शयति ॥

"अव्यये ऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" ॥ अयथाभिप्रेताख्यानइति नञः प्रश्लेषः पश्चाचिद्वंशाद्विज्ञायते, अन्यथा ऽ सन्देहार्थं पूर्वं निर्द्दिशेत्, अयथाभिप्रेतशब्दश्चाख्यानक्रियाविशेषणं, यथाभिप्रेतं न भवति तथाख्यानइत्यर्थः, पुत्रजन्म प्रार्थयमानं ब्राह्मणं गत्वा केन चिद्गोपनीयवचीचैराख्यातं ब्राह्मण पुत्रस्ते जात इति तमभूष्यमाणो ब्राह्मण आह । 'किं तर्हीति' । पुत्रजन्माख्यानस्य प्रियत्वेपि आख्यानप्रकारस्यानभिप्रेतत्वाद्भवत्युदाहरण,मत एवायथाभिप्रेताख्यानइत्युक्तं न पुनरप्रियाख्यानइति । 'आचतइति' । लट् स्यासस्ये शपो लुक्ि स्कोः संयोगाद्योरिति ककारलोपः, षढोः कः सि, उदाहरणे ऽयथाभिप्रेताख्यानं दर्शयति । 'उच्चैर्नामेति' । नामशब्दः प्रसिद्धो न पुनरिदं ब्राह्मणवाक्यमुक्तमिति उपदंशस्तृतीयायामित्यत्रेदमुक्तम् । 'समासार्थं वचनमिति' । एतदेवोपपादयति । 'तथाहीति' । क्त्वा चेत्यत्र तृतीयाप्रभृतीन्यन्यतरस्यामिति वर्त्तते तस्मादनेन यः क्त्वा विहितस्तेनैव पक्षे समासो लभ्यते न तु समानादिसूत्रविहितेन, नहि तेन तृतीयाप्रभृतिषूपपदेषु क्त्वाविधीयतइत्यर्थः । णमुल्ग्रहणमनर्थकं प्रकृतो ह्यसौ तत्र क्त्वा चेति वक्तव्यमित्यत आह । 'णमुलधि-

कार इत्यादि'। तुल्यकर्तृत्वं, तुल्यबलत्वम्। 'तेनेत्यादि'। यदि तु चकारेण यत्नेन णमुलनुकृष्येत उत्तरत्र नानुवर्त्तेत यत्नाभावात्, पुनर्णमुलग्रहणे तु द्वन्द्वनिर्द्दिष्टयोर्द्वयोरप्युत्तरत्रानुवृत्तिः सिद्धा भवति॥

"तिर्यच्यपवर्गे"॥ 'तिर्य्यक्कृत्येति'। तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन्, तिरसस्तिर्यलोपइति तिर्यादेशः, व्युत्पत्तिमात्रं चैतन्न त्वत्रावयवार्थोऽस्ति समुदायो ह्ययमपवर्गे वर्त्तते तद्दर्शितम्। 'समाप्य गत इत्यर्थ इति'। 'तिर्यक्कृत्वेति'। अनृजु कृत्वा ऽग्रतः स्थितं पार्श्वे स्थित्वेत्यर्थः, तिर्यचीत्ययुक्तोऽयं निर्द्देशः भसंज्ञायां सत्यामच इत्यकारलोपे तिरश्चीति भवितव्यमत आह। 'तिर्यचीति'। 'शब्दानुकरणमेतदिति'। अच इत्यर्थवतोऽजित्यस्य ग्रहणं स चार्थो लोकप्रसिद्धो गृह्यते, अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुता इति न्यायात्, अतो ऽञ्चेः स्वार्थे वर्त्तमानस्याल्लोपः, एतत्तु तत्र स्थितस्य शब्दरूपस्यानुकरणं तेनानुकार्येण रूपेणार्थवत्त्व तु लौकिकार्थेन तेन लोपाभाव इति भावः। नन्वेवमपि प्रकृतिवदनुकरणं भवतीति लोपः प्राप्नोत्येवात आह।'न च प्रकृतिवदनुकरणेन भवितव्यमिति'। कस्मादित्याह। 'अनुक्रियमाणरूपविनाशप्रसङ्गादिति'। यादृशं रूपमनुकर्त्तुमिष्टं तादृशं न प्रतीयेत लौकिक एव त्वर्थः प्रतीयेतेत्यर्थः, क्व च यथा प्रकृतिवदनुकरणं न भवतीत्याह। 'एतदोऽशित्यादि'। यद्यनुक्रियमाणरूपविनाशेऽपि प्रकृतिवदनुकरणं स्यादेतदः अदस इत्यत्रोभयत्रापि त्यदाद्यत्वादिके प्रकृतिकार्ये सति एतस्यामुष्येति रूपं स्यात्। ननु प्रयोजनानुवर्त्ति प्रमाणं ततश्चेल्लोपः प्राप्नोति कर्त्तव्य एवायं कथं यत्तदेतेभ्य इति त्यदाद्यत्व,मस्य वामीयमिति यस्येति लोपः, गवित्ययमाहेत्यवादेशः पटिति करोतीत्यनुक्रियमाणरूपविनाशे सत्यप्यव्यक्तानुकरणस्यात इतावित्ति पररूपत्वं वा भवति तस्मादुभयथा निर्द्देशदर्शनात्क्वचित्प्रकृतिवदनुकरणं भवति क्वचिन्नेति वाच्यं तथा चास्मिन्नेव सूत्रे भाष्यं सेत्रो निर्द्देश इति॥

"स्वाङ्गे तस्प्रत्यये कृभ्वोः"॥ तस्प्रत्ययइति बहुव्रीहिनिर्द्देश इत्याह। 'तस्प्रत्ययो यतः स्वाङ्गात्तदेवमुच्यत इति'। न च क्विन्प्रत्ययस्य

कुरितिवत्कदा चित्तस्प्रत्ययान्तत्वेन दृष्टे संप्रत्यतदन्तेपि स्वाङ्गे प्रसङ्गः, तस्प्रत्ययग्रहणसामर्थ्यात् कर्मधारयो वायं तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपदइति, वृत्तौ तु वस्तुमात्रं प्रदर्शितम् । 'यथासंख्यमत्र नेष्यतइति' । व्याख्यानात् । 'मुखत इति' । आद्यादित्वात्सप्तम्यर्थे तसिः । 'मुखे तस्यतीत्यादि' । तसु उपक्षय इत्यस्मान्मुखशब्दउपपदे अन्येभ्योपि दृश्यतइति क्विप्, मुखतः, अत्वसन्तस्य चेति दीर्घो न भवत्यधातोरिति प्रतिषेधात्, प्रत्ययाप्रत्ययपरिभाषयैवात्राप्रसङ्गात् नार्थः प्रत्ययग्रहणेन ॥

"नाधार्थप्रत्यये च्व्यर्थे" ॥ 'नार्थो धार्थश्चेति' । नाधासहचरितोर्थो नाधाशब्दाभ्यामुक्तः, नार्थो यस्य स नार्थः नार्थोर्थ इत्यर्थः, एतेन धार्थो व्याख्यातः । 'प्रत्ययो यस्मादिति' । यदि पञ्चम्या विग्रहः क्रियते ततः प्रकृतेरुपलक्षणं नाधार्थग्रहणं स्यादिति सम्प्रत्यतदन्तत्वेपि प्रकृतिमात्रे प्रसङ्गः, न प्रसङ्गः, एवं हि विनञ्सङ्ख्यास्विति वक्तव्यं स्यात्, षष्ठ्या विग्रहः कर्त्तव्यः नाधार्थः प्रत्ययो यस्य समुदायस्यावयव इति, ल्यब्लोपे वा पञ्चमी व्याख्येया, यं समुदायमुद्दिश्य नाधार्थः प्रत्ययो विधीयतइति । 'विनाकृत्य नानाकृत्येति' । विनञ्भ्यां नानाञौ नसहेति नानाञौ । 'द्विधाकृत्येति' । सङ्ख्याया विधार्थे धा । 'द्वैधंकृत्येति' । द्वित्र्योश्च धमुञ् । हिरुक्पृथक्शब्दौ विनार्थौ । 'नाना कृत्वा काष्ठानि गत इति' । पूर्वमेव नाना सन्ति काष्ठान्यन्यत्र कृत्वा गत इत्यर्थः । 'धार्थमर्थग्रहणमिति' । बहवो हि धार्थाः प्रत्ययास्तत्रासत्यर्थग्रहणे प्रत्ययस्यैव ग्रहणं स्यान्नान्येषां तदर्थानामर्थग्रहणे तु तेषामपि भवति यश्चाधादेशो धार्थः धमुञन्तात्स्वार्थे डदर्शनमिति तदर्थमर्थग्रहणं द्वैधकृत्य द्वैधकारं द्वैधभूय द्वैधभावमिति धमुञादीनां तु स्थानिवद्भावादेव सिद्धं तद्धिधौ ध इत्यधिकारेणादेशपक्षस्याश्रयणात्, अथ नार्थमप्यर्थग्रहणं कस्मान्न भवतीत्यत आह । 'ना पुनरेक एवेति' । ननु च नाप्रत्ययावपि द्वौ भवतो निरनुबन्धकः सानुबन्धकश्चेति तत्रासत्यर्थग्रहणे निरनुबन्धकस्यैव ग्रहणं स्यान्नेतरस्य, एवं मन्यते तन्त्रावृत्त्येकशेषाणामन्यतमस्याश्रयणात्तस्यापि भविष्यति ॥

"अन्वच्यानुलोम्ये" ॥ 'अन्वग्भूयेति'। अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वास्तइत्यर्थः। 'अन्वग्भूत्वेति'। पृष्ठतो भूत्वेत्यर्थः। अनुकूलानुकूल इति शब्देन न स्पृश्यते ॥

"शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्" ॥ अत्रानन्तरेणास्तिशब्देनैव.र्थशब्दः सम्बद्ध्यते शकधृषज्ञानां घटार्हयोश्च पृथगुपादानात्तदाह। 'शकादिषूपपदेषु अस्त्यर्थेषु चेति'। 'तुमुन् प्रत्ययो भवतीति'। भावे। 'अक्रियार्थोपपदार्थ आरम्भ इति'। क्रियार्थोपपदे तुमुन्ण्वुलावित्यादिनैव सिद्धत्वात्, तत्र तावत् शक्नोति भोक्तुं धृष्णोति जानातीति भोजने प्रावीण्यं गम्यते। 'ग्लायति भोक्तुमिति'। तत्राशक्तिः, घटते ऽर्हतीति योग्यता, आरभते प्रक्रमतइति भुजेरेवाद्यावस्था। 'लभते भोक्तुमिति'। अप्रत्याख्यातं भोजनं लभतइत्यर्थः। 'उत्सहते भोक्तुमिति'। भोजने व्याप्रियतइत्यर्थः। 'अस्ति भोक्तुमिति'। भोजनमस्तीत्यर्थः। प्रवीणो भोक्तुं कुशलो भोक्तुं पटुर्भोक्तुमित्यादौ पर्याप्तिविवक्षायामुत्तरसूत्रेण तुमुन् भवति ॥

"पर्याप्तिवचनेष्वलमर्थेषु" ॥ 'पर्याप्तिरन्यूनता'। परिपूर्णतेत्यर्थः। अन्यूनता च द्विधा सम्भवति भोजनस्य प्रभूततया वा भोक्तुः समर्थतया वा, ऽतः सामर्थ्येनालमर्थेन विशिनष्टि। 'अलमर्थेषु पर्याप्तिवचनेष्विति'। 'पर्याप्तो भोक्तुमिति'। भोजने न न्यूनीभवति समर्थ इत्यर्थः। 'पर्याप्तमिति'। प्रभूतमित्यर्थः। 'शक्यमेवं कर्तुमिति'। सुकरमेतदित्यर्थः। सम्भवमात्रं वा ऽत्र विवक्षितं सम्भवत्येवं विधस्य करणमिति ॥

"कर्तरि कृत्" ॥ किमर्थमिदमुच्यते, कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात्, यत्र वचनेनार्थो निर्दिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थएव प्रत्ययो भवति तद्यथा गुप्तिकिद्भ्यः सन्, यावादिभ्यः कन्निति एवमिमे कृतः स्वार्थे स्युः स्वार्थे मा भूवन् कर्तरि स्युरिति। ननु च यमिच्छति स्वार्थे आह तं भावे घञ् भवतीति तन्नियमार्थं भविष्यति घञेव भावे नान्यः कृदिति, असति ह्येतस्मिन्सूत्रे घञि येतावत्सूत्रं कर्तव्यं धातोर्घञ् भवतीति, तत्रानिर्दिष्टार्थत्वाद्भावएव घञ् भविष्यतीति, ततः पदद्वयवि-

श इति द्वितीयं सूत्रं कर्त्तव्यं, ततश्च भावइति न कर्त्तव्यं, क्रियमाणं तु नियमार्थं भविष्यति घञेव भावे नान्यः कृदिति, ततश्चान्यः कृद्धात्वर्थाक्षिप्ते कर्त्तरि भविष्यति। स्यादेतत् । कर्मादीनामपि धात्वर्थेनाक्षिप्तत्वेष्वपि कृतः स्युरिति, न । घः कर्मणि ष्ट्रन्, करणाधिकरणयोर्ल्युट्, दाशगोघ्नौ सम्प्रदाने, भीमादयोऽपादाने, इत्यत्र ष्ट्रनेव कर्मणि नान्य इत्यादिको नियमो विज्ञास्यते, यद्येकं कर्मादि नियतं प्रत्ययास्त्वनियता इति कारकान्तरेऽपि ष्ट्रनादयः स्युः, नैष दोषः । एकमिदं वाक्यं घः कर्मणि ष्ट्रनिति तेन च कर्मणि विधीयमानः कथं कारकान्तरेऽपि स्यात्, द्वितीयेऽपि वा नियमो विज्ञास्यते कर्मण्येव ष्ट्रनिति, एवं सर्वत्र, य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेणापि वचनं कर्त्तर्येव भविष्यति कर्त्तरि भुवः खिष्णुच्खुकञौ कर्त्तरि चर्षिदेवतयोरित्युभयत्रापि करणनिवृत्त्यर्था कर्तृश्रुतिर्विज्ञायेतेति खिष्णुजादिषु कर्तृनियमो न भविष्यति, तदेव तर्हि प्रयोजनं स्वार्थे मा भूवन्निति, ननु चोक्तं भावइति नियमो विज्ञास्यतइति स्वार्थादन्यः स भावो धात्वर्थस्य सिद्धता नाम शुद्धे स्वार्थे कृतः स्युः, लः कर्मणि च भावे चेत्ययं तर्हि नियमो भविष्यति ल एव भावे इति, नायं नियमः शक्यो विज्ञातुं कर्तृकर्मणोर्निर्द्देशेन निर्द्दिष्टार्थत्वात् लकाराः स्वार्थे न स्युः, अकर्मकेभ्य इति च वक्ष्यामीत्येवमर्थमेतत्स्यात्, अतः सुष्ठूक्तं कर्त्तरि कृद्वचनमनादेशे स्वार्थविज्ञानादिति । अत्र च द्वैधम् एतद्वाक्यनिरपेक्षैः स्वैर्विधायकैर्वाक्यैर्विहितानां कृतां पश्चादनेनार्थ आदिश्येत कृदुत्पत्तिवाक्यानां वायं शेषः स्यात् ण्वुल्तृचौ कर्त्तरि नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः कर्त्तरीति, तत्राद्ये पक्षे यथानेन तृजादीनामर्थ आदिश्यते तथा ल्युनादीनामप्यादिश्येत विशेषानुपादानात् ततश्चैतेऽप्यनेन कर्त्तरि च स्युः स्वेषुस्वेषु विधिवाक्येषु करणादीनामप्युपादानात्करणादिषु च, ननु च ल्युनादिषु करणादिरर्थो विशेषविहितत्वात् कर्त्तुश्च बाधको भविष्यति, न। नानावाक्यत्वात्, इह दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति अभिन्नकालत्वादेकं वाक्यं विशिष्टदानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते यदा तु पूर्वाह्णे ब्राह्मणभोजनप्रकरणे दधि ब्राह्मणेभ्यो दीयता-

मित्युच्यते ऽपराह्णे तु तक्रं कौण्डिन्याय दीयतामिति न तदा बाध्यबाधकभावः, तथास्मिन्पक्षेऽपि कालभेदेन वाक्यद्वयोच्चारणाद्बाध्यबाधकभावो न लभ्यते तस्मादुष्ट एवायं पक्ष इति द्वितीयं पक्षमाश्रित्याह । 'कृदुत्पत्तिवाक्यानामयं शेषः स्यादिति'। प्रागुक्तो दोषस्तदवस्थ एव तत्राह । 'येष्वित्यादि'। कुत एतदित्याह । 'अर्थाकाङ्क्षत्वादिति'। येषु वाक्येष्वर्थो न निर्दिश्यते तान्यर्थाकाङ्क्षीणि। तथाहि। ण्वुल्तृचौ भवत इत्युक्तेऽर्थविषया आकाङ्क्षा जायते क्वेतौ भवत इति, कर्त्तरि कृदित्यस्याकाङ्क्षा भवति कः कृत् कर्त्तरि भवतीति, अतस्तृजादिविध्यनुपस्थाने शेषशेषिणोरुभयोरप्याकाङ्क्षापूर्यते ततस्तत्रैवोपतिष्ठतइत्यर्थः। 'ल्युनादिवाक्येष्विति'। उपतिष्ठतइत्यनुषङ्गः, कारणमाह । 'साक्षादर्थनिर्देशे सति तेषां निराकाङ्क्षत्वादिति'। न च रक्तपटन्यायेनाकाङ्क्षोत्थापनेनोपस्थानं युज्यते स्वत एव साकाङ्क्षे तृजादिविध्यनुपस्थानेन शेषस्यापि चरितार्थत्वात्, रक्तः पटो भवतीत्यत्र तु पटो भवतीत्यस्य निराकाङ्क्षत्वेऽपि रक्तपदार्थस्य साकाङ्क्षत्वादाकाङ्क्षोत्थापनेनान्वयः, न च विदेशस्थानां कथमेकवाक्यत्वमिति वाच्यं, शास्त्रे विदेशस्थानामप्यवान्तरवाक्यानामाकाङ्क्षावशादेकवाक्यत्वदर्शनात्, यथा द्वितीयेऽध्याये लुगुच्यते तस्य चतुर्थषष्ठयोरलुगपवादो गोत्रे लुगचि, अलुगुत्तरपदइति ॥

"भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा" ॥ 'भव्य इति'। अचो यत्, गुणः, वान्तो यि प्रत्ययइति वान्तादेशः । 'गेयो माणवकः साम्नामिति'। एतेन कै गै शब्दइत्यस्येदं निपातनं न गाङ् गतावित्यस्येति दर्शयति, एतच्च निपातनाल्लभ्यते, ईद्यतीतीत्वम्। 'जन्य इति'। अचो यदित्यत्र तकिशसिचतियतिजनीनामुपसङ्ख्यानमिति वचनाद्यत्। 'आप्लाव्य इति'। ओरावश्यके। 'आपात्य इति'। ऋहलोर्ण्यत् ॥

"लः कर्मणि च भावे चाकर्मकेभ्यः" ॥ ल इति लङ्लटोरकारानुबन्धयोः सामान्येन ग्रहणमेकवचनं चेति शङ्कामपाकरोति। 'ल इत्युत्सृष्टानुबन्धसामान्यमेकं गृह्यतइति'। 'प्रथमाबहुवचनं चैतदिति'। सामान्यस्यैकत्वेऽपि जात्याख्यायामेकस्मिन् बहुवचनम्। अथादेशापेक्षया षष्ठी-

कवचनं कस्माच्चाश्रीयते लः लस्य य आदेश इति, यथा लः परस्मैपदमिति, उच्यते। एवं विज्ञायमाने लादेशानामनेनार्थो निर्दिश्येत ततश्चाम्विषयस्य लकारस्यार्थो न निर्दिष्टः स्यात्, लुगत्रादेशः, न चाभावरूपस्य तस्यार्थोपदेशनं युज्यते ततश्चासौ कर्त्तरि कृदिति कर्त्तर्य्येव स्यात्। ननु च तस्याम इति लुकापहारे सत्यनुप्रयोगे ये लादेशास्तैरेव भावादीनामभिव्यक्तिर्भविष्यति, नैतदस्ति, यदा ह्याम्विषयो लकारः कर्त्तर्येवेति स्थितं तदा विरोधाद्भावकर्मवाचिप्रत्ययपरोऽनुप्रयोगो नैव प्राप्नोति श्रुतस्यैव च संबन्धोपपत्तावादेश इत्यध्याहारो न युक्तः, तस्मात्प्रथमाबहुवचनान्तमेव युक्तं, तत्र द्विविधो लकारस्तिङ्भाव्यतिङ्भावी च, तत्र तिङ्भाविनः कृत्संज्ञानिषेधात्कर्त्तरि कृदित्यस्यानुपस्थानात्स्वार्थे भावे विधानं प्राप्नोति, अतिङ्भाविनस्तु कर्त्तरि कृदिति वचनात्कर्त्तर्येव साधुत्वं प्राप्नोति न भावकर्मणोः, आस्यमानं शय्यमानमित्यादाविति वचनमिदमारभ्यते। ननु च भावकर्मणोरात्मनेपदं विधीयते शेषात्कर्त्तरि परस्मैपदं ततश्च लकारस्य भावकर्मकर्त्तारोऽर्था अनुमास्यन्ते, यद्वा लकारस्य प्रयोगेऽसमवायादादेशानामेव तेऽर्था भविष्यन्ति नार्थ एतेनेत्याशङ्क्याह। 'सकर्मकेभ्यो भावे न भवन्तीति'। अनारभ्यमाण एतस्मिन्यथा भावे विधीयमाना घञादयः सकर्मकेभ्योऽपि भावे भवन्ति ओदनस्य पाकः सूत्रस्य कृतिरिति तथा भावकर्मणोरित्यनेन भावआत्मनेपदं सकर्मकेभ्योऽपि स्यात् ततश्च पच्यते यवागूं देवदत्तेनेति प्रयोगः प्राप्नोति, अतो भावे चाकर्मकेभ्य इति वक्ष्यामीत्ययमारब्धः, अथ तत्रैव भावकर्मणोरकर्मकादित्युच्यते तत्राकर्मकग्रहणं कर्त्तव्यं स्यात्, ननु चेहापि क्रियते, इहावश्यं कर्त्तव्यं तयोरेव कृत्यक्तखलर्थाः भावे चाकर्मकेभ्य इति, तस्मात्सकर्मकेभ्यो भावे मा भूदित्येवमर्थमयमारम्भ इति स्थितं, किं चाम्विषयस्य लकारस्यार्थादेशनार्थमपीदं वक्तव्यम्। इतरथा पूर्वोक्तदोषप्रसङ्गादित्यलमियता॥

"तयोरेव कृत्यक्तखलर्थाः"॥ 'तयोर्भावकर्मणोरिति'। पूर्वसूत्रे साक्षाच्छ्रुतयोर्भावकर्मणोस्तच्छब्देन परामर्शो न चकारेण संनिधापितस्य कर्त्तुरिति भावः। अत एवोत्तरसूत्रे पुनः कर्त्तरि चेत्युक्तं, यदि ह्यनन्तरवाक्ये

चकारेण संनिधापितस्य कर्त्तुर्भावस्य चात्र प्रत्यवमर्शः स्यात् तत्र कर्तृग्रहणमनर्थकं स्यात् कर्त्तर्यनेनैव सिद्धत्वात्। 'एवकार इत्यादि'। कृत्वात्कर्त्तरि कृत्याः प्राप्ता एवकारेण कर्त्तुरपकृष्यन्ते व्यावर्त्यन्ते। ननु च तक्रकौण्डिन्यन्यायेन न कर्त्तुरपकर्षो भविष्यति, यथा वडवाया वृषे वाच्य इत्यत्र वर्त्तते ऽपत्ये प्राप्तस्ततोपकृष्य वृषे विधीयते ऽपत्ये त्वणेव भवतीति, सत्यं, न्यायप्राप्त एवार्थे एवकारेणानूद्यते। 'शयितमिति'। निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृष इत्यकित्त्वाद्गुणो भवति। 'भावे चाकर्मकेभ्य इति वर्त्तत इति'। वयं तु ब्रूम एवकारः कर्त्तुरपकर्षणाय न कर्त्तव्य इत्युक्तं तस्यात्रोपयोगः, ययोर्भावकर्मणोर्लकार उक्तस्तयोरेवान्यूनानतिरिक्तयोः कृत्यादयो भवन्तीति, यदि च सकर्मकेभ्यो भावे स्युस्तयोस्तादृशयोरेव तु न कृताः स्युरिति॥

"आदिकर्मणि क्तः कर्त्तरि च"॥ 'आदिकर्मणीति'। कर्मधारयः, कर्मशब्दश्च क्रियावचन इत्याह। 'आदिभूतः क्रियाक्षण आदिकर्मेति'। साधनकर्म तु न गृह्यते आदिशब्देन विशेषणात्, बहूनां समवाये आदिमध्यान्तभावः, साधनकर्मत्वे किमिति किं तत्रादिशब्देन। 'तस्मिन्नादिकर्मणि भूतत्वेन विवक्षितइति'। एतेन निष्ठेत्यनेनैवादिकर्मणि क्तः सिद्धो न पुनरादिकर्मणि निष्ठा वक्तव्येति दर्शयति, आद्ये हि क्रियाक्षणे भूते समूहरूपारोपादेकदेशे समूहे चेति न्यायाद्वा धात्वर्थ एव भूतो भवतीति युक्त एव क्तः। 'प्रकृतः कटं देवदत्त इति'। प्रारब्धवानित्यर्थः। 'प्रकृतं देवदत्तेनेति'। अत्र कर्मणोऽविवक्षितत्वेन धातोरकर्मकत्वाद्भावएव क्तः। एवं प्रभुक्तं देवदत्तेनेत्यत्रापि॥

"गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च"॥ 'अनूषित इति'। वसतिक्षुधोरिट्, अनुमाप्य ज.तोनुजातः, एवमनुजीर्णः, सकर्मकेभ्यः कर्माविवक्षायां भावे क्तः॥

"दाशगोघ्नौ सम्प्रदाने"॥ 'गोघ्न इति'। अत्र दानपूर्वके हनने हन्तिर्वर्त्तते। 'अर्घार्ह इति'। अर्घो मधुपर्कः तदर्हत्वेन गोहननं विहि-

तम् । एतावद्गोरालम्भनस्थानमतिथिः पितरो विवाहश्चेति, यदि सम्प्रदाने गोघ्न इति निपात्यते चाण्डालादेरपि तेनाभिधानं प्राप्नोति, अस्मात्रपि स्वागताय गां दातुमर्हन्ति सुहृदादयोऽत आह । 'निपातनसामर्थ्यादिति'। 'असत्यपि चेति'। यथा ऽपचन्नपि योग्यतया पाचक इत्युच्यते तथेहापीत्यर्थः ॥

"भीमादयो ऽपादाने" ॥ 'उणादिप्रत्ययान्ता एतइति'। बाहुल्यादेतदुक्तं प्रस्कन्दनप्रपतनयोरप्यौणादिकत्वात् । 'ताभ्यामन्यत्रोणादय इति पर्युदासे प्राप्तइति'। यद्यप्यसत्यस्मिन्सूत्रेऽपादानस्य प्रकृतत्वात्ताभ्यामिति निर्देशो नोपपद्यते तथाप्ययमर्थस्तावत्तत्र वक्तव्यस्ततोपादानाच्चान्यत्रोणादय इति, ततश्च स्यादेव पर्युदास इत्यर्थः ॥

"ताभ्यामन्यत्रोणादयः" ॥ ननु चान्यत्रोणादय इत्यप्युक्ते प्रकृतत्वादेव ताभ्यामन्यत्रेति विज्ञास्यते ऽत आह । 'सम्प्रदानार्थं इति'। कृषित इत्यादिना कर्मणि वृत्तिं दर्शयति, अत्रेडागमश्चिन्त्यः, एवं तनित इत्यत्रापि, के चिदाहुः । यस्य विभाषेतीट्प्रतिषेधो ऽनित्यः, कृतिनृत्योरीदित्करणात्, तद्धि श्वीदितो निष्ठायामितीट्प्रतिषेधार्थं क्रियते तत्र सेसिचिकृतीति विभाषितेट्त्वादेव यस्य विभाषेतीट्प्रतिषेधो भविष्यतीति किमीदित्करणेन । अपर आह, चुरादावदन्तौ कृषितनी पठितव्याविति ॥

"क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" ॥ 'स्वनिकायप्रसिद्धिरिति'। यथा यूपचषालादयो याज्ञिकानामेव प्रसिद्धास्तथा वैयाकरणानां निकायएषां प्रसिद्धिः, निघण्टुषु तु अभ्यवहारपर्यायतया प्रत्यवसानशब्दस्य पाठो वैयाकरणप्रसिद्धिमूलः । 'इदमेषामासितमिति'। अधिकरणवाचिनश्चेति षष्ठी । 'कथमित्यादि'। कर्त्तरि निष्ठां मन्यमानस्य प्रश्नः । 'अकारो मत्वर्थीय इति'। अर्शआदेराकृतिगणत्वादच् प्रत्यय इत्यर्थः । इह द्विर्गत्यर्थाकर्मकग्रहणं च क्तग्रहणं च क्रियते सकृदेव तु शक्यं कर्तुं, कथम्, एवं वक्ष्यामि क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः, ततो

गत्यर्थाकर्मकेभ्यः कर्त्तरि च, चकाराद्धिकरणे च, अनुवृत्ताच्चकाराद्यथाप्राप्तं च, ततः श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च, कर्त्तरीत्येव, एतेभ्यश्च कर्त्तरि क्तो भवति चकाराद्यथाप्राप्तं च, अधिग्रहणग्रहणान्तु नात्रानुवर्त्तते योगविभागकरणसामर्थ्यात्, तत आदिकर्मणि च, आदिकर्मणि च कर्त्तरि क्तो भवति चकाराद्यथाप्राप्तं च, ततो दाशगोघ्नावित्यादि, तथा तु न कृतमित्येव ॥

"लस्य" ॥ 'अकार उच्चारणार्थ इति'। नानुबन्धः, अन्यथा लङ्लटोरेव ग्रहणं स्यात् ततश्च परस्मैपदानां णलादयः लोटो लङ्वत् एरुरित्यादिकः.र्यविधानमनुपपन्नं स्यात्, लिङ्लोटोस्तिबादीनामभावात्। 'लकारमात्रं स्थानित्वेनाधिक्रियतइति'। ननु चेत्सञ्ज्ञायां लोपः प्राप्नोति वचनसामर्थ्यात्सत्यामपीत्सञ्ज्ञायां लोपो न भविष्यति, एवमपि लित्स्वरः प्राप्नोति, णलो लित्करणं ज्ञापकं न लादेशेषु लित्स्वरो भवतीति। 'किञ्चेदमिति'। लकारमात्रस्य ग्रहणं प्राप्नोतीति मन्यमानस्य प्रश्नः। धात्वधिकारोनुवर्त्ततइति वक्ष्यमाणाभिप्रायेणाह। 'दश लकारा इति'। अक्षरसमाम्नाये यथानुपूर्व्या ऽकारादयः तदानुपूर्वीविशिष्टैरकारादिभिरनुबन्धैः कथ्यन्ते न तु विधानक्रमेणेत्यर्थः। 'लकारमात्रस्य ग्रहणं कस्मान्न प्राप्नोतीति'। विशेषानुपादानात्प्राप्नोत्येवेति भावः। वर्णग्रहणेषु चार्थवद्ग्रहण परिभाषा न प्रवर्त्तते तथा च यस्येति लोपोनर्थकस्यापि भवति दैवदत्तिरिति, अकुर्वंश्चेति यथादेशः। 'धात्वधिकारोनुवर्त्ततइति'। धातुग्रहणमनुवर्त्ततइत्यर्थः,एवमप्यग्निचिल्लुनाति, अत्रापि प्राप्नोति विहितविशेषणं धातुग्रहण,- मेवमपि शामामलिभ्यो ल औणादिकः शाला माला मल्लः, अत्रापि प्राप्नोति, उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि तथापि परिहारान्तरमाह। 'कर्त्रादय इति'। लः कर्मणि चेत्यत्र निर्दिष्टा अर्थाः कर्तृकर्मभावा इहानुवर्तन्ते, तैश्च लकारो विशेष्यते, कर्त्रादिषु विहितस्य लस्येति, तेन विशिष्टविषयस्यैव लस्य ग्रहणं न सर्वस्य ॥

"तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्" ॥ तिबादीनां समाहारद्वन्द्वः। 'पकारः स्वरार्थ इति'। प्रदर्शन-

मेतत्सार्वधातुकमपिदित्याद्यपि प्रयोजनम्। 'इटष्टकार इत्यादि'। ननु चेटोदित्यत्र लिङित्यनुवर्तते तेनेकारस्यात्वविधानेपि नास्त्यतिप्रसङ्गः, एवमपि तिबाद्यवयवस्य प्राप्नोति, यथा एरुरित्येतल्लोट इत्यनुवृत्तावपि तिबाद्यवयवस्य भवति, नहि तत्रावयवषष्ठी लिङ इति तु स्थानषष्ठीत्यत्र प्रमाणमस्ति, अथाद्यन्तौ टकिताविति देशविध्यर्थष्टकारः कस्माच्च भवतीत्याह। 'तिबादिभिरित्यादि'। तुल्यत्वं सदृशत्वं तच्चैकयोगनिर्दिष्टत्वेन, तस्येत्येका षष्ठी तत्र तिबादयः सप्तदशादेशाः स्थाने योगं प्रयोजयन्ति तानेको नोत्सहते विहन्तुमित्यर्थः। 'महिङो ङकार इत्यादि'। तिङित्युपलक्षणं तङित्यपि प्रत्याहारो भवति, चिनुमह इत्यादौ तु गुणप्रतिषेधार्थो न भवति सार्वधातुकमपिदित्यनेनैव सिद्धत्वात्, यत्र त्वार्द्धधातुकमेषिषिमहीति तत्र ङित्त्वार्थः कस्माच्च भवति, प्रत्याहारे चरितार्थस्य समुदायानुबन्धस्यावयवानुबन्धत्वे प्रामाणाभावात्, तर्हि कथं, तस्यापि हि नकारो नलोकाव्ययेत्यत्र प्रत्याहारे चरितार्थः, ओङ आप इत्यत्र च वक्ष्यते सामान्यग्रहणार्थो ङकारो ऽन्यथा निरनुबन्धकस्य प्रथमाद्विवचनस्यैव ग्रहणं स्याद् न सानुबन्धकस्यौट इति तच्च विरुध्येत, तस्यापि टकारस्य सुडिति प्रत्याहारे चरितार्थतया औकारस्य निरनुबन्धकत्वात्, तस्मान्महिङो ङकारः प्रत्याहारार्थो न त्ववयवानुबन्ध इत्याचार्याणां स्मृतिपरम्परैवात्र शरणम्॥

"टित आत्मनेपदानां टेरे"॥ 'टितो लकारस्य स्थानइति'। एतेन टित आत्मनेपदानामिति व्यधिकरणे षष्ठ्याविति दर्शयति, यदि तु प्रत्येकसंबन्धादेकवचनमित्याश्रित्य टितामात्मनेपदानामित्याश्रीयते, अकुर्वीत्यत्रापि प्रसज्येतेति भावः। 'प्रकृतेरित्यादि'। यएते तिबादयः प्रकृतास्तेषां मध्ये यान्यात्मनेपदानि विहितानीत्येवमात्मनेपदानि विशेष्यन्ते, न च तिबादीनां मध्ये शानच् सचिविशिष्टस्ततो न तस्य प्रसङ्ग इत्यर्थः। एवं च तङामित्येव वक्तव्यं, के चित्तु आने मुगिति निर्देशं ज्ञापकं वर्णयन्ति तिङामेवैत्वं नान्येषामिति, इतरथा ह्यानयीति वक्तव्यं स्यात्, नेति

वयं, यो ऽत्रादेश आनः पूङ्यजोशानन् तस्यायं निर्देशः स्याद् वयमानो यजमानइति ॥

"थासः से" ॥ 'पेचिषइति'। लिट्, अत एकहल्मध्यइत्यादिना एत्वाभ्यासलोपौ, क्रादिनियमादिट्, इह थः सइति वक्तव्यं थकारस्य सकारे कृते परभागस्य टेरेत्वे सति सिद्धमिष्टं, पचथः पचथ अत्रापि प्राप्नोति, आत्मनेपदानामिति वर्तते, एवमप्यायामस्यकारस्य प्राप्नोति, धातोरिति वर्तते, धातोरनन्तरो यस्थकार इति, इहापि तर्हि न प्राप्नोति पचसे चिनुषइति, विकरणेन व्यवधानात्, क्व तर्हि स्यात् यएते लुग्विकरणाः श्लुविकरणाः श्नम्विकरणा,स्तस्मात् थासः से इति वक्तव्यम्, एवमपि सशब्द एवादेशो विधेयो टेरेत्वेनैव सिद्धं, ज्ञापकार्थम्, एतज्ज्ञापयति आत्मनेपदानां य आदेशास्तेषां टेरेत्वं न भवतीति, तेन पक्ता पक्तारौ पक्तार इति डारौरसामेत्वं न भवति ॥

"लिटस्तझयोरेशिरेच्" ॥ 'पूर्वसूत्रे ज्ञापितमात्मनेपदादेशानां टेरेत्वं न भवतीति तेन इशिरच्इत्येतावादेशौ न विहितौ। 'शकारः सर्वादेशार्थ इति'। अन्यथा धातोरित्यधिकारादादेः परस्येति तकारस्य प्रसज्येत, अथ शे इत्येव कस्मान्नोक्तं, शइरेजिति ह्युक्ते मात्रालाघवं भवति, नैवं शक्यं, शे इति प्रगृह्यसंज्ञा स्यात्, इह च पपे सोममिति पिबादेशः प्राप्नोति, जग्ले मम्ले इत्यादौ चात्वं न स्यात्, एशि तु न दोषः, वर्णो यत्स्यात्तच्च विद्यात्तदाविति न्यायात् ॥

"परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" ॥ 'तिबादीनामिति'। एतच्च प्रकरणाल्लभ्यते, तेन क्वसोर्णलादयो न भवन्ति, विधानसामर्थ्याद्वा क्वसोर्णलाद्यभावः। 'लकारः स्वरार्थ इति'। अन्यथा प्रत्ययस्य पित्त्वादनुदात्तत्वेपि धातुस्वरे कृते द्विः प्रयोगोद्विर्वचनमिति द्वयोरप्युदात्तत्वं प्राप्नोति, अनुदात्तं पदमेकवर्जमिति नास्ति यौगपद्येन सम्भवः पर्यायेण प्रसज्येत। 'णकारो वृद्ध्यर्थ इति'। इदमन्यथासिद्धं णलुत्तमो वे त्यत्र योगविभागः, अल् णिद्भवतीति, तत उत्तमो वा, वा णिद्भवतीति। 'पपाचेति'। कथमयं सर्वादेशो यावता नानुबन्धकृतमनेका-

लत्वं, ततश्च धातोरित्यधिकारादादेः परस्येति पकारस्य प्राप्नोति, अनि-त्वात्सिद्धं, नह्ययं णल्विधानसमये प्रत्यय इत्यनित्त्वाद् णकारस्यानेकाल्-त्वात्सर्वादेशः, ततो णकारस्येत्संज्ञेत्यानुपूर्व्यात्सिद्धम्, ननु च णकारो न कर्तव्य इत्युक्तम्, एवं तर्हि लकार आदौ क्रियते तस्याप्यनित्त्वात्सिद्धं, ल उत्तमो वेति वक्तव्यम्, एवमात औ लस्येति, हल्ङ्यादिसूत्रे चाप्यपृक्तं हलिति हल्ग्रहणं लिङ्गं सर्वादेशो णलिति, तद्धि पपाचेत्यादौ माभूदिति, सर्वादेशत्वे च तदुपपद्यते । 'पपक्थेति' । क्रादिनियमात्प्राप्त इडुपदेशे-त्वत इति प्रतिषेधाच्च भवति, क्व चित्पेचिथेति पाठः, अतो भारद्वाजस्येति नियमादिट्, थलि च सेटीत्येत्वाभ्यासलोपौ । 'पेचेति' । धातोरित्यधि-कारात्तस्मादित्युत्तरस्यादेः परस्येति अकारस्याकारे द्वयोरतो गुणे पररू-पत्वम् ॥

"विदो लटो वा" ॥ 'विद ज्ञानइति' । सत्ताविचारार्थयोस्त्वा-त्मनेपदित्वात्तिबादीनामसम्भवो लाभार्थस्यापि विकरणेन व्यवधानादन-न्तराणामसम्भव इति भावः ॥

"ब्रुवः पञ्चानामादित आहो ब्रुवः" ॥ 'पञ्च णलादय इति' । आदेशा अपि पञ्चैव तत्राप्यादितो णलादयः पञ्च न पुनरिच्छातः पञ्चेत्यर्थः, कथं पुनर्द्वितीयं पञ्चग्रहणमादिग्रहणं चान्तरेणादेशेष्वयं विशेषो लभ्यते, ननु सर्वैरेव णलादिभिः पञ्चानां स्थाने युक्तम्भवितुम् । उच्यते, पूर्वसूत्रे तावद्यथासङ्ख्यं प्रवर्त्तते ततश्च तत्रैव निर्ज्ञातः स्थानिवि-शेषेण णलादीनां सम्बन्धः, तएवेहानुवर्त्तन्तइत्यत्रापि तथैव भविष्यति, ततश्च स्थानिसम्बन्धादिति पूर्वसूत्रे स्थानिविशेषेण सम्बन्धस्य निर्ज्ञातत्वा-दित्यर्थः । 'आत्थेति' । आहस्थः, । 'परेषामिति' । थादीनाम् । ननु च ब्रुव इति यदेतत्पञ्चम्यन्तं तदेवार्थाद्विभक्तिविपरिणामो भवती-त्यादेशसम्बन्धे षष्ठ्यन्तं विज्ञास्यते नार्थो ब्रुव इति पुनर्वचनेन, तत्राह । 'ब्रुव इति' । 'पुनर्वचनमित्यादि' । 'परस्मैपदानामेव हि स्यादिति' । असति श्रुते सम्बन्धिनि विभक्तिविपरिणामो भवति, इह तु परस्मैपदा-नामिति श्रुतत्वात्तेषामेव स्यादित्यर्थः ॥

"लोटो लङ्वत्" ॥ 'लोटो लङ्वत्कार्यं भवतीति'। अत्र लोडादेशेषु लोट्शब्दो वर्त्तते, लङादेशेषु च लङ्शब्दः, लोडादेशानां लङादेशवत्कार्यं भवतीत्यर्थः। तदाह। 'तामादयः सलोपश्चेति'। यद्यप्येते लङ्याहत्य न विहितास्तथापि लङि दृष्टत्वादतिदिश्यन्ते। 'अडाटौ कस्मान्न भवत इति'। लङ्येवाहत्य विहितत्वात् प्रत्युत तयोरेवातिदेशो युक्त इति प्रश्नः। 'तथा झेर्जुसादेश इति'। कस्मान्न भवतीति विभक्तिविपरिणामेनानुषङ्गः, लङः शाकटायनस्येति जुसभावो ऽपि लङ एवाहत्य विहितः, इह तु जाग्रतु विदन्तु सिजभ्यस्तविदिभ्यश्चेति लङि दृष्टो जुसभावः प्राप्नोति। 'वाग्रहणमनुवर्त्ततइति'। लोट इत्युपमेये षष्ठीनिर्द्देशादुपमानं षष्ठ्यन्तं विज्ञायते लङो यत्कार्यं तल्लोटो भवतीति न तु लङि यत्कार्यं तल्लोटीत्यडाटोः परिहारान्तरं, झेर्जुसभावस्य तु परिहारान्तरं लङःशाकटायनस्येत्यत्र स्वयमेव वक्ष्यति॥

"एरुः" ॥ 'लोडादेशानामिकारस्येति'। अथ तु लोडादेशे य इकारस्तस्येत्यर्थोऽभिप्रेतः स्यादिट इत्येव ब्रूयात्, तुह्योः विदाङ्कुर्वन्त्विति च निर्द्देशोनुपपन्नः स्यादथेदानीमिटोपि व्यपदेशिवद्भावेनोत्वं कस्मान्न भवति, पुनःप्रसङ्गविज्ञानाट्टेरेत्वं भविष्यति। 'न वोच्चारणसामर्थ्यादिति'। यदि हिन्योरुत्वं स्यात्सेर्हुर्मेर्नुरित्येव ब्रूयादेवं हि प्रक्रियालाघवं भवतीतिभावः। आनि लोट्, हुझल्भ्यो हेर्धिरिति लिङ्गं हिन्योरुत्वाभावस्य ॥

"सेर्ह्यपिच्च" ॥ 'लुनीहीति'। पित्त्वाभावान्ङित्त्वे सति ई हल्यघोरितीत्वं भवति, राध्नुहीत्यत्र गुणाभावः, इह सेर्हिर्ङिच्चेति वक्तव्यम्। नन्वेवं ङित्त्वान्ङित्कार्यं भवतु स्थानिवद्भावेन पित्त्वमप्यस्तीत्यनुदात्तत्वमपि प्राप्नोति, ङिच्च पिन्न भवतीति वचनान्न भविष्यति, यथा ऽपि स्तुयाद्राजानमिति, अत्र उतो वृद्धिर्लुकि हलीति पिति विधीयमाना वृद्धिर्न भवति। ब्रूताद्भवानिति, ब्रुव ईट्न भवति, किं च नाप्राप्ते पित्त्वे ङित्त्वमारभ्यमाणं तद्बाधिष्यते ॥

"वा छन्दसि" ॥ 'अपित्त्वं विकल्प्यतइति' । अनन्तरत्वात् । नादेश इति, व्यवहितत्वात् । 'युयोधीति' । बहुलं छन्दसीति शपः श्लो द्विर्वचनम् । अत्र पित्त्वान् ङित्त्वाभावे ऽङितश्चेति धिभावः ॥

"मेर्निः" ॥ 'उत्वलोपयोरपवाद इति' । यथाक्रममेरुर्लोटो लङ्वदिति प्राप्तयोः, इतश्चेतीकारलोपस्यापि लङि दृष्टत्वादतिदेशतः प्राप्तिः । वयं तु ब्रूमो लोटो लङ्वदिति प्राप्तस्यामादेशस्यापवाद इति ॥

"आमेतः" ॥ 'लोट्सम्बन्धिन इति' । लोडादेशसम्बन्धिन इत्यर्थः । एतेन लोटैकारो विशेष्यतइति दर्शयति, एकारेण तु लोटि विशेष्यमाणे तदन्तविधौ सत्येकारान्तस्य लोट आम्विधीयमानोनेकाल्त्वात्सर्वादेशः स्या,त्तत्र हि निर्दिश्यमानस्यादेशा भवन्तीति परिहारो वाच्यः स्यादित्यर्थः ॥

"आडुत्तमस्य पिच्च" ॥ 'स चोत्तमपुरुषः पिद्भवतीति' । आट एव पित्त्वं कस्मान्न विज्ञायते, तुल्यविभक्तिकयोर्हि युक्तः सम्बन्ध आट् पिदिति, निरर्थकत्वात्, अनुदात्तत्वं तावदागमत्वादेव सिद्धं, करवाणि मार्जानीत्यादौ गुणवृद्ध्योरपि प्रत्यय एव निमित्तं न त्वागमः ॥

"एत ऐ" ॥ 'इह कस्मादिति' । गुणस्यान्तवद्भावेन लोड्ग्रहणेन ग्रहणादस्ति प्रसङ्ग इति भावः । 'बहिरङ्गलक्षणत्वादिति' । द्विपदाश्रयत्वाद्गुणस्य बहिरङ्गत्वमैकारस्त्वेकपदाश्रयत्वादन्तरङ्गः, अत एव हेतोरामेत इत्ययमपि विधिर्न भवति ॥

"लेटोडाटौ" ॥ 'पर्यायेणेति' । न यौगपद्येनाद्विधानसामर्थ्यात्, अन्यथा सवर्णदीर्घत्वे सत्यद्विधानमकिञ्चित्करं स्यात् ॥

"आत ऐ" ॥ 'करवैते इति' । छन्दस्युभयथेति सार्वधातुकत्वाद्विकरणः, आर्द्धधातुकत्वान् ङित्त्वाभावे विकरणस्य गुणः, करोतेश्चोत्वाभावः, पवैते अश्नवैथे प्रवैते वियन्यैथे ॥

"वैतोन्यत्र" ॥ 'एतद्विषयमिति' । षष्ठीसमासः, एवं विषयमिति तु युक्तः पाठः, उदाहरणान्युपसंवादाशङ्कयोश्चेत्यत्र व्युत्पादितानि । 'दधसइति' । थासः से, शपः श्लुः, अट्, घोर्लोपो लेटि वेत्याकारलोपः ॥

"इतश्च लोपः परस्मैपदेषु" ॥ 'परस्मैपदग्रहणमित्यादि'। अन्यथा टेरेत्वस्यावकाशोऽन्ये लकाराः, लेट्यपीकारादन्यत्र इतो लोपस्य परस्मैपदानि, इहादिषूभयप्रसङ्गे परत्वादितो लोपः स्यात् ॥

"स उत्तमस्य" ॥ 'करवाव करवामेति'। पूर्ववद्गुणोत्त्वाभावो, लोटोऽडाटावित्याट्। 'उत्तमग्रहणमित्यादि'। इह वस्मसग्रहणमेव कर्त्तव्यं तत्रायमप्यर्थः, स इति न वक्तव्यं भवति, अलोऽन्त्यस्येत्येव सिद्धं, यदा च पुरुषान्तरस्य स्थाने वस्मसौ भवत एतयोश्च स्थाने सकारान्तं पुरुषान्तरं तदापि वाग्रहणानुवृत्त्यैव लोपालोपौ यथादर्शनं व्यवस्थितौ भविष्यतः, यथा क्रियमाणे युत्तमग्रहणे वाग्रहणं चानुवर्त्तते, उत्तरत्र नित्यग्रहणं स्यात् नित्यं ङितः ॥

"लिङः सीयुट्"॥ लिङ्शब्दोऽत्र लिङादेशेषु स्थानिवद्भावात् प्रयुक्त इत्याह। "लिङादेशानामिति"। सीयुट्सकारस्यार्द्धधातुके लिङि श्रवणं सार्वधातुके लिङः स लोपोऽनन्त्यस्येति स लोपः, यकारस्याज्ञादिषु श्रवणमन्यत्र लोपः ॥

"यासुट् परस्मैपदेषूदात्तो ङिच्च" ॥ 'परस्मैपदविषयस्येति'। लिङः परेषां परस्मैपदानामसम्भवात्। 'सीयुटोऽपवाद इति'। नाप्राप्ते तस्मिन्नारम्भात्, तेन यासुटि कृते तस्य तिङ्भक्तत्वात्तदादेः सीयुट् प्रसङ्ग इति न चोदनीयं, सत्यपि हि सम्भवे सामान्यविधेर्विशेषविधिर्बाधकः, कथं तर्हि कृषीष्ट इत्यादिषु सुटि कृते सीयुड् भवति, ननु तत्रापि सुटा सीयुड् बाधनीयः, अत्र परिहारं सुद्विधौ वृत्तिकारः स्वयमेव वक्ष्यति। 'आगमत्वादनुदात्तत्वे प्राप्तऽइति'। अत एव यासुडुदात्तवचनाद्विज्ञायते आगमा अनुदात्ता भवन्तीति, अन्यथा यासुटः प्रत्ययभक्तत्वात्प्रत्ययस्वरेणैव सिद्धमुदात्तत्वं, नैतदस्ति ज्ञापकं, यानि पिद्वचनानि तदर्थमेतत्स्यात्, यद्येतावत्प्रयोजनमपिदित्येव ब्रूयात्, तदेतदुदात्तवचनं ज्ञापकमेवागमा अनुदात्ता भवन्तीति। 'तत्र तत्कार्याणां सम्भवादिति'। ग्रहिज्यादिसूत्रेऽपि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्प्रत्ययस्यैव ग्रहणं कुर्यादिति विकरणाश्रयो धातोर्गुणः, अत

उत्सार्वधातुकइत्युत्वं, ये चेत्युकारलोपः, । 'कुर्युरिति'। झेर्जुस्, लिङः स लोपोऽनन्त्यस्य, उस्यपदान्तात्। 'स्थानिवद्भावादेवेति'। सार्वधातुकमपिदित्यतिदेशादिति नोक्तं, पिदर्थत्वात् ङिद्वचनस्य, 'यासुटो ङिद्वचनमिति'। यासुडादेर्लिङो ङिद्वचनमित्यर्थः। इदानीमेव स्तुतं ङित्वं तु लिङ एव विधीयतइति, एतच्च ज्ञापनं पिच्च ङिन्न भवतीत्येतदनाश्रित्योच्यते, तदाश्रयणे तु स्थानिवद्भावेन प्राप्तं ङित्वमौपदेशिकेन पित्त्वेन बाध्यतइति प्राप्त्यर्थमेव ङिद्वचनं स्यात्॥

"किदाशिषि"॥ 'तस्य यासुट्' 'किद्भवतीति'। तस्य यासुड् भवति स च लिङ्किद्भवतीत्यर्थः। अन्यथा प्रत्ययस्येदं कित्त्वमित्यनन्तरग्रन्थेन विरोधः स्यात्। 'प्रयोजनाभावादिति'। वचिस्वपीत्यत्रापि धातोः स्वरूपग्रहणइति प्रत्ययस्यैवेदं ग्रहणं स्यादन्यथा वाच्यति वाचिकं कथयति वाग्जहातीत्यत्रापि स्यात्। 'गुणवृद्धिप्रतिषेधस्तुल्य इति'। किमर्थं तर्हि कित्त्वविधानमित्यत आह। 'सम्प्रसारणमिति'। 'जागर्य्यादिति'। जाग्रोऽविचिण्णल्ङित्स्विति गुणः॥

"झस्य रन्"॥ झस्येत्यकारोच्चारणात्सङ्घातस्यैव ग्रहणं न वर्णस्य, अन्यथा तादेशविधाविव झ इत्येव ब्रूयादिति मन्यमान आह। 'लिङादेशस्य झस्येति'। 'झोन्तापवाद इति'। झकारस्य योऽन्तादेशस्तस्यापवाद इत्यर्थः, झोन्त इत्यस्य वा विधेरपवाद इत्यर्थः। ननु झवर्णस्यान्तादेशः समुदायस्य रनिति कथं भिन्नविषययोर्बाध्यबाधकभावः, विरोधात्, येन नाप्राप्तिन्यायाच्च। झोन्तापवाद इत्युपलक्षणं, कृषीरन् तृषीरन्नित्यत्रात्मनेपदेष्वनत इत्यस्यापवादः, ननु चापवादविप्रतिषेधादद्भाव एव प्राप्नोति, न, प्रतिपदविधेर्बलीयस्त्वात्, प्रतिपदविहितो हि रन्भावः, यद्वा कृषीरन् तृषीरन्नित्यत्रापि प्रवर्त्ततामद्भावः, सत्यपि तु तस्मिन्पुनः प्रसङ्गविज्ञानात्सङ्घातस्य रन् भविष्यति॥

"इटोत्"॥ 'नैवायमादेशावयव इति'। तेन नास्येत्संज्ञया प्रयोजनं स्वयमेव निवृत्तत्वादित्यर्थः। प्रत्युतेत्सञ्ज्ञायां स्वरितत्वं

स्यात्, न विभक्तौ तुस्मा इत्यत्राभ्युपगमवादेनोक्तं किमोद्दिटोदिति चात्र प्रतिषेधो न भवत्यनित्यत्वादस्येति। 'अर्थवद्ग्रहणइत्यादि'। न स्थाने य इडिति विशेषणादप्यागमस्येटो ग्रहणाभावः॥

"सुट् तिथोः"॥ तिथोरिति सप्तमी वा स्यात् षष्ठी वा, आद्ये पक्षे यस्मिन्विधिस्तदादावल्ग्रहणइति तकारथकारादेर्लिङादेशस्य सुटा भाव्यमिति कृषीष्ट कृषीष्ठा इत्यत्रैव स्यात्, कृषीयास्तां कृषीयास्थामित्यत्र न स्यात्, सुटा च सीयुटो बाधः स्यात्, उभयोरपि लिङादेशभक्तत्वादिति द्वितीयं पक्षमाश्रित्याह। 'लिङ्सम्बन्धिनोस्तकारथकारयोरिति'। एतदेव स्पष्टयति। 'तकारथकाराविति'। 'लिङ् तद्विशेषणमिति'। लिङ्शब्देन तदादेशा उच्यन्ते, एवं लिङ्संबन्धिनोरित्यत्रापि। 'कृषीष्टेति'। विध्यादौ लिङि सार्वधातुकत्वाल्लिङः स लोप इति लोपेन सुटः श्रवणाभावादाशिषि लिङेवोदाहृतः॥

"झेर्जुस्"॥ 'झोन्तापवाद इति'। पूर्ववद्व्याख्येयं, जाग्रुरित्यादौ च पूर्ववदेवादभ्यस्तादित्यस्यापि बाधः। 'पचेयुरिति'। अतोयेय इतीयादेशः, शपा सहाद्गुणः॥

"सिजभ्यस्तविदिभ्यश्च"॥ सत्ताविचारणार्थयोर्विदोरात्मनेपदित्वादसम्भव एव झेः, लाभार्थस्यापि विकरणेन व्यवधानादनन्तरस्य झेरसम्भवः, तस्माल्लुग्विकरणस्यैव विदेर्ग्रहणमित्याह। 'वेत्तेश्चेति'। 'अभ्यस्तविदिग्रहणमसिजर्थमिति'। न चैवं लोडादिष्वपि प्रसङ्ग इत्याह। 'ङित इति चानुवर्त्ततइति'॥

"आतः"॥ 'सिच आकारान्ताच्च परस्य झेरिति'। द्वाभ्यामनन्तरस्येत्यर्थः। 'कथमिति'। आतः सिचा व्यवधानाद् द्वाभ्यामानन्तर्यं न सम्भवतीति प्रश्नः। सिज्लुकीत्यादि परिहारः, श्रुत्या श्रवणेन, तदेवं द्वाभ्यामानन्तर्याश्रयणात्सिज्लुगन्ताद् झेर्जुस् भवतीत्युक्तं भवति। 'अभूवन्निति'। भुवो वुग्लुङ्लिटोरिति वुक्। 'तुल्यजातीयापेक्षत्वाच्चेति'। द्वाभ्यामानन्तर्यस्याश्रवणात् सिज्लुगन्तस्य ग्रहणमित्युक्तं, तेन

सिज्लुगन्ताद्यदि भवति आत एवेति नियमाश्रयणाच्छ्रूयमाणे सिच्यक्रा-र्षुरित्यादावनाकारान्तादपि भवत्येवेत्यर्थः ॥

"लङः शाकटायनस्यैव" ॥ 'अयुरवुरिति' । शपो लुक्, उस्यप-दान्तादिति पररूपत्वम् । 'लङ्वेति' । लुङ्लिङोस्तावद्भवितव्यं, लङस्तु स्यप्रत्ययेन भेदेऽयमवधारणमिति भावः । 'यान्तु वान्त्विति' । लोटो लङ्वदि-त्यत्र तु वायहणानुवृत्त्याप्ययमर्थः साधितः । ननु च लङ्ग्रहणाद्यथा-न्जुस्भावोयं लोटो माभूत् सिजभ्यस्तेत्ययं तु स्यादेव, तत्राह । 'सिज-भ्यस्तेत्यादि' । कथमित्यत्राह । 'जुस्भावमात्रं हीति' । कथं पुनरात-इत्यनुवर्तमाने जुस्भावमात्रं मुख्येन लङा शक्यं विशेषयितुं, लङ इति योगविभागः कर्तव्य इति मन्यते । ननु चात इत्येतत्सिज्ग्रहणानुवृत्त्या नियमार्थमित्युक्तं ततश्चायुरित्यत्र केन चिदप्राप्तत्वाद्विध्यर्थमेतत्किमेव-कारेणेत्यत्राह । 'एवकार उत्तरार्थ इति' । लिट् च, लिङाशिषीत्य-त्रास्य प्रयोजनं दर्शयिष्यति ॥

"द्विषश्च" ॥ द्विषिरदादिः ॥

"तिङ्शित् सार्वधातुकम्" ॥ 'तरति नयतीति' । तिङः सार्व-धातुकत्वाच्छप्, शपः सार्वधातुकत्वाद्धातोर्गुणः । 'रोदितीति' । शपो लुकि रुदादिभ्यः सार्वधातुकइतीट् । 'पवमानो यजमान इति' । पूर्व-वच्छब्गुणौ ॥

"आर्धधातुकं शेषः" ॥ 'धातुसंशब्दनेनेति' । धातुशब्दमु-च्चार्येत्यर्थः । अत्र हि यङ्विधौ यद्धातुग्रहणं शमिधातोरिति वा यच्च धातोरिति तदुभयमनुवर्तते, तत्रैकेनाधातुप्रत्ययो व्यावर्त्यते, अपरेण धातुप्रत्ययो विशिष्यते, धातोरित्येवं यो विहित इति, तेनायमर्थः । 'लूभ्यां लूभिः जुगुप्सतइति' । यद्यप्यत्र धातोरेव विहिस्तथापि धातु-शब्दमुच्चार्य न विहित इति भवति प्रत्युदाहरणं, शेषग्रहणं तिङ्शितो-र्माभूत्, अन्यथैकसंज्ञाधिकाराभावात्प्रत्ययादिसंज्ञानामिव समावेशः स्यात्, यद्येवकारोनुवर्त्तते शक्यं शेषग्रहणमकर्त्तुम् ॥

“लिट् च” ॥ ‘पेचिथ शेकिथेति’। ऋतो भारद्वाजस्येति नियमादिट्, थलि च सेटीत्येत्वाभ्यासलोपौ। ‘जग्ले मम्लइति’। आर्धधातुकत्वादातो लोप इटि चेत्याकारलोपः, यदुक्तं सार्वधातुकसंज्ञाया अपवाद इति तद्विघटयति। ‘ननु चेति’। सत्यमित्यादिना ऽपवादत्वं समर्थयते ॥

“छन्दस्युभयथा” ॥ ‘सर्वमेव प्रकरणमिति’। तिङ्शित्सार्वधातुकमित्यारभ्य चतुःसूत्रीप्रकरणम्। ‘भूभावो न भवतीति’। तदानीमेवार्धधातुकत्वात् श्नसोरल्लोप इत्यस्याभावः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयस्याध्यायस्य चतुर्थः पादः। समाप्तश्चायमध्यायः ॥





